# सनातनधर्मप्रदीपे

## प्रमाणप्रकाशचातुर्वर्ण्यप्रकाशौ

श्री सन्तोजिमहाराजादिचाल्यमानसनातनध-
र्मोज्जीविनीसभाङ्गग्रन्थनिर्माणसमित्या
समालोचनार्थं सर्वेषां पण्डितानां
सविध उपाह्रियमाणौ ।

कलिकाता नगरस्थ वणिक्प्रेसद्वारा
मुद्राप्य प्रकाशितौ



समालोचनार्थं मासत्रि-
तयमवसरः । }

विना मूल्यं वितरणम् ।

॥ श्रीः ॥

# निवेदनम्



अयं हि निबन्धो बहूनां पण्डितप्रवराणामनुमत्योपदेशानुसारेण च संगृहीतः सांप्रतमनिर्णीतावस्थायामेव विद्यमानश्च तत्तत्सनातनधर्मसंस्थानां तथा पण्डिप्रवराणां च सविधे समालोचनार्थम्, समालोच्य स्वीयसमालोचनेन साकमधोनिर्दिष्टं स्थानं प्रति प्रतिप्रेषणार्थं च प्रेष्यते। अतस्तत्तत्संस्थाप्रवर्तकान् पण्डितप्रवरांश्च श्रीमतः प्रति साञ्जलिबन्धमिदमेव प्रार्थ्यते—यत् तत्त्वगवेषणबुद्धयैवायं समालोचनीय इति तत्तादृशाः नासंभवन्तः प्रमादाः, तत्परिहारोपायाश्च सप्रमाणं यदि सूच्यन्ते, तर्हि उपरितनविचारकसमित्या महाननुग्रहः कृतः स्यादिति दैनिकपत्रादिष्वप्रकाशनेनैव समालोचनं स्वीयं मासत्रयाभ्यन्तर एव प्रेषणीयमिति।

इति

कलकत्ता
१-७-२६

श्रीयुक्तानन्तकृष्णशास्त्री
ग्रन्थनिर्माणसमितिसम्पादकः

प्रेषणस्थानम्—

श्रीसन्तोजिमहाराजाः,

C/O. श्रीमदोंकारदास चौधरी, तलोदा

वणिक् प्रेस, १, सरकार लेन कलकत्ता।

# भूमिका

तत्तज्जातिधर्मा आश्रमधर्माश्च परस्परवैमत्यनिदानमिति वदन्तोऽप्यधुनातना श्रीमद्भगवद्गीता तस्या द्वितीयाध्यायो वा नियतमध्येतव्य इति नियमयन्तः श्रीमद्भगवद्गीताऽध्ययनं तदुक्तधर्मसमादरः, भगवति वासुदेवे परमा श्रद्धा गोमातृषु निरतिशयं वात्सल्यं निरतिशया भक्तिर्वैव मन्यन्ते, भारतीयत्वनियामका इति।

श्रीमद्भगवद्गीता हि युद्धार्थं प्रवृत्तं भीष्मादिबन्धुवर्गदर्शनेन समुदितकारुण्यातिशयं तत एव ततो निवर्तमानं चार्जुनं भिक्षाचर्यादिब्राह्मणधर्ममेव स्वकर्तव्यं मन्वानम्—

"स्वधर्मे निधनं श्रेयः परधर्मो भयावहः।"

इत्यादिना क्षात्रियस्य सतस्तस्य प्राणिहिंसात्मकमपि युद्धं स्वधर्म इति कृत्वा नियतकर्तव्येष्वेकतमामित्यादिबोधनेन युद्धाख्ये स्वधर्मे एव प्रवर्तयन्ती, विदितमिदं सर्वेषाम्—यदहिंसादिसाधारणधर्ममात्रेण न भारतीयत्वम्, किन्तु तत्तज्जातिधर्मैरपि विशिष्टैरिति गमयतीति मोहम्मदखैस्तवादय इव जैनसौगतमतावलम्बिनोऽपि, यत्र सभायां श्रीभगवद्गीताध्ययनं धर्मः, तत्र सदस्यतां नार्हन्तीति हिन्दुमहासभायां यत्र जैनसौगतपारसीकादयः सर्व एव सदस्याः, तत्र भारतीयासाधारणधर्माणां पर्यालोचनम्, तथा तत्र व्यवस्थाविशेषाणां तद्विरोधिनां नियमनं च मन्यामहे, दौर्बल्यातिशयमेव भारतीयानां सूचयतीति।

निश्चप्रचमिदं विपश्चिदपश्चिमानाम्—यत् सौगतानां नास्ति-

कतायां न मोक्षस्य तत्साधनस्य वाऽनङ्गीकारो मूलम्, किन्तु तत्तज्जात्यादिप्रयुक्तविशेषधर्माणां तत्प्रतिपादककर्मकाण्डादीनां च प्रामाण्यानवलम्बनमेवेति ।

केचित् खलु मन्यन्ते—मोक्षशास्त्रदृष्ट्या केवलं समालोचने, भगवान् बुद्ध उपनिषत्स्थानमर्हति, शङ्करभगवत्पादादयस्तु तद्भाष्यस्थानामिति । अयमाशयः—भगवान् किल बुद्धो—"यस्यामतं तस्य मतं मतं यस्य न वेद सः ।" इत्याद्युपनिषदर्थं स्वयमनुभवति, शङ्करभगवत्पादादयस्तु तं परीक्षन्ते—इति । सत्यप्येवं यत् कुमारिलपादादयस्तन्त्रवार्तिकेऽहिंसावाक्यमपि भगवतो बुद्धस्य श्वदृतिनिहितं दुग्धमिवानादरणीयं मन्यन्ते, मन्यामहे तत्र कारणं तस्य विशेषधर्मेषु तत्प्रमाणेषु भगवत्स्वाम्नायेषु च हस्तक्षेप एवेति । तद्यदि भगवता बुद्धेन तदनुयायिभिर्वा न कृतः स्यात् हस्तक्षेपो विशेषधर्मेषु, तर्हि नेदृशीं दुरवस्थां भारतवर्षे भगवान् बुद्धस्तदनुयायिनो वा जानीमः प्राप्स्येरन्निति ।

वस्तुतस्तु—

युक्त्यानुपेतामसतीं प्रकल्प्य<br>
यद्वासनामर्थनिराक्रियेयम् ।<br>
आस्थानिवृत्त्यर्थमवादि बौद्धैः<br>
ग्राहं गतास्तत्र कथञ्चिदन्ये ॥

इति वदन्तः कुमारिलपादाः, भगवतो बुद्धस्य न बाह्यपदार्थनिरसने वेदाप्रामाण्यसमर्थने वा तात्पर्यम्, किन्तु प्रपञ्चे विरागातिशयोत्पादन एवेति सूचयन्तीति, तदनुयायिन एव बौद्धमतमेवमवस्थं संपादयन्ति स्म, न भगवान् बुद्धः स्वयमिति यदि बौद्धैरिदानीन्तनैर्जातिधर्मा आश्रमधर्माः कर्मकाण्ड-

प्रामाण्यं वा स्वीकरिष्यते, तर्हि विश्वसिमः सौगता अपि शुद्धं भारतीयत्वं नियतमेव पुनरप्यर्हेयुरिति ।

यत्तु किल श्रूयते—श्रीशङ्करभगवत्पादादयो बहूनेव सौगतान् सौगतमतात्प्रच्याव्य स्वीये राद्धान्ते श्रद्धापयन्निति, मन्यामहे कुमारिपादादृतैव दिशा तैरपि समाद्रियतेति । विदितमिदं सर्वेषाम्—यत् मोहम्मदादिधर्मा बहव एव यथा भारतीयधर्माणां विरुद्धाः, न तथा सौगता धर्मा इति । तदयं निष्कर्षः—यत् विहिताकरणमात्रं सौगतधर्मावलम्बने, न निषिद्धसेवनम्; मोहम्मदादिमतावलम्बने तु तदुभयमपीति । धर्मशास्त्राणि तु—

"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥"

इति समुच्चितेन तदुभयेन यथा पातित्यं शासते, न तथैकेन । तत्रापि विहिताकरणापेक्षया निन्दितसेवनं स्वतन्त्रतया पातित्यनिदानतया—"ब्रह्महृ-सुराप-गुरुतल्पगमातापितृयोनिसम्बन्धि-स्तेन-नास्तिक-निन्दितकर्माभ्यसिपतितात्याग्यपतितत्यागिनः पातकसंप्रयोजकाः" इति गौतमेनाम्नायमानं जघन्यमेव । एतावता विवक्षितः सारांशोऽयमेव—यत् विहिताकरणेन पापमात्रम्, निन्दितकर्माभ्यासेन तु पातित्यमिति सौगतमतावलम्बिनः विहिताकरणमात्रेण पापान् सम्यगुपदेशप्रदानेन भगवत्पादाः स्वमतं प्रापयन्निति युक्तमेव । मोहम्मदादिधर्मावलम्बिनस्तु यथाशास्त्रं कालविशेषं समयविशेषं चोपष्टभ्य यदि स्वमतं प्रापणीयाः, तर्हि तु न विप्रतिपत्तिः । सर्वथा तु वर्णाश्रमधर्मपरिपालनं विना न भारतीयत्वमित्येव श्रीमद्भगवद्गीतातत्त्वम् ।

ये खलु आर्यसमाजीया अन्ये वा गुणकर्मकृतैव जातिव्यवस्था, न स्वभावनिबन्धनेति नीचजातीयानपि आर्यब्राह्मणपदव्यपदेश्यान् ब्राह्मणान् व्यवस्थापयन्ति, प्रमाणयन्ति च तत्र श्रीमहाभारतादिवचनानि कानिचन, ते न केवलं श्रीमन्महाभारतगतमिन्द्रमतङ्गसंवादं तथाऽनुशासनिकपर्वसप्तदशोत्तरद्विशततमाध्यायगतोमामहेश्वरसंवादरूपाणि—

उमोवाच—भगवन् ! भगनेत्रघ्न ! कालसूदन ! शङ्कर ।
इमे वर्णाश्च चत्वारो विहिताः स्वस्वभावतः ॥
उताहो क्रियया वर्णाः संभवन्ति महेश्वर !
एवं ये संशायप्रश्नस्तमुच्छेत्तुं त्वमर्हसि ।
परमेश्वर उवाच—स्वभावादेव विद्यन्ते चत्वारो ब्राह्मणादयः ।
एकजात्या सुदुष्प्रापमन्यवर्णत्वमागतम् ।
तच्च कर्मविशेषेण पुनर्जन्मनि जायते ॥

इत्यादीनि, चातुर्वर्ण्यप्रकाशेऽत्र समुद्धृतानि तत्तत्स्मृतीतिहासपुराणसंहितादिगतानि च वाक्यानि तृणाय मन्यन्ते, प्रत्युत स्वावष्टम्भश्रीमद्भगवद्गीतामपीत्यादि व्यक्तमेवास्ति निरूपितम् । चातुर्वर्ण्यप्रकाशे हि यानि वचनान्यस्माभिस्समुद्धृत्य प्रकाशितानि, तैरिदं सुधीरं वक्तुं पारयामः—यदार्यसमाजीयानां नीचजातीयानामपि ब्राह्मण्यप्रापणरूपा प्रवृत्तिरियं पुनर्विचारार्हा, परिवर्तनार्हेति च । आर्यसमाजीया हि मन्त्रमात्रप्रामाण्यावलम्बिनः, ब्राह्मणभागस्य पुराणेतिहासादीनां वा तदनङ्गीकुर्वाणाः कथं वा कर्तव्याकर्तव्ये विवेचयिष्यन्तीति न वयं जानीमः । ब्राह्मणवाक्यानां हि लक्षणं कर्तव्याकर्तव्यपराविधिनिषेधवाक्यत्वमिति सर्वसम्मतमिदम् । तत्र यदि मन्त्राणामेवान्ततो गत्वा

विधायकत्वं निषेधकत्वं वा ते स्वीकुर्वन्ति, तावतापीदमेवात्र सिद्धं भवति, यत् वैदिकविधिवाक्यानि मन्वादिविधिवाक्यानि वा मन्त्रलिङ्गादिमूलानि न प्रमाणानि, किन्तु आर्यसमाजकल्पितान्येव तानि प्रमाणानीति। तत्रेदमेवास्माकं प्रष्टव्यम्—यत् मन्वादयो मन्त्रलिङ्गानभिज्ञाः, आर्यसमाजीया एव परं तदभिज्ञा इति किमिदं प्रतिज्ञामात्रम्, उत सयुक्तिका प्रतिज्ञेति। इदमत्र सर्वविदितम्—यत्कल्पसूत्रगृह्यसूत्रादिकारा यथा प्रतिमन्त्रं विनियोगादिव्यवस्थापनपूर्वकं कर्तव्यानकर्तव्यांश्च स्मरन्ति, न तथाऽन्य इति कथं वा कल्पसूत्रादीन्यप्रमाणानि, आर्यसमाजीयानां विधिनिषेधवाक्यान्येव परं प्रमाणानीति सर्व एव समालोचयन्तु। यथाच ब्राह्मणवाक्याप्रामाण्यवादे सार्धशतं प्रमाणानि विरुद्धानि, तथा सनातनधर्मोद्धाराद्यनुसारेण व्यक्तमेव प्रमाणप्रकाशेऽस्ति विवेचितमित्येतावन्मात्रमत्र निवेद्यते—यत् सङ्करो नरकायैव कुलघ्नानां कुलस्य चेति भगवद्गीताविरुद्धं वर्णसङ्करं धर्मसङ्करं वा भारतीयत्वविघातकं परित्यज्य भारतीयसङ्घटनं यद्युत्साहमूर्तयः, करुणासागरा आर्यसमाजीयाः संपादयिष्यन्ति, तर्हि मन्यामहे सर्वेऽपि सनातना जात्यादिनिबन्धना विशेषधर्मा अप्युज्जीव्येरन्निति।

विशेषधर्मा हीमे-श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्। इत्यत्र स्वधर्मपरधर्मपदाभ्यां व्यपदिश्यमानाः न जन्मपरिवर्तं विना परीवर्तमर्हन्ति। सत्यमेषां परिपालने समापतन्ति बहुविधा विपत्तयः, विशेषतश्चेदानीम्, तथापि यथाशक्तिन्यायेनानापन्नानेवजनान् तेऽधिकुर्वन्ति। किं बहुना? निन्दितसेवनमपि विपत्तौ प्राणरक्षणार्थमनुष्ठीयमानं न दोषायेति विश्वामित्रकृतश्वपचान्न-

भक्षणेन चाक्रायणकृतम्लेच्छान्नभक्षणेन च श्रीमहाभारतोपनिषद्भ्यामपरोक्षयामः। मन्यामहे-इममेव न्यायमुपष्टभ्यास्मत्पूर्वतना अप्युपस्थितासु महतीषु विपत्तिषु अननुष्ठायापि कांश्चन धर्माननुष्ठायापि कानिचन निषिद्धानि कर्माणि शास्त्राण्यस्मदीयानि स्म परिपालयन्तीति।

इदमेवात्रालोचनीयम्—यत् संप्राप्तायामपि विपदि किं शास्त्राण्येव परिवर्तनीयानि, आहो यावत् विपत् तावदननुष्ठापकत्वमात्रं कल्पनीयमिति। वयंतु मन्यामहे-पूर्वाचार्या ह्यस्मदीया यावद्विपत्ति विपन्नमात्रे शास्त्राणामननुष्ठापकत्वमात्रव्यवस्थापनेनापरिवर्तनेनैव शास्त्राणि प्रचारयामासुरिति। अन्यथा हि नाममात्रावशेषाण्येवैतावताऽपि कालेन संभूतानि स्युरस्मदीयानि शास्त्राणीति, तेन न्यायेन शास्त्राणामध्ययनाध्यापनपरम्परया प्रचारणमेव तत्परंपरायां प्राप्तोद्यानामस्माकं कर्तव्यम्, नतु तद्विलोपनम्। कियता खलु परिश्रमेण कियद्भिरङ्गैः कियद्भिश्च स्मृतिपुराणेतिहासादिभिस्सह भगवन्तमाम्नायं मीमांसादिगभीरतरशास्त्रैः पूर्वतना अस्मदीया अस्मदायत्तान्यकुर्वतेति सर्व एव समालोचयन्तु, निधिधर्मेणास्मदायत्तीकृतानां हि शास्त्राणां परिरक्षणं हि तत्स्वरूपाविलयनेनापरिवर्तनैव च तदीयानां नियमानामस्माकं संरक्षकपदमधितिष्ठतां सांप्रतम्।

इदमेवात्राश्चर्यनिदानम्—यत् अध्ययनाध्यापनसरणिरपि, या खलु जैमिन्यादिमीमांसारीतिमनुसरन्त्येकविधैवासीत्, सापीदानीं रूपान्तरमापाद्यते, यत् खल्वैतिहासिकदृष्टिरितीदनीन्तना व्यपदिशन्ति। सत्यमस्मदीयाः पूर्वाचार्या अपि ऐतिहासिकदृष्टिं धर्माधर्मव्यवस्थापनाय स्मोपष्टम्भयन्ति। इयान् विशेषः-यत् पूर्वाचार्या

स्मृत्याद्यविरोधे तामुपायुञ्जत, इदानीन्तनास्तु तद्विरोधेऽपीति। ऐतिहासिकदृष्टिर्हि पूर्वमस्यानुष्ठानमासीत्, नास्यानुष्ठानमासीदित्याचारसत्त्वासत्त्वविज्ञान एव सहकारिकारणतयैवोपयुज्यते। एवंच सदाचारप्रामाण्यवादिनः पूर्वाचार्याः कथमैतिहसिकदृष्टिं नोपष्टम्भयन्ति ? अयमेवात्र पूर्वाचार्याणामाशयः--यदाचरणे तत्तत्पुरुषाणामस्ति स्वातन्त्र्यम्, स्मृतिषु तु न मन्वादीनामप्यस्ति स्वातन्त्र्यमिति कदाचन स्वार्थमात्रपर्यवसायिनः कामक्रोधादिमूलका महतामप्यसदाचारा अपि समापतन्ति। इदमेवाभिप्रेत्योक्तम् -धर्मव्यतिक्रमो दृष्टो महतामपि साहसमिति। तथाचाचरमात्रदर्शनेन साधुत्वमसाधुत्वं वा निर्णेतुं न पार्यत इति स्मृत्याविरोधे तत्साधुत्वमन्यथा त्वसाधुत्वमिति नियतमूरीकर्तव्यमिति, ऐतिहासिकदृष्टिः केवलं वस्तूस्थापने स्मृत्याविरोधे तस्य साधुताविनिर्णयेऽपि चोपयुज्यते इति पुराणादितः मन्त्रार्थसामर्थ्यादितो वा शिष्टानामामाचरणं स्मृत्यादिविरुद्धमवगम्यमानं न प्रमाणतामर्हतीत्येव पूर्वाचार्याणां हृदयम्। इदानीन्तनास्तु-ऐतिहासिकदृष्टिमुपष्टभ्य स्मृत्यादीनाप्यन्यथयन्तीत्यत एवोक्तं रूपान्तरमनुप्राप्त।ऽधुनातनानां विचारसाणिरिति।

तत्र पूर्वतनानां सराणिः प्राच्यसराणिरिति, इदानीन्तनानां सराणिः पाश्चात्यसराणिरिति च व्यपदिश्यते। तत्र प्रथमसरणौ वेदेषु यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता, द्वितीयसरणौ तु तद्विपरीतम्। अपरोऽयं विशेषः-यत् प्रथमसरणौ शास्त्रपरिवर्तने न वयं प्रभवः, संकोचे परं यथाशक्तिन्यायेन धर्मज्ञाः केचन, ये नस्वार्थदृष्टयः ते व्यक्तिविशेषं समयविशेषं च नियतमुपस्थाप्य प्रभवः; द्वितीयसरणौ तु बुद्धिशक्तिसंपन्ना वयं सुतरामेव शास्त्रपरिवर्तनादौ प्रभव इति। अयमत्र निष्कर्षः-प्रथमसरणौ महा-

स्मनां धर्मसंकोचन एवाधिकारः, नतु नूतनधर्मप्रवर्तने। तदुक्तम् एतान् कलियुगे धर्मान् वर्ज्यानाहुर्मनीषिणः। तथा--निवर्तितानि कर्माणि कलेरादौ महात्मभिः--इति। द्वितीयसरणौ तु तेषां तत्प्रवर्तनेऽप्यस्ति योग्यतेति। तदत्र वयं पश्यामः--यत् नित्यपरोक्षधर्मतत्त्वविषये प्राच्यसरणिरेव सांप्रतं समाश्रयितुमिति। एवं वदन्तो वयं न पाश्चत्यसरणेर्नाममात्रविद्वेषिणः, यतो वयमपि भौतिकप्राकृतापरोक्षतायोग्यवस्तुतत्त्वविज्ञाने पाश्चात्यसरणिमपि समादरणीयां मन्यामहे।

नह्येकत्र व्यवस्थिता योग्या चेत्यन्यत्रापि अयोग्यस्थाने सा योग्या भवति; शतशो व्यभिचारात्। तदत्र सरणिद्वयस्यापि काष्ठाव्यवस्थापने कर्तव्येऽयमेवात्र निष्कर्षोऽनुसन्धेयः---यत् प्राच्यसरणिरेव धर्मतत्त्वविनिर्णयोपयोगिनी, यथायोगं प्रतीच्यसरणिरपि भौतिकादिवस्तुतत्त्वविज्ञानोपयोगिनीति। परीक्षितं हि कुमारिलपादशङ्करभगवत्पादोदयनाचार्यादिभिर्बहुशः स्वीयेषु निबन्धेषु--यत् तत्तद्देशकालपरिस्थितियुक्तिरनुभवादिकं वा न धर्मतत्त्वविनिर्णये मूलं निदानम्, किन्तु भगवानाम्नाय एवेति। आधिकं च प्रमाणप्रकाशत एवावगन्तव्यम्। स्वर्णगिरिसंस्थाने श्रीकेशवत्तगुरुचरणानां प्रतिष्ठोत्सवावसरे ऐतिहासिकदृष्टेरुपयोगाविषये समुपक्रान्ते विचारे, श्रीभारतेतिहाससंशोधकश्रीचिन्तामणिराववैद्यमहोदया एवमेव व्यवस्थापयन्ति स्म--यत् वस्तूपस्थापन एवैतिहासिकदृष्टेरुपयोगः--इति। तद्यदि केचन वस्तूपस्थापनमात्रे ऐतिहासिकदृष्टिमुपयुञ्जीरन्, तर्हि सर्वथा ते सर्वसंप्रतिपन्ना एव भवितारः।

निबन्धकारा हि विश्वरूपविज्ञानेश्वरहेमाद्रिमाधवाचार्यवीरमि-

त्रकमलाकरभट्टभट्टोजिदीक्षितवैद्यनाथदीक्षितरघुनन्दनादयः प्राच्यसरणिमेवानुसृत्यात एव धर्माधर्मौ व्यवातिष्ठिपन् । तद्यदि केचन निबन्धकाराणां व्यवस्थाविशेषं प्राच्यसरणिविरुद्धमुपस्थाप्य व्यावस्थान्तरमिदानीं व्यवस्थापयन्ति, तर्हि सत्यं माधवाचार्यादय इव तेऽपि समादरणीयवचना एव भविष्यन्ति । नहि वयमपि माधवाचार्याणां कमलाकरभट्टानामन्येषां वा न प्रमादाः संभवन्तीति वदामः । युक्तियुक्तं वचो ग्राह्यमिति न्यायेन यस्य निबन्धकारस्य व्यवस्था युक्तिसिद्धा, मीमांसान्यायाविरुद्धा च तामेव वयमपि समादरणीयां मन्यामहे । सत्यमासन् कुमारिलादिकालेऽपि ऐतिहासिकदृष्टिप्राधान्यवादिनः । यतो हि कुमारिलपादा आचारस्यापि श्रुतिमूलकमेव प्रामाण्यमिति कमपि पक्षं केषांचन मतेनोपाक्षिपन्ति, परंतु ते नाममात्रावशेषा एवासन् ,इदानींतु तेषां तत्र तत्र प्रचारो बहुशो दृश्यत इति तन्मतसमालोचनमप्यवश्यं कर्तव्यं समापतितम् । तत्र केचित् वेदस्मृतीतिहासपुराणादीनां सर्वेषां परिवर्तनपक्षपातिन इदानीं नूतनवेदकालः संप्राप्त इति वदन्तो विरलविरलाः । इतरेतु वेदस्मृतीतिहासपुराणानां विवरणं निबन्धकारादृतं परिवर्तयोग्यं मन्वाना निबन्धान्तरकाल इदानीं संप्राप्त इति वदन्तो हि संस्कारकपदव्यपदेश्या बहव एवेदानीमुपलभ्यन्ते । इदमेवात्रालोचनीयम्--यत् यदि नूतननिबन्धान्तरं सम्पादनीयम्, तर्हि पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशेति याज्ञवल्क्यस्मृत्युक्ता मीमांसा का वेदानीं ग्रहणीयेति । यदि जैमिनीया, तर्हि पूर्वतननिबन्धैः किमपराद्धम् ? नहि वयमपि जैमिनीयमीमांसाविरुद्धं निबन्धं कमपि समादरयोग्यं पश्यामः । यदि नूतना

मीमांसापि कापि रचनीया, तर्हि तु याज्ञवल्क्यस्मृतेरुक्तायाः का गतिः ? सत्यमासन् अपरा अपि मीमांसा जैमिनिकालेऽपि, परंतु सर्वा अपि ताः समालोचिता जैमिनिनेति जैमिनीयमीमांसयैवावगम्यत इति यावत्, जैमिनीयमीमांसानिरसनेन मीमांसान्तरं न निबध्यते, तावत् नूतननिबन्धान्तरविरचनमपि जैमिनीयमीमांसानुसार्येव सांप्रतम्, नान्यथा।

यत्तु एकेन निबन्धकारेण—यद्वै किंच मनुरवदत् तद्भेषजमित्यत्र मनुपदेन स्मृतिकर्ता मनुर्विवक्ष्यते, अपरेण तु मन्त्रो विवक्ष्यते, तदिदं स्मृत्योर्विरोधे विकल्प इति न्यायस्य सर्वैरपि निबन्धकारैः स्वीयेषु निबन्धेषु व्यवस्थापनात् अनुष्ठानाविरोधित्वात्, नहि निन्दान्यायाच्च न विरुद्धम्। यत्तु पुनर्निर्णयसिन्ध्वादिषु निबन्धान्तराणां निरसनं दृश्यते, अनेन तु विज्ञायते, मीमांसानुसन्धाने निबन्धकाराणामपि कुत्र कुत्रचन प्रमादो भवतीति। नहि कोऽपि स्मृतिसमानयोगक्षेमं प्रामाण्यं निबन्धानां योग्यं मनुते। तदिदं सिद्धम्—यावदिदानीन्तनाः संस्कारकाः पूर्वतनानां निबन्धानामप्रामाण्यं सयुक्तिकं न स्थापयन्ति, तावत् सर्वेषां निबन्धानामव्याहतं प्रामाण्यमिति निबन्धान्तरमिदानीमपि यदि संपादनीयम्, तर्हि श्रुतिः स्मृतिः सदाचारः, स्वस्य च प्रियमात्मनः। वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्। इतिहासपुराणाभ्यां वेदं समुपबृंहयेदिति वचनानुसारं वेदो मुख्यं प्रमाणम्, स्मृतिस्तदपेक्षा प्रमाणम्, पुराणेतिहासयोरपि विध्यंशे स्मृतित्वेनैव प्रामाण्यम्, उपाख्यानानामर्थवादविधया, आचारः स्मृत्यपेक्षः प्रमाणमित्यादिनियममनुसृत्यैव तत्संपादनीयमिति, नात्र प्रमाणविषये विशेषतो विचारस्यास्त्यवकाशः।

इदमेवात्रातिविचित्रम्—यत् धर्मप्रमाणान्यपि भारतीयानामस्माकं सांप्रतं विचारणीयानि समापतन्ति। ये हि किलेदानीन्तनानामाक्षेपा उत्तराणि च, सर्वाणि तानि पूर्वाचार्यपरम्परायां पिष्टपेषणानि; नैकोऽप्याक्षेपो नूतनो नैकमपि नूतनं समाधानमुपस्थापयितुं शक्यत इति भूषणमेवेदमल्पज्ञानामस्मदादीनाम्। भगवत्कुमारिलशङ्करभगवत्पादभगवदुदयनाचार्यास्तत्तदास्तिकदर्शनाचार्यवर्याश्च धर्मप्रमाणाविचारप्रसङ्गेन सौगतचार्वाकादिमतनिरसनव्याजेन सर्वानेव नूतनाभासानिदानीन्तनानामाक्षेपान् समालोचयन्तीति प्रमाणप्रकाशे बहूनां तदीयानामेव वाक्यानां समुद्धरणपूर्वकं विशदीकृतम्।

मन्त्रानुपूर्वीरचयितृत्वं नर्षित्वम्, किन्तु तदर्थदेवतासाक्षात्कारादिप्रयुक्तमेव तदिति देवीरहस्यादितोऽवगच्छन्तः कथमिवर्षिपदस्वरसप्रयुक्तं वेदपौरुषेयत्वासिद्धान्तमधुनातनानां समाद्रियेरन्निति न वयं जानीमः। यथाच मन्वादीनामपि वेदविषये न स्वातन्त्र्यम्, यथा वा धर्मे न परिस्थितिविशेषो नवा पुरुषबुद्धिर्मूलम्, तथा श्लोकवार्तिकशाङ्करभाष्यकुसुमाञ्जलिसनातनधर्मोद्धारविचारत्रय्याद्यनुसारेण प्राचीननवीनमतानुसारिबहुतरप्रबन्धसमालोचनेन च प्रमाणस्वरूपनिर्णयपूर्वकं चातुर्वर्ण्यव्यवस्था, कलौ क्षत्रियादिसत्त्वम्, व्रात्यसंस्कारः, पतितपरावर्तनम्, कृतप्रायश्चित्तानां समुद्रयायिनां व्यवहारयोग्यता, विधवाविवाहः, ऋतुमतीविवाहः, विवाहेऽवान्तरजातीनामुपयोगः इत्यादयः समालोचनीया वर्तन्ते। एतांश्च विषयानवलम्ब्य सर्वत्र हि महदेव चान्दोलनमपि समस्ति। सत्यं निबन्धकारैः सर्वैरपि सर्वेऽपीमे निर्धारिताः, तथाप्यधुनातनानामाक्षेपसमालोचनपूर्वकं पुनर्विनि-

धारणमपि द्विबद्धं सुबद्धं भवतीति न्यायेन पामराणां धर्मविश्वासिनां च महत एव सन्तोषाय स्यादिति सुदृढोऽयमस्माकं विश्वासः ।

महदिदमस्माकं लज्जास्पदम्–यदस्थान एवास्मदीया धर्मा व्यवस्थापकसभादिषु यत्र मोहम्मदा खैस्तवाश्च व्यवस्थापकाः, तत्रोपस्थाप्यन्ते, व्यवस्थाप्यन्ते च स्मृत्यादिविरोधमप्यविगणय्येति । एवमनधिकारचर्चायां निदानमिदमेव–यत् धर्मशास्त्राणां विशेषतोऽप्रचारः, सामान्यतः संस्कृतभाषाध्ययनमात्रेणैव धर्मव्यवस्थापने सर्वेषां प्रवृत्तिश्च । एवं प्रवृत्त्या हि भारतीयानामस्माकं कति वा विघटनद्वाराणि समापतन्तीति सर्व एव समालोचयन्तु । भारतीयानां हि शैववैष्णवद्वैतविशिष्टाद्वैतशुद्धाद्वैतकेवलद्वैतादिसंप्रदाया बहुविधा ये वर्तन्ते, ते खलु सर्वे मोक्ष एव भिन्नप्रस्थानाः, धर्ममार्गस्तु सर्वेषां समान एव । तत्र पूर्वाचार्या मोक्षमार्गेषु प्रस्थानान्तरावलम्बिनोऽपि प्रस्थानान्तरं स्म नयन्त इति सत्यमासीन्मतान्तरपरिवर्तनं पूर्वस्मिन्नपि समये । इदानीं हि मोहम्मदादिभिर्धर्ममार्गपरिवर्तनमपि क्रियत इति सत्यं महतीयं विपत्तिः । अनया खलु विपत्त्या व्याप्ता नूनं बहव एवास्मज्जातिभ्रष्टा धर्मभ्रष्टाश्च वर्तन्ते । एवं धर्मभ्रंशने न केवलं बलात्कारेण प्रवर्तनमात्रं मूलम्, किन्तु दुरुपदेशादिनाऽस्मदीयेषु धर्मशास्त्रेष्वश्रद्धोत्पादनमपि । खैस्तवमतावलम्बिनो हि बहव एवास्मदीयवेदशास्त्राणां तदीयनियमविशेषैस्समालोचनमुखेन तेषु पौरुषेयत्वभावनासमुद्रेकं जनयन्तः स्वधर्माणां प्रचारं स्वोद्देश्यं सम्यगेव पर्यपालयन् परिपालयन्ति च । अस्मदीयाः पुनर्न केवलं तदीयोपदेशजालपरवशाः परमतमेव परिपोषयन्ति,

किन्तूदासीना अपि स्वधर्मेष्विति महतीयं विपत्तिर्धर्मशास्त्राणामपि ।

अस्यां च परिस्थितौ विरुद्धमतावलम्बिभिरन्यथान्यथा योज्यमानानां धर्मशास्त्राणां यथावदेव तात्पर्यं यदि भारतीयैरपि न व्यवस्थापयिष्यते, तर्हि नाममात्रावशेषाणि शास्त्राणि भविष्यन्ति । पूर्वाचार्याणां बौद्धादिमतनिरसने न तादृशः क्लेश आसीत्; यतो बौद्धानां प्रत्यक्षमनुमानमुभयं चार्वाकाणां प्रत्यक्षमात्रं च प्रमाणमिति व्यवस्थिता काचन विचाररीतिरासीत् । इदानीन्तनास्तु विरोधिनोऽव्यवस्थितपरिस्थितिप्राधान्यावलम्बिनः न व्यवस्थितां विचररीतिमपि समवलम्बन्त इति, धर्माचार्या अपि बहवो धर्मशास्त्राणामिदानीन्तनविपन्निरसनोपायगवेषणायां चकितचकिता एव वर्तन्ते । सांप्रतमस्माकं बाह्यशत्रुभ्यस्तादृशी न भीतिर्यादृशी आन्तरशत्रुभ्य इति सर्व एवेदं विजानन्ति । इमे हि मन्त्रगतमेकं पदं पौराणिकमेकमुपाख्यानं तथा कानिच स्मृतिवाक्यानि च पूर्वापरसन्दर्भानुपस्थापनेन प्रदर्शयन्तो व्यवस्थापयन्ति धर्मविशेषान्, प्रवर्तयन्ति च पामरान् तेष्विति नियतमिदं तेषां मतनिरासार्थं कर्तव्यम्, यत् पौर्वापर्यपरीक्षणं नाम । वदन्ति हि केचन भगवद्रामानुजादयो बहव एवाचार्या बहून् नीचजातीनप्युत्तमां दशां प्रापयन्निति । को वात्र विप्रतिपद्यते यत् पूर्वाचार्यैर्मोक्षमार्गे मतपरिवर्तनं कृतमिति तद्दृष्टान्तेन कथं वा धर्मपरिवर्तनं संभवति? एवं वदन्तो हि वयं न धर्मान्तरं प्रविष्टानां न लभते प्रवेशयोग्यतापीति वदामः, इदमेवास्माकमभिमतम्—यत् मोहम्मदादिमते प्रविष्टानां तत्रत्यस्त्रीसंसर्गाभावेऽष्टाचत्वारिंशदधिकभोजनाभावे च सहासनादिमात्रे एकेन

वत्सरेण स्वपूर्वतनजातिप्रवेशयोग्यता, अन्यथा तु तान्त्रिकदीक्षाधिकारादिना पृथक् संस्थान्तररूपतया व्यवस्थापने न हानिरिति।

यत्तु केचनाऽऽनन्दाश्रममुद्रापितदेवलस्मृतिमनुसृत्य विंशतिसंवत्सरमध्येऽपि स्वपूर्वतनजातिप्रवेशयोग्यतां श्रीकुर्तुकोटिशंकराचार्यप्रभृतयो मन्यन्ते, तत्रेदमेवास्माकं मतम्, यदुक्तदेवलस्मृतिप्रामाण्ये नोक्ता व्यवस्था शास्त्रविरुद्धा; परंतु मुद्रापितदेवलस्मृतेरस्याः प्रामाण्यविषये महान् संशयो वर्तते। मुद्रापितदेवलस्मृतौ हि नवतिश्लोका दृश्यन्ते। हेमाद्रिवीरमित्रोदयमिताक्षरादिनिबन्धसमु द्धृतानि तु देवलवचनानि प्रायेण त्रिशतं वर्तन्ते, यानि शुद्धिप्रकाशे समुद्धृत्यास्माभिः प्रकाशितानि। (पृष्ठ-१७१–२०५)। तत्रापि नवतिषु श्लोकद्वयमेव त्रिशतश्लोकमध्यगतं मुद्रापितदेवलस्मृतौ समुपलभामह इति कथं नु मुद्रापितदेवलस्मृतिप्रामाण्यं न सन्दिग्धमिति, असन्दिग्धप्रमाणानुसारिणी व्यवस्था यदि समादरणीया, तर्हि श्रीकुर्तुकोटिशङ्कराचार्याणां व्यवस्था परिवर्तनार्हेति प्रतिभाति। एतेन—श्रीदिवेकरशास्त्र्यादिप्रकाशिता व्यवस्थापि—व्याख्याता। हिन्दुमहासभादृता मलकानाशुद्धिस्तु मुद्रापितदेवलस्मृतिप्रामाण्येऽपि निर्मूला सर्वथाऽनादरयोग्या चेति सर्व एव विजानन्ति। एवं शुद्धिव्यवस्थापने बहवः सामान्यप्रायश्चित्तवाक्यमात्रोपस्थापनेन विशेषवचनानां तद्विरुद्धानामनुपस्थापनेन चान्यथान्यथा व्यवहरन्त्यस्मदीया आन्तरा एव जनाः विद्वांसश्चेति प्रत्यक्षमिदं सर्वेषाम्।

एवं चातुर्वर्ण्यं कर्मकृतमुत स्वभावकृतामिति विचारे आर्यसमाजीयाः संस्कारकाश्च कति वा वचनानि पौर्वापर्यसन्दर्भविरोधमविगणय्याम्यथाऽन्यथा योजयन्तीति सर्व एवेदं विजानन्ति।

चातुर्वर्ण्यप्रकाशेऽत्र सर्वाणि वचनानि सम्यगेव प्रायेण समालोचितान्येव। इदमेकं परं तत्रास्माकं मुद्रापणावसरे देशान्तरगमनात् संशोधकमहोदयैस्तत्र न योजितम्, यत् वज्रसूच्युपनिषदः समालोचनं नामेति, तदेकमत्रैवावसरमुपलक्ष्य योजयामः। सत्यं वज्रसूच्युपनिषदि जातिर्ब्राह्मण इति चेत्, तन्न; तत्र जात्यन्तरजन्तुष्वनेकजातिसंभवा महर्षयो बहवस्सन्ति; ऋष्यशृंगो मृग्याः, कौशिकः कुशात्, जम्बूको जम्बूकात्, वाल्मीकिर्वल्मीकात्, व्यासः कैवर्तकन्यायाः, शशपृष्ठात् गौतमः, वसिष्ठ उर्वश्याम्, अगस्त्यः कलशे जात इति श्रुतत्वात्; तत्रैतेषां जात्या विनाप्यग्रे ज्ञानप्रतिपादिता महर्षयो बहवः सन्ति; तस्मान्न जातिर्ब्राह्मण” इति जात्या न ब्राह्मण्यमिति प्रतिपादितम्, परंतु इदमेवात्रालोचनीयम्-यत् वज्रसूच्युपनिषदि प्रतिपाद्यमानं ब्राह्मण्यं किं कर्माधिकारप्रयोजनमुत मोक्षाधिकारप्रयोजनमिति। वयंतु पश्यामः—वज्रसूच्युपनिषदि यथा न जातिर्ब्राह्मण इति वर्णितम्, एवं न कर्मापि ब्राह्मण्यमिति। तद्यथाः—कर्म ब्राह्मण इति चेत्, तन्न ; सर्वेषां प्राणिनां प्रारब्धसञ्चिताऽऽगामिकर्मसाधर्म्यदर्शनात् ; तस्मान्न कर्म ब्राह्मणः, ज्ञानं ब्राह्मण इति चेन्न ; क्षत्रियादयोऽपि परमार्थदर्शिनो बहवस्सन्ति, तस्मान्न ज्ञानं ब्राह्मणः। धार्मिको ब्राह्मण इति चेत्, तन्न; क्षत्रियादयो हिरण्यदातारो बहवस्सन्तीति। एवंच वज्रसूच्युपनिषदि-यः कश्चिदात्मानमद्वितीयं जातिगुणक्रियाहीनं सत्यज्ञानानन्दानन्तरूपं स्वयं निर्विकल्पमशेषविकल्पाधारमखण्डानन्दस्वभावं करतलामलकवत्साक्षादपरोक्षीकृत्य कामरागादिरहितः शमदमादिसम्पन्नः, एवमुक्तलक्षणो यस्स ब्राह्मण इति प्रतिपाद्यमानं वर्णचतुष्टये ब्राह्मणस्यैव मोक्षाधिकार-

व्यवस्थापकं च ब्राह्मण्यमन्यादृशमेवेति नेयमुपनिषत् कर्मकृतं ब्राह्मण्यमिति सिद्धान्तस्यानुकूला, प्रत्युत—"ब्रह्मक्षत्रियवैश्य-शूद्रा इति चत्वारो वर्णाः, तेषां वर्णानां ब्राह्मणः प्रधानः" इत्युप-क्रमात् स्वभावतो वर्णा इति सिद्धान्तस्यैवेति।

एतेन—स्पर्शास्पर्शविचारोऽपि—व्याख्यातः। अस्मिन् हि प्रसङ्गे महात्मगान्धिमहाशया भोजनादि विवाहादि वान्त्यजैः साकं सङ्घटनार्थं नापेक्ष्यते, केवलं स्पर्शमात्रे किंचिदिवोदारदृ-ष्टिर्निक्षेप्तव्या इति वदन्तोऽपि अहमदाबादनगरे स्वीयाश्रमे परं सर्वजातीयानामेकत्र भोजनादिव्यवस्थामेव व्यवस्थापयन्तीत्य-हमदाबादनगरात् कलकतानगरं प्रत्यागतानामृषिकुलपाठशा-लाध्यक्षाणां श्रीमन्नानन्दस्वामिनामन्येषां च मुखादवगच्छन्तः के-चन महात्मानोऽप्येते वचस्येकं कर्मण्येकमिति सिद्धन्तमेव परि-पालयन्तीति मन्यन्ते, अस्माक तु अस्मिन् प्रसङ्गे महात्मनाम-प्येतेषामेका महती त्रुटिरत्र नानुल्लेखयोग्या, यत् भारतीयधर्म-विचारं त एव प्रथमतः जानपदसभायां यत्र, मोहम्मदाः खैस्त-वाश्चान्यधर्मावलम्बिनोऽपि विचारका व्यवस्थापका वा तत्रेमं स्मो-पस्थापयन्तीति। स्पर्शास्पर्शविचारोऽयं न धर्मशास्त्रमात्रानुबन्धी, किन्तु वैद्यकशिल्पशास्त्रादीनामप्यनुबन्धीति शुद्धिप्रकाशे व्यक्त-मेवास्ति व्यवस्थापितम्। यानि किल वचनानि अस्पृश्यस्पर्शदोष-तायां प्रमाणतया हिन्दूमहासभादिषूपस्थाप्यन्ते, मन्यन्ते तानि निबन्धकाराः माधवाचार्यादय आशौचिस्पर्शपराणीति, चर्म-कारादिस्पर्शदोषताव्यवस्थापनमधुनातनानां निबन्धकारव्यवस्था विरुद्धमपि वर्तते।

एतेन—व्रात्यसंस्कारोऽपि—व्याख्यातः। आपस्तम्बकातीय-

सूत्रभाष्यादिसमालोचनेन केचित् परम्परासहस्रमनुपनीतत्वेऽपि व्रात्यसंस्कार इति, अन्येतु द्वादशपरम्परापर्यन्तमनुपनीतत्वे स इति, इतरेतु परम्पराचतुष्टयमनुपनीतत्व एव स इति च वर्णयन्ति। सर्वेऽपीमे पक्षा यथाशक्ति शुद्धिप्रकाशे समालोच्यन्त। सर्वथा तु कलौ क्षत्रियवैश्या अपि सन्त्येवेति तु वयं पश्यामः।

विधवाविवाहे तु तद्धर्मतापक्षपातिनः संस्कारकाः आर्यसमाजीया अन्ये च सत्यं बहव एव वर्तन्ते, वयमपि तु विधवापुत्रेण विधवापरिग्रहं मन्वादीनामप्यविरुद्धमेव मन्यामहे। इदमेवात्र विप्रतिपन्नम्-यत् "नष्टे मृते प्रव्राजिते क्लीबे च पतिते पतौ। पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते" इति पराशरवचनं विधवाविवाहधर्मतायां ममकामिति, एवं पौनर्भवसंस्था वैदिकधर्मेऽप्यधिकरोतीति च। एतेन—ऋतुमतीविवाहोऽपि—व्याख्यातः। "दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजःस्वले"ति वचनं हि एकादशे वयस्यपि कदाचन रजः प्रादुर्भावमेव कासांचन गमयत् एकादशवयसः पूर्वं कन्याविवाहे न दोषः, तदनन्तरं तु रजःकालस्य सम्भाव्यमानतया कन्यापित्रादीनामतीवोद्वेगावसरो भवेदित्येव बोधयति, नतु एकादशादौ वयसि अनृतुमत्यामपि विवाहो न कर्तुं योग्य इति अनृतुमत्याः षोडशवयःपर्यन्तमपि विवाहो न दोषाय। शास्त्राणि हि "प्रदानं प्रागृतोरि" त्यादीनि रजः प्रादुर्भावात् पूर्वमेव कन्यादानमेव विदधते इति केचिन्मन्यन्ते। अन्येतु रजस्वलाया अपि प्रायश्चित्तपूर्वकं गौणकल्पतया विवाहो योग्य इति, परेतु आपत्कल्पतया तस्यास्स योग्य इति, एवं बहवोऽत्रापि मतभेदा उपाक्षप्स्यन्त विवाहप्रकाशे। विवाहेऽवान्तरजातिविभागपरिपालनं नापेक्षितमिति हि केचन, केचन तत्संघटनार्थं कुलपरीक्षोपयोगितया चावश्यं परिपालनीयमिति चरणव्यूहमहार्णवाद्यनुसारेण मन्यन्ते। सत्यं चरणव्यूहादयो न स्मृतिः,

किन्तु निबन्धा एव; तावतापि हि स्मृत्यन्तराविरोधे सन्न्यायानुगृहीतव्यवस्थान्तराविरोधे च प्रामाण्यं परमनपेतमेव।

एवमुपवर्णयतामस्माकमयमेवाशयः—यत् विना पौर्वापर्यसमालोचनं प्रमाणानां योजनेन हि महती किलाव्यवस्था धर्मशास्त्रेषु बहुभिरिदानीं सम्पाद्यत इति प्रमाणानां सर्वेषां सम्यक् समालोचनेन "तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ" इति नीत्यविरोधेन प्रकृतान्दोलनविषयाणां सर्वेषां दिक्प्रदर्शनसमर्थः कश्चन निबन्धग्रन्थः सर्वदेशीयपण्डितानामनुमत्या संग्रहणीय इति। इदमेव मनसिकृत्य माकिं पञ्चषवत्सरेभ्यः प्राक् सुप्रसिद्धभक्तप्रवर विरागिकुलचक्रवर्ति प्रत्यहाष्टपदीगानादिव्रतशतपवित्रितस्वान्तःकरण वार्करिसंप्रदायान्यतमपीठप्रवर्तक श्री १०८ खण्डूजी महाराजपरमशिष्यैः, तादृश श्री १०८ काशीरामपदचर्यालब्धतत्पीठाधिपत्यैः तादृशैः श्री १०८ सन्तोजीमहाराजैः हरिभक्तिपरायणश्री १०८ केशवदत्त महाराजैश्च सुप्रसिद्धगोविन्दचरणपरिचर्यालब्धप्रसादातिशयैः स्वधर्मनिष्ठानामुदारचरितानाममलनेरस्थतत्त्वविज्ञानमन्दिरादिबहुविधविद्यापीठजीवातूनां प्रसिद्धदानप्रवीर श्री प्रतापसेठमहाशयानाम्, तादृशानां तलोदानगरनिवासि श्रीमदोंकारदासचौधरीमहाशयानां तादृशानां तलोदाकुक्कुटमुण्डानन्दावत्यादिग्रामाभिजनश्रेष्ठिवर्याणां च साहाय्येन सनातनधर्मोज्जीविनी नाम्ना कापि सभा प्रतिष्ठापिता, यया महामहोपाध्यायपूज्यपादश्रीद्राविडलक्ष्मणशास्त्रिचरणानां पण्डितप्रवर श्रीशेण्डेसीतारामशास्त्रिपादानां पूज्यपादश्रीवामाचणभट्टाचार्याणामन्येषां च पण्डितानामनुमत्या ग्रन्थनिर्माणसमितिरियं सङ्घटिता, या किलाधो निर्दिश्यमानां प्रश्नावलिमेकां पत्रिकादिद्वारा प्राचकाशत्। सा यथाः—

विदितचरमिदं सर्वेषां पण्डितानां लौकिकानां च, यदिदानीं धर्मतत्त्वविषये बहुधा बहवो विप्रतिपद्यन्त इतीदानीन्तनैर्बहुभिरुपक्षिप्यमाणानां युक्तीनां पर्यालोचनेन पण्डितानामपि कथमपि धर्मतत्त्वविनिर्णयो नियतं कर्तव्यः समापतित इति। तदर्थं च पश्चिमखानदशस्थकुक्कुटमुण्डासंस्थानाधिपतिभिः हरिभक्तिपरायणैः श्रीसन्तोजीमहाराजसाधुमहोदयैः तथा सोनगीरसंस्थानाधिपतिभिः हरिभक्तपरायणैः श्रीकेशवदत्तमहाराजसाधुमहाशयैश्च काचन सभा सनातनधर्मोज्जीविनी नाम प्रतिष्ठापिता। तया च समित्या धर्मतत्त्वविनिर्णयार्थं तत्तद्देशीयानां मेलनेन सम्यक् समालोचनेन च सर्वविधसाधकबाधकयुक्तिविचारपूर्वकं निष्पक्षपातं कश्चन महान् निबन्धः सम्पादनीय इति विनिर्णयाधोनिर्दिष्टानां पण्डितानां समितिर्नियोजिता। तदनुमत्या वयमिदं प्रार्थयामः, यत् करिष्यमाणे धर्मतत्त्वविनिर्णये सर्वेषामेव सहाय्यके सति पण्डितैरनायासेनैतत् कार्यं कर्तुं शक्यम्, यावत् परपक्षाणां स्वरूपं याथातथ्यतो न परिज्ञातं भवेत्, तावत् तेषां कथं विचारः शक्येत कर्तुम्; अतः सर्वेपि लौकिकाः पण्डिताश्च भृशं प्रार्थ्यन्ते--साधकं बाधकं वा यत्किमपि स्वाभिप्रेतं सम्यग्विशदीकृत्याधोनिर्दिष्टानां प्रश्नानां यथोचितोत्तरदानमुखेन निबन्धद्वारा प्रेषयन्तोऽस्मानुपकुर्वन्त्विति। सुमहत्यस्मिन् कार्ये वयं विश्वसिमो यत् सर्वेऽपि सोत्साहं ससौहार्दं च यथाशक्ति स्वीयं साहाय्यं सम्पादयेयुरिति। अन्ते पुनरपीदमेव निवेदयामो यत् सन्दिग्धमतीनां सर्वथा संशयापनोदनमेव केवलं प्रयोजनमुद्दिश्य प्रवर्तमानानां धर्मपरायणानां श्रीसन्तोजीमहाराजानां तथा श्रीकेशवदत्तमहाराजानां च विद्यमानमतीवोत्साहं समुपलभ्य सर्वेषां पण्डितानां च साहाय्यं भावि मनसिकृत्य च वयमत्र कार्ये प्रवर्तामह इति यथोचितं साहाय्यप्रदानेन सफलीकर्तव्येयं प्रवृत्तिरिति।

## ग्रन्थप्रणयनसमितिकार्यकारिणः।

म० म० पण्डित प्रवर श्रीयुक्त राजयादेवेश्वरतर्करत्न भट्टाचार्याः, काशी
,, ,, ,, प्रथमनाथतर्कभूषण भट्टाचार्याः, ,,
,, ,, ,, नित्यानन्दपन्त पर्वतीयाः, काशी।
,, ,, ,, मुरलीधरझामहोदयाः, काशी।
,, ,, ,, वामाचरणन्यायाचार्याः, काशी।
,, ,, ,, पद्मनाभ भट्टाचार्याः, गोहाटी
म० म० पण्डित प्रवर श्रीयुक्त जयदेवमिश्रमहोदयाः, काशी।
,, ,, ,, अयोध्यानाथशर्माणो ज्योतिर्विदः,
,, ,, ,, अन्नदाचरण तर्कचूडामणयः,
,, ,, ,, लक्ष्मणशास्त्रिणो द्रविडाः, काशी।
,, ,, ,, फणिभूषण तर्कवागीशाः, काशी।

श्री पण्डितप्रवर पञ्चाननतर्करत्न महोदयाः, भाटपाडा।

,, वीरेश्वरशास्त्रिणो द्राविडाः, काशी।

,, पद्मनाभशास्त्रिणः, काशी।

,, रामभवन पण्डिताः, काशी।

,, अम्बादास शास्त्रिणः, काशी।

,, श्रीशङ्करतर्करत्नभट्टाचार्याः, काशी।

,, हरिनारायण त्रिपाठिनः, काशी।

,, गणपति शास्त्रिणः, काशी।

,, चन्द्रधरशर्माणः, काशी।

,, कविदेवीप्रसादशर्माणः, काशी।

,, सीताराम शास्त्रिणः, कलकत्ता।

,, माधवशास्त्रि भाण्डारिणः, काशी।

वेदान्तविशारदा अनन्तकृष्णशास्त्रिणः, कलकत्ता सम्पादकाः;

,, न्यायाचार्य राजेश्वर शास्त्रिणः, काशी, उपसम्पादकाः

## प्रश्नाः।

(१) हिन्दुत्वव्यपदेशनियामका धर्माः के? सनातनधर्मानुयायिमात्रवृत्ति हिन्दुत्वमुत तदन्यसाधारणमपि?

(२) धर्मतत्त्वविनिर्णयः केवलं युक्त्यधीन उत शास्त्रनिबन्धनः?

(३) युक्तिभिरस्पष्टब्धस्यार्थस्य बोधनार्थं शास्त्रं प्रवृत्तमुत युक्त्यनपेक्षया तत् प्रवृत्तम्? शास्त्रयुक्त्योर्विरोधे कस्य प्राबल्यम्?

(४) शास्त्रपदेन किं वेद एव विवक्षित उत स्मृतिपुराणेतिहासशिष्टाचारा अपि? वेदपदेन मंत्रभागस्यैव ग्रहणमुत ब्राह्मणादेरपि?

(५) शास्त्रार्थनिर्णयो मीमांसापरिपाट्या सम्पादनीय उतैतिहासिकशैल्या?

(६) क्रियाणां स्वरूपतो धर्मत्वमुत फलविशेषसाधनत्वेन?

(७) धर्मस्य फलं दृष्टमदृष्टमुभयं वा?

(८) अदृष्टफलानां धर्माणां देशकालपरिस्थितिमनुसृत्यान्यथा परिवर्तनं फलपर्यवसायि भवितुमर्हति न वा?

(९) धर्मज्ञसमयः प्रमाणमित्यत्र के धर्मज्ञाः? तेषां धर्मव्यवस्थापकत्वं शास्त्रमनुसृत्योत स्वतन्त्रम्? धर्मज्ञैः कदापि कस्यापि-धर्मस्याधर्मस्य वा देशकालस्थितिमनुसृत्य परिवर्तनं कृतं न वा? यदि कृतम्, तर्हि कस्मिन् समये कस्मै प्रयोजनाय कैर्धर्मज्ञैस्तत्कृतम्, कानि चात्र प्रमाणानि?

(१०) आपद्धर्म इत्यत्र आपत्पदेन कीदृशी आपद्विवक्षिता? आपद्धर्माः शास्त्रेषु परिगणिता न वा?

(११) इदानीं हिन्दुजनसंख्याह्रासादिपरिहारः कृतप्रायश्चित्तानां पतितानां स्वधर्मानुष्ठानयोग्यतास्वीकारमात्रेण।कृतप्रायश्चित्तानामपि दृष्टव्यवहारार्थं हिंदुत्वव्यपदेशस्वीकारमात्रेण च सम्भवति वा; उत स्वस्वपूर्वतनजातिषु विवाहादिगुरुतरसंसर्गव्यवस्थापनेनैव भवति। कृतप्रायश्चित्तानां पतितानां पृथक्तयाऽवस्थापनं हिंदुत्वसंरक्षणेन यदि क्रियते; तर्हि का नाम हानिः? अत्र कीदृशः शास्त्रीयो विनिर्णयः ?

इदानीं हिन्दूनामपेक्षितं सङ्घटनं यथावत् शास्त्रार्थानुष्ठापनेन सम्भवति, न वा? यदि न सम्भवति, तर्हि कस्य धर्मस्य कीदृशं परिवर्तनमपेक्षितम्?

(१३) आचारभेदो जातिभेदश्चेदानीन्तनवैमत्यस्य कारणमुतान्यत्?

(१४) पूर्वाचार्यैः केन निमित्तेन कस्मै प्रयोजनाय च जातिभेद आचारनियमो जीविकानियमश्च परिकल्पितः—? सत्यपि जात्यादिभेदे पूर्वतनकाले कदापि ऐकमत्यमासीद्वा न वा?

(१५) चातुर्वर्ण्यं कर्मकृतमुत जन्मकृतम्? मतद्वयेपि साधकबाधकानां वचनानां कथमविरोधः? संकरजातीनां परिवर्तनं शास्त्रीयं न वा? जन्मवैचित्र्यं पूर्वकृतशुभाशुभकर्मफलं न वा। (१६) शास्त्रबोधितस्वर्गनरकादिलोकान्तराणां सद्भावोऽस्ति न वा? (१७ अग्रेनिर्दिष्टानां आचाराणां किं दृष्टं कामक्रोधादिकं मूलमुतादृष्टोपयोगित्वेन श्रुतिरेव मूलम्? १ अस्पृश्यास्पर्शः २ अस्पृश्यानां देवालयादावप्रवेशः। ३ स्पृश्यकूपोदकादिष्वस्पृश्यनामसंव्यवहारः। ४ चातुर्वर्ण्यविवाहविशेषाः, विधवानां पुनरुद्वाहः। ५ समुद्रयाननिषेधः। ६ मतांतरप्रविष्टस्य पुनरपरिग्रहः। ७ वेदाध्ययनाधिकारस्यासार्वजनीनता? ८ भक्ष्याभक्ष्यविवेकः। ९ विधवानां केशवपः। १० संस्काराचारभेदाः—इति।

**प्रश्नावल्या अस्याः संग्रथने महामहोपाध्याय श्रीद्राविडलक्ष्मणशास्त्रिपादाः तथा तत्तनुजपण्डितप्रवरन्यायाचार्यश्रीराजेश्वरशास्त्रिणः पण्डितकुलमण्डन श्रीसीतारामशास्त्रिणश्च यदि स्वीयं साहाय्यं न दास्यन्ति, तर्हि तदेव प्रथमतोऽसंभूतं स्यात्, किं बहुना? प्रश्नावलीसंग्रथने, तदुत्तराणां समालोचने, ग्रन्थनिर्माणे समुचितोपदेशप्रदाने, कुसुमाञ्जल्यादितोऽपेक्षितप्रमाणसंग्रहणे संगृहीतप्रमाणविलेखने, मुद्रापणे, काशीस्थानां विदुषामनुमतिग्रहणे च श्रीन्यायाचार्याः श्रीराजेश्वरशास्त्रिणः प्रकाशक्षेत्राभिजनाण्णापण्डितोपाह्व श्रीदेवकृष्णशास्त्रिवराश्च यदि यथासंभवं न सहायाः, तर्हि प्रियपाठकमहोदयानामेतावता समयेनायं निबन्धो न कथमपि दृष्टिगोचरो भवेदिति वस्तुस्थितिकीर्तनमिदम्।**

प्राज्ञपाठशालाध्यक्षा स्वनामधन्याः श्रीनारायणशास्त्रिचरणमराठेमहाशयाः, श्रीसदाशिवशास्त्रिमहोदयाः, सुप्रसिद्ध श्रीचिन्तामणिराववैद्यमहोदयाः, पट्टाभिरामशंभुभट्टशर्ममहाशयाः, माननीयोडुप्पिसंस्कृतकलाशालाध्यक्षाः,नूतनमतानुयायिप्रबन्धविशेष सम्पादकाः श्रीसन्तोजीमहाराजपादाः,तत्प्रतिनिधयोऽन्येवा पण्डितप्रवराः, कलकत्तावङ्गीयब्राह्मणसभा सनातनधर्मसमितिसंस्कृतसाहित्यपरिषदादिसंस्थाविशेषाश्च समुचितप्रबन्धप्रेषणेन प्रमाणसंग्रहणार्थमपाक्षितसाहाय्यप्रदानेन विचारविनिमयप्रदानेन च यथासंभवं ग्रन्थनिर्माणकार्येऽस्मिन् महान्तमनुग्रहमकुर्वतेति ग्रन्थनिर्माणसमितिरियं तेषामधमर्णेति नेयमतिशयोक्तिः ।

इतः पूर्वतने द्वितीये वत्सरे दुःसहसौरसंतापबहलेऽपि ग्रीष्मसमये काश्यामुक्तनिबन्धविलेखनावसरे दूरदेशादागत्य कार्यान्तरपरित्यागेन दुःसहसौरसन्तापसहनेन च प्रत्यहं द्विवारमुक्तनिबन्धसमालोचनेन कृतानुग्रहाः म० म० श्रीवामाचरणभट्टाचार्याः पण्डितप्रवराः, श्रीमम्बादासशास्त्रिपादाः कलकत्ताविश्वविद्यालयाध्यापकश्रीसीतारामशास्त्रिमहाशयाः, म० म० श्री, द्राविडलक्ष्मणशास्त्रिचरणाः, पण्डित प्रकाण्डश्रीछोटुमहाराजाः-श्री १०८ सच्चिदानन्दसरस्वत्यः, श्रीमाधवशास्त्रिभाण्डारीमहोदयाः, म० म० श्रीनित्यानन्दपण्डितपादाः, अन्येच बहवः काशीस्थाः पण्डिता एवैतन्निबन्धस्य कर्तारः, वयंतु केवलं लेखका इति तत्त्वार्थकथनमिदम् ।

विदितमिदं सर्वेषाम्--यत् केसरिपत्रद्वारा नूनं श्रीदिवेकरशास्त्रिमहोदयाः प्राज्ञपाठशालोपाध्यक्षाः केषांचन सूचनानां प्रदानेनान्वगृह्णन्नस्माकमिति। तेषुच सांप्रतमनिर्णीतरूप एव प्रकाशनीयः, अनन्तरमुपसमित्या कयाचनायं निर्णीतावस्थः प्रकाशनीय इति सूचनमिदमस्माकमतिप्राक्तननिर्णयानुसार्य्येव वर्तते । पञ्चदशानां महाराष्ट्रपण्डितानामनुमत्यनन्तरमेव निर्णीतरूपमिदं प्रकाशनीयमिति सत्यं नूतनमिदं सूचनम् । इदमेवात्र

वयं सूचयामः—यत् सर्वदेशीयानामपि पञ्चदशानां पञ्चदशानां पण्डितानां यथासम्भवमनुमत्यनन्तरं तत्तद्धर्माचार्याणामन्ततः पञ्चषाणां सर्वेषां वा सविधे प्रेषयित्वा तेषामनुमत्यनन्तरं प्रकाशनं यदि श्रीदिवेकरशास्त्रिमहोदया अप्यनुमन्यन्ते, तर्हि महते विश्वासाय स्यादिति ।

अभूतपूर्वाः किल नूतनाः परमाणवः नूतनं च वातावरणमित्यादिकं सर्वमालोच्य नूतननूतना धर्मग्रन्थाश्चावश्यमपेक्ष्यन्ते । प्रत्नानामेवाचारविचाराणां समर्थनसंरक्षणसंवर्धनादिकमेव युक्तमित्यट्टहासेन तु नूतनेऽस्मिन् जगति न कदाऽपि हिन्दुसमाजस्य जीवनस्थित्यादिकं संभवतीति सूचनानुसारं नूतनधर्मग्रन्थप्रणयने तु न वयं नूनं समर्थाः, यतः पारलौकिकफलसम्बन्धादिकं नास्माभिः ज्ञातुं पार्यत इति सविनयं शास्त्रिमहोदयानां सविधे इदमेव प्रार्थयामः–यत् उक्तप्रबन्धसमालोचनावसरे कीदृशः कीदृशो नूतनो धर्मः कथं कथं प्रवर्तनीय इत्यपि सूचनेनानुग्राह्या वयम्, येनोपसमितिर्यत्र नवीनमतावलम्बिनोऽपि व्यवस्थापका भविष्यन्ति,सा सर्वं व्यवस्थापयितुं पारयेत्—इति ।

सर्वथा त्वनिर्णीतावस्थ एवायं साम्प्रतं निबन्ध इति उपरिप्रकाशयिष्यमाणपत्राणामनुसारेण बहूनां पण्डितानामाशयमनुसृत्यैवायं समालोनार्थं प्रेष्यत इति, बहूनां धर्माचार्याणम्, महामहोपाध्यायश्रीनित्यानन्दपाण्डितचरणानामन्येषां च महात्मनां कृपाकटाक्षपरिपूरितोऽयं नियतं श्रीमतां शुभसमालोचनयोग्यो भविष्यतीति कथं न सुदृढोऽयमस्माकं विश्वासः ?

अन्तेच वयमेतत्पुस्तकमुद्रापणार्थम्, तथा प्रमाणसंग्रहाद्यर्थं तत्तद्देशभ्रमणादिव्ययनिर्वाहार्थं चापेक्षितानां प्रायेण सर्वेषां रूप्याणां वितरणेन महदुपकृतवतां धर्मप्राणश्रीप्रतापसेठमहोदयानाम्, श्रीमदोंकारदासचौधरीप्रभृतीनां तलोदाकुक्कुटमुण्डानन्दावत्यादिग्रामाभिजनानाम्, कलिकातानगरनिवासिनां हरिभक्तिपरायणादिदानशौण्डश्रीमाडूनीरामबागडीमहोदयानां सर,

श्रीहरिरामगोयन्का श्रीरामप्रतापचमडिया श्रीयुक्तचुन्नीलालवर्म श्रीयुक्तरामधनदासझाझरियाप्रभृतीनामन्येषां च बहूनामुक्तग्रन्थमुद्रापणादिविषये मनसा वाचा कर्मणा च सह युञ्जानानामुत्तरोत्तरायुरारोग्यादिसम्पदभिवर्धतामिति भगवन्तमूमारमणं रमारमणं च प्रार्थयन्तः साञ्जलिबन्धं हिन्दुमहासभाप्रवर्तकान्, आर्यसमाजीयान्, ऐतिहासिकदृष्टिप्राधान्यवादिनस्तदप्राधान्यवादिनश्च सर्वानपि सविनयं च विज्ञापयामः—यत् वादकथाप्राधान्येन तत्त्वविनिर्णयेच्छयाऽत्र संशोधनार्हाणां प्रमादानां योजनीयानां प्रमाणान्तराणां विचारप्रणाल्या वा समुचिताया अन्यस्याः सूचनेन यथा सनातनधर्मसमाजे प्रचारयोग्योऽयं निबन्धः स्यात्, तथोपदेशजातप्रदानेनानुग्रहणीया वयमिति।

निबन्धोऽह्ययं महानप्याकारेण सार्धमासद्वयाभ्यन्तरे मुद्रापित इति त्वरातिशयेन दृष्टिदोषेणाक्षरयोजकानामतिपरिश्रमेण मुद्रणयन्त्रदोषेण च सञ्जातानामनिवारणीयानामक्षरच्युत्यादीनां कृते क्षमा कर्तव्येति प्रार्थयन्त उपसंहार इदमेवाशास्महे—यत् सादरमपेक्षितसामग्र्यादिव्यवस्थापनेन कार्यान्तराणां तत्प्रयुक्तायादीनां चाविगणनेनावश्यकर्तव्येष्वेकतममिदमपि स्वीयं धर्मकैङ्कर्यरूपं कार्यमिति मत्वा शीघ्रमेवायं निबन्धो यैर्मुद्राप्य प्रकाशनार्थं सन्नद्धीकृतस्तेषां धर्मप्राणानां कलकत्तावणिक्प्रेसाधिकारिणां श्रीयुक्तवैद्यनाथकेडियामहोदयानां तथा भारतमित्रसंचालकानां च सर्वेषां वितरतात् सर्वोत्तरां समुन्नतिं सर्वगुणसंपन्नो भगवान् श्रीमन्नारायण इति शिवम्।

श्री. रामनलाल हरिशंकर भट्ट.
शास्त्रभूषण, गुर्जररत्न

श्रीः

# सनातनधर्मप्रदीपस्य धर्माचार्याद्यनुमोदनपत्राणि

श्रीमत्परमहंसपरिव्राजकाचार्य श्रीकाञ्चीकामकोटिपीठाधिप जगद्गुरु श्रीशङ्कराचार्यश्रीमठसंस्थानात् ।

श्रीमतां तत्रभवतां सद्धर्मसंरक्षणानन्यसाधारणस्वाभिनिवेशानां पण्डितमण्डलीचकोररजनीकरायमाणानां निजोद्यमवारिसेकसुरक्ष्यमाणकलिचण्डकिरणम्लायत्सदाचाराङ्कुरनिचयानां श्रीश्रीसन्तोजीमहाराजमहाशयानां सन्तु नमांसि भूयांसि ।

भवतां भक्त्यतिशयात्पूर्णाभिमानाच्चात्र श्रीजगद्गुरुचरणास्त्रिषवणाराधितश्रीचन्द्रमौलीश्वरचरणाः अनवरताद्वैतविद्याविनोदजनितानन्दतुन्दिलितान्तःकरणाश्च सुखमासते । अवजिगमिषामो वयमत्रानुपदं दिने दिने वर्धमानं श्रीमतां क्षेमलाभातिशयम् ।

सनातनधर्मोज्जीविनीसभा भवदाहूता प्रत्यहमभिवर्धमाना प्रकाशत इति बहुजनमुखाद्विशेषत इदानीं भवच्छुभसन्देशपत्राच्चावगत्य महान्तं तोषमाप्नुवन्ति श्रीजगद्गुरुचरणाः ।

भवत्पत्रिकायां यथा भवता विज्ञापितम्, तथा ब्रह्म श्री वेदान्तविशारदश्रीयुक्तानन्तकृष्णशास्त्रिणः ऐषमकार्तिक शु० १२ बुधवासरे समागमन्, भवत्प्रेरणया पण्डितप्रकाण्डानां साहाय्येन च स्वलिखितं ग्रन्थं श्रीचरणसन्निधाने प्रादर्शयन्, अपठंश्च स्थलविशेषेषु ॥ नूनं महान् प्रयत्नः उररीकृतः श्रीशास्त्रिभिर्धर्मोद्धारणविषये ॥

आरब्धं च कार्यं अचिराद्यथा शोभनं पूर्येत, तथाऽनुगृह्णातु भगवान् श्रीचन्द्रमौलीश्वरः । इतीदमाशासनं भवद्भ्यो निवेद्यतामिति श्रीमदाचार्यचरणैराज्ञप्तोऽहमेवं निवेदये ॥

इति

श्रीगुरुचरणदासः
Sd. E N Subramania Sastri
श्रीमठीयसर्वाधिकारी

क्रधोन सं० कार्तिक ब० ३ भौमवासरेमु०
नच्चांदुप्पट्टी Nachandupatti
Pudukothi State
3 11 1925

OFFICE OF THE AGENT, SRINGERI MUTT,

Camp Puduvayal, Ramnad Dt.

No, 1168 Dated the 27th October 1925.

From

**N. SRIKANTHA SASTRY, Esq.,**
**Agent, Sringeri Mutt.**

To

M. R. Ry. VEDANTAVISARADA
Annantakrishna Sastry, Avl.,
*Secretary, Sanatana Dharmojjivini Sabha,*
KUKKURUMUNDA, West Khandesh.

SIR,

His Holiness Sri Jagadguru Shankaracharya has this day had an opportunity of hearing read the work entitled "Sanatana Dharma Nibandhana" written by you under the auspices of your Sabha with the assistance of its several Pundits and proposed to be published as a draft.

On a general survey of the work, His Holiness is of opinion that its contents are mostly in consonance with the teachings contained in our Smritis and other works of old as such embodying rules for the protection of SADACHARA and SADDHARMA, and that the publication of your work, as contemplated, will be a source of great help to such of the public as are interested in the maintenance of life in its pristine purity.

Yours faithfully,
SD. N. SREEKANTHA SASTRI
Agent, Sringeri Mutt.

*Shrimad Goswami Shri*

**Gokulnathjee Maharaj.**

*Telephone No. 351.*

*Telegraphic Address:—*

**"Holywrit."**

BADA MANDIR,

3rd Bhoiwada Bhuleshwar.

Bombay,..................................192 .

समस्तश्रुतिस्मृतिसूत्रपुराणेतिहासप्रमाणपरम्पराजेगीयमानशुद्धाद्वैतपुष्टिमार्गसम्प्रदायप्रतिष्ठापनपरमाचार्य वेदव्यासविष्णुस्वामिमतवर्ति श्रीश्रीमद्वल्लभाचार्य भगवद्वदनवंशावतंसाचार्यवर्य गोस्वामिकुलकौस्तुभ श्री १०८ श्रीगोकुलनाथमहाराजचरणाः समादिशन्ति धर्मश्रद्धावतो जनान्- यत्कतिपयमासेभ्यः पूर्वमस्मत्पण्डितैर्निवेदितोदन्ते ज्ञातमस्माभिर्यत्कुक्कुरमुण्डावासिनः शान्तदान्तस्वभावा विद्वत्प्रिया विद्वांसश्च श्रीसन्तोजी महाशया विविधदुस्तर्कवातविधूनितसनातनधर्मसमयेऽस्मिन् समये धर्मशुद्धिमभीप्समाना कलिकाताराजकीयमहाविद्यालयदर्शनाध्यापकश्रीमदनन्तकृष्णशास्त्रिणा काशीस्थराजकीयमहाविद्यालयदत्तन्यायपरीक्षेण श्रीराजेश्वरशास्त्रिणा च सम्पादितम् यावदुपलब्धश्रुतिस्मृतिसूत्रपुराणेतिहासागमसाधकबाधकवचनव्यवस्थोपलक्षितम्, सनातनधर्मविषयकं कमपि महानिबन्धं प्रकाशयितुमीहन्त इति ॥ कार्तिककृष्णदशम्यां सोमवासरे तत्प्रहितस्तमेव महानिबन्धं प्रादर्शयितुं सोयं श्रीमदनन्तकृष्णशास्त्री महाशयोऽस्मत्सविधे स्वयमुपस्थितः ॥ प्रादर्शयच्च लिपिकृतममुद्रितं महानिबन्धम्। अश्रावयच्च तदीयविशिष्टैकदेशविषयम्। अत्र हि प्रमाणभागश्चातुर्वर्ण्यभागः स्पर्शास्पर्शभागः पतितपरावर्तनभागो विधवाविवाहादिप्रकीर्णभागश्चेति विचारविभागाः सन्ति, सर्वेष्वपि विभागेषु सर्वप्रधानशास्त्रमीमांसासरण्या सप्रमाणं निपुणमेव धर्मविशुद्धिरुपपादिता वर्तते। सर्वथा प्रशंसनीयोऽयं भविष्यति निबन्धः। सर्वाचार्यविद्वत्संमतिभिरुपबृंहितस्तु पुनरसौ धर्मं जिज्ञासमानानां महान्तमेवोपकारं करिष्यतीति महान्विश्वासः। सम्प्रति तु निबन्धोऽयं विद्वत्परीक्षणायोपस्थापितः केवलं प्रतिकृतिमात्रमिव; यावद्यावद्भारतीयास्तिकाचार्यविद्वद्भिः परीक्षितः सम्मतश्च न स्यात्, तावत् प्रचारयोग्यो न स्यात्; तदर्थं चासौ मुद्राप्य षण्मासाभ्यन्तरे प्रत्याचार्यपीठम् प्रतिविशिष्टविबुधं च प्रहेष्यत इत्यनेन विद्वद्वर्येण विज्ञापितम्। दत्तं चास्मै प्रतिवचनमस्माभिर्यन्मुद्राप्य प्रहितेऽस्मिन्निबन्धे वयमिहास्मदीयविदुषां परिषदमेकामधिवेश्य तत्प्रतिपादितान्विषयान्पर्यालोच्य स्वसम्मतिं प्रदास्यामः—

कार्त्तिक कृष्ण ११

भौमवासरः सं० १९८२

वल्लभाब्द ४४८

इति

महाराजानामाज्ञया

भट्टश्रीरमानाथशास्त्री

॥ श्रीरस्तु ॥

त्रिशिरः पुरम्
२-११-२५

श्रीयुक्तानन्तकृष्णशास्त्रिमहाशयैः संगृहीतं सनातनधर्मोज्जीविनीसभामहानिबन्धं तैर्वाचितं बहुशः श्रुत्वा वयमत्यन्तमेवाश्चर्यभरिताः। अत्र प्रमाणविभागः, चातुर्वर्ण्यम्, अस्पृश्यताविचारः पतितपरावर्तनम्, व्रात्यसंस्कारः, विवाहभेदाः, इत्यादयः प्रकृतसमयोगिनस्सर्व एव विषयाः सप्रमाणं सोपपत्तिकञ्च समालोचिताः सनातनधर्मसिद्धान्तं सम्यगेव परिपोषयन्ति। अस्येदानीं समालोचनार्थं मुद्राप्य प्रथमं पण्डितानां पुरत उपस्थापनम्, अनन्तरञ्च सर्वमतसमालोचनपूर्वं ऊहापोहाभ्यां विषयपरिशोधनपूर्वकं निश्चितरूपेण प्रकाशनञ्च करिष्यत इति शास्त्रिमहाशयमुखादवगच्छामः। वयं तु मन्यामहे इदानीमेव निश्चितरूपेणैव प्रकाशनं योग्यम्; यद्यावश्यकम्, तर्हि संक्षिप्तस्यापरस्य पुस्तकस्य प्रकाशनेनैवालमिति। सर्वथा प्रकाशनयोग्योऽयं महानिबन्ध इति वयमस्मदीयमाशयमत्र प्रकाशयामः॥

इति

महामहोपाध्याय श्रीवेङ्कटसुब्रह्मण्य शास्त्रिणः
महामहोपाध्याय श्रीदण्डपाणिस्वामि दीक्षिताः
पण्डितप्रवर कं० च० श्रीकृष्णशास्त्रिणः
" श्रीविश्वनाथ शास्त्रिणः
" श्रीवेङ्कटराम शास्त्रिणः
" श्रीवैद्यनाथ शास्त्रिणः
" श्रीसुब्रह्मण्यशास्त्रिणः
महोपदेशक पं० श्रीसुन्दरशास्त्रिणः
पि० एस० श्रीवेंकटाचलशास्त्रिणश्च

## ॥ ओम् ॥

सनातनधर्मोज्जीविसभाद्वारा प्रकाश्यमानः सनातनधर्मप्रदीपाख्यो ग्रन्थः श्रीमदित्याद्यनन्तशास्त्रिभिः समग्रं वाचितः सम्यगश्रावि। अत्र बहूनां प्राचीनस्मृतीतिहासपुराणादिवचनानां तथा निबन्धकाराद्भुतव्यवस्थानां चोपष्टम्भनेन प्रमाणप्रकाशः चातुर्वर्ण्यप्रकाशः शुद्धिप्रकाशः विवाहप्रकाश इति चत्वारो विभागाः संगृहीताः अतीव लोकोपकारकाः प्राचीनपण्डितानां अत्यर्थं सन्तोषयितारः बहुशास्त्रसम्मताः, इदानीं अवश्यं प्रकटनीयाश्च वर्त्तन्ते। अस्य ग्रन्थस्य सम्यक् समालोचनेन स्वाशयप्रकाशनेन च लोकस्य महानुपकारः कृतः स्यादिति दृढं विश्वसिमः ॥

फालटी
१३-६-२६

( १ ) महामहोपाध्याय विद्यानिधि श्रीविरूपाक्षशास्त्रिणः।
( २ ) मीमांसाकण्ठीरव श्रीवैद्यनाथशास्त्रिणः।
( ३ ) महामहोपाध्याय श्रीपञ्चापगेशशास्त्रिणः।
( ४ ) श्रीवामन शास्त्री किंजवडेकर महोदयाः।

एतत्सभाविषयं प्रवृत्तिविशेषमवगत्य सनातनधर्मप्रदीपग्रन्थं च वाचयित्वा सुतरामयं प्रयत्नो जगदुपकारकारीति दृढमभिनन्दति परमामोदविशेषतः।

करुप्पत्तूरु श्रीवेंकटराम शास्त्री—
मैसूर-महाराजसंस्कृतपाठशालावेदभाष्योपाध्यायः।
रा० सूर्यनारायण शास्त्री ( कल्पादिः )।

---

॥ विश्वेश्वरः शरणम् ॥

## साङ्गवेद विद्यालयः

रामघाट काशी

श्रीसनातनधर्मोज्जीविनीसभया प्रार्थितैर्वेदान्तविशारद पं० अनन्तकृष्णशास्त्रि महोदयैर्महता परिश्रमेण सनातनधर्मसम्बन्धिषु सन्दिग्धेषु धर्मप्रमाणव्रात्यसंस्कार-विधवावेदन-ऋतुमतीविवाह-स्पृश्यास्पृश्यविवेक-पतितपरावर्तनादिजटिलविषयेषु नाना-निबन्धकृन्मतसङ्ग्रहणेन समाजसंस्कारकाणां मतपर्यालोचनेन च विनिर्मितोऽयं सनातनधर्मप्रदीपग्रन्थः सर्वेषामेव धर्मानुरागिणां विचारप्रवृत्तौ नितरां सहायको भविष्यतीति मन्यामहे। अयं च ग्रन्थः समालोचनाय सर्वेषां पण्डितानां निकटे प्रेष्यते, तस्य पर्यालोचपूर्वकं स्वस्वमतप्रकटनपूर्वकं विशेषतः स्वयं प्रतिभातानां विचाराणां च प्रकाशनेन सर्व एव धार्मिकाः साहाय्यमाचरन्तु। जटिलानां धर्मतत्त्वानां विशेषतो विमर्शनमन्तरा सन्दिग्धमतीनां धार्मिकाणामभीष्टधर्मतत्त्वनिर्णयोऽसम्भावितताभावहतीति, एतस्मिन् सकलजनोपकारके कर्मणि कथमप्युपेक्षा न विदधत्विति च साग्रहं निवेदयामः।

| | |
|---|---|
| श्रीयुत पण्डितप्रवर | श्रीपञ्चानन तर्करत्न भट्टाचार्याः |
| ,, ,, | श्रीमदम्बादास शास्त्रिमहोदयाः [प्रधानाध्यापकाः] |
| ,, ,, | अनन्तराम शास्त्रिमहोदयाः |
| श्रीयुत महामहोपाध्याय पण्डितप्रवर | मुरलीधरझा महोदयाः |
| ,, पण्डित प्रवर | देवीप्रसादशुक्ल कविचक्रवर्तिनः |
| ,, | सुनाकी कवि महोदयाः |
| ,, ,, | श्यामाचरण कविरत्न महोदयाः |
| ,, | चक्रधरझा महोदयाः |
| ,, ,, | राधाकान्तझा महोदयाः |
| ,, | गिरिश शुक्ल महोदयाः |
| ,, ,, | व्रजविहारीझा महोदयाः |
| ,, ,, | महादेव शास्त्रि महोदयाः |
| ,, ,, | रामरत्नओझा महोदयाः |
| ,, महामहोपाध्याय, पण्डितप्रवर | वामाचरण भट्टाचार्याः |
| ,, ,, | नित्यानन्द पण्डितपादाः |

| | | |
|---|---|---|
| श्रीयुत | महामहोपाध्याय पण्डित प्रवर | कमलकृष्णस्मृतितीर्थभट्टाचार्याः |
| ,, | ,, | चिन्नस्वामिशास्त्रिमहोदयाः |
| ,, | ,, | हरिनारायण त्रिपाठिनः |
| ,, | ,, | भगवानदत्तगौड़महोदयाः |
| ,, | महामहोपाध्याय पण्डित प्रवर | प्रभुदत्त शास्त्रिमहोदयाः |
| ,, | पण्डित प्रवर | विद्याधर मिश्राः |
| ,, | ,, | काशीनाथ मिश्राग्निहोत्रिणः |
| ,, | ,, | श्रीशङ्करतर्करत्नभट्टाचार्याः |
| ,, | महामहोपाध्याय पण्डितप्रवर | फणिभूषणतर्कवागीश भट्टाचार्याः |
| ,, | पण्डितप्रवर | विद्यारत्नोपाधिकरमणीमोहनशर्मा |
| ,, | ,, | हृषीकेशोपाध्याय ज्योतिर्विदः |
| ,, | ,, | बलदेव ज्योतिर्विद् |
| ,, | पण्डित प्रवर | पद्मनाभ शास्त्रिमहोदयाः |
| ,, | पण्डित प्रवर | गणपतिशास्त्रिमहोदयाः |
| ,, | ,, | ढुण्ढिराजशास्त्रिमहोदयाः |
| ,, | ,, | हारानचन्द्र भट्टाचार्याः |
| ,, | ,, | मन्मथनाथ वेदान्तवागीश भट्टा चार्याः |
| ,, | ,, | गोपाल भट्टाचार्याः |
| ,, | ,, | त्रैलोक्यनाथ साङ्ख्यरत्न भट्टाचार्याः |
| ,, | ,, | कविराज श्रीविश्वेश्वर प्रसाद भट्टाचार्या |
| ,, | ,, | शशिभूषणस्मृतितीर्थ भट्टाचार्याः |
| ,, | ,, | हरिहरप्रसाद भट्टाचार्याः |

श्रीः

# प्रमाणप्रकाशविषयानुक्रमणिका।

# चातुर्वर्ण्यप्रकाश विषयानुक्रमणिका ।

# प्रमाणप्रकाशशुद्धाशुद्धिपत्रिका।

| शुद्धम् | अशुद्धम् | पृष्ठसंख्या | पङ्क्तिसंख्या |
|---|---|---|---|
| | * भूमिका * | | |
| नाः | ना | (१) | ३ |
| रिल | र | (३) | ५ |
| शास | शस | (४) | ५ |
| शाय | शय | ,, | ,, |
| ड्‌ | ड़ | (५) | १५ |
| द्या | द्द | (६) | २२ |
| र्याः | र्या | ,, | २४ |
| त्त्रा | च | (७) | ६ |
| मा | मामा | ,, | १३ |
| न | ना | (७) | १५ |
| मन्या | मान्या | (८) | ८ |
| | * प्रमाण प्रकाशः * | | |
| सर | स | ,, | १६ |
| मप | म | ७ | १२ |
| वै | व | ८ | ६ |
| क्ति | द्दि | ६ | १६ |
| क्त्या | त्या | १२ | ३ |
| ष्टा | ष्ठ | ,, | १२ |
| व्यव | व्य | १३ | २२ |
| मू | भू | २२ | ७ |
| बु | न | ,, | १५ |
| थं | थ | ,, | १५ |
| ष्मिक | ष्मि | २७ | १६ |
| हिं | हि | २६ | ६ |
| ह्युं | ह्य | ३५ | १३ |
| र्वो | र्त्रो | ३६ | १ |
| शे | श | ,, | १७ |
| स्त्र | स्त्र | ३७ | २४ |
| स्वा | स्या | ३८ | ११ |
| सा | स | ३६ | २ |
| मन्त | सत | ४१ | २ |
| प्रा | प्र | ४१ | १२ |
| तूर्किं | तर्किं | ,, | ६ |
| र्विद्ध | विद्धा | ,, | २२ |
| मध्य | ममप्य | ४४ | ४ |
| स्भ | स्म | ४८ | १७ |
| धा | ध | ४६ | १७ |
| प्यु | प्य | ८२ | १६ |
| क्रि | क्रि | ६६ | १६ |
| र्हि | हि | ,, | १६ |
| र्नें | ने | ६६ | १३ |
| र्में | भें | १०१ | १८ |
| तैः | तः | १११ | ५ |
| शा | चशा | १५५ | १६ |
| न्ध | ध | २३ | ,, |
| श्च | श्च | ५२२ | ६ |
| रि | री | ३७ | १२ |

| | | | |
|---|---|---|---|
| दृश्य | द्रृश्य | ५५० | १३ |
| स्थ | स्य | ,, | १४ |
| ध्याप | ध्याय | ,, | १८ |

---

चातुर्वर्ण्यप्रकाशशुद्धाशुद्धपत्रिका

| | | | |
|---|---|---|---|
| प्रस | प्र | १ | ११ |
| लाशू | शूला | २ | २४ |
| वसू | व | १४ | २४ |
| ब्राया | ब्रासू | ,, | ,, |
| वा | व | २२ | ४ |
| पां | प | ,, | ७ |
| ष्टुं | ष्टु | २३ | ४ |
| वाना | वना | २४ | २१ |
| र्मे | म | ,, | ,, |
| रौ | रानौ | २६ | १२ |
| त्य | त | ,, | १३ |
| स्मा | रमा | ३१ | १८ |
| * र्णे | ण | ,, | ५ |
| द | दे | ४० | १० |
| त | य | ५६ | १ |
| प्रा | प्र | ,, | १६ |
| बति | वाति | ६१ | ६ |
| र्ण | ण | ६ | १४ |
| स्तु | स्तु | १०३ | २३ |
| र्ष | ष | १६५ | २४ |
| स्व | स | १७३ | ४ |
| पपा | पा | १७ | ६ |
| शे | तमे | ,, | ,, |
| क्षणो | क्ष | १८० | ११ |
| द्राः | द्रा | १८१ | २४ |
| र्त | त | ३४० | १४ |
| र्भ | भ | ३४५ | २ |
| र्म | म | ,, | ३ |
| म | मय | ,, | ४ |
| र्ब | ब | ,, | ६ |
| यथा | तथ | ,, | १५ |



---

* अत्र बहुषु स्थलेषु यन्त्रदोषेण रेफः उपरितन एवमेकारैकारोकारौरादयश्च भग्नाः, एवमक्षराभावेन इति इत्यस्य स्थाने इति इत्यस्य स्थाने च योजितमिति तादृशाः प्रमादाः, ध्य इत्येतदर्थं ध्य इति प्रमादेन साकं पाठकमहोदयैः स्वयमेवशोध्येरन्निति यथा संभवमपर एव प्रमादाः संगृह्य संशोध्यन्ते । सम्पादक ।

॥ श्रीरस्तु ॥

॥ श्रीमहागणपतये नमः ॥

॥ श्रीविठ्ठलेशाय नमः ॥

॥ श्रीगुरुभ्यो नमः ॥

# सनातनधर्मप्रदीपः

## (१) प्रमाणप्रकाशः ।

मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणम् ॥

[उपोद्घातः]

अस्ति किल महदिदमान्दोलनं यद्धर्मविशेषाः केचन इदानीतन-परिस्थित्यनुगुणं परिवर्तनीयाः, तथा न परिवर्तनीया इति च चरितविमर्शकरीतिपक्षपातिनां मीमांस-करीतिपक्षपातिनां च सर्वत्र भारते वर्षे । तत्र समालोचन-मर्हन्तो विषयास्तु इम एव—यच्चातुर्वर्ण्यव्यवस्था, कलौ क्षत्रिया-दिसत्त्वम्, स्पर्शास्पर्शविचारः, पतितपरावर्तनम्, कृतप्रायश्चित्तानां समुद्रयायिनां व्यवहारयोग्यता, व्रात्यसंस्कारः, असवर्णविवाहः, ऋतुमतीविवाहः, विधवाविवाहः, विवाहेऽवान्तरजातीनामुपयोग इत्यादयः ॥ तत्र चरितविमर्शकानां रीतिर्वस्तूपस्थापन एवोप-युज्यते, नतु तस्य वस्तुनो योग्यायोग्यताविचारे, तत्र तु मीमांस-करीतिरेवोपयुज्यत इति श्रीभारतेतिहाससंशोधकाः श्रीचिन्ताम-णिराववैद्यमहोदयाः, अन्ये च बहवः प्राचीनमतानुसारिणो मन्य-न्ते ; इतरे तु केचन चरितविमर्शकानां रीतिरेव तदुपस्थापितस्य

वस्तुनो योग्यायोग्यतानिर्णयेऽप्युपयुज्यत इति। तत्र प्रथममते न युक्तीनां स्वतन्त्रतया धर्मप्रमाणता, इतरत्र तु तासां तत्र स्वतः प्रमाणता।

[ युक्तीनां धर्मे स्वतःप्रामाण्यनिरासः ]

तदत्र धर्मतत्त्वविनिर्णयार्थं प्रवृत्तानामस्माकं युक्तिप्राधान्यवादिनां मतनिरासो हि प्रथमं कर्तव्यः। तत्र केवलयुक्तिर्न कथमपि धर्मप्रमाणतामर्हतीति बहुसम्मतमिदम्। युक्तिर्हि नामानुमानम्, अनु पश्चात् सञ्जातं प्रमाणमिति मानान्तरमपेक्ष्यैवात्मानं लभते। तच्च मानं युक्त्यनपेक्षं प्रत्यक्षं वा स्यादागमो वेत्यवश्यमेवोरीकर्तव्यम्। ययोर्हि दण्डघटयोः कार्यकारणभावोऽनुमानगम्यस्तयोर्दण्डघटयोरुभयोरपि स्वरूपतः प्रत्यक्षगम्यत्वं वर्तत इत्यनुमानं तदनपेक्षप्रत्यक्षापेक्षं वर्तत इति सर्वविदितमिदम्। गुरुत्वाद्यनुमानस्थलेऽप्याद्यपतनं कार्यं स्वरूपतः प्रत्यक्षगम्यमेव वर्तते। चक्षुराद्यतीन्द्रियानुमानस्थलेऽपि यया रूपाद्युपलब्ध्या चक्षुराद्यनुमानं तस्या रूपाद्युपलब्धेरनुमानातिरिक्तप्रत्यक्षगम्यत्वं वर्तत एव। यागस्वर्गयोस्तु यागः स्वरूपतो यद्यपि प्रत्यक्षः, एवमपि स्वर्गः स्वरूपतो न प्रत्यक्ष इति यागस्वर्गयोः साध्यसाधनभावो न दण्डघटयोरिवानुमानगम्यो भवितुमर्हति; नवा गुरुत्वाद्यपतनयोरिव। नहि नित्यपरोक्षस्य गुरुत्वस्येव स्वर्गस्यानुमेयत्वं संभवति। कार्येण हि कारणानुमानम्, नतु कारणेन कार्यस्य। नहीदानीं किमपि स्वर्गकार्यं कस्यापि जायमानं दृश्यते। यत्तु कारणलिङ्गकानुमानं गौतमसूत्रे प्रदर्शितम्—यथा मेघोन्नत्या वृष्टेरनुमानम्, तत्रापि सजातीययोः सम्बन्धः प्रत्यक्षगम्य एव वर्तते। तथाच स्वर्गस्य केनापि प्रमाण-

न्तरेणाऽप्रसिद्धत्वात्तस्य यागस्य च साध्यसाधनभावाख्यः सम्बन्धोऽपि नानुमेयो भवितुमर्हतीति सिद्धम्। अत एव नित्यपरोक्षातीन्द्रियफलसाधनत्वम् क्रियाविशेषाणां वेदे यद् बोधितम्, तदिदं नानुमानगम्यं भवितुमर्हति, नवा प्रत्यक्षगम्यमिति वैदिकानां धर्माणां युक्तिमूलकत्ववादोऽयं न विकल्पसह इति सिद्धम्।

[ उक्तार्थेकुमारिल वार्तिकोपष्टंभः ] व्यक्तं चैतत् श्लोकवार्तिके प्रत्यक्षसूत्रे। तद्यथा—

"प्रत्यक्षेण गृहीत्वा च लिङ्गाद्यन्यतमं ध्रुवम्।
प्रवृत्तिरनुमानादेर्न च धर्मेऽस्ति तादृशम्॥
अनुमानानुमानादेर्नचाप्यस्तीह सम्भवः।
सम्बन्धलिङ्गलिङ्गानां पूर्वसिद्धेरसम्भवात्॥
सत्ता च नानुमानेन कस्यचित् प्रतिपद्यते।
धर्मेणान्यद्विशेष्यं चेत् पक्षोऽसिद्धविशेषणः॥
तस्माददृष्टपूर्वत्वात् केनचिद्वस्तुना सह।
धर्मस्य नानुमेयत्वमसाधारणवस्तुवत्॥
अदृष्टसदृशत्वाच्च स्वयं चानुपलम्भनात्।

---

अत्रच स्पष्टप्रतिपत्त्यर्थं न्यायरत्नाकर संग्रहणमपि सम्पादयामः। तद्यथा—

"एवं च सामान्यतो वा विशेषतो वा प्रत्यक्षगृहीत पदार्थेऽनुमानादिप्रवृत्तिः सम्बन्धग्रहणापेक्षत्वात्, अगृहीते सम्बन्धिनि तद्ग्रहणासम्भवात्। लिङ्गत्वेन वा सदृशत्वेन वा धूमगवयादिकं गृहीत्वाऽनुमानादेः प्रवृत्तिः, न चागृहीतेऽग्नौ वा गवि वा तल्लिङ्गतया वा तत्सदृशतया वा धूमगवयादिग्रहणं सम्भवति। तदनेन प्रकारेणानुमानादिप्रमेयस्यैव प्रत्यक्षग्रहणापेक्षिता दर्शिता भवति। धर्मस्य चाप्रत्यक्षत्वेन तल्लिङ्गं तत्सदृशं वा न शक्यं ग्रहीतुमिति नानुमानादेर्धर्मं प्रति निमित्ततेति। नचानुमितानुमानमपि धर्मे सम्भवति; तस्यापि प्रत्यक्षपूर्वकत्वात्। यावद्धि न कार्यं कारणं तयोश्च सम्बन्धः प्रत्यक्षेण गृहीतः, न तावदनुमितयाऽपि गत्या तत्कारणमनुमातुं शक्यम्; धर्मस्य क्वचिदपि प्रमाणेन सिद्ध्यभावात्। न ह्यप्रमितसद्भावेन वस्तुना शक्यमन्यद्विशेष्टुम्। न तर्हि धर्मानुवादेन प्रमाणविधिः सिद्ध्येत्; सत्यम्,

धर्मस्य नोपमेयत्वमसाधारणवद्भवेत् ॥
नन्वर्थापत्तिरेवं स्याज्जगद्वैचित्र्यदर्शनात् ।
सुखदुःखादिभेदो हि नादृष्टात् कारणाद्भवेत् ॥
दृष्टस्य व्यभिचारित्वात्तदभावेऽपि सम्भवात्
सेवाध्ययनतुल्यत्वे दृष्टा च फलभिन्नता ॥
स्यादेवं यदि शक्येत स्वाभाविकनिवारणा ।
कर्मशक्तेश्च वैचित्र्ये हेतुरन्यो भवेद्यदि ।
यथाच फलवैचित्र्ये कर्मणां शक्तता स्वतः ।
तथापि चित्रता लोके स्वभावादुपपत्स्यते ॥
अधर्मे धर्मरूपे वा ह्यविभक्ते फलं प्रति ।
किमप्यस्तीति विज्ञानं नराणां क्वोपयुज्यते ?
किन्तु यागादितो दुःखं हिंसादेः किं सुखोद्भवः ?
स्वर्गपुत्रादिभेदश्च कीदृशात्कर्मभेदतः ॥
इति यावदविज्ञानं तावन्नैव प्रवर्तते ।
प्रवृत्त्यङ्गं च विज्ञानं तस्य मूलं प्रतीच्यते ॥
तस्मात्सिद्धेऽपि सामान्ये विशेषो नागमादृते ।
विशेषस्य तु जिज्ञासा सूत्रकारेण सूत्रिता ॥
मृग्यमाने विशेषे च तदन्तर्भावकारितः ।

यदि विद्यमानो यो धर्म इत्यनूद्येत, यदा तु योऽयं निष्प्रमाणत्वादिविवादास्पदीभूत इत्यनूद्येत, तदा विवादास्पदीभूतस्यानूद्यमानस्य प्रमाणसिद्धिरस्त्येव । अनूद्यमान-सिद्धिरेव चानुवादस्यापेक्षिता, न धर्मस्वरूपस्य । येतु तस्यापि सामान्यतः सिद्धि-मेव मन्यन्ते, तेषां कुतः सिद्धिरिति वक्तव्यम्, पक्षोऽसिद्धविशेषण इति ग्रन्थ-विरोधः । एवमुपपादितमनुमानाद्यविषयत्वं सौगतान् प्रति प्रयोगेण दर्शयति— तस्मादिति द्वितयेन । कस्यचित् प्रयस्यतोऽपि धनं न भवति, कस्यचिदप्रयस्यतोऽपि भवतीति । यदि ब्रह्महत्याश्वमेधयोः शक्तिवैचित्र्ये स्वभावादन्यो हेतुः स्यात्, ततो निवार्येत स्वाभाविकत्वम् । न चासावस्तीत्यतो यथाकर्म शक्तिवैचित्र्यं स्वाभा-

सामान्यप्रत्ययोऽपि स्यात् शास्त्रादेवेत्यकारणम् ।
यथार्थापत्तिरेवं च नानुमानोपमेष्यते ॥
शास्त्रं चेत्तदपेक्षेत तस्यैव स्यात् प्रमाणता ।
यद्यपि त्वनुमानस्याप्येवमादौ समर्थता ।
विना सम्बन्धबोधेन न तु तस्योद्भवः क्वचित् ॥
न सामान्यविशेषाभ्यां धर्मसंबन्धदर्शनम् ।
लिङ्गस्य कस्यचित्सिद्धम्, येन स्यादनुमानता ॥

[ निषेधेऽपि शास्त्रमात्रगम्यत्वे वार्तिकोपष्टम्भः ]

एतेन निषेधोऽपि व्याख्यातः; हिंसादीनामनर्थसाधनत्वमपि हि नानुमानगम्यम्। व्यक्तं चैतत् कुमारिलपादैश्चोदनासूत्रे विवेचितम्। तद्यथा—

"निषेधेनानवष्टब्धे विषये ह्यनर्थता ।
प्रत्यक्षादेरशक्यत्वात्कल्प्यते निष्प्रमाणिका ।

---

विकम्। एवं जगद्वैचित्र्यमेवास्तु, किमन्तर्गडुना कर्मणेत्याह–यथा चेति ।* नन्वव्यभिचारात्कर्मशक्तीनां युक्तं स्वाभाविकत्वम्, न चैवं जगद्वैचित्र्यस्य सम्भवति एकस्यैव हि दारिद्र्यमैश्वर्यञ्च पर्यायेण दृश्यते। तत् स्वाभाविकत्वेऽनुपपन्नम्। अतोऽवश्यम्भाविनि कारणे दृष्टस्य व्यभिचारादद्दृष्टं कल्प्यम्। अत आह—अधर्म इति ।* भवत्वेवम्, दुःखफलसाधनमधर्मो ब्रह्महत्यादिः, सुखफलहेतुश्च धर्मोऽग्निहोत्रादिः। सुखेऽपीदं स्वर्गस्य साधनमिदं पशोरिति यावत् फलविशेषम् प्रति धर्माधर्मौ न विभज्येते, तावत् किमप्यदृष्टमस्तीत्येतावदर्थापत्तिज्ञानमनुपयोगीति ।

गम्यमान इति ।* सामान्यं हि साधयन्ती अर्थापत्तिर्न विशेषं निर्धारयितुमलम्। विशेषं तु साधयच्छास्त्रमन्तर्णीतसामान्यमेव साधयतीति किं प्रमाणान्तरेण? नन्वनुमानमपि भूमादौ समर्थमेव। भूमा व्यवहिता विप्रकृष्टा च वृष्टिर्नदीपूरेणानुमीयते, मेघोन्नत्या च भविष्यन्ती वृष्टिः। सूक्ष्मं च द्रव्यं गन्धात्। अतो न सर्वनिषेधोपपत्तिरित्यत आह—यद्यपीति। न सामान्येति ।* धर्मसामान्ये वा धर्मविशेषे वा न कस्यचिल्लिङ्गस्य सम्बन्धग्रहणमस्ति, येन धर्मोऽस्तीति वा, अग्निहोत्रादेर्वा धर्मत्वमनुमीयेत। अतो नानुमानं सम्भवतीति" ॥

नहि हिंसाद्यनुष्ठाने तदानीं दोषदर्शनम् ।
बाह्येऽपि विचिकित्सा तु शास्त्रादेवोपजायते ॥
हिंस्यमानस्य दुःखित्वं दृश्यते यत्, न तावता ।
कर्तुर्दुःखानुमानं स्यात् तदानीं तद्विपर्ययः ॥
विषयोऽस्याः फलं यादृक् प्रेत्यकर्तुस्तथाविधम् ।
हिंसा क्रियाविशेषत्वात् सूते शास्त्रोक्तदानवत् ॥
य एवमाह, तस्यापि गुरुस्त्रीगमनादिभिः ।
सुरापानादिभिश्चापि विपक्षैर्व्यभिचारिता ॥
विरुद्धता च यावद्धि दानैस्तादृक् फलं भवेत् ।
विधिगम्यफलावाप्तिरदुःखात्मकता तथा ॥
नच या सम्प्रदानस्य प्रीतिस्तादृक्फलं श्रुतम् ।
दातुः, तेन हि दृष्टान्तः साध्यहीनः प्रतीयते ॥
सम्प्रदानं च दाने ते विषयः कर्म हिंसने ।
वैषम्यं सम्प्रदाने तु पक्षे त्वेतद्विरुद्धता ॥

अतैवं न्यायरत्नाकरोऽपि—

अथ सत्यपि निषेधे किमित्यनर्थोऽग्नीषोमीयहिंसा न भवतीत्यत आह—निषेधेनेति ।* निषेध एव ह्यनर्थत्वे प्रमाणम् । प्रत्यक्षादीनामशक्तत्वात् । अतोऽप्रतिषेद्धे निष्प्रमाणिकाऽनर्थता कल्प्येतेति । प्रत्यक्षाद्यशक्तिं तावद्दर्शयति—नहीति ।* नन्वसत्यपि दोषदर्शने बाह्यहिंसासु विचिकित्सा जायतेऽत आह—बाह्येऽपीति ।* तच्च शास्त्रमिह नास्तीति न तन्निबन्धना विचिकित्सेति । अथानुमानेन कर्तुर्दुःखं भविष्यतीत्यनुमीयते, हिंस्यमानस्य तदात्वे दुःखदर्शनादत आह—हिंस्यमानेति पादत्रयेण ।*व्याप्त्यभावादित्यर्थः । प्रत्युत कर्तुस्तदात्वे सुखदर्शनात्कालान्तरेऽपि तदेवानुमीयत इत्याह—तदानीमिति ।* पूर्वशंकितमनुमानं दर्शयति—विषय इति ।* हिंसेति धर्मिनिर्देशः । अस्या हिंसाया विषये हिंस्यमाने यादृक् फलं दुःखं तादृगेव कालान्तरे कर्तुः प्रसूते इति प्रतिज्ञा । क्रियाविशेषत्वाच्छास्त्रोक्तदानवत् । तद्धि स्वविषये सम्प्रदाने यादृक् फलं सुखं तादृगेव कर्तुः प्रसूत इति । तद् षयति—

प्रीयते सम्प्रदानं हि देवतेति मतिस्तव।
दृष्टान्ते कर्म दानं चेत्तस्य कीदृक् फलं भवेत् ॥
जपहोमादिदृष्टान्तात्परपीडादिवर्जनात्।
चोदितत्वस्य हेतुत्वाद्विरुद्धाऽव्यभिचारिता ॥
विहितप्रतिषिद्धत्वे मुक्त्वाऽन्यन्न च कारणम्।
धर्माधर्मावबोधस्य, तेनायुक्ताऽनुमानगीः॥
अनुग्रहाच्च धर्मत्वं पीडातश्चाप्यधर्मता।
वदतो जपसीध्वादिपानादौ नोभयं भवेत् ॥
क्रोशता हृदयेनापि गुरुदाराभिगामिनाम्।
भूयान् धर्मः प्रसज्येत, भूयसी ह्युपकारिता॥
अनुमानप्रधानस्य प्रतिषेधानपेक्षिणः।
हृदयक्रोशनं कस्मात् ? दृष्टां पीडामपश्यतः॥
पीडातश्चाप्यधर्मत्वं तथा पीडामधर्मतः।
अन्योन्याश्रयमाप्नोति विना शास्त्रेण साधयन्॥
एवमादावशास्त्रज्ञो म्लेच्छो नोद्विजते क्वचित्।
तस्य नाधर्मयोगः स्यात्, पूर्वोक्ता यदि कल्पना ॥
तस्मादनुग्रहं पीडां तदभावमपास्य च।
धर्माधर्मार्थिभिर्नित्यं मृग्यौ विधिनिषेधकौ ॥

---

य एवमिति ।# दूषणान्तरमाह—विरुद्धतेति ।# कथमित्याह—यादृगिति । तादृक्-त्वमेव दर्शयति—विधिगम्येति ।# तथापि कथं विरोध इत्याह—अदुःखेति ।# तथा सति विधिगम्यफलत्वे सत्यदुःखात्मकता फलस्य स्यात्। ततश्च दुःखविपरीतसुख-साधनत्वाद्विरुद्धतेति । दृष्टान्तश्च साध्यविकल इत्याह—न चेति ।# सम्प्रदानस्य स्वल्पं सुखम्, कर्तुस्तु महत्, समद्विगुणसहस्रानन्तानि फलानीति स्मृतेरिति। किञ्च सपक्षे येनैव हेतोर्व्याप्तिस्तेनैव पक्षेऽपि साधयितव्यम्। इह च सम्प्रदानतुल्य-फलत्वम्, सपक्षे कर्मकारक तुल्यफलत्वं तु पक्षे विषयः, शब्दमात्रं त्वेकमर्थस्तु विषय

क्वचिदस्यानिषिद्धत्वाच्छक्तिः शास्त्रेण बोधिता।
प्रत्यवायनिमित्तत्वे विधिना नापगच्छति ॥
शास्त्रेण नहि शक्तीनामावापोद्वापनक्रियाः।
विद्यमाना हि कथ्यन्ते शक्तयो द्रव्यकर्मणाम्।
तदेव चेदं कर्मेति शास्त्रमेवानुधावता।
हिंसादीनामधर्मत्वं कथ्यते नानुमानतः ॥
एवं ये निपुणं प्राहुस्तैरप्येतत् परीक्ष्यताम्।
सुरापानादिभिः शूद्रः किं याति नरकं कृतैः ॥
वैश्यस्तोमेन वा किं स्याद्विप्रराजन्ययोः फलम्।
पञ्चम्यामिष्टिकरणात् मध्यान्हे चाग्निहोत्रतः ॥
तस्माद्यद्यादृशं कर्म यत्फलोत्पत्तिशक्तिकम्।
शास्त्रेण गम्यते तस्य तादृशस्यैव तत् फलम् ॥

---

एवेति नानुमानोपपत्तिरित्याह—सम्प्रदानमिति वैषम्यमन्तेन ।* यदितु सपक्षवत् पक्षेऽपि सम्प्रदानतुल्यफलत्वमेव साध्यते, ततो विरुद्धता हेतोरित्याह—सम्प्रदान इति ।* कथमित्याह—प्रीयत इति ।* ततश्च दुःखफलत्वसाधनाय प्रयुक्तो हेतुः सुख फलत्वसाधनाद्विरुद्धः स्यादिति शंकते—दृष्टान्त इति ।* उभयत्र कर्मवचनत्वाच्च वैषम्यमिति। दूषयति—तस्येति। नहि हिरण्यादेर्देयस्य किंचिदपि फलमस्तीति। दूषणान्तरमाह—जपेति ।* अग्नीषोमीयहिंसा सुखकरी चोदितत्वाज्जपादिवत्। किञ्चागमैकविषययोर्धर्माधर्मयोरनुमानोपन्यासो न युक्त इत्याह—विहितेति ।* किंच विषयानुरूपफलदायित्वादिना परस्यात्मनो वा पीडानुग्रहनिबन्धनं धर्माधर्मत्वमाश्रि- तम्, ततश्च जपे सुरापाने च परोपकारापकाराभावात् धर्माधर्मत्वे न स्यातामि- त्याह—अनुग्रहादिति ।* गुरुदाराभिगमश्च धर्मः स्यादित्याह—क्रोशतेति ।* यद्यपि गुरुदाराभिगामी हृदयक्रोशमल्पमात्मनोऽपकारं करोति, तथाप्युपकारभूयस्त्वाद्धर्म एव भूयान् स्यात्। किंचानुमानप्रधानस्य भवतो मते हृदयक्रोशनमपि निर्निबन्ध- नमेव, दृष्टपीडाभावात्, तन्निबन्धनत्वाच्च क्रोशनस्येत्याह अनुमानेति ।*यदि हृदय- क्रोशरूपात्मपीडावशादेवाधर्मत्वमधर्मत्वाच्च हृदयक्रोशोपपत्तिरित्युच्यते, तत्र इतरे-

हिंसा चांशद्वयादन्या या तस्याः प्रतिषेधजम् ।
प्रत्यवायार्थताज्ञानं विधिनाऽन्यत्र वार्यते ॥
ज्ञानमेवच शक्तीनां नावापोद्वापनक्रियाः ।
व्यवस्थाः शक्तिभेदानां दृष्टार्थेष्वपि कर्मसु ॥

शाश्रयमित्याह—पीडात इति ।* म्लेच्छादीनां च हृदयकोशाभावान्नाश्रयायोगः स्यादित्याह—एवमादाविति ।* उपसंहरति—तस्मादिति ।

केचित्तु निषेधप्रामाण्यादेव विहितानामपि हिंसानामधर्मत्वमिच्छन्ति, तन्मतमुपन्यस्यति—क्वचिदिति त्रयेण ।* एकैव हिंसा, तस्याश्च क्वचिद् ब्राह्मणादिविषये प्रत्यवायशक्तिर्निषेधेन बोधिता, सा पुनर्विधानादपि नापगच्छति । नहि शास्त्रमावापोद्वापौ करोति ; विद्यमानशक्तिकथनमात्रेव्यापारात् । अतः शास्त्रानुसारादेवाग्नीषोमीयहिंसाया अधर्मत्वं नानुमानत इति । तदिदमतिप्रसंगापादनेन दूषयति—एवमिति द्वयेन ।* उपसंहरति—तस्मादिति । यादृशस्य यद्विशेषणविशिष्टस्य यत्फलं तादृशस्यैव तत्फलम्, न स्वरूपैक्यात् फलसंकर इति । ननु वैश्यस्तोमादेर्वैश्यादिविशिष्टस्य फलसाधनत्वावगमादन्यादृशस्य मा भूत् फलम्, न हिंस्यादिति तु हिंसामात्रस्यानर्थफलत्वं ज्ञातम्, न हिंसाविशेषस्य, तत्स्वरूपं चाग्नीषोमीयादावप्यस्ति, इत्यत आह—हिंसेतिपादत्रयेण । *कथमित्यत आह—विधिनेति ।* अन्यत्रांशद्वये विधिना वार्यते । तेन तत उत्कादितो न हिंस्यादिति सामान्यनिषेधो हिंसान्तराण्यवलम्बत इति तेषामेवानर्थत्वमवगतं न हिंसामात्रस्येति । यत्तु ज्ञापकं शास्त्रं न कारकमित्युक्तम्, तदनुज्ञायत एव । : तदेतद्व्यवस्थितं नैकविधमित्याह—ज्ञानमेवेति ।* दृष्टा च लोकेऽप्यभिन्नरूपस्यैव कर्मणः शक्तिभेदेन व्यवस्थेत्याह—व्यवस्था इति ।* यथा तत्र भोजनस्यैकत्वेऽप्युपाधिकृतभेदादेव शक्तिव्यवस्था, तथा हिंसाया अपि अङ्गानङ्गत्वकृतभेदाश्रयणात्तुल्येत्याह—रूपाऽभेद इति ।* तथा सत्यपि चेदेकफलत्वं हिंसायास्ततः क्रियात्वेनैकत्वात्सर्वासामश्वमेधब्रह्महत्यादिक्रियाणां फलसंकरः स्यादित्याह—तथापीति ।* यदि तु न क्रियात्वेनैकत्वम्, किन्त्ववान्तररूपैकत्वमेवैकफलत्वे हेतुरित्युच्यते, तथापि यजित्वाविशेषाच्चित्रासौर्यादीनां तुल्यफलत्वं स्यादित्याह—यजित्वेति ।* अथ तत्र यागव्यक्तिभेदात् व्यवस्था हिंसायामपि तुल्येत्याह—भेदादिति ।*

अन्यत्राप्युक्तम्—ननु द्रव्यक्रियागुणादीनामेव धर्मपदार्थता पूर्वमुपपादिता, तेषां चैन्द्रियकत्वात् कथं धर्मस्य चोदनैकगम्यत्वमिति चेत्, स्यादप्येवम्, यदि धर्मत्वमेषामैन्द्रियकेणैव द्रव्यत्वादिना स्यात्, नच तथा; श्रेयस्साधनत्वेनैव धर्मत्वाङ्गीकारात् । नच—तदैन्द्रियकम्, किंतु चोदनागम्यमेवेति तद्विशिष्टो धर्मपदार्थश्चोदनैकप्रमाणक इति सिद्धम् । तदुक्तं

अभिन्नत्वेऽपि दृश्यन्ते भुजेः स्वस्थातुरेष्वपि ।
रूपाभेदेऽपि हिंसादेर्भेदोऽङ्गानङ्गकारितः ॥
तथाप्येकफलत्वं चेत् क्रियात्वात् सर्वसंकरः ॥
यजित्वाद्यविशेषाच्च चित्रादिफलतुल्यता ।
भेदात्तत्र व्यवस्था चेदिहाप्येवं भविष्यति”—इति ॥

वार्तिके—“द्रव्यक्रियागुणादीनां धर्मत्वं स्थापयिष्यते । तेषामैन्द्रियकत्वेऽपि न तादूप्येण धर्मता ॥१३॥ श्रेयःसाधनता ह्येषां नित्यं वेदात् प्रतीयते । तादूप्येण च धर्मत्वं तस्मान्नेन्द्रियगोचरः ॥ १४ ॥ इति ।*”

नन्वेवमपि कथं धर्माधर्मयोश्चोदनैकप्रमाणकत्वम् ? धर्माधर्मपदप्रयोगविषयस्य लोकेऽप्रसिद्धत्वात् । तथाच भगवान् व्यासः—“इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये । आचण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् ॥” इति । इदम् प्रपातडागादिकं पुण्यम्, अगारदहनादिकम् पापम् इत्येवमुपकारापकारविषये धर्माधर्मपदद्वये चण्डालमपि यावत् प्रसिद्धे सति शास्त्रस्याल्पं प्रयोजनमिति तदर्थः । यदाहुः—“अष्टादशपुराणेषु व्यासस्य वचनद्वयम् । धर्मः परोपकरणमधर्मः परपीडनम् ।” इति इति चेन्न; इयं हि प्रसिद्धिर्न निर्मूला; “नह्यमूला प्रसिद्धि”रिति न्यायात् , निर्मूलत्वे निष्प्रमाणकैतिह्यवदन्धपरम्परात्वापत्तेश्च । मूलं चास्या भ्रान्तिर्वा प्रत्यक्षादिर्वा चोदना वा स्यात्, नाद्यः; अप्रामाण्यापत्तेः ,न द्वितीयः, तदसंभवस्य पूर्वमुपपादितत्वात्, अतः परिशेषात्तस्याश्चोदनैव मूलम् । किंच अव्यवस्थिता हीयं प्रसिद्धिः, अतो न धर्माधर्मविवेकमूलतामनुभवितुमर्हति । संसारमोचना हि हिंसा धर्मत्वेन प्रसिद्धा, परेषां तु पापत्वेन । केचिच्च पुण्यपापव्यवस्थामेव न रोचयन्ति । आर्याणां म्लेच्छानां च प्रसिद्धयः परस्परविरुद्धाः । एवं प्राय उपलभ्यन्ते । वैदिकीनां तु चोदनानामुक्ताभिरुपपत्तिभिरपक्षपातितया निर्णीतानां नित्यनिर्दोषाणां धर्माधर्ममूलत्वं सकलसुहृदयङ्गमत्वादकामेनाप्यभ्युपेयमिति महान्विशेषः । किञ्च यद्यपि प्रसिद्धिर्धर्माधर्मयोर्विपुलतरं रूढिमानमासादयन्ती स्थवीयस्सु विषयेषु प्रायो मूलानुसन्धानमन्तरेणापि धर्माधर्मौ निर्णयति; तथाप्युपकारापकारविषयेष्वग्निहोत्रसुरापानादिषु धर्माधर्मत्वनिर्णयावसरे प्रसिद्धिर्मूकीभवति । एवं प्रसिद्धीनां परस्परविरोधेऽपि बोध्यम् । तथा चैवंविधा ये कतिपये विषया येषु प्रसिद्धिरपि धर्माधर्मौ निर्णयति, तत्रापि च प्रसिद्धिमात्रेणापरितुष्यता केनचिद्विवेचकेन मूलतया शास्त्रमन्विष्यत एव । तत्रैव चान्वेषकाणामल्पत्वाच्छास्त्रप्रयोजनस्याल्पत्वम् । इदमेव चाल्पत्वमुक्तं महर्षिणा । ततश्चोपकारापकारविषयेऽपि

अनेन हि स्पष्टमिदं प्रतिपाद्यते-यत् हिंसादीनामनर्थसाधनत्वं निषेधप्रामाण्यमन्तरेण केवलयुक्तिवादेन न साधयितुं शक्यते इति। तदिदं सिद्धं यत् न केवलयुक्तिवादावलम्बेन धर्माधर्मनिर्णयः कर्तुं-

[ धर्मे मन्वादीनामस्वात-न्त्र्यम् ]

शास्त्रस्य प्रयोजनमस्त्येव,किंतु न तावद्यावदितरत्रेति महर्षेस्तात्पर्यम्। तथाचोक्तमौत्पत्तिकसूत्रे वार्तिके—प्रत्यक्षादौ निषिद्धेऽपि ननु लोकप्रसिद्धितः। धर्माधर्मौ प्रमास्येते ब्राह्मणादिविवेकवत् ॥ १ ॥ धार्मिकाधार्मिकत्वाभ्यां पीडानुग्रहकारिणौ। प्रसिद्धौ हि तथा चाह पाराशर्योऽत्र वस्तुनि ॥ २ ॥ इदं पुण्यमिदं पापमित्येतस्मिन् पदद्वये। आचण्डालं मनुष्याणामल्पं शास्त्रप्रयोजनम् ॥ ३ ॥ निर्मूलासंभवादत्र प्रमाणे सैव मृग्यते। कुतः पुनः प्रवृत्तेति प्रत्यक्षादि तु वारितम् ॥ ४ ॥ न चैतानि परित्यज्य पृथग् लोके प्रमाणता। संसारमोचकादेश्च हिंसा पुण्यतयासंमता ॥ ५ ॥ न पश्चात् पुण्यमिच्छन्ति केचिदेवं विगानतः। म्लेच्छार्याणां प्रसिद्धत्वं न धर्मस्योपपद्यते ॥ ६ ॥ नचार्याणां विशेषोऽस्ति यावच्छास्त्रं न निश्चितम्। तन्मूलार्थप्रसिद्धिस्तु तत्प्रामाण्ये स्थिते भवेत् ॥ ७ ॥ इति।

ननु हिंसादिषु शक्यमनुमानेनाप्यधर्मत्वमवगन्तुम्, हिंस्यमानस्य हि दुःखदर्शनेन हिंसितुर्दुःखं भविष्यतीत्यनुमीयते। नच यः परस्मै दुःखं ददाति स दुःखी भविष्यतीति व्याप्तौ मानाभावः। किंच हिंसितुः सांप्रतं सुखदर्शनादायत्यामपि प्रत्युत सुखमेवानुमीयते इति वाच्यम्; हिंसा, कालांतरे दुःखजनकतया अधर्मः, संप्रति दुःखजनकक्रियाविशेषत्वात्, या हि क्रिया स्वविषये संप्रति यादृशं फलं प्रसूते, सा कालान्तरे स्वकर्तरि तत्सजातीयमेव फलं प्रसूते,यथा दानं संप्रदाने संप्रति सुखं कालान्तरे च दातर्यपि सुखम्। एवंच धर्माधर्मयोरनुमानगम्यत्वात्कथं चोदनैकप्रमाणकत्वमिति चेन्न; गुरुदारगमनादेः संप्रति स्वविषये सुखजनकस्याऽपि कालान्तरे कर्तरि दुःखजनकत्वेन व्यभिचारात्। एवं सुरापानादिषु व्यभिचारस्य दुर्वारत्वात्। किञ्च एवं सति दानादिना कर्तुः कालान्तरे दुःखात्मकं फलं स्यात्, सांप्रतिकस्य संप्रदानगतस्य फलस्य सुखात्मकताया इव दुःखात्मकताया अपि दर्शनात्। एवं च दुःखविपरीतसुखसाधनत्वनियमासिद्ध्या विरोधः। किंच कालान्तरे सुखस्य दुःखस्य च विध्येकगम्यत्वात्कथं विधिमनुपजीव्यानुमानोत्थानमपि? किंच संप्रदानस्य स्वल्पमेव सुखम्, कर्तुस्तु 'समद्विगुणसहस्रानन्तानि फलानि' इति साध्यविकलो दृष्टान्तः। किंच सपक्षे यस्य हेतोर्व्याप्तिर्गृहीता, तस्यैव पक्षे साधयितव्यम्, प्रकृतेतु सपक्षे संप्रदानतुल्यफलकत्वम्, पक्षे च कर्मकारकतुल्यफलकत्वमिति वैषम्यम्—इति।

शक्यः । उक्तं चैतच्छांकरभाष्येऽपि । तदुक्तम्—"न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्मजिज्ञासायामि" ति । अत्र यद्यपि ब्रह्मजिज्ञासायां युक्त्यादीनामुपयोगोऽस्तीति गम्यते; तथापि कथमपि धर्मजिज्ञासायां तदनुपयोगो यो वर्णितस्स धर्मस्य कथमपि युक्त्याद्यगोचरत्वं गमयति। एतेन—'मन्वादिस्मृतयस्ताश्चोदनालक्षणेनाग्निहोत्रादिना धर्मजातेनापेक्षितमर्थं समर्थयन्त्यः सावकाशा भवन्ति । न चातीन्द्रियानर्थान् श्रुतिमन्तरेण कश्चिदुपलभते इति शक्यं सम्भावयितुम् ; निमित्ताभावात् । शक्यं कपिलादीनां सिद्धानामप्रतिहतज्ञानत्वादिति चेन्न ; सिद्धेरपि सापेक्षत्वात् । धर्मानुष्ठनापेक्षा हि सिद्धिः , सच धर्मश्चोदनालक्षणः । तथाच पूर्वसिद्धायाश्चोदनाया अर्थो न पश्चिमसिद्धपुरुषवचनेनातिशंकितुं शक्यते" इत्यादिस्मृत्यनवकाशसूत्रगतानि शांकरभाष्यवाक्यान्यपि व्याख्यातानि भवन्ति । एतान्यपि हि धर्मस्य न प्रत्यक्षगम्यत्वम्, न वाऽनुमानगम्यत्वम्, किन्तु श्रुतिमात्रगम्यत्वमित्येव गमयन्ति । अत्र हि सन्दर्भे योगिनामपि विना चोदनां न धर्मानुभवो भवितुमर्हतीति यन्निरूपितम्, तदपि धर्मप्रवर्तने योगिनामन्येषां महर्षीणां वा न तदीयानुभवो निमित्तम् , किन्तु धर्माधर्मनिर्णये केवलं चोदनैव निमित्तमिति सूचयतीति, अधुनातनानामयमाक्षेपो यत्—पूर्वाचार्या अपि स्वीयानुभवविशेषानुसारेणैव धर्माधर्मादिकं कल्पयामासुरिति, न स सावकाश इति गम्यते । यत्तु "यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" इति मनुवचनम्,तदिदं वेदवाक्यानामपि सन्न्यायानुग्रहेणैव तात्पर्यनिर्णयमित्येवमाशयमेव । सम्भवन्ति हि बहुविधाः संशया बहूनां

वेदवाक्यानां दर्शनेन । तत्र चापातप्रतिपन्नस्यार्थस्य न धर्मत्वम्, किन्तु सन्न्यायानुगृहीतस्यैव । एतदर्थमेव हि मीमांसा शास्त्रम् । तथाचेदमत्र सिद्धं भवति, यत् मीमांसानुगृहीत एव वेदार्थो धर्म इति बोधन एव यस्तर्केणेति वचनस्य तात्पर्यम्, नतु यस्य कस्यापि या कापि युक्तिर्धर्मतत्त्वनिर्णयोपयोगिनीति । अस्तु वा तर्कपदेन लौकिकस्यानुमानस्यैव ग्रहणमिति, एवमप्यत्र वचने तर्कस्यानुसन्धाननिमित्तत्वमेव वर्णितम्; नत्ववगतिनिमित्तत्वम् । अनुसन्धानं नाम ज्ञातस्यैव विषयस्य सर्वसंशयनिरासेनाप्रामाण्यशंकानिरासेन च प्रामाण्यव्यवस्थापनमेवेति लौकिकमप्यनुमानं वेदेन यथा यो धर्मोऽवगम्यते, तथा तत्स्वरूपविनिर्णयार्थमुपयोक्तव्यमित्येवात्र तात्पर्यं विवक्षितम् । अत्र च तर्कपदेन सत्तर्कस्यैव ग्रहणम्, नतु तर्कसामान्यस्य । तथाच यदि केनचन शक्तेन सामान्यतो वेदेनावगतस्य धर्मस्वरूपस्य निर्णयोपयोगी तर्कः सुप्रतिष्ठितः प्रदर्श्यते, तर्हि सर्वथा स महात्माऽस्माकं सर्वेषामपि पूजनीय एवेत्यत्र न विशयलेशोऽपि । अत एव जैमिनिमहर्षिः सर्वेषामपि धार्मिकाणामत्यन्तमेव पूजनीयः । नहि वयमिदानीं कथमपि तादृशं महात्मानम्, यः खलु जैमिन्यादिप्रदर्शितन्यायानामाभासीकरणेन धर्मफलमन्यथा व्यवस्थापयेत्, कुत्राप्युपलभामहे । तथाच मीमांसादिन्यायानुगृहीतवेदार्थधर्मतायामेवोक्तवचनस्य तात्पर्यमिति तदनुसारेणेदानीन्तनानां धर्मे युक्तिमूलकत्वव्यवस्थापनं निरालम्बमिति सिद्धम् । तदुक्तं शांकरभाष्ये तर्काप्रतिष्ठानादिति सूत्रे—श्रुत्यर्थविप्रतिपत्तौ चार्थाभासनिराकरणेन सम्यगर्थनिर्धारणं तर्केणैव वाक्यवृत्तिनिरूपणमूलेन कि-

[मीमांसाशास्त्रस्योपयोगः]

यते । मनुरपि चैवंमन्यते—"प्रत्यक्षमनुमानं च शास्त्रं च विविधागमम् । त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥ आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः" इति । अत्र प्रत्यक्षस्य धर्मतत्त्वविनिर्णये उपयोगो धर्मसाधनभूतद्रव्यगुणस्वरूपविज्ञानजननेन भवतीति कुल्लूकभट्टाः । अनेन चेदमवगम्यते—यत् फलसाधनत्वं येन धर्मत्वम्, तत्तु श्रुत्येकगम्यमिति न धर्मतत्त्वनिर्णये प्रत्यक्षस्योपयोगः ।

तदुक्तं श्रीभाष्ये—शाक्यौलूक्याक्षपादक्षपणककपिलपतञ्जलितर्काणामन्योन्यव्याघातात्तर्कस्याप्रतिष्ठितत्वं गम्यते । इदानीं विद्यमानानां शाक्यादीनां तर्कानुदूष्यान्यथानुमास्यामह इति चेत्, एवमपि पुरुषबुद्धिमूलतर्कैकावलम्बनस्य तथैव देशांतरकालांतरेषु त्वदधिकतमतर्ककुशलपुरुषोत्प्रेक्षिततर्कदूष्यत्वसंभावनया तर्काप्रतिष्ठानदोषादनिर्मोक्षो दुर्वारः । अतोऽतीन्द्रियेऽर्थे शास्त्रमेव प्रमाणम् । तदुपबृंहणायैव तर्क उपादेयः । तथोचाह—

धर्मस्य युक्त्यगोचरत्वे श्रीभाष्योपष्टम्भः ।

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥ इति ॥ वेदाख्यशास्त्राविरोधिनेत्यर्थः ।

सत्तर्कस्यापि मीमांसादिन्यायरूपस्य क्वचित् स्पष्टं वेदवाक्येन विरोधस्थलेऽपि हि शबरस्वामिनः कुमारिलपादाश्च सूत्रेष्वेवाध्याहारादिकं न वेदवाक्येष्विति व्यवस्थापयन्तोऽपि वेदवाक्यार्थस्य सामान्यतो ज्ञातस्यासति वेदवाक्यान्तरविरोधे कथमपि व्यवस्थापन एव सूत्राणामपि तात्पर्यं कल्पनीयमिति गमयन्तीति चोदनायां

एव धर्मप्रामाण्यवादोऽयं सर्वथोपपद्यत एव। तथाच केवलयुक्तिगम्यत्वं धर्मस्येति पक्षो न विकल्पसह इति।

वस्तुतस्तु—नित्यपरोक्षस्य पदार्थस्य परमाण्वादेरनुमानमात्रेण साधनं कथमपि न सम्भवति। अन्यथा कथं वा तत्र वादिविप्रतिपत्तिर्भवितुमर्हति? अत एव हि केवलयुक्तिवादानुसारेण कारणस्वरूपं विवेचयितुं प्रवृत्तानां वैशेषिकनैयायिकसांख्यपातञ्जलादीनां सिद्धेऽपि कारणे भिन्नवाक्यता दृश्यमानोपपद्यते। तत्र यदि सिद्धे वस्तुन्येव भिन्नवाक्यतायां व्यवस्थितार्थसिद्धौ श्रुतिरेव व्यवस्थापकतयोरीकरणीया, तदुक्तं तर्काप्रतिष्ठानादिति सूत्रे शंकरभगवत्पादैः—नच शक्यन्तेऽतीतानागतवर्तमानास्तार्किका एकस्मिन् देशे काले च समाहर्तुम्, येन तन्मतिरेकरूपैकार्थविषया सम्यङ्मतिरिति स्यात्, वेदस्य तु नित्यत्वे विज्ञानोत्पत्तिहेतुत्वे च सति व्यवस्थितार्थविषयत्वोपपत्तेस्तज्जनितं विज्ञानमतीतानागतवर्तमानैः सर्वैरपि तार्किकैरपन्होतुमशक्यमित्यादि" तदा किमु वक्तव्यम्—भाविनि धर्मे यत्र केवलयुक्तिवादानुसारिणां विप्रतिपत्तिरेव दृश्यते तत्र श्रुतिवशेनैव व्यवस्था नानुमानेनेति?

उक्तार्थे शांकरभाष्योपष्टम्भः।

एतेन—तत्तद्देशकालपरिस्थितिरेव धर्मविशेषाणां प्रवर्तने निमित्तमिति शंकाऽपि—परास्ता; नहि कालभेदेनैक एव धर्मः सुखाय दुःखाय वा भवतीति कल्पनं सम्भवति। नहि धर्मफलं सुखविशेषादिकमैहिकमेवेति नियमः। नह्यामुष्मिकफलसाधननियमनं कालद्वयावस्थानं विना केनापि कर्तुं योग्यम्। नचैकस्यैकेन शरीरेण नाम्ना वा कालद्वयावस्थानं सम्भवतीति कालान्तरभाविस्वर्गादि-

फलविशेषस्य कालान्तरेऽनुष्ठेयस्य साधनस्य च व्यवस्थापनं केवल-युक्त्यनुसारेण कथमपि न सम्भवति। कार्यकारणभावो हि यत्सत्त्वेऽग्रिमक्षणेऽवश्यं यस्योत्पत्तिरित्याद्यन्वयव्यतिरेकप्रमाणगम्य इति सर्वसम्मतमिदम्। तत्र चाग्रिमक्षणे स्वर्गाद्यनुत्पत्त्या कथं कार्य-कारणभावोऽनुमानगम्यः स्यात्? श्रुतिस्तु नान्वयव्यतिरेकज्ञानं कार्यकारणभावज्ञानजननार्थमपेक्षते। अतः श्रुतिमात्रप्रमाणतावाद एव धर्मविषये युक्तः। तदुक्तं बृहदारण्यकभाष्यभूमिकायामाचार्य-पादैः—

"सर्वोऽप्ययं वेदः प्रत्यक्षानुमानाभ्यामनवगतेष्टानिष्टप्राप्तिप-रिहारोपायप्रकाशनपरः, सर्वपुरुषाणां निसर्गत एव तत्प्राप्तिपरिहा-रयोरिष्टत्वात्। दृष्टविषये चेष्टानिष्टप्राप्तिपरिहारोपायज्ञानस्य प्रत्यक्षानुमानाभ्यामेव सिद्धत्वान्नागमान्वेषणा। नचासति जन्मा-न्तरसम्बन्ध्यात्मास्तित्वविज्ञाने जन्मान्तरेष्टानिष्टप्राप्तिपरिहारेच्छा स्यात्; स्वभाववाददर्शनात्। तस्माज्जन्मान्तरस-म्बन्ध्यात्मास्तित्वे जन्मान्तरेष्टानिष्टप्राप्तिपरिहा-रोपायविशेषे च शास्त्रं प्रवर्तत इति॥

[उक्तार्थे शांकरभा-ष्योपष्टंभः]

अनेन हीदं स्पष्टमवगम्यते—यज्जन्मान्तरसम्बन्धिनः फलस्य तत्साधनस्य च नानुमानादिनावगम इति। तदुक्तं बृहदारण्यक-भाष्यभूमिकायाम्—"तथाऽनुमानादपि नात्मास्तित्वसिद्धिः; जन्मा-न्तरसम्बन्धाग्रहणात्। आगमेन त्वात्मास्तित्वेऽवगते वेदप्रदर्शितै-र्लौकिकैर्लिङ्गविशेषैश्च तदनुसारिणो मीमांसकास्तार्किकाश्चाहम्प्र-त्ययलिङ्गानि वैदिकान्येव स्वमतिप्रभवानीति कल्पयन्तो वदन्ति—प्रत्यक्षश्चानुमेयश्चात्मेति"—इति। इदं यद्यप्यात्मनोऽननुमेयत्वनि-

रूपणपरं प्रकरणम् । एवमपि जन्मान्तरभाविस्वर्गादिविषयतयापि योजयितुं शक्यते । अत्र च यदि कश्चन स्वर्गस्याप्यनुमेयत्वं साधयेत्, तेनापि श्रौतलिङ्गान्येव कानिचनान्ततो गत्वा आदरणीयानि भवेयुः । सर्वथा तु जन्मान्तरसम्बन्धिनः फलस्य कर्तुरन्यस्य वा न श्रुतिमन्तरा केवलया युक्त्या सिद्धिरिति सिद्धम् । सति चैवं कथं वा केवलयुक्तिवादावलम्बेन धर्मतत्त्वविनिर्णयः स्यादिति सर्व एव विवेचयन्तु ।

(उक्तार्थे उदयनाचार्योपष्टम्भः) कुसुमाञ्जलावपि मन्वादीनामतीन्द्रियार्थदर्शनाभावेन धर्मस्य प्रत्यक्षादिप्रमाणान्तरविषयत्वं नास्तीति विवेचितम् ।

तद्यथा द्वितीयस्तबके—"तदेवं सामान्यतः सिद्धेऽलौकिके हेतौ तत्साधनेनावश्यम्भवितव्यम् । नच तच्छक्यमस्मदादिभिर्द्रष्टुम् । नचादृष्टेन व्यवहारः । ततो लोकोत्तरः सर्वानुभावी सम्भाव्यते" इति ।

अत्र—न्यायकुसुमाञ्जलिबोधिनी

"अथ द्वितीयं परिच्छेदमारभमाणस्तन्निराकरणीयामाशंकामुत्थापयितुं यथा साधितपूर्वेणापूर्वेणेश्वरसिद्धिस्तद्दर्शयति—तदेवम्—इति । * तदिति वाक्योपक्रमे, एवमित्युक्तप्रकारपरामर्शः, सामान्यतः, सामान्यतो दृष्टेन पूर्वोक्तानुमानेनालौकिके हेतावदृष्टे सिद्धे कार्यत्वात्तस्य साधनेन ज्योतिष्टोमादिनाऽवश्यं भवितव्यम् । न च तत्साधनमस्मदादिभिः पिशितलोचनैः शक्यदर्शनम् । न च तथाऽदृष्टेन तेनानुष्ठानरूपो व्यवहारः संभवति । तस्मादतीन्द्रियार्थसाक्षात्कारैकक्षमः सर्वातिशायी कश्चिदस्ति, यदुपज्ञोऽयमर्वाचीनानां तद्विषयो व्यवहारः—"इति ।*

अत्र यद्यपि ईश्वरज्ञानमेव धर्मे प्रमाणम्, नतु वेद इति विवेचितम्; तथाप्यस्मदादिप्रत्यक्षाविषयत्वे न कुसुमाञ्जलिकाराणामपि विवादः। तन्मते हि वेदविषये ईश्वरस्य स्वातन्त्र्यमूरीक्रियते इति सत्यपि विशेषे न धर्माधर्मविषयेऽस्माकमवगमः कोऽपीश्वरस्येव स्वतन्त्रम्भवति; किन्तु वेदमूलक एवेत्यत्र तु न विवादः। सर्वथा त्वस्मदादियुक्तिगम्यत्वं धर्मस्य न सम्भवति।

[ मन्वादीनां धर्मापरोक्षज्ञाननिरासः ]

मन्वादीनामपि हि धर्मापरोक्षज्ञानं कुसुमाञ्जलौ निरस्तमेव। तद्यथा—मन्वादीनामतीन्द्रियार्थदर्शने प्रमाणाभावात्। सन्तु कपिलादय एव साक्षात्कृतधर्माणः कर्मयोगसिद्धास्तत एव संसाराङ्गारेषु पच्यमानान् प्राणिनः पश्यन्तः परमकारुणिकाः प्रियहितोपदेशेनानुग्रहीष्यन्ति, कृतं परमेश्वरेणानपेक्षितकीटादिसंख्यापरिज्ञानवतेति चेन्न; तदन्यस्मिन्ननाश्वासात्। तथाहि—अतीन्द्रियार्थदर्शनोपायो भावनेत्यभ्युपगमेऽपि नासौ सत्यमेव साक्षात्कारमुत्पादयति, यतः समाश्वसिमः, प्रमाणान्तरादिति चेन्न—अहिंसादिहिताहितसाधनमित्यत्र तदभावात्। आगमोऽस्तीति चेन्न--भावनामात्रमूलकत्वेन तस्याप्यनाश्वासविषयत्वाच्च। एकदेशसंवादेनापि प्रवृत्तिरिति चेन्न—स्वप्नाख्यानादिवदन्यथापि संभवात्। नचानुपलब्धे भावनापि। चोरसर्पादयो ह्युपलब्धा एव भीरुभिर्भाव्यन्ते। नच कर्मयोगयोर्हितसाधनत्वं कुत्रचिदुपलब्धम्। नचैतयोः स्वरूपेणोपलम्भः क्वचिदुपलभ्यते, भावनासाध्यो वा। न चास्मिन्नन्वयव्यतिरेकौ सम्भवतः; देहान्तरभोग्यत्वात् फलस्याप्रतीततया तदनुष्ठाने तदभावाच्च। नच कर्तृभोक्तृरूपोभयदेहप्रतिसन्धानादेव तदुपपद्यते; तदभावात्। नह्यस्य कर्मणः फलमनुभवामीति कश्चित् प्रतिसन्धत्ते। केचित्तथा भविष्य-

न्तीति सम्भावनामात्रेऽप्यनाश्वासात्, विनिगमनायाम्प्रमाणाभावात् । प्रतिपन्निशीथनिद्राणप्रातःप्रतिबुद्धसमस्तोपाध्यायवदन्योन्यसंवादात् । कपिलादिषु समाश्वास इति चेन्न; एकजन्मप्रतिसन्धानवज्जन्मान्तरप्रतिसन्धाने प्रमाणाभावात् । तथापि चाधिकारिविशेषेण ब्राह्मणत्वाद्यप्रतिसन्धानेऽनुष्ठानरूपस्याश्वासस्याभावात् । नहि पूर्वजन्मनि मातापित्रोर्ब्राह्मण्यात्तदुत्तरं तद्ब्राह्मण्यमिति नियमः; येन सर्गादौ वर्णादिधर्मव्यवस्था स्यात् । ईश्वरवददृष्टविशेषोपलब्धिमद्भूतविशेषानुपलम्भात् । अतीन्द्रियार्थदर्शित्वे चानाश्वासस्योक्तत्वात्" इत्यादि ।

अत्र न्यायकुसुमाञ्जलिबोधनी यथा—

ततोऽन्यस्मिन्ननाश्वासादित्येतदवतारयितुं शङ्कते—स्यादेतत् इति । नित्यनैमित्तिकेन कर्मणा चित्तप्रवृत्तिनिरोधात्मकेन योगेन सिद्धास्तज्जनितधर्मसहकृतेन मनसाऽतीन्द्रियार्थदर्शनसमर्थास्तत एव साक्षात्कृतधर्माधर्मा कपिलहिरण्यगर्भादय एव सन्त्युपदेष्टारः; तेषामेव कारुण्यनिष्ठानां संसारिचेतनानुग्रहार्थमुपदेशसम्भवात् । एतावानेव हि तेभ्यो भवदभिमतस्येश्वरस्य विशेषः; यत्कृमिकीटकसंख्यादिसर्वविषयं ज्ञानं नाम, तच्चानपेक्षितं धर्माधर्मोपदेशस्येति ॥ तदुत्तरत्वेन संग्रहमुपादत्ते—ततः इति ।* अनाश्वासमेवोपपादयति—तथाहि इति ।* न तावद् दर्शनोपायो भावनेति वक्ष्यामः, यद्यपि स्यात्तथापीति ।* नन्वहिंसादिषु संवादाभावेऽपि दृष्टार्थेषु प्रमाणान्तरसंवाददर्शनाददृष्टार्थस्यापि तत्साधर्म्यात् समाश्वास इत्याह–एकदेश इति ।* स्वप्ने श्रुतस्याख्यानस्य, यद्वा स्वप्नस्येदमिति स्वप्नफलप्रतिपादकस्यैकदेशसंवादेपि न प्रामाण्यम्, तद्वदपि संभवेदिति । एवं भावनामभ्युपगम्योक्तम्, सापि नास्तीत्याह

नचेति *। स्मृतिहेतुः संस्कारो वासना, सा कथमननुभूतपूर्वं भवेदिति। किंच कर्मयोगयोरनुष्ठानेन हि कपिलादयःसिद्ध्यन्ति,तदनुष्ठानं च तयोर्हितसाधनत्वज्ञानात्, तज्ज्ञानोपायश्च तदानीं नास्तीत्याह—नच कर्मयोगयोरिति।* हितसाधनत्वाभावेऽपि कर्मयोगयोः स्वरूपोपलम्भमात्रेण तदनुष्ठानं भवेदित्यत्राह—नच तयोरिति।* भावनासाध्यो वेति। नहि स्वरूपोपलम्भो भावनासाध्यो वा भवति, अत्यन्तत्वात्स्वरूपस्य। यद्वा कर्मयोगयोर्हितसाधनत्वोपलम्भो भावनासाध्यो वा नोपयुज्यते;अनाश्वासादिभिः। न चास्मिन्-इति।* कर्मयोगयोरतीन्द्रियार्थप्रदर्शनसाधनत्व इति। किंच तयोस्तत्साधनत्वमवगम्यानुतिष्ठतः फलसाधनादन्वयव्यतिरेकौ स्याताम्;तत्साधनत्वाप्रतीतौ कथमनुष्ठानम्? कथं च फलदर्शनम्? कथमन्वयव्यतिरेकावित्याह—अप्रतीततया इति* तदसम्भवात्फलस्यान्वयव्यतिरेकयोर्वाऽसम्भवादिति। ननु माभूतामेकस्मिन् देहे, तथापि योऽहं देहान्तरमधिष्ठाय कर्माकरवम्, सोऽहमेतद्देहमधिष्ठाय तस्य कर्मणः फलमनुभवामीति कर्तृभोक्तृदेहयोरात्मनः प्रतिसन्धानादन्वयव्यतिरेकौ स्यातामित्यत्राह-नच-इति।*मा नामार्वाचीनः प्रतिसन्धत्ताम्, विशिष्टाः केचित्प्रतिसन्धास्यन्तीत्यत्राह—केचिदिति।* कुतो वानाश्वास इत्याह-विनिगमनायामिति। अनुभवत्येवेत्यवधारणायामिति। प्रतिपदिति।*

यथा ह्यनध्यायकाले वर्जिताध्ययनानां पुनरध्यायकाले स्मरणम्, उपाध्यायानामन्योन्यसंवादेन पूर्वाधीतस्वाध्यायप्रतिसन्धानं निश्चीयते, तथा कपिलादीनामन्योन्यसंवादात् सर्गादौ प्रतिसन्धानावधारणेति। नेति।* कथं हि संस्कारोच्छेदकैमरणजननक्लेशैः कालविप्रकर्षेण चान्तरितं जन्मान्तरानुभूतं प्रतिसन्धीयत इति?

जन्मान्तरानुभूतं प्रतिसंदधद्भिरपि कपिलादिभिः सर्गादिभुवां ब्राह्मणत्वादिवर्णविशेषस्याज्ञानादधिकारिविशेषेण धर्मविशेषेणानुष्ठानं न सम्भवति। नहि तदानीं ब्राह्मणेन ब्राह्मण्यामुत्पत्तिरस्ति, नच पूर्वजन्मनि ब्राह्मणमातापितृजन्यत्वेन जन्मान्तरे ब्राह्मणत्वं भवति, यतस्तत्प्रतिसन्धानेनैतन्निश्चीयेतेत्याह—तथाच—इति।* यद्वा तथाचेति। जन्मान्तरीयप्रतिसन्धानाभाव इत्यर्थः। नहि पूर्वजन्मनीति। तदभ्युपगमेनोक्तमिति। नन्वीश्वरवद्वर्णविशेषं कपिलादयोऽपि ज्ञास्यन्तीत्यत्राह—ईश्वरवत्—इति।* स हि तज्जातिविशेषे निमित्तमदृष्टविशेषसहकृतभूतभेदारब्धशरीरत्वं जानाति, नित्यसर्वज्ञत्वेनादृष्टविशेषवेदित्वात्तस्य, नैवं कपिलादयः, तेषामदृष्टविशेषज्ञानहेतोर्भावनाया निरस्तत्वादिति। तर्हि ब्रह्माण्डान्तर्वर्तिनो ब्राह्मणाब्राह्मणादिवर्णान् तत्र संचार्य तत्तद्वर्णविशेषप्रयुक्तान् धर्मान् व्यवस्थापयन्तीत्यत्राह—एतेनेति।* एतेन वक्ष्यमाणेन संचरणशक्त्यभावेनेति। अणिमादि इति। अणिमा महिमा लघिमा गरिमा प्राप्तिः प्राकाम्यमीशत्वं वशित्वमित्येभिरैश्वर्यैः संपन्नाः कपिलादयः। ततस्तेषां किं नाम दुष्करमिति? न-इति। तत्राणिमादिसंपत्ताविति। तत्र संभावना तावदास्तामित्यत्राह—संभावना-इति। अथ—इति।* तत्र कपिलादीनामैश्वर्येऽतीन्द्रियार्थदर्शित्वे च तदागमनस्य महाजनपरिग्रहान्यथानुपपत्तिः प्रमाणमिति। न इति॥* विशिष्टैकरूपकल्पनयापि परिग्रहस्योपपत्तौ न भूयसां विशिष्टानां कल्पनायां प्रमाणमस्तीति। नन्वेककल्पनायामपि तस्य विदेहस्यैव निमातुः शक्तिरणिमाद्यैश्वर्यसंपत्तिश्च कल्प्येतेति कल्पनागौरवमस्त्येवेत्यत्राह—विदेह-इति।* अनेककल्पनायामपि तद्विशिष्टमेवेत्यर्थः। अस्तु तर्हि

कपिलादीनामन्यतमः स एकः, किमीश्वरेणेत्यत्राह—अस्तु-इति।

एतेषां कुसुमांजलिव्याख्यानां श्रीवर्धमानाचार्यविवरणमपि सर्वेषाम्पुरतः स्पष्टप्रतिपत्त्यर्थं-संगृह्य प्रकाशयामः। तद्यथा—ननुस्मृतिकर्तारः स्वयमेवापूर्वं साक्षात्कृत्य तत्साधनमुपदेक्ष्यन्तीत्यत आह अहिंसादीति।* तथा च लोकान्तरभाविस्वर्गादिसाक्षात्कारायोगेन तत्साधनोपदेशः प्रत्यक्षादिना न भवतीति केवलमीश्वरानुभवः श्रुतिरेव तत्र प्रमाणभूरीकर्तव्यमिति सिद्धम्।

[कर्मणां दृष्टफलकत्वाभावे कुसुमाञ्जलिः]

यथाचापूर्वकल्पनमत्यावश्यकं न दृष्टफलकत्वमेव सर्वेषां कर्मणाम्, तथापि कुसुमाञ्जलौ प्रथमस्तबके विवेचितम्। तद्यथा-यदि हि पूर्वपूर्वभूतपरिणतिपरम्परामात्रमेवोत्तरोत्तरनिबन्धनम्, न परलोकार्थी कश्चिदिष्टापूर्तयोः प्रवर्तेत। नहि निष्फले दुःखैकफले वा कश्चिदेकोऽपि प्रेक्षापूर्वकारी घटते, प्रागेव जगत्। लाभपूजाख्यात्यर्थमिति चेत्, लाभादय एव किन्निबंधनाः? नहीयम्प्रवृत्तिः स्वरूपत एव तद्धेतुः। यतो वाऽनेन लब्धव्यम्, यो वैनम्पूजयिष्यति। स किमथम्? ख्यात्यर्थमनुरागार्थं च जनो दातरि मानयितरि च रज्यते, जनानुरागप्रभवा हि सम्पद इति चेत्, न,नीतिनर्मसचिवेष्वेव तदर्थंदानादिव्यवस्थापनात्। त्रैविद्यतपस्विनो धूर्तबका एवेति चेन्न; तेषां दृष्टसम्पदं प्रत्यनुपयोगात्। सुखार्थं तथा करोतीति चेन्न; नास्तिकैरपि तथा करणप्रसंगात्, संभोगवत्। लोकव्यवहारसिद्धत्वादफलमपि क्रियते, वेदव्यवहारसिद्धत्वात्संध्योपासनवदिति चेत्, गुरुमतमेतत्, नतु गुरोर्मतम्। ततो नेदमनवसर एव वक्तुमुचितम्। वृद्धैर्विप्रलब्धत्वात् बालानामिति चेन्न; वृद्धानामपि प्रवृत्तेः,न च विप्रलम्भकाः स्वात्मानमपि विप्रलम्भन्ते। तेऽपि वृद्धान्तरैरित्येवमनादिरिति चेत्,न तर्हिविप्रलिप्सुःकश्चिदत्र। यतः

प्रतारणशंका स्यात् । इदम्प्रथम एव कश्चिदनुष्ठायापि धूर्तः पराननुष्ठापयतीति चेत्, किमसौ सर्वलोकोत्तर एव, यः सर्वस्वदक्षिणया सर्वबन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्मचर्येण तपसा श्रद्धया वा केवलपरवञ्चनकुतूहली यावज्जीवमात्मानमवसादयति। कथंचैनमेकं प्रेक्षापूर्वकारिणोऽप्यनुविदध्युः ? केन वा चिन्हेनायमीदृशस्त्वया लोकोत्तरप्रज्ञो न प्रतारक इति निर्णीतः ? नह्येतावतो दुःखराशेः प्रतारणसुखं गरीयः। पाखण्डाभिमतेष्वप्येवं दृश्यत इतिचेन्न, हेतुदर्शनादर्शनाभ्यां विशेषात् । अनादौ चैवम्भूतेऽनुष्ठाने प्रतायमाने प्रकारान्तरमाश्रित्यापि बहुवित्तव्ययायासोपदेशमात्रेण प्रतारणा स्यात्, नतु अनुष्ठानागोचरेण कर्मणा । अन्यथा प्रमाणविरोधमन्तरेण पाखण्डत्वप्रसिद्धरपि न स्यात् । अस्तु दानाध्ययनादिरेव विचित्रो हेतुर्जगद्वैचित्र्यस्येति चेन्न; क्षणिकत्वात्, अपेक्षितस्य कालान्तरभावित्वात् ।

चिरध्वस्तं फलायालं न कर्मातिशयं विना ।
सम्भोगो निर्विशेषाणां न भूतैः संस्कृतैरपि ॥

तस्मादस्त्यतिशयः कश्चिदित्यादि ।

अत्र न्यायकुसुमाञ्जलिबोधिनी यथा—

अथ विश्ववृत्तित इत्येतदवतारयितुं शंकते—अस्तु इति ।* ततो वेश्वरसिद्धिरिति । अवतारयति—न, विश्ववृत्तितः—इति ।* अस्यानन्यथासिद्धिं दर्शयन् विवक्षितसाधकत्वमुपपादयति—विफला—इति ।* यागादौ तावद्विश्वस्य जगतः प्रवृत्तिर्दृश्यते, नेयं विफला, नापि दुःखैकफला, विश्वप्रवृत्तित्वादेव । नापि दृष्टपूजादिफला, स्वरूपतोऽहेतुत्वात्, परैर्विप्रलब्धत्वात् । परलिप्सया वा प्रवृत्तिरित्यपि न युक्तम् ; ईदृशविप्रलम्भासम्भवात् । तस्माद्यागादौ विश्ववृत्तिरनन्यथासिद्धा तस्यापि तावत्कारणत्वं कल्पयति, न तु दृष्ट-

मेत्र सहकारिचक्रं कारणमित्यर्थः । तदेतद्व्याख्यास्यन्ननन्यथासिद्धिं तावत्प्रतिजानाति—यदि हि—इति ।* भूतानां परिणतिः कार्यम्, तत्परम्परा—उप्तं बीजमंकुरं जनयति यत् सस्यं तद् व्रीह्यादिकमिति पूर्वपूर्वदृष्टमेवोत्तरोत्तरं प्रति कारणमिति । यद्युच्येतेति । यद्वा भूतानां सहकारिणां परिणतिः साकल्यम् । इष्टं यागादिश्रौतं कर्म, पूर्तं खातादिस्मार्तमिति । अत्र हेतुत्वेन संग्रहं व्याचष्टे—नहि-इति शंकते—लाभ-इति*दुःखात्मकयोरपि श्रौतस्मार्तयोर्लाभादिदृष्टसिद्ध्यर्थमयं प्रवर्तत इति दूषयति—लाभादय इति ।* तेऽप्यदृष्टनिबन्धना इत्यर्थः ।कुत इत्यत आह—नहीति ।* नहीयं यागादौ प्रवृत्तिः स्वरूपेणैव लाभादिहेतुः तेषां प्रवृत्त्यानन्तर्यनियमाभावात् । तेनादृष्टद्वारेणैव हेतुत्वमिति भावः । यतो वा-इति ।* स किमर्थं लम्भयति पूजयति वेति शेषः ।तत्र प्रवृत्तिरपि नादृष्टमन्तरेणोपपद्यत इति भावः ।शंकते—ख्यात्यर्थमिति।* ननु पारलौकिकं किञ्चिल्लिप्समानः पूजयति, ददाति वेति । अनुरागो वा किमर्थं इत्यत्रोक्तम् जनानुराग-इति * परिहरति-न-इति ।ख्यात्यनुरागार्थयोर्दानपूजयोर्यथाक्रमं नर्मनीतिसचिवयोर्व्यवस्थितत्वादत्र च तदभिसन्धिविरहान्न तादर्थ्यमिति । पुनः शंकते-त्रैविद्येति ।* वैदिका यागादिकर्तारो विप्रलम्भका दृष्टार्थमेव भावयन्तोऽदृष्टार्थमिवाचरन्ति ।‖ तेऽपि तेन नर्मसचिवप्राया इत्यर्थः । परिहरति-न-इति ।* नीतिनर्मसचिवा हि दृष्टोपयोगिनः, नैव त्रैविद्याः,अतस्तेषु पूजादि न दृष्टार्थमिति । ननु तेषां पूजादिकमनुतिष्ठतां किञ्चित् दृष्टमेव सुखं जायते, अतस्तदर्थमेव पूजानुष्ठानमित्याह-सुखार्थम्-इति ।* न-इति* नहि तात्त्विकं किञ्चिद्दानादिजन्यं सुखमस्ति । पारलौकिकसुखाध्यवसायादेव हि तदनुष्ठायिनस्तदा प्रीतिरिति भावः । शंकते-

लोक इति।* अनादिना लौकिकाचारेण कर्तव्यतया सिद्धत्वादफलमपि दानादि क्रियते, वैदिकविधानेन सिद्धसन्ध्योपासनवत्। तद्विधायकवाक्येषु फलाश्रवणात् जीवनादिकर्माधिकारलाभाच्च विधित एवानुष्ठानसिद्धौ फलकल्पनायां प्रमाणाभावादफलमेव सन्ध्योपासनादिकमिति भावः। गुरुमतमेतत्-इति *निष्फलं कर्मेति प्राभाकरगुरोरयं राद्धान्तः, नास्मद्गुरोः, तस्य निष्फलोपदेशासम्भवात्। तत्राप्युपात्तदुरितक्षयादिफलमस्तीति राद्धान्तः। यद्वा गुरुश्लाघ्यं तन्मतमित्युपालम्भगर्भः, नतु गुरोर्हितोपदेशिनः कस्यचिन्मतम्-तस्मादप्रस्तुतमिदानीं न वक्तव्यमिति। तस्माद्यागादिपूजादेर्दृष्टहेत्वभावादवश्यं धार्मिक इति बुद्ध्या तदाचार इत्यभ्युपगन्तव्यम्। तेन यागादेस्तदनुष्ठातृपूजादेश्चामुष्मिकं फलं सिद्धमिति रहस्यम्। तुरीयपादमवतारयितुं शङ्कामाह—वृद्धैरिति।* बालानां प्रवृत्तिरिति शेषः। न इति।* विप्रलम्भका यत्र परं प्रवर्तयन्ति, न तत्र स्वयमपि प्रवर्तन्त इति। स्वैरेव विप्रलब्धाः प्रवर्तन्त इति मन्दाशङ्कां निराकरोति-न च इति।*आत्मवञ्चनमशक्यमप्रयोजनं चेति भावः। तर्हि सर्वेऽपि पूर्वैर्विप्रलब्धाः प्रवर्तन्त इत्याह—तेऽपि इति।*सर्वेषामेव भावाभ्युपगमेनेयं विप्रलम्भकमूला प्रवृत्तिः। अन्यथा संविदानोऽन्यथोपदिश्य प्रवर्तको विप्रलम्भकः, नचात्र तादृशः कश्चित्, अतः प्रमाणमूलत्वमेवोपपन्नमिति भावः। पुनः शंकते—इदं प्रथम इति* विप्रलिप्सातिशयेन हि स्वयमप्यनुष्ठानोपपत्तिरिति भावः। तदतिशयप्रदर्शनार्थमुक्तं धूर्तेति। * किमसौ इति। * धूर्तविप्रलम्भकास्तावदुपदेशमात्रेण विप्रलम्भन्ते, क्वचित्तु केचिदल्पायाससाध्येषु कर्मसु स्वयमनुष्ठायापीति संभाव्येत, नतु सर्वस्वदक्षिणादिसाध्ये वैदिककर्मकलापानुष्ठाने कश्चिद्विप्रलम्भक इत्युत्प्रेक्षितुमपि

त्तममिति। अस्तु वा तथाविधो धूर्तः कश्चित्, नत्वेकस्यास्य प्रेक्षावद्भिर्बहुभिरनुविधानं सम्भवतीत्याह-कथंच इति। * यद्वा सर्वप्रेक्षावदनुविहिताचारस्तथाविधः पुरुषः, किमस्य विप्रलिप्सायां भवतः प्रमाणमित्याह-केन वा इति। * न केवलं प्रमाणाभावः, प्रमाणबाधितैव तस्य विप्रलिप्सेत्याह-नहि इति।* तस्माद्वैदिकेषु कर्मसूपदेशानुष्ठानाभ्यां परान् प्रवर्तयन् सकलप्रेक्षावदनुविहिताचारो लोकोत्तरः कश्चिदिति निश्चेतव्यम्। नच तस्मिन्ननाश्वासो युक्त इति भावः। विश्ववृत्तेर्भ्रममूलत्वमप्यत एव निरस्तं वेदितव्यम्। चोदयति-अथ-इति। *बाह्याभिमतेषु चैत्यवन्दनादिषु विश्वप्रवृत्तिर्द्वीपान्तरापेक्षा दृश्यते। ततः साप्युक्तप्रकारेणाऽनन्यथासिद्धा तेषामामुष्मिकफलत्वं कल्पयेदिति भावः। न इति।* ज्योतिष्टोमचैत्यवन्दनयोर्न तुल्यत्वम्, दृष्टहेतुसंभवाच्चैत्यवन्दनादिपरिग्रहस्य, तदभावाच्चेतरपरिग्रहस्य। अयं च विशेषः प्रपञ्चयिष्यते द्वितीये परिच्छेदे। हेतुदर्शनशून्यैर्यद्दृढधारणार्थानुमानादितरत्र विश्ववृत्तिरभिमताऽसावन्यत्र नास्तीति भावः। किंच यत्र यत्र प्रतारणं तत्र सर्वत्राऽपि पूर्वसिद्धे कस्मिश्चिदनुष्ठाने प्रतीयमाने ततः प्रकारान्तरमाश्रित्य प्रतारयितुमात्मनोऽर्थप्रदानादिसुकरोपायोपदेशमात्रेण प्रतारणं भवति, नतु स्वयमनुष्ठानेन। यथा रोगोपशमहेतौ भेषजभेदानुष्ठाने पूर्वसिद्धे प्रतारणम्—मम हस्ते किंचित् प्रदीयतामिदानीमेव सर्वं शमयिष्यामि इति। इह दुःखात्मके कर्मणि स्वयमनुष्ठायैव परमनुष्ठापयति, तस्मान्न प्रतारणेयमित्याह—अनादौ इति।* एवं सत्याप्तप्रणीतत्वेन वेदानामेव प्रामाण्यात्तद्विरोधिनां बौद्धाद्यागमानां प्रमाणविरोधनिबन्धना पाषण्डत्वप्रसिद्धिः सिद्ध्येत्, नत्वन्यथेत्याह—अन्यथा इति।* यद्वा यदि वञ्चकः स्वयमप्यनुति-

ष्ठेत्, ततो बौद्धागमानां प्रतारणपरत्वे प्रमाणाभावादाप्तोक्तत्वसिद्धौ प्रमाणविरोधासंभवात् तन्निबन्धना पाषण्डत्वप्रसिद्धिर्न स्यादिति । अनादावित्यादेरपरा व्याख्या-कस्यचिदनुष्ठाने प्रागसिद्धे ह्यनुष्ठानमात्रस्यैवाज्ञानाद्विप्रलिप्सोपदेशमात्रेण प्रतारणानुपपत्तेरवश्यमनुष्ठानायैव प्रतारणं स्यात्, प्रागेवतु ज्योतिष्टोमानुष्ठानसिद्धौ प्रकारान्तरोपदेशमात्रेण स्वयमनुष्ठायैव प्रतारणं संभवति। नन्वनुष्ठानायैवेति विपरीतं किमिति न स्यादित्यत आह—अन्यथा इति।* चैत्यवन्दनादीनां प्रमाणमूलत्वे प्रमाणविरोधासंभवात् तदागमानां पाषण्डत्वप्रसिद्धिर्न स्यादिति। अनुष्ठानागोचरेण कर्मणेति केचित् पठन्ति । तत्रायमर्थः—यदि वैदिकानुष्ठानात्पूर्वसिद्धं किंचिदनुष्ठानं स्यात्, ततः पश्चात्तनं वैदिकमनुष्ठानं तत्र प्रतारणपरं स्यात्, नतु पूर्वसिद्धानुष्ठानागोचरेण कर्मणा प्रतारणं संभवति । सर्वत्र पूर्वसिद्धानुष्ठानविषयत्वात् प्रतारणस्येति । अयंच प्रथमव्याख्यायां संगच्छेत ॥ ८ ॥

प्रत्यात्मनियमाद् भुक्तेरित्यत्रापूर्वसद्भावहेतुः कालान्तरे फलोपभुक्तिरपूर्वस्यात्मसमवाये हेतुश्च भुक्तेः प्रत्यात्मनियमः संगृहीतः। तत्रापूर्वसिद्धौ तस्यात्मसमवायः शक्यसाधन इति तत्सिद्धिहेतुं तावद् भुक्तिमवतारयितुमाशंकते-अस्तु-इति।* अत्रैवकारोऽपूर्वव्यवच्छेदार्थः, जगद्वैचित्र्यस्यामुष्मिकफलस्येत्यर्थः। परिहरति-न इति।* एतदेव विभजते-चिरध्वस्तमिति।* फलाय कालान्तरभाविन इति शेषः। अपूर्वसिद्धावपि तस्य प्रत्यात्मसमवायः, नतु प्रतिभूतमिति कथं सिध्येदित्यत्र प्रत्यात्मनियमाद् भुक्तेरिति हेतुं व्याचष्टे—संभोग इति। अपूर्वसंस्कृतेष्वपि शरीरेन्द्रियादिभूतेषु नित्यत्वविभुत्वाभ्यां सकलशरीरप्राप्तानामात्मनामपूर्वेणाविशेषितत्वे संविभज्य

भोगः प्रतिनियमभोगो न सिध्येत्, दृश्यते चासौ; तस्मादात्मसमवाय्यपूर्वमिति ॥ ६ ॥

यावता चापूर्वमेकमवश्यम् कर्तव्यम् तच्च न पूर्वोक्तरीत्या मन्वादीनामपि प्रत्यक्षादिगोचरतामर्हति; तावतेदमपि सिद्धम्, यत् जन्मान्तरभाविफलविशेषसाधनत्वेन धर्माधर्माध्यवसायो न केवलया युक्त्या भवितुमर्हति, किन्तु केवलवेदेन वेदमूलकया युक्त्यैव वेत्येवोरीकर्तव्यमिति सिद्धम् ।

[ धर्मे युक्तीनामुपयोगे आधुनिक युक्तयः ।]

ततश्च वयमप्यत्र केवलयुक्तिवादानुसारिणां प्रतिवादिनां शुष्कयुक्तिखण्डनेन ग्रन्थविस्तरं नाकांक्षाम इति शास्त्रप्रामाण्यवादेन सम्भवतामेव सर्वेषां पक्षाणां समालोचनं सर्वेषां पुरत उपस्थापयितुमभिलषामः। तदत्रागतानां प्रबन्धानां सर्वेषां सारसंग्रहणं वयमत्र प्रथमं सम्पादयामः। तत्र केचित् शास्त्रस्यैकस्य व्यवस्थितस्याप्रसिद्धत्वात् धर्मतत्त्वविनिर्णयः केवलयुक्त्यधीन इति वदन्ति। तेषामयमाशयः—नहि शास्त्रं धर्मे प्रमाणम्; व्यवस्थितस्यैकस्य शास्त्रस्य भारतीयेष्वविद्यमानत्वात्। तथाहि—शास्त्रपदेन यदि दर्शनानां विवक्षा,तर्हि तान्यपि नैकरूपाणि, यथा सांख्ययोगन्यायवैशेषिकमीमांसकदर्शनानि बहून्येव वर्तन्ते। यदि तु स्मृतीनां ग्रहणम्, तर्हि स्मृतीनामनेकत्वं सर्वसम्मतमेव। यदि ब्राह्मणग्रन्थाः शास्त्रम्, तर्हि ब्राह्मणग्रन्था अपि शतपथगोपथैतरेयब्राह्मणादिरूपेण बहव उपलभ्यन्ते। एवं शास्त्रानेकतयैव हि भारतीयानां धर्मानेकत्वम्,परस्परसंघटनविघातश्च जायते। एतादृशशास्त्रपदप्रयोगेण सर्वेषां भारतीयानां महान् मोहः सर्वैरपि सम्पाद्यते। अत एतादृशविवादग्रस्तशास्त्रशब्दार्थपर्यालोचनायां महद्दुःखं सर्वेषां सञ्जायते। अ-

नेन धर्मशब्दोऽपि व्याख्यातः। धर्मशब्दार्थो हि धृतिसाधनम्। तच्च धृतिसाधनमनेकविधं दृश्यते सर्वत्र। तत्रायमेव धर्मपदार्थः, अयमेव धर्मग्रन्थ इति निर्णयं विना न विचारसौष्ठवं भवति। शास्त्रं हि युक्त्यनुसारेणैव संग्रथितम्। अतो धर्मनिर्णयोऽपि युक्त्यधीन इत्येव वक्तव्यम्। युक्तिसिद्धसिद्धान्तस्यैव विज्ञानमिति शास्त्रमिति च नाम। यश्च सिद्धान्तो युक्तिवादबहिर्भूतोऽतीन्द्रियो वा, तस्य शास्त्रविज्ञानादिपदेन न व्यपदेशो युक्तः। यावता च युक्तिसिद्धस्यैवार्थस्य संग्रथनेन शास्त्रं नाम, तत इदमपि सिद्धम्—यत् युक्तिशास्त्रयोर्विरोधकथैव न भविष्यति। तत्र यदि विरोधो भवति, तर्हि उभयमप्यप्रमाणमिति।

[उक्तमतनिरासः, सूनृतवादिनो च] अत्रास्माकमिदमेव वक्तव्यम्—यत् युक्तिसिद्धस्यार्थस्य न शास्त्रेषु संकलनम्, अतीन्द्रियेऽपि विषये शास्त्रं प्रमाणम्, युक्तिरत्रप्रमाणमित्यादिकं पूर्वमेव निरूपितमिति न पिष्टपेषणार्थं वयं प्रवर्तामहे। युक्तिसिद्धसिद्धान्तस्यैव शास्त्रमिति नामेत्यादि स्वकपोलकल्पनामात्रं न कथमपि प्रमाणम्। यच्चोक्तकल्पनानिमित्ततया भारतीयेषु एकस्य शास्त्रस्य न प्रसिद्धिरित्यादि विवेचितम्, तदिदं भारतीयानां शास्त्रस्वरूपं यदभिमतम्, तदज्ञाननिबन्धनमेव। अत्र च प्रसंगे सूनृतवादिन्यां "को बतास्माकीनो धर्मग्रन्थः" इति शीर्षकं प्रबन्धमुपलब्धं सर्वेषां प्रियपाठकानाम्पुरत उपस्थाप्योक्तविधकल्पनानां निर्मूलत्वं स्थापयितुमभिलषन्तः प्रकृतोपयुक्तांशमात्रं ततः संगृह्यात्र प्रकाशयामः। तद्यथा—

ये पुनरमी नानाविधा धर्मास्तेषां किल कश्चिदप्येक एव धर्मग्रन्थो भवति। यथा ख्रिस्तीयानां बायबलग्रन्थो माहम्मदानां कुराणम्, झेन्दावेस्ता च पारसीकानाम्। सनातनधर्मीयाणां पुनर्नैवं-

विधः कोऽप्येक एव धर्मग्रन्थो यस्मिन्नधीते समग्रस्यापि धर्मस्य ज्ञानं स्यात्। अतश्च नोचितोऽयं धर्म इति किल केऽपि नव्य-शिक्षिताः प्राहुः।

न खलु जानीमो वयं किं वा एकमात्रेणैव धर्मग्रन्थेन सम्पद्यते फलमिति? अकिंचित्करं धर्मे प्रबन्धानामनेकत्वम्। न खल्वेकमात्र एवेति यत्किमपि वा प्रतिपादयन् धर्मग्रन्थः कोऽपि कस्यापि धर्मस्य गौरवमभिवर्धयितुं प्रभवेत्। नापि वा भूयांसोऽपि प्रबन्धा युक्ति-युक्तं चोभयलोकाविरुद्धं च प्रतिपादयन्तो बहव इत्येतावतैव कस्यापि धर्मस्य गौरवहानये कल्पेरन्। अत एव च निष्फलैव धर्म-ग्रन्थानामेकानेकत्वचर्चेति ब्रूमः। तथापि यद्याग्रह एव, तदा विद्यत एव कोऽप्येक एव धर्मग्रन्थः सनातनधर्मीयाणामिति सावधारण-मेवोच्यतेऽस्माभिः। अथ चेत्कोऽयमित्युच्यते, तदा भगवती श्रुति-रेवासाविति ब्रूमः। एषैव हि प्रमाणं परमं सनातनधर्मस्य। तथा ह्याहुः—धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः, इति। यः कोऽपि वा सनातनधर्मानुयायी भवतु, नासौ श्रुतिप्रतिकूलं किम-प्याचरति। यद्यच्च विधीयते श्रुतिषु, शिरसैव तत्सम्मन्यते। अत श्चाभिधीयतेऽस्माभिः श्रुतिरेव सनातनधर्मीयाणामेको धर्म-ग्रन्थ इति।

अत्रापरे प्रत्यवतिष्ठन्ते। तद्यथा—ननु भोः प्रमाणीक्रियन्त एव श्रीमता पुराणानि? सम्मन्यन्ते स्मृतयः? मान्यन्ते च कल्प-सूत्रादीनि? भूयांसि च पुराणानि दृश्यन्ते, नापि नाङ्गीक्रियते स्मृती-नामनेकत्वम्, नचापि न भवन्ति बहूनि कल्पसूत्राणि। धर्मग्रन्था इत्येव परिगृह्यन्ते सर्वाण्यप्येतानि। तत एव च नास्त्येव सनातन-धर्मीयाणामेको धर्मग्रन्थ इत्युच्यतेऽस्माभिरिति।

अत्रब्रूमः—अहो माहात्म्यं मोहस्य यत्परीक्षकमप्यात्मानमाकलयन्तोऽमी अर्वाचीना विद्वांसो नावगच्छन्ति धर्मग्रन्थस्यैकमात्रत्वमस्माकम्। श्रुतिरेव हि धर्मग्रन्थ एकमात्रः सनातनधर्मीयाणाम्। अथ का गतिः स्मृत्यादीनामिति? श्रूयताम्। यदि न स्यात् श्रुतिविरोधिनी स्मृतिस्तदैवासौ प्रमाणम्भवति, न पुनः श्रुतिविरोधिन्यपि। तदाहुः—श्रुतिस्मृतिविरोधे तु श्रुतिरेव गरीयसी।
अविरोधे तु कर्तव्यं स्मार्तं वैदिकवत्सदा॥इति।

अनन्तः किलायं श्रुतिवचसां राशिः। नचायमेकेन जन्मना कथंचिदपि साकल्येनाध्येतुं शक्यः केनापि पुरुषेण। भूयांसः पुनरेतस्य कालगतवैषम्यात्समुच्छिन्नाः। यासां हि श्रुतिशाखानां श्रूयन्ते नामानि चरणव्यूहादिषु, कुत्रेदानीमेताः? नहीदानीमेकमात्रोऽप्येतासां मंत्रः श्रवणसरणिमुपयाति, नचैतत्कल्पनामात्रम्, यदुक्ता बहवः श्रुतिशाखाश्चरणव्यूहादिषु। लभ्यन्ते हि कासांचिच्छाखानां प्रातिशाख्यानीदानीम्, न पुनरेताः शाखाः। कासांचित्पुनः शाखानां विद्यमानानामपि प्रातिशाख्यानि नोपलभ्यन्ते। ततश्च प्रतीयते विद्यन्त एवापरा अपि काश्चित् श्रुतीनां शाखाः, यासां किल कालवशाद्विलयः सम्पन्न इति। यदा च समुच्छिन्ना एताः शाखास्ततः प्रागेव कृतावताराः स्मृतयः। अतश्च सति समग्रेऽपि वेदराशौ प्रणीताः स्मृतयो मुनिभिरिति वेदगत एवार्थः समुपनिबद्ध एतासु। यदि च नैवमभविष्यत्, तदा नैवाकरिष्यत शिष्टैः परिग्रह एतासाम्। नहि वेदविरुद्धान्यपि वचनानि शिष्टैः प्रमाणीकर्तुं शक्यानीति। यच्चादितः प्रभृत्येव परिगृह्यन्त एताः शिष्टैः, ततोऽपिच तदवगतस्यैवार्थस्य प्रतिपादिका एता इति प्रतीयते। अत एव च वेदविरुद्धायाः स्मृतेः परित्यागः स्मर्यते—'विरोधे त्वनपेक्षं स्यात्, इति। श्रुतिविरोधे स्मार्तं वचन-

मनपेक्षं त्याज्यं स्यादित्यर्थः। यत्तु केषांचित्स्मृतिवचनानां मूलं नोपलभ्यते श्रुतिषु तत्र किल बहूनां श्रुतिशाखानां समुच्छेद एव हेतुरिति तत्त्वम्। अत एव चैवंविधेषु स्थलेषु मूलभूतश्रुतिवचनान्यनुमीयन्ते। तदुक्तं जैमिनिना—'असति ह्यनुमानम्, इति। यत्र तु श्रुतिस्मृत्योर्विरोधो नास्ति, केवलन्तु स्मृतेर्मूलमेव श्रुतौ नोपलभ्यते,तत्र मूलभूतस्य स्मृतिवचनस्यानुमानं कर्तव्यमिति भावः। तदेवं स्मृतीनां प्रामाण्यं श्रुतिप्रामाण्यमूलकमेवेति न पार्थक्यमावहति। अत एव च न स्मृतिस्वीकारमात्रेण धर्मग्रन्थानामनेकत्वं वक्तुं युक्तमिति द्रष्टव्यम्।

अत्रोच्यते कैश्चित्—'स्मृतयोऽपि नानाविधा एवेति कथं वा धर्मग्रन्थस्यैकमात्रत्वमभ्युपगन्तव्यम्, इति? तदेतदपि नैव विचारसहम्। तथाहि—नहि स्मृतीनां नानात्वेऽपि तद्गतस्य प्रतिपाद्यस्य श्रुतिविरुद्धत्वम्भवति,भवदपि वा क्वापि नाप्रमाणतया न स्वीक्रियते केनापि। एवंच मूलभूतमेकमेव प्रबन्धमवलम्ब्य विरचितेष्वपि नानाविधेषु प्रबन्धेषु न हि धर्मग्रन्थस्यैकत्वं हीयते; यथा बायबलस्य। एतद्धि नैकेनैव प्रणीतम्। विद्यन्ते हि तत्र नानाविधानि तैस्तैर्विरचितानि गीतानि-यथा—दायूदगीतम् माथ्थीगीतमित्यादि। सम्भूय चैतान्यशेषाण्यपि धर्मग्रन्थतया स्वीक्रियन्ते ख्रिस्तीयैः। एवं स्मृतयोऽपि नानाविधैर्मुनिभिः प्रणीता नहि धर्मग्रन्थस्यानेकतां साधयितुं प्रभवेयुः, व्याख्यानत्वाच्चैतासाम्। स्मृतयो हि नाम व्याख्यानान्येव मूलश्रुतिवचनानाम्। नच व्याख्यानानि पृथक्प्रबन्धा भवन्ति। दृश्यन्ते हि मन्वादिस्मृतीनां नैकविधानि मेधातिथिप्रभृतिभिर्विरचितानि व्याख्यानानि। न पुनरेतावता मनुस्मृतेरनेकत्वमुच्यते केनाप्यनुन्मत्तेन। एवं चैतत्। अतश्च न धर्मग्रन्थस्यानेकत्वम्। अत्रापरे ब्रूयुः—ननु भोः पुराणान्यपि विद्यन्ते। भूयांसि चैतानि धर्मग्रन्थतया च स्वीक्रियन्ते। तत्क-

थमेक एव धर्मग्रन्थ इति ? दत्तप्रायमेवोत्तरमेतस्य स्मृतिकारेण ।
उपबृंहणानि ह्येतानि वेदस्य पुराणानीति ।

नीरसप्रायाणि श्रुतिवचनानि न किल लौकिकेभ्यः स्वदेरन्निति तान्येव तैस्तैरितिहासादिभिरुपबृंहितानि पुराणेषु । अत एवोक्तम् 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्, इति । यथाचैतत्तथा प्रदर्शितं ब्रह्मतर्कस्तवादिषु श्रीमद्भिरप्पय्यदीक्षितचरणैः । नचोपबृंहणानां मूलग्रन्थतः पृथक्त्वं केनापि स्वीकर्तुं शक्यम्; नहि सूत्रेभ्यः पार्थक्येन भाष्यं नाम स्वीक्रियते इति ।तथाचैतत् । अतश्च नास्ति धर्मग्रन्थानामनेकत्वम् । तत्सिद्धं पुराणादीनां न श्रुतितः पार्थक्यमिति । सर्वेषां हि मूलं श्रुतिरेवेति । तच्छ्रुतिरेव केवलं धर्मग्रन्थः सनातनधर्मानुयायिनामस्माकमिति सिद्धम् । अत्रोच्येत—श्रुतीनामप्यनेकत्वान्न धर्मग्रन्थस्यैकत्वमिति, न पुनरेतद्युक्तम्, ऋगादिरूपो ह्येक एवायं वेदराशिः श्रूयते । औपाधिकः पुनरस्यायं भेद ऋग्वेदो यजुर्वेदः साम वेद इति । तथा ह्याहुः—"तेषामृग्यत्रार्थवशेन पादव्यवस्था, गीतिषु सामाख्या, शेषे यजुःशब्दः,इति । तदेवं सत्यप्येवंविध औपाधिके भेदे नास्त्येवास्माकं धर्मग्रन्थानामनेकत्वमितिब्रूमः । अतश्च सिद्धमेकमात्र एवास्माकीनो धर्मग्रन्थः, सच वेद एवेति । तदिदं सिद्धं न केवलयुक्तिगम्यं धर्मतत्त्वम्, किन्तु वेदैकसमधिगम्यमिति । अत्र प्रसंगे उडुपिसंस्कृतकलाशालाप्रधानाध्यापकानां प्रबन्धांशसंकलनमपि वयमत्यन्तं समुचितं पश्यामः । तद्यथा—

[प्राचीनमतानुसारि प्रबन्धविशेषः]

"धर्मपदार्थविचारश्च प्रथममावश्यक आपद्यते । तत्र कोऽयं धर्मपदार्थः, यागादिकर्मविशेषो वा, तज्जन्यमदृष्टशब्दितमपूर्वं वा ? आद्ये न तावदयं प्रश्नो भाट्टानाम् । तैर्धर्मस्य चोदनालक्षणत्वाङ्गीकारेण-

न्यतरकोटिनिर्णायकत्वात् । नापि सांख्यानाम्, तेषामपि तथात्वादेव प्रश्नमूलसंशयायोगात् । नापि चार्वाकाणाम्, तेषामतीन्द्रियानभ्युपगन्तृत्वेन प्रत्यक्षान्यप्रमाणानभ्युपगमाच्च धर्मादिवैफल्यात् तद्विचारादावप्रवृत्तेः । नापि बौद्धानाम्, तेषां वेदबाह्यत्वेन स्वाचार्यवचनैरेव धर्मनिश्चयं वदतामेतादृकपर्यनुयोगायोगात् । द्वैताद्वैतविशिष्टाद्वैतप्रभृतीनां धर्मादिसिद्धेर्वेदैकशरणत्वं ब्रुवतां विकल्पमूलसंशयाभावः सुवच एव । किम्बहुना, ? अन्येषामप्येवंविधसंशयासंभवः सूपपाद एव, ततः वेदेनैव धर्मनिर्णयं ब्रुवतां भाट्टानां तस्य विप्रतिपत्त्यापादितस्तटस्थानां संशयो वा प्रश्नमूलम्, अथवा केषाञ्चिदाधुनिकानामयं प्रश्नो वेति वक्तव्यम् । तत्र तटस्थानामेव पूर्वोक्तविप्रतिपत्त्यापादितसंशयः प्रश्नबीजमित्याद्यकल्पे धर्मनिश्चयः शास्त्रैकनिबन्धन एव, न केवलयुक्त्यधीनः । धर्मे प्रमीयमाणे तु वेदेन करणात्मना । इतिकर्तव्यताभागं मीमांसा पूरयिष्यति॥" इत्यभियुक्तोक्त्या केवलवेदोत्पादितायां धर्मप्रमितौ युक्त्यनुसन्धानात्मिकाया मीमांसाया इति कर्तव्यतामात्रत्वप्रतीतेर्मीमांसाया युक्तिरूपता कर्मब्रह्मतंत्रविचारयितॄणां प्रसिद्धा । अन्यत्रापि "युक्तोऽयुक्तश्च यद्यर्थ आगमस्य प्रतीयते । स्यात्तत्र युक्त एवार्थः„ इत्यादिना युक्तेः सहकारितामात्रतोक्तेश्च । किंच पक्षधर्मतादिमत्तयैवार्थनिश्चायिकाया अनुमानत्वेनोक्तधर्मतत्त्वनिर्णायकत्वे "यागीयहिंसा, पापसाधनम्, हिंसात्वात्, ब्रह्महिंसावत्„ "ब्राह्मणेन सुरा पेया द्रवद्रव्यत्वात्, क्षीरवदित्येवं धर्मस्याधर्मत्वम्, नरशिरःकपालं शुचि, प्राण्यङ्गत्वात् शंखवत्„ इत्येवमशुचिद्रव्ये शुचित्वस्यापि साधनप्रसंगः । अतः केवलं युक्त्या धर्मतत्त्वनिर्णयो बाहुना

समुद्रतरणमिव दुःशक एवेत्याद्युत्तरम् । द्वितीयकल्पे तु अत्र युक्त्यधीनत्व-शास्त्रनिबंधनत्वाभ्यां कोटिभ्यां सहचरितं निर्णायकाभावसहकृतं धर्मतत्त्वनिर्णायत्वमेव संशयबीजमिति वक्तव्यम् । इदं न बुद्धिमता वाच्यम् । धर्मतत्त्वनिर्णायस्य केवलयुक्त्यधीनतायाः क्वाप्यदर्शनात् । एवं संशयबीजविरहेऽपि संशये "अहं चेतनोऽचेतनो वा, श्वपचो न वा, चौरो न वा, विशुद्धमातापितृजन्यो न वा, मन्माता स्वैरिणी न वा, अहं चण्डालजो न वा, इत्यादिसंदेहोऽपि कुतो नोदियात् । एवं शंकमानश्च स्वस्याशुचित्वानधिकारित्वशंकया कर्तव्यं कुतो वा न जह्यात्? श्वपचत्वशंकया श्राद्धिकं कुतो वा न भक्षयेत्? स्त्रीत्वेन भार्याया इव स्वमातृस्वसृदुहितृभ्रातृभ्रातृव्यपत्न्यादीनामपि स्वोपभोग्यतां कुतो न शंकेत ? अत एतेषां निर्बीजः प्रश्नो बालकप्रश्न इवोपेक्षामर्हति, न कक्षीकर्तव्यताम् । यदि च कक्षीक्रियते तर्ह्युक्तविध एवातिप्रसंग उत्तरं मन्तव्यः । यागादिकर्मजन्यमपूर्वपदवाच्यमदृष्टमत्र धर्मपदार्थ इति पक्षे तत्तत्त्वनिर्णयोऽपि शास्त्रैकसाध्यः, न तत्र पुरुषेच्छानुसारिगतिमती युक्तिरप्यवकाशमासादयति; प्राक्प्रदर्शितातिप्रसंगात् । अन्यथा "स्वपत्नी उपभोगं नार्हति, स्त्रीत्वान्मातृवत्, श्वस्तन्यपानम्, अपूर्वसाधनम्, द्रवपानत्वात्, गंगाम्भःपानवत् " इत्याद्यतिप्रसंगः कथं वार्यते ? किञ्च यद्यपि स्वरूपमात्रेण धर्माधर्मसिद्धिः शरीरादेर्देवदत्तभोगायतनत्वेन हेतुना तद्विशेषगुणजन्यत्वसाधकेनापि भवति; तथाप्यमुकेन कर्मणेदं स्वर्गफलमीदृशं वा नरकफलं वाऽपूर्वमुत्पद्यत इति निर्णयः शास्त्रैकाधीन एव; कर्मगतापूर्वविशेषसाधकत्वलिंगस्य शास्त्रैकवेद्यत्वात् , अन्यथा वैधहिंसावत् हिंसान्तरस्यापि पुण्यसाधनत्वप्रसंगात् । अपिच युक्त्यापि यदि पुण्यादिस्वरूपसिद्धिः

स्यात्, तर्हि पूर्वोक्तदोषाः कथं वार्येरन् ? किंचात्र सर्वत्र युक्तिपदार्थो व्याप्तिधर्मतावल्लिङ्गात्मकमनुमानं वा पञ्चम्यन्तपदवाच्यो धर्मविशेषो वा ? न प्रथमः; तेन वैपरीत्यस्यापि सुसाध्यत्वस्य प्रदर्शितत्वात्, न द्वितीयः; अप्रयोजकत्वात्। अतो न धर्मतत्त्वनिर्णये युक्तिरवकाशं लभते, किन्तु शास्त्रमेवेति बुधाः सभेरीहननमाघोषयन्तीत्युत्तरं प्रसरति।

तथा चायमुक्तस्य संग्रहः—

धर्मतत्त्वस्य निर्णीतिं यदि युक्तिः प्रसाधयेत्।
अधर्मस्यापि धर्मत्वं युक्तिः कस्मान्न साधयेत् ?
तच्छास्त्रमेव शरणं धर्मतत्त्वविनिर्णये।
वेदस्तदनुसारी च शास्त्रमत्र प्रमापकम्॥ इति॥

उक्तप्रबन्ध-समालोचनम् अत्रहि प्रबन्धे युक्तिप्रामाण्यवादेन प्रवृत्तेषु केष्वपि दर्शनेषु धर्मस्य केवलयुक्तिगम्यत्वसिद्धान्तो न वर्तते एव, आधुनिकानां केवलयुक्तिगम्यत्वसिद्धान्तस्तु सर्वथा न योग्यः; बहुविधदोषग्रस्तत्वात्। नहि युक्तिर्धर्मनिर्णयेऽधर्मनिर्णये वा समर्थेति स्पष्टतरमुपपादितम्।

श्रीवेंकटाचलशास्त्रिणा-मब्धिनौयानमीमांसा कारणां प्रबन्धः श्रीकाशीशेषवेङ्कटाचलशास्त्रिणोऽपि 'ये खलु सकृत् समुद्रयाने प्रायश्चित्तेन संव्यवहार्यत्वं स्वीये प्रबन्धे व्यवस्थापयन्ति, यस्य यथावसरं समालोचनेन स्वीयमाशयं तत्र प्रकाशयिष्यामः, तेऽपि स्वीये प्रबन्धे द्वितीयप्रश्नोत्तरमेवमेव निरूपयन्ति। तद्यथा—

"युक्त्यनपेक्षयैव शास्त्रं प्रवृत्तम्। शास्त्रयुक्त्योर्विरोधे शास्त्रं बलवत्। अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिरिति याज्ञवल्क्योक्त्या "आततायिनमायान्तमपि वेदान्तगं रणे। जिघांसन्तं जि-

घांसीयान्न तेन ब्रम्हहा भवेत्" इति बाधवत् । इति । अत्र हि शास्त्रिवरैरर्थशास्त्राद्धि बलवदिति वचनोपन्यासेन वयं पश्यामः, इदमपि सूच्यते—यत् लोकपरिस्थित्यनुसारेणैव न शास्त्रं प्रवृत्तम्, नवा दृष्टफलकानामेव कर्मणां शास्त्रेषु ग्रहणमिति च ।

अन्यथा हि अर्थशास्त्रं धर्मशास्त्रमिति विभाग एव नोपपद्यते । तत्र चेदं स्पष्टमेव सर्वेषाम्—यददृष्टफलानां कर्मणां न कथमपि युक्तिमूलकत्वसम्भव इति ।

सदाशिवभिडेशास्त्रिणां प्रबन्धः

अत्र प्रसंगे श्रीयुक्तसदाशिवगोपालभिडेमहोदयानां प्रबन्धसमालोचनमपि सविस्तरं केषांचनेच्छानुसारेण सम्पादयामः । वयन्तु एतं प्रबन्धं पूर्वापरविरुद्ध-बहुवाक्यजालभूयिष्ठं समालोचनायोग्यमेव यद्यपि पश्यामः, सर्वथा तु स्वरूपव्याक्रियैव पराक्रियेति न्यायमनुसृत्य केषांचनेच्छामनुसृत्य च तत्संग्रहणमपि यथावदेव सम्पादयामः । अयं हि प्रबन्धो महाराष्ट्रभाषानिबद्धोऽस्माभिः संस्कृतभाषयाऽनूद्य प्रकाश्यते । तद्यथा—धर्मः किं शास्त्रैकगम्य उत युक्तिगम्योऽपीति प्रश्ननिर्णयाधीनत्वाद् बाहुल्येन हिन्दुधर्मलक्षणविवेचनविशिष्टभागस्येतितद्विवेचनं प्रस्तूयते ।

धर्मे युक्तीनामुपयोगप्रकारः

यद्यप्यस्य प्रश्नस्य निर्णयसमये बुद्धेः प्राधान्याङ्गीकारे महानयं दोषः पुरतः प्रत्यवतिष्ठते, यदस्योत्तरमपि युक्त्यपरपर्यायमानवबुद्धिमनुसृत्यैव देयमथवा शास्त्रप्राबल्यमङ्गीकृत्यैव प्रदेयमिति सन्दिह्यते, तथाऽप्यस्य सन्देहस्यापाकरणार्थं यत्नमकृत्वा सरलमार्गेणैवास्य निर्णयाय वयं प्रवर्तामहे । यद्यपि धर्मः केवलं शास्त्रैकगम्य इति पक्षं स्वीकुर्वाणा बहवो लभ्यन्ते, एवं शास्त्रप्रामाण्यमनभ्युपेत्य केवलतर्केणैव धर्मनि-

गाय इति वदन्तः खला एव दरीदृश्यन्ते, तथापि शब्दस्यैव प्राधान्यमाश्रितवतां प्राचीनानां बुद्धेश्च केवलायाः प्राधान्यमाचक्षाणानां नवीनानां च मतं कियत्पर्यन्तं परीक्षासहं तद्विचारणीयम्। मीमांसकास्तावदाद्यपक्षस्य परिपोषकाः समुपलभ्यन्ते, परन्तु धर्मलक्षणप्रणयनसमये तेषामपि शास्त्रप्राधान्यमर्यादामुल्लंघ्य किंचिदपि युक्तिप्राधान्यवादः समाश्रयणीयतया समापतितः। तथाहि चोदनालक्षणोऽर्थो धर्म इति लक्षणे वेदस्य प्रामाण्यमेव यद्यपि स्थापितम्; तथापि लक्षणस्य भूयानंशो धर्मजिज्ञासूनां बुद्धिप्राधान्यपर्यवसाय्येव दर्शितः। प्रेरणाप्रतिपाद्यविषयः प्रयोगधर्म इति कथने द्वावप्यंशौ बुद्धिगम्यावेवेति पर्यवस्यति। प्रेरकत्वं मीमांसकैः श्रुतेरेवास्थीयते,तथापि धर्मानुष्ठातॄणां जनानां बुद्धेरपि स्वातन्त्र्यं रक्षितमेव। यदाहि केवलं शब्दप्राधान्यवादिनां मीमांसकानां कियताप्यंशेन तर्कस्य ( बुद्धेः ) अवलम्बः कर्तव्यो भवति, तदेतरेषां तदाश्रयणं कैमुत्यन्यायसिद्धम्। मीमांसकानामियं शब्दशरणता प्राचीनानां न सम्मतेति यास्काचार्यप्रदर्शितनिरुक्तपरिशिष्टस्थतर्कर्षिकथया सर्वैरपि ज्ञातुं शक्यते। शब्दशरणानामपि वेदवाक्यार्थविचारस्तर्कसाहाय्यं विना नैव सम्भवतीति यास्काचार्याणामभिप्रायः। तथा मनोरपि इदमेव सम्मतमिति 'यस्तर्केणानुसन्धत्ते', इत्यादिवाक्याज्ज्ञायते। शास्त्राविरोधितर्कस्य ग्राह्यत्वोपवर्णनेन विरोधितर्कस्याग्राह्यत्वेऽपि अनुकूलतर्कस्यात्यावश्यकत्वं स्पष्टीकृतम्। तदित्थं यास्कमनुप्रभृतीनां प्राचीनाचार्याणां केवला बुद्धिः केवलं शास्त्रं वा समादरणीयमित्ययं पक्षो दुष्ट इति सहजत एव सिद्ध्यति। मीमांसकान् विहाय सर्वेषामयमेव सिद्धान्तः-यदुभयं स्वीकर्तव्यमिति। उभयोर्मध्ये कस्य प्राधान्यमिति शङ्काया निराकरणं स-

स्प्रति क्रियते। अत्राध्यात्मविदां मीमांसकानां च मतभेदो वर्तते। अध्यात्मविदो बुद्धेः प्राधान्यं मन्यन्ते, इतरे शब्दस्य। व्यासादिभिर्महर्षिभिर्वेदान्तानां कर्मकाण्डानां च परस्परमविरोधव्यवस्थापनेनार्यजनताया बुद्धिभूमौ वेदान्तानामेवादरातिशयं कारयित्वा ब्रह्मविद्याया आर्यधर्मस्य मूलभित्तिस्वरूपत्वं स्थापितम्। तत्प्रायेण धर्मशास्त्रप्रणेतृभिरप्यनुमोदितम्। धर्मतत्त्वविनिर्णये कर्तव्ये परिषत् प्रतिष्ठाप्या। तस्यां चत्वारस्त्रयो वा वेदधर्मज्ञा ब्राह्मणाः सभ्याः कार्याः। अथवा एकोऽपि ब्रह्मवित्तमो धर्मतत्त्वविनिर्णये प्रभुरिति प्रतिपादितम्। एतस्य सर्वस्यालोचनायामेतदवगम्यते यत् धर्मतत्त्वविनिर्णयो यद्यपि युक्तिं शास्त्रं चावलम्बते, तथापि ज्ञानविज्ञानसम्पन्नबुद्धेः प्राधान्यमङ्गीक्रियते एव।

युक्तिसिद्धमर्थं प्रदर्शयति शास्त्रमथवा युक्तिनिरपेक्षमेव शास्त्रं प्रवर्तते। द्वयोर्विरोधे कस्य प्राबल्यमित्ययमपि प्रश्नो द्वितीयप्रश्नस्यैवावशिष्टोंऽशः। शास्त्रीयवचनानां तात्पर्यनिर्णयायार्वाचीनकाले द्विविधा प्रवृत्तिर्दृश्यते। एका पुराणमतवादिनामपराऽऽधुनिकानाम्। तत्र युक्तिशब्दोऽनुभवं कार्यकारणभावमितिहासमिति त्रिविधमप्यर्थं ब्रूते। अतः प्रकारत्रयेणास्य प्रश्नस्य निर्णयः कर्तव्यः। तिसृणामपि विधानां धर्मनिर्णयार्थमुपयोगः कर्तव्यः इति "श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः" इत्यादिवाक्यैः पूर्वोक्तप्रकारत्रयस्य ग्रहणं कृतम्।

[ शास्त्रस्य पूर्वाचार्यानुभवरूपत्वम्। ]

अनुभवः कुत्रचित् प्रबलो भवति, कुत्रचिच्च निःसार एव भवति। अनुभवस्य प्रामाण्यं गौरवं वाऽनुभवितृजनस्य योग्यतामवलम्बते। शास्त्रवचनान्यपि पूर्वाचार्याणामनुभवविशेषा एव, आधुनिकाना-

मनुभवास्तु तत्समानकोटितां नावहन्ति । अतः प्राचीनानामनुभवाः शास्त्रवचनेष्वितिहासेषु वान्तर्भावयितुं योग्या इति न ते पृथग्विचारणीयाः ।

पुराणाधुनिकरीतिस्वरूपविवेचनम् ।

शास्त्रस्य व्याख्यानरीतिर्द्विधा प्रचलतीति पूर्वमेवोक्तम् । एतदतिरिक्तापि काचन रीतिः प्राचीनानामासीदित्यपि केषांचित्सम्भावना वर्तते, परन्तु पूर्वोक्तसरण्याः परीक्षायां कृतायां तयोरन्यतरस्यां प्राचीनपद्धतेरन्तर्भावः शक्यसंपाद इति प्रथमं तामेव द्विविधां रीतिं विचारयितुम्प्रवर्तामहे । एतदग्रे पुराणमतवादिनां रीतेः पुराणपद्धतिनाम्ना व्यपदेशः क्रियते, आधुनिकरीतेराधुनिकपद्धतिनाम्नेति ज्ञेयम् । शककालमारभ्याष्टादशशताब्दीं यावत् कांश्चिदपवादान् विहाय प्रायः सर्वैरपि पुराणपद्धत्या एव स्वीकारः कृतः ।

[प्राचीनरीतिमूलं एकवाक्यता ]

अस्याश्च शककालस्यारम्भादेव प्रवृत्तावपि पातञ्जलभाष्यानन्तरं यावन्तो ग्रन्थाः प्रसिद्धाः, सर्वत्र तस्या एवानुसरणं कृतमस्ति । एकवाक्यताऽस्या मूलभूतं तत्त्वम् । एतां रक्षितुमेव लक्षणाध्याहारादिभिरन्यथाऽन्यथार्थप्रतिपादनं समापतितम् । युगभेदकल्पनामपि पुरस्कृत्य कांश्चिद्धर्मान् परित्यज्यान्यानेव धर्मान् प्रवर्तयामासुर्ग्रन्थकृतः । विशेषतश्च निबन्धकारैरेकवाक्यतां रक्षितुं महान् प्रयत्नः कृतः । गौतमबुद्धानन्तरमद्य यावत् एकवाक्यतायाः साहाय्येनायं चातुर्वर्ण्यसमाजो यथाकथंचित् सङ्घटितः । एकवाक्यतामवलम्ब्य विवेचनायां युक्तोतिहासादीनां समादरस्तादृशो नासीत् । चरकसंहितामारभ्य धर्मसिन्धुग्रन्थपर्यन्तं सर्वत्र ग्रन्थेषु सर्वे धर्मा एकजातीया एव, नतु परिवर्तिताः इत्येतत्प्रदर्शयितुं प्रयत्नो

दृश्यते । मंत्रब्राह्मणसूत्रादीनामाचार्यादिकृतं व्याख्यानं स्मृत्यादीनां कुल्लूकादिकृतं व्याख्यानं च यथावदेव सर्वैर्मन्तव्यम्, नतु तत्र युक्त्या विवेचनम् । तथा सत्येकवाक्यता विनष्टा स्यात् । विनष्टायां च तस्यां धर्मशास्त्राणि सर्वथा विनष्टानि स्युरिति पुराणपद्धतिवादिनामापत्तिः प्रत्यवतिष्ठते चेत्सर्वोऽपि विचारमार्गो रुद्धो भवति । परिस्थितेः सर्वथा प्रतिकूलतायामपि धर्मशास्त्रे यत्किंचिदपि परिवर्तनमशक्यं भवति । यतो यत्किंचित्परिवर्तने क्रियमाणे केषांचन्न नियमानामधोंशः संस्कार्यः, तर्हि इतरेषां नियमानां सर्वात्मना नावीन्यं कर्तव्यं भवति । कदाचित् केचन धर्मा सर्वथा परिहार्याः केचन यथावदनुष्ठेया इति परिस्थितिर्भवति ।

[ प्राचीनरीतिः परिवर्तनप्रतिकूला ]

तस्यामवस्थायां कियन्ति वचनान्यनुकूलानि कियन्ति वा प्रतिकूलानि, इदमपि विवेक्तव्यं भवति । तस्मिन्नवसरे वचनानामर्थनिर्णयार्थं महानुपद्रवो भवति । परन्त्वेवं स्वातन्त्र्येण विचारं कर्तुं पुराणपद्धत्यवसर एव नास्ति । यतो वर्षसहस्रद्वयाभ्यन्तरे एकवाक्यतामाश्रित्यैव सर्वे ग्रन्थाः प्रणीताः । तत्र परिवर्तनं कर्तुं कस्याप्यधिकार एव न दृश्यते । अर्थाद्देशकालपरिस्थित्यनुसारेण हिन्दुधर्मस्य संस्करणं पुनः संघटनं वेत्याद्यनेकविषयाणामावश्यकतायामपि कृत्यसाध्यमेव तत्सर्वमासीत्, परन्तु अतीतपञ्चाशद्वर्षादारभ्येयं स्थितिः परिवर्तिता ।

[ऐतिहासिक दृष्टेरत्यावश्यकत्वम् ।]

एवमाधुनिकपद्धतिः स्वल्पपरिमाणापि समीचीनैर्विद्वद्भिरादि्रयमाणत्वात्, एकवाक्यताया अनवलम्बनाच्च प्राबल्यं भजते । ऐतिहासिक दृष्ट्याश्रयणमेवास्यां विशेषः । विदुषाम्मतभेदे सत्यपि एकवाक्यता

कर्तुं प्रयत्नमविधाय कस्मादयं मतभेदः समुत्थितः कस्मै प्रयोजना-येत्येतद्दर्शयितुमेवाधुनिकपद्धतौ प्रयत्नो दृश्यते । एकवाक्यताया असम्भवेऽपि प्रामाण्यबुद्धावाघातशंकाया न प्रसरः । इतिहासः शास्त्रादिवत्परिणतः सर्वाङ्गपूर्णो यद्यपि न सर्वथा प्रामाण्यं भजते; तथापीयमैतिहासिकदृष्टिः सर्वथा नवीना इत्यपि न । शकपूर्वकालेऽप्यार्षग्रन्थेषु समुपलभ्यते । यथा "चित्रावसोः स्वस्ति ते पारमशीयेत्याह रात्रिर्वै चित्रावसुरव्युष्टै वा एतस्यै पुरा ब्राह्मणा अभैषुरित्यत्र । अत्र पुराशब्देन भूतवृत्तस्य निर्देशः क्रियते । इयमेवैतिहासिक पद्धतिरर्वाचीनवत् प्राचीनानामपि मान्यैव । अस्मिन् मन्त्रे पूर्वकालीनानां ब्राह्मणानां भयनिर्देशं कृत्वा ऋषिः चित्रावसुशब्दस्य रात्रिरित्यर्थं निश्चिनोति, प्रार्थनायाश्च कारणं प्रदर्शयति । छांदोग्ये च जानश्रुतेः कथामवलम्ब्य ब्रह्मसूत्रेऽपशूद्राधिकरणं प्रवर्तितम् । एवं ब्राह्मणग्रन्थेषु नानाविधाः कथाः प्रदर्श्यानेकेषां शब्दानामर्थनिर्णयः कर्तव्य इति द्वित्राण्येवोदाहरणानि दत्तानि । किञ्च समाजो राजसत्तानुयायी यथा तिष्ठति, तथा महाभारते निरूपितम् । ( अ० प० अ० १५ ) राजकीयपरिस्थितेर्यदा यदा परिवर्तनं भवति, तदा तदा तस्य परिवर्तनस्य फलं सामाजिकवर्तनेऽप्यपरिहरणीयम्भवति । तथा शास्त्रार्थनिर्णयसमये सदाचारमविचार्य किमपि विचारयितुं न शक्यते, इत्येतदुक्तम् । एतस्य सर्वस्यालोचनेन स्पष्टमेतज्ज्ञायते यत् ऐतिहासिकदृष्टिमनवलम्ब्य शास्त्रीयवचनानामर्थप्रदर्शनाय प्रयत्नकरणं न सयुक्तिकम् ।

[ ऐतिहासिकदृष्टेरति प्राचीनत्वम् । ]

किंच शकपूर्वकाले ऋषिभिरैतिहासिकदृष्टिः स्वीकृतेति वर्तमानसमयेऽपि तस्याः स्वीकारे धर्महानिर्भविष्यतीति नैव शंकनीयम् । अत आधुनिकपद्धतेरार्षपद्ध-

तेश्च पार्थक्यं नास्तीति कथने न काचिदापत्तिः । मीमांसकाना-मपीयमनुमता । धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यादिति सूत्रेण पूर्वपक्षमुत्थाप्य 'अपि वा कर्तृसामान्यात्' इति सूत्रेण स्मृतिग्रन्थानामनादरणीयता दूरीकृता । स्मृतिग्रन्थानामादरणीयत्वेऽपि वेदवत्स्वतः प्रामाण्यं नास्ति । श्रुतिस्मृत्योर्विरोधे श्रुतेरेव प्राबल्यं तेषां सम्मतम् । असति विरोधे स्मृतेस्तादृश्यपेक्षापि नास्तीत्यपि तृतीयसूत्रे निरूपितम् । द्वितीयसूत्रस्य व्याख्यासमये येषां स्मृतिवचनानामुपलभ्यमानेषु वेदग्रन्थेषु मूलभूतं वचनं नोपलभ्यते, तेषां विनष्टशाखामूलकत्वमुक्तम् । अनेन मीमांसकानामैतिहासिकसंशोधनमभीष्टम् । स्मृतिविचारवत् पुराणादिविचारो न कृत इत्येतावतैतिहासिकदृष्टिः सर्वथाऽसम्मतेत्यतद्वक्तुमशक्यम्, यतोऽर्थवादविचारसमये सोऽरोदीत्, तपसा देवा, यज्ञेन-यज्ञमित्यादिवाक्यानां विचारसमये इतिहासं परित्यज्य-मीमांसकानां गत्यन्तरमेव नास्ति । अत एवैतां दृष्टिमवष्टभ्य विधिवाक्यानामितरवाक्यैरेकवाक्यता प्रदर्शिता । आधुनिकपद्धतिवत् सर्वत्रैतिहासिकदृष्टेर्मीमांसकैरनङ्गीकृतत्वेऽपि तेषां सा सम्मतेति निर्विवादम् । पुराणानां विचारो न कृतो यद्यपि, तथाप्यार्षग्रन्थेषु तस्याः स्वीकारेणायं निर्दोषित्यत्र नास्ति विवादः । एवं तस्याः पद्धतेः स्वीकारे समापतिते शास्त्रार्थं विचारयितुं युक्तिप्राधान्यमाश्रयणीयमेव भवति ।

सर्वथा "युक्तियुक्तं वचो ग्राह्यं न ग्राह्यं गुरुगौरवात् । सर्वशास्त्ररहस्यं तत् याज्ञवल्क्येन भाषितम्—" इति, ॥

अत्रेदं विचारणीयम्—प्रबन्धकर्तृभिरेतैर्युक्तीनामुपयोगः शास्त्रार्थनिर्णये यदि साध्यते, तर्हि तु नास्माकमत्र वैमत्यम् । वयमपि,

[ उक्तप्रबन्ध समालोचनम् ] मीमांसादीनामुपयोगं तत्र मन्यामहे एव । तदुक्तम् "इतिकर्तव्यताभागं मीमांसा पूरयिष्यतीति"। केवलयुक्तिरेव शास्त्रमनपेक्ष्य धर्मप्रमाणमिति तु यदि मतम्, तर्हि तु वयं मन्यामहे न कथममप्ययं पक्षः पूर्वोक्तरीत्या विकल्पसहो भवतीति।

[युक्तीनां सहकारितयैवोपयोगः] सत्यं युक्तिभिरेव युक्तिः प्रमाणमुत शास्त्रम्, युक्तिः प्रबलोत शास्त्रम् बलीय इति निर्णयः कर्तव्यः । एवमपि युक्तेस्तत्र सहकारितयैवोपयोगः । अत एव वेदसूत्रयोर्विरोधे सूत्र एव गुणे त्वन्याय्यकल्पनेति न्यायेनाध्याहारादिकल्पनमिति मीमांसकानां भामतीकारादीनां च सिद्धान्त उपपद्यते । तथाच प्रधानतया शास्त्रैकसमधिगम्यो धर्म इति बहुसमादरणमेव श्रेयः, न तु युक्तिगम्यो धर्म इति केषांचनाधुनातनानां मतम् । यथा च "यस्तर्केणानुसन्धत्ते" इत्यादिवचनानां न युक्तिप्राधान्ये प्रमाणता, तथा पूर्वमेव विवेचितम् । यत्त्वस्मिन् प्रबन्धे न मीमांसकानां युक्त रुपयोगो वर्तते, मीमांसकान् विहाय सर्वेषामेव तदुभयं स्वीकर्तव्यमिति च वर्णितम्, तदिदं नैयायिकैर्वेदान्तिभिरन्यैश्च सर्वैरप्यास्तिकदर्शनानुसारिभिः सहकारितयैव युक्त्युपयोगस्योरीकरणादुभयोरपि समप्राधान्यस्यानङ्गीकाराच्च न विकल्पसहम् ॥

[युक्तिसहकारितायामपि अध्यात्मविदः परिषत्त्वस्योपपत्तिः ] यत्तु अध्यात्मविदां मीमांसकानां चात्र मतभेदो वर्तते, अध्यात्मविदो हि युक्तेः प्राधान्यमूरीकुर्वन्ति, अत एवाध्यात्मविद एकस्यापि परिषत्त्वं विहितमुपपद्यत इति विवेचितम्, तदिदमनुपदमेव शंकरभगवत्पादवाक्यग्रहणेन धर्मविषये युक्तीनामनुपयोगस्य स्वतंत्रतया निरूपितत्वान्नोपपन्नं पश्यामः । अध्यात्मविद्धि यो हि सर्वदा निष्कामकर्मानुष्ठानासादितान्तःकरणशुद्धिर्ज्ञानविज्ञानसम्पन्नश्च व-

र्तते, तस्य हि मनसि न कथमपि धर्मं विहाय प्रवृत्तिः सम्भाव्यते, तदीया हि वासना धर्मविषयिण्येव वर्ततेति "सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" इति न्यायेनाध्यात्मविदः कदापि प्राथमिकी प्रवृत्तिरयोग्यधर्मनिर्णये न स्यादित्येव तात्पर्यमेकस्याप्य-ध्यात्मविदः परिषत्त्वव्यवस्थापने ॥

[शास्त्रवचसां पूर्वाचार्यानुभवामूलकत्वम् ।] यत्तु शास्त्रवचसां सर्वेषां पूर्वाचार्यानुभवमूलकत्व-मेवेति वर्णितम्, तदिदं श्लोकवार्तिक-भगवत्पादभाष्य-कुसुमांजलिवाक्यानां बहूनां प्रदर्शनेन पूर्वमेव निरस्तमिति न पुनः पिष्टपेषणार्थं वयं प्रवर्तामहे ।

अत्रेदं विचारणीयम्—पूर्वाचार्याणामिदं कर्मैतत्फलसा-धनमित्यनुभवः पूर्वमासीदिति कल्पनावादिना हि नियत-मिदमूरीकर्तव्यम्, यदैहिकफलान्येव सर्वाणि कर्माणि, नामुष्मिक-फलमेकमपि कर्म विद्यत इति । तत्र च यथा पूर्वाचार्याणामुक्तक-र्मानुष्ठानानन्तरं फलदर्शनं संजातम्, तथाऽस्मदादीनामपि सर्वस्य कर्मणोऽनन्तरमेव कथं वा फलदर्शनं न भवति ? न हि कृष्यादिना धान्यादिनिष्पत्तिः पूर्वमिवेदानीमपि नास्मदादिभिरनुभूयते । तथा-च नित्यकर्मणां काम्यकर्मणामन्येषां वाऽदृष्टकर्मणां दृष्टादृष्टक-र्मणां वा सर्वेषामनुष्ठानानन्तरमेवेदानीं फलानिष्पत्तिदर्शनात् पू-र्वमप्येवमेवासीदित्येव कल्पना समुचितेत्यवश्यमेव बहूनामदृष्टफ-लकत्वं दृष्टादृष्टफलकत्वं चोरीकर्तव्यम् । तत्र चादृष्टफलकर्मणां पुरापि फलविशेषसाधनत्वानुभवः पूर्वाचार्याणामपि नासीदित्येव सर्वैरप्यभ्युपगमनीयम् ।

[कर्तृभेदेन फलस्य दृष्टादृष्टत्वनिरासः] एतेन—सर्वेषां कर्मणां फलं दृष्टमदृष्टं चो-भयमपि । तत्र दृष्टत्वं पूर्वाचार्यदृष्ट्या, अदृ-

ष्टत्वमस्मदादिदृष्ट्येति सिद्धान्तोऽपि-परास्तः। अत्रास्माकमिदमेव प्रष्टव्यम्—यत् कथं वा पूर्वाचार्याणां दृष्टमस्मदादीनां धान्यादिकमिव साधनानुष्ठानानन्तरमेव न दृष्टं भवतीति? दर्शनं हि विषयेन्द्रियसंयोगाधीनं सति विषये सति चेन्द्रियसम्प्रयोगे कथं वा न सम्भवतीति च? यदि विषयानुत्पत्त्या,तर्हि तु न साधनानुष्ठानानन्तरमेव फलं निष्पन्नमित्येव पर्यवसन्नम्। तच्च दृष्टफलत्वे कर्मणां कथमपि नोपपद्यते। यदीन्द्रियसम्प्रयोगाभावेन, तर्हि त्विदमेव विचारणीयम्—किं परमाण्वादेरिवायोग्यत्वान्नापरोक्षत्वम्, उत सत्यपि योग्यत्वे प्रतिबन्धकविशेषेणाननुभव इति। तत्राद्ये कथं पूर्वाचार्याणामपि तदनुभवः? नह्येकं वस्तु पुरुषभेदेन योग्यमयोग्यं च भवति। न हि तादृशः प्रतिबन्धकविशेषः कोऽपि निरूपयितुं शक्यः, यः पूर्वाचार्येषु न समस्ति, केवलं सर्वानस्मदादीनेवाश्रित्य फलानुभवं बाधते। वयन्तु पश्यामः—यत् पूर्वाचार्याणामपि नानुभवः फलस्यासीत्, अस्मदादीनामपि नास्तीति। सर्वथा तु पूर्वाचार्यानुभवनिबन्धनान्येव शास्त्रवचनानीति कल्पनं निरालम्बनमेवेत्यपौरुषेयत्वमेव वेदस्य नेतिहासमूलकत्वम्। यावता च न पूर्वाचार्यानुभवमूलकत्वं शास्त्राणाम्, तावतेदमपि सिद्धं भवति, यदैतिहासिकशैल्या शास्त्रार्थविवेचनमपि न समुचितमिति। अयमत्र प्रबन्धे रीतिद्वयस्यापि विवेकः प्रदर्शितः, यन्मीमांसापद्धतावेकवाक्यताया मुख्यत्वम्, इतरत्र तदभाव इति।

[ऐतिहासिकपद्धतावप्येकवाक्यतावश्यकता]

अत्रेदं विचारणीयम्—कथमैतिहासिकपद्धतावप्येकवाक्यता नोरीक्रियते, यदि समाजसंघटनमैतिहासिकानामपि सम्मतम्। विनैकवाक्यतामिच्छैव शास्त्रमिति तदिच्छानुसारेणैव प्रवृत्तौ हि बहवः खलु विघाताः संघट-

ने भवेयुरिति नियतमियमेकवाक्यता सर्वेषामनुभवानामविरोधेन यावच्छक्ति सम्पादनीयैव भवति। अन्यथा हि कदापि समाजसंघटनं न सञ्जातमित्येव कथनीयं स्यात्।

[विरुद्धानामनेकवाक्यता।] वस्तुतस्तु—एकवाक्यता हि न विरुद्धानां प्रमाणानां कुत्रापि कैरपि मन्यते, किन्त्वविरुद्धानामेकार्थबोधकानां च वचनानामेव। तदुक्तम्—"अर्थैकत्वादेकं वाक्यं साकांक्षं चेद्विभागे स्यादिति। विरुद्धयोर्हि प्रमाणयोर्भिन्नवाक्यतया विकल्पपर्यवसानमिति खलु मीमांसकानामपि सिद्धान्तः। एतेन—उपसंहारोऽपि—व्याख्यातः। सोऽपि हि—सामान्यविधिरस्पष्टः संह्रियेत विशेषतः। स्पष्टस्य तु विधेर्नैवमुपसंहारस्तु सम्भवेत्" इति वचनानुसारेण सामान्यवचनस्यास्पष्टत्वेनाप्रवर्तकत्वेऽनिवर्तकत्वे वैव भवति, नान्यथेति न कोऽपि दोषः। किंचैतिहासिकानां भिन्नवाक्यत्वं विरुद्धयोः श्रुत्योः स्मृत्योश्च विवक्षितम्? उत श्रुतिस्मृतिवचनयोराहोस्वित् स्मृत्याचारयोरिति विचारणीयम्। तत्र श्रुत्योः स्मृत्योश्च भिन्नवाक्यत्वे न कस्यापि विवादः। श्रुतिस्मृत्योश्च विरुद्धयोरेकस्याः स्मृतेरपि प्रामाण्यं यदि स्यात्, तर्हि तु भिन्नवाक्यतयोभयानुष्ठानस्यापि साधुत्वं स्थापयितुं शक्यते, परं त्विदं न केवलं मीमांसान्यायविरुद्धम्, किन्तु तदीयसिद्धान्तविरुद्धमपि भवति। तन्मते हि श्रुतिः केषाञ्चनानुभवम्, स्मृतिः केषाञ्चानानुभवम्, आचारः केषाञ्चनानुभवमाश्रित्य प्रवर्तत इति भिन्नकालिकानामेतेषां भिन्नपुरुषसम्बन्धिनामनुभवानां तत्तत्कालपुरुषादिव्यक्तिविशेषसम्बन्धेनैव प्रामाण्यादुत्तरोत्तरानुभवस्य पूर्वपूर्वानुभवाप्रामाण्यसमर्थन एव तात्पर्यमूरीकर्तव्यमिति श्रौतानुभवादीनामप्रामाण्यमूरीकर्तव्यमिति कथमुभयप्रामाण्यम्?

अयमत्र निष्कर्षः—मीमांसकमते श्रुत्या स्मृतिबाधः, ऐतिहासिकमते स्मृत्या श्रुतिबाधः। तत्र श्रुतिविरोधे स्मृतेरप्रामाण्येन न भिन्नवाक्यतया विकल्पेन प्रवर्तकत्वमाद्यमते। द्वितीयमते स्मृतिविरोधे श्रुतेरप्रामाण्यात् न भिन्नवाक्यतयोभयोरपि विकल्पेन प्रवर्तकत्वमिति। सर्वथा तु मतद्वयेऽपि उभयप्रामाण्यं न सम्भवतीति भिन्नवाक्यतासिद्धान्तोऽयं न श्रौतस्मार्तानुभवयोर्विकल्पेन प्रवर्तकत्वं गोचरयेदिति सिद्धम्।

[ इतिहासस्य विध्येकवाक्यतयैव प्रामाण्यम् ]

वस्तुतस्तु न वयमपि इतिहासं सर्वथा शशशृंगायमाणं मन्यामहे। स्वीक्रियन्ते हि बहवः खलु पुराकल्पार्थवादा इतिहासाः प्राचीनैरपि। इयान् विशेषः—यदितिहासानां न विध्येकवाक्यतां विना प्रामाण्यं प्राचीनमते, नवीनमते तु स्वतन्त्रतयाऽपि प्रामाण्यमिति। अयमाशयः—पुराकल्पार्थवादानां प्रमाणान्तरनिषिद्धार्थबोधकानां अप्रामाण्यमिति नवीनैरपि स्वीकर्तव्यम्; अन्यथा विश्वामित्रादीनामयोग्याचारस्यापि प्रामाण्यापातेन महाननाश्वासः सम्पद्येत। सति चैवं कथमितिहासानां स्वतन्त्रतया प्रामाण्यमङ्गीकर्तुं योग्यम्। पुराणानामपि हि स्मृतित्वेन प्रामाण्यमेव मीमांसकसम्मतम्। न हि स्मृतीनां श्रुत्यविरोधेऽपि स्वतः प्रामाण्यं मीमांसकसम्मतम्। श्रुतिमूलकमेव खलु स्मृतीनां प्रामाण्यं मीमांसका मन्यन्ते। तथाच पुराणादीनामपि कर्तव्याकर्तव्यविषये स्मृतीनामिव प्रामाण्ये सत्यपीतिहासानां सर्वथा प्रामाण्यं न मीमांसकसम्मतमित्यवश्यमङ्गीकर्तव्यम्। कुमारिलपादा अपि हि-"उपाख्यानानां न तत्त्वान्वाख्याने तात्पर्यमित्यर्थवादाधिकरणे विवेचयन्त इममेवार्थमभिप्रयन्ति। सर्वथा त्वितिहासावलम्बेन धर्मतत्त्वविनिर्णयो न

युक्त इति सिद्धम् । सर्वथातु भिडेशास्त्रिणोऽपि नेदानींतनानामनुभवानां धर्मतत्त्वनिर्णयोपयोगं मन्यन्ते, यतः शास्त्रवचनानि पूर्वाचार्याणामनुभवविशेषा एव, आधुनिकानामनुभवास्तु तत्समानकोटितां नावहन्तीति श्रुतिस्मृत्यादिषु नास्मदाद्यनुभवानामन्तर्भावं तेऽपि मन्यन्ते । तथाच तन्मतरीत्यापि नेदानींतनानामनुभवविशेषाः धर्माधर्मपरिवर्तनोपयोगिन इति सिद्धमेव ।

एतेन—केनचन पण्डितेन बहुतरनव्यशिक्षितग्रन्थसमालोचनपूर्वकं—संगृहीतो नवीनमतनिदर्शकः कश्चन निबन्धोऽपि—व्याख्यातः । अत्र हि प्रबन्धे नव्यमतस्य संकलनं शास्त्रीययोपपादनशैलया कृतमिति विशदमिदं तत्पर्यालोचनशीलानां भविष्यति । अतस्तमप्यत्रोपस्थापयामः । तद्यथा—

अत्र शास्त्रव्यवस्थामनुसृत्यैव हिन्दुत्वनियामका धर्माःके ? इति प्रश्न उत्तरितव्य इति चेदयं प्रश्न एवास्पदं न लभेत । यतोऽस्माकन्धर्मस्थानत्वेन व्यपदिष्टेषु—"पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" इति निबन्धेषु हिन्दुपदं न कुत्रापि श्रूयते । किमधिकं चातुर्वर्ण्यसाधारणं किमपि वाचकं पदमेव न पश्यामः । कुत्रचिदार्यपदं दृश्यते, परम् तदपि न चातुर्वर्ण्यसाधारणम् ,अपितु महनीयतामेव बोधयति । सा तु द्विजानाम्, तत्रापि ब्राह्मणानामेव विशेषतश्चतुर्दशस्थानेषु तत्र तत्र दृश्यते ।अतोऽयं प्रश्न एवानुपपन्नः स्यात् । कुतश्च प्रश्नः । अतोऽयमेवाशयः स्यात् प्रष्टॄणाम् यदधुनाऽस्मद्देशे हिन्दुपदेन व्यवहारः क्रियते, स किमस्मान् सनातनधर्मानुयायिनः समुद्दिश्याथवाऽन्यानप्युद्दिश्येति । यदि प्रथमस्तर्हि सनातनधर्म एव व्यपदेशनियामकः, द्वितीयश्चेत्तर्हि

प्रथमप्रश्नस्यैतिह्यासिकत्वसाधनम्

तत्साधारणो नियामको धर्मः कीदृशः ? ।

[ धर्मस्यैतिहासिक- त्वोपक्रमः ]

परं त्वायमैतिहासिकः प्रश्नः, यतः कस्मात्कालादारभ्यायं शब्दोऽत्र देशे प्रचलितः, केन पुरुषेण केन हेतुना कस्मै प्रयोजनायेत्यनेके, प्रश्ना ऐतिहासिका भाषाशास्त्रविषयकाश्च, समुन्मिषन्त्युत्तरावसरे । अयमेवाशयो यदैतिहासिकी शैल्यपि धर्मनिर्णयावसरे ग्राह्येति । अग्रेऽप्युपस्थित एव प्रश्नः—"धर्मनिर्णयो मीमांसापरिपाट्या करणीय उतैतिहासिकशैल्येति । अतः प्रथममस्यैव प्रश्नस्य विचारणीयत्वमापतति । समुपस्थिते खलु विचारावसरे विचारविषयीभूतस्य धर्मस्येष्टफलजनकत्वस्य किंप्रमाणकत्वमित्यप्याशंका समुदेति विचारचातुरीचतुराणां मीमांसकानाम्मनसि । अतो धर्मनिर्णयो नाम धर्मत्वेनाङ्गीकृतानामाचाराणामिष्टफलकत्वे किं प्रमाणम्, किमितिहासः, उत मीमांसापरिपाटी नासेत्यत्रैव तात्पर्यपर्यवसानम् ॥

प्राचीनमतोपन्यासः ।

तत्र च प्राचीनाः—चोदनालक्षणोऽर्थो धर्म इति जैमिनिसूत्रानुसारेण चोदनैव लक्षणम्, सा च लक्षणमेवेति भाट्टसम्मतमर्थं स्वीकृत्य यस्य कस्यचिदाचारस्येष्टानिष्टफलजनकत्वे चोदनाया एवाप्रतिहतं प्रामाण्यमुररीकुर्वन्ति । अत एव वेदबोधितेष्टसाधनताको धर्मः, वेदबोधितानिष्टसाधनताकोऽधर्म इति धर्माधर्मयोर्लक्षणमुद्घोषयन्ति । तेषामयमाशयः—क्रियाणां भाविफलजनकत्वेन भाविनः फलस्य च प्रत्यक्षादिप्रमाणाविषयत्वेनेष्टानिष्टत्वस्य निर्णेतुमशक्यत्वात्तत्र वैदिकी चोदनैव प्रमाणत्वेन स्वीकार्या । अन्यथा निर्णयस्तु न संभवत्येवेति ॥ यद्यपि "चोदनेति क्रियायाः प्रवर्तकं वचन" मिति भाष्यानुसारेण

प्रवर्तकविधिवाक्यस्यैव धर्मे प्रामाण्यम्। तथापि चोदनापदेन प्रवर्तकनिवर्तकयोर्द्वयोरपि वाक्ययोर्ग्रहणं भवतीति सर्वेऽपि मीमांसका मन्यते। अत एवोपरितनं धर्माधर्मयोर्लक्षणं पर्यवसन्नमिति।

प्राचीनमतनिरासः। अत्रेयमाशंका—प्राचीनैस्तावत् यस्याः कस्याश्चित् क्रियाया इष्टानिष्टफलजनकत्वे वैदिकी चोदनैव प्रमाणमित्यपि कथं निर्णीतम्? विधिवाक्यातिरिक्तस्यान्यस्यापि वेदभागस्येष्टानिष्टफलजनकत्वे प्रामाण्यं कुतो नांगीक्रियते। उत्तरमीमांसकैस्त्वंगीक्रियते। अन्यथा आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति न्यायानुसारेण सर्वेषामपि वेदांतमहावाक्यानामानर्थक्यमापतेत्।

किञ्चेयं क्रियेष्टफलसाधनमियमनिष्टफलसाधनमित्यपि कथन्निर्णीतम्। याश्चैकस्मिन्नेव जन्मनि फलसाधनसमर्थास्तासां कथमपि निर्णेतुं शक्यते इष्टानिष्टफलसाधनत्वम्। परञ्च यास्तु परलोके फलसंसाधिकास्तासु कथं तावदिष्टानिष्टफलसाधनत्वनिर्णयः? न च वेदस्यार्थानुसन्धानपूर्वकविरचितत्वाभावेनापौरुषेयत्वात्सर्वज्ञप्रणीतत्वाद्वा जन्मान्तरेऽपि इष्टानिष्टफलसाधनत्वबोधकत्वं सम्भवत्येवेति वाच्यम्। अर्थानुसन्धानपूर्वकविरचितत्वाभावे उन्मत्तप्रलपितवदप्रामाण्यापत्तेः। सर्वज्ञप्रणीतत्वेऽपि सर्वविषयकज्ञानस्यापेक्षणीयत्वेन तस्य च प्रमाणसापेक्षत्वात्, प्रमाणनिरपेक्षत्वे तु पुनरप्यप्रामाण्यापत्तिः। अतो यत्किंचिदपि प्रमाणमपेक्ष्यैव चोदनयेष्टानिष्टफलजनकत्वं बोधयितुं शक्यते, न स्वातंत्र्येण। वाक्यस्य तु स्वभावोयं यत्प्रमाणांतरेण विज्ञातस्यैवार्थस्य ज्ञापकत्वम्। केनचन राज्ञा कस्मिंश्चित्कार्ये "इदं कुरु, इति नियुक्तो दूतो मनसीव-

मेव विचारयति इयं राजाज्ञेष्टफलसाधनमिति। नो चेत्तत्र न प्रवर्तेत। तच्चेष्टसाधनत्वं प्रत्यक्षादिना परस्येष्टसाधनत्वेन निर्णेतुं सुशकम्। तत्र च राजापि शासनात् प्रागिदमेव निश्चिनोति एतत्कार्यमस्येष्टसाधनमिति, तदेव बोधयितुं वाक्यमुच्चारयति। तत्रापि राजा यद्ययं ममैतत्कार्यं कुर्यात्तह्यहमस्येष्टं दास्यामीति स्वस्मिन्नभीष्टपूरकत्वं प्रमाणांतरेण विश्वसिति, अत एव नियोजयति सेवकन्तस्मिन् कार्ये। नो चेद्राजापि नोच्चारयेदेवम्, सेवकोऽपि न प्रवर्तेत। अतो वक्तुर्बोद्धुश्चेष्टसाधनत्वग्रहोऽत्यावश्यकः। तत्र वैदिकचोदनया बोद्धुर्मनसि स्यादेव कथंचनेष्टसाधनत्वग्रहः। परं वाक्यवक्तुः कथं तावत्स प्रमाणांतरेण तन्निश्चयाभावेऽपि संभवेत्। तं विनापि यदि प्रवर्तयेत्, तर्हि तदवस्थमेवोन्मत्तप्रलपित्वादप्रामाण्यम्। अतो वेदवक्तुस्तस्यां क्रियायामिष्टसाधनत्वग्रहस्त्वत्यावश्यकः। स च केन प्रमाणेन संभवेत्। न च वेदाः स्वतःसिद्धा इत्यपि वक्तुं पार्यते। साधारणस्यापि शब्दस्य कारणादृते नोत्पत्तिर्वा नाविर्भावः, किमुत वर्णानुपूर्वीसम्बद्धानां कार्याणां वाक्यानाम्। अतो वाक्यस्योच्चारयिता कश्चन स्यादेव। तेन तावत्कर्मणामिष्टफलजनकत्वं कथं ज्ञातमिति पुनरपि प्रमाणान्तरपर्यालोचनसापेक्षता तदवस्थैव। ईश्वरोऽपि यदि वक्ता स्यात्तथापि सोऽपि न निराकाररूपेण शब्दानुच्चारयितुं शक्नोति। स्वयं कृतानां शासननियमानां विरोधेन राजापि न व्यवहर्तुं पारयति। कथं निसर्गविरोधेनेश्वरः प्रब्रूयाद्वेदवाक्यानि। तस्य च निसर्गसिद्धमपि सर्वज्ञत्वं विषयसापेक्षमेव। वस्तुतस्तु नास्त्येवेश्वरे सर्वज्ञत्वम्, अपितु ज्ञानमेवेश्वर इत्येवौपनिषदानां राद्धान्तः। एवं च यः कोऽपि भवतु वेदवक्ता। तथापि तस्य विध्युच्चारणे विध्युक्तक्रिया-

याः इष्टानिष्टफलसाधनत्वविषयकं ज्ञानमत्यावश्यकम् । तच्च विधिवाक्योच्चारणात् प्राक् प्रमाणान्तराधीनमिति प्रमाणान्तरविचारः प्रथमतः कर्तव्यः । यच्च प्रमाणं संभाव्येत, तेनैवेष्टानिष्टफलसाधनत्वे बोधिते विधेरकिंचित्करत्वम्, अन्यथापि तु विधेरकिंचित्करत्वं पूर्वमेवोक्तम् । अतः कीदृशन्तत् प्रमाणम्, येन मीमांसकैरपि वेदतात्पर्यं चोदनायामेव पर्यवसितमाम्नायस्य क्रियार्थत्वादिति ।

[ धर्मस्येतिहासमात्रगम्यत्वसाधनम् ]

वयन्तु पश्यामः—नान्यत् किंचिदपि प्रमाणं सम्भवति क्रियायाः इष्टानिष्टफलसाधनत्वे विनेतिहासात् । इतिहासस्तु सर्वमपि बोधयतुं शक्नोति । पूर्वतनानां सर्वेषामपि योग्या अयोग्या वा सर्वाः क्रियाः फलसहिता इतिहासग्रन्थे संगृहीता भवन्ति । तासां पर्यालोचनेन तत्र तत्रेष्टानिष्टफलसाधनत्वमपि—रामादिवत् प्रवर्तितव्यम्, न रावणादिवदिति न्यायेन ग्रहीतुं शक्यते । सर्वोऽपि जन्तुः स्वकीयसुखाय प्रयतते, परंतु सुखसाधनत्वेन गृहीतानां क्रियाणां तादृक्सुखसाधने सामर्थ्यमस्ति न वेति नादौ निर्णेतुं पारयति । प्रथमतः केवलं सम्भावनैव—स्यादनया क्रियया सुखप्राप्तिरिति प्रेरयति जन्तुम् । परञ्च परिणामे यया क्रियया सुखं साध्येत, सैव सुखसाधिकेति भवत्यन्यासां क्रियाणां इष्टानिष्टफलसाधनत्वग्रहः । ततस्तन्मूलिका वचनप्रवृत्तिरिदं कर्तव्यमिदं न कर्तव्यमिति । तद्धेतुत्वेनैव वेदेऽपि तत्र तत्रेतिहासनिबन्धनमपि । तस्यार्थवादत्वेन प्रामाण्यन्तु मीमांसकैरप्यङ्गीक्रियते । वेदग्रन्थानामैतिहासिकत्वेऽपीतिहासनिबन्धनस्य प्रवृत्तिनिवृत्तिफलकत्वेन प्रवर्तकनिवर्तकवाक्ययोरेव पर्यवसानमित्यपि समुचितमेव । नैतावता प्रवर्तकनिवर्तकवाक्यानामेव स्वातन्त्र्येणेष्टा-

निष्टफलसाधनताबोधने शक्तिः, अपित्वितिहासबोधन एव तात्पर्य-मङ्गीकर्तव्यमिति धर्मनिर्णये इतिहासः प्रमाणमिति सिद्धम्।

यद्यप्ययं विचार एकजन्मन्येव सम्भावितस्य क्रियाफलस्य विषय एव सम्भवति, न जन्मान्तरे सम्भावितक्रियाफलविषये; जन्मान्तरस्येदानीं केनापि साक्षात्कर्तुमशक्यत्वात्, तत्र च माणव-केनेदं कृतमिति तस्य जन्मान्तर एतादृशमिष्टमनिष्टं वा फलमुत्प-न्नमिति वा न निर्णेतुं पार्यते केवलमैतिहासिकशैल्या। इतिहासस्य स-ञ्जातप्रत्यक्षविषयसापेक्षत्वेन भविष्यत्यप्रवृत्तेः, तथापि तत्रापि यथा-कथंचिदितिहासप्रवृत्तेः सम्भव इत्युपरिष्टाद्वक्ष्यामो धर्मस्य फलं दृष्टमदृष्टमुभयं वेति प्रश्नविचारावसरे। एवञ्चेदमेव सिद्धं-यत्सामान्यतो धर्मे इतिहासस्यैव मुख्यम्प्रामाण्यमिति तदनुसारेणैव प्रथमः प्रश्न उत्तरितव्यः।

हिन्दुपदव्यपदेशनि-यामकधर्मविचारः

तत्र हिन्दुपदं कस्मात्कालादारभ्य केन हेतुना कस्मै प्रयोजनाय कैस्तावदस्मासु प्रयुक्तमिति विचारावसरे परैरस्माकं भेदव्यवहाराय स्वेभ्यो व्यावर्तकमिदं पद-मस्मासु प्रयुक्तमित्येवोत्तरपक्षतां भजते। परे परत्वेन कदा वा समुत्पन्ना इति विचारावसरे संस्कृतिभेदात्स्वपरेतिभेदव्यपदेशः-इत्येव सिद्धान्तः। संस्कृतिभेदस्तु कदा समुपजात इत्याशंकायाम्—किं पूर्वं कदाचिज्जगति सर्वेषां मानवानामेका संस्कृतिरासीन्न वा? सर्वेऽप्येकजातीयाः समानधर्मीयाश्चासन्न वा? यद्यासन्, तर्हि कथं भेदः समुत्पन्नः? कदा वा? या खलु समाना संस्कृतिः, सा कीदृशी? इत्येवमादयो बहवः किल विषया विचारणीयाः समुन्मिषन्ति। तदर्थमादौ संक्षेपतो विचार्यते।

प्रथमतस्तावदयमेव सिद्धान्तः स्वीकर्तव्यो यदयं

भाषाशास्त्रस्य हेतुत्व-प्रतिपादनम्। विचारो भाषाशास्त्रानुसारेणैव करणीयः। यतः सृष्टेः समकालिकैव किल भाषापि समुत्पन्नेति शब्दानां सृष्टेरन्तःपातित्वात्, शब्दैर्विना व्यवहारस्य कर्तुमशक्यत्वात्, समुत्पन्नस्य प्राणिनः समुत्पत्तिकाल एवादौ शब्दस्य क्रियमाणत्वेन दृष्टत्वाच्च भाषैव तत्र तत्र व्यवहारे प्रयोजिकेति तामनुसृत्यैव तस्यां जातानां विपर्ययाणां सादृश्यानाञ्च तारतम्येनेदं विवेचनं भवितुमर्हति, नान्यथेति सुविस्पष्टमेव। अत एवाधुनिका अपि भाषाशास्त्रवशात्तत्र तत्रानेकविधानां जनसमूहानां प्रागैतिहासिकात्कालात्कीदृशी संस्कृतिरासीदिति निर्णयन्ति। अन्यच्च शीर्षमापनशास्त्रानुसारेणापि अस्य निर्णयः कर्तुं शक्यत एवेति तदपि प्रमाणत्वेनोरीकरणीयमेव।

तत्रैतत् प्रमाणद्वयमंगीकृत्य विचारिते खल्वेतस्मिन् विषये इदमेवोत्तरपक्षतां लभते, यदियं मानवजातिः पूर्वमेकैवासीन्मनुष्यकल्पाज्जीवात्समुत्पन्ना। तस्यामवस्थायां भाषाप्यविस्पष्टैव। अत एवाविस्पष्टतादीनां दोषत्वेन परिगणनं पातञ्जलमहाभाष्ये कृतं संगच्छते। तत्र हि "किमर्थं वर्णानामुपदेशः" इत्यनुयोगमुद्भाव्य तदुत्तरदानमुखेन 'वृत्तिसमवायार्थं वर्णानामुपदेशः" "अनुबंधकरणार्थः" इष्टबुध्यर्थश्चेति वार्तिकत्रयमुपन्यस्य "इष्टबुध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः" इत्यनुयुज्य "आकृत्युपदेशात्सिद्धमिति" सिद्धान्तितम्। तदुपरि "आकृत्युपदेशात्सिद्धमितिचेत्संवृतादीनां प्रतिषेध" इति वार्तिकव्याख्यावसरे संवृतादीनां दोषत्वेन परिगणनम्। अपर आहेत्यनेन ग्रस्तनिरस्तादीनामितोऽन्ये व्यंजनदोषा इत्यनेन व्यंजनदोषाणामपि परिगणनं कृतम्। किञ्च चातुर्वर्ण्यस्य समुत्पत्तिस्तत्र तत्र श्रूयमा-

णोदमेव द्रढयति, यत्प्रकृतिगुणसम्बन्धेन कर्मभेदाच्चत्वार एव मनुष्यभेदा ब्रह्मक्षत्रविट्छूद्रा इति। प्रकृतिगुणानाञ्च नित्यत्वादाकल्पस्थायित्वाद्वाऽऽकल्पमपि मनुष्येष्वधुना दृश्यमाना भिन्ना जातयो नैव भवितुमर्हन्ति। किम्बहुना सर्वस्मिन्नपि जगतीतले प्रकृतेरेवायम्प्रपञ्च इति श्रुतिग्रन्थानामप्युद्घोषः। तदनुसृत्या संस्कृतिरपि गुणकर्मभेदाद्भिद्यमानाऽपि चतुर्विधैव भवितुमर्हति। तदेव चातुर्वर्ण्यं तदाचाराश्च वैदिकी संस्कृतिरिति जेगीयते।

निष्कर्षः

एवञ्च भाषाशास्त्रानुसारेण, शीर्षमापनशास्त्रप्रामाण्यात्, वैदिकसंस्कृतिप्रतिपादकग्रन्थप्रामाण्याच्चायमेव सिद्धान्तः स्थिरीभवति, यत्—

१—सर्वेष्वपि मानवेषु पूर्वं प्रकृतिगुणकर्मभेदाच्चातुर्विध्यमेवासीत्। अत एव तेषां संस्कृतिरपि काचनैकैव।

२—भाषाऽपि तावदेकैव। सा चाविस्पष्टा।

३—तच्च चातुर्विध्यमपि प्रथमत एव न पृथक्त्वेन ज्ञातमासीदपि तु शास्त्रीयविज्ञानानन्तरमेव पृथक्त्वेन विवेचितम्।

४—भाषापि बहोः कालादनन्तरमेव संस्कृता,न तु सहोत्पत्त्या।

५—एकार्थकशब्दानां बहूनामुपलम्भाज्जनानामितस्ततो भ्रमणम्।

६—भ्रमणाच्च परस्परमसंव्यवहारः।

७—असंव्यवहारात्तत्र तत्र परिस्थितिभेदाद्वा ज्ञानतारतम्यमाचारभेदश्च।

८—ताभ्याञ्च धर्मभेदः स्वपरभावश्च।

९—ज्ञानवृद्ध्याऽन्योन्यं संव्यवहारकाले संघानां भेददर्शकशब्दप्रयोगः।

१०—सर्वेषां स्वत्वाभिमानात्परेषु नीचत्वबुद्धिः, तस्याश्च तादृश एव भेददर्शकः शब्दप्रयोगः ( देव असुर, देवप्रिय काफर, देवदूत—सैतान, इत्यादिः )

[हिन्दुत्वं सनातन धर्मानुयायिमात्रवृत्ति ।]

एवञ्च हिंदुपदमिदन्नाधुनातनमर्थमङ्गीकृत्यैव पूर्वम्प्रयुज्यते स्म । अपि तु केवलं नीचत्वेन परत्वज्ञापनार्थमेव, अस्माभिस्तु वैदिकधर्मानुयायित्वसामानाधिकरण्यात् वैदिकधर्मानुगवाचकमित्यवधार्यते । एवं च यथाकथंचित् सामानाधिकरण्यमूलको वैदिकधर्मानुयायित्वधर्मो हिन्दुत्वव्यपदेशनियामको भवितुमर्हति। अतो वैदिकधर्मानुयायिमात्रवृत्ति हिन्दुत्वमिति मन्तव्यम् । वस्तुतस्तु हिन्दुत्वं न किंचित्परमपरं वा सामान्यमित्येव सिद्ध्यति ।

[सर्वेषां मानवानां चातुर्विध्यम्]

एवञ्च पूर्वोक्तविचारेण सर्वेऽपि मानवाः प्रकृतिगुणसम्बन्धेन चतुर्विधा एवेति चातुर्वर्ण्यान्तर्गता एव, न तेषां स्वपरभेद इत्येव तत्त्वदृष्ट्या राद्धान्तः । दैशिकपरिस्थित्योपासनाभेदाद्वाऽऽचारभेदो भवितुमर्हति, नैतावता विजातीयत्वमेतेषां कदापि । देशाचारस्य प्रामाण्यन्तु सर्वैरपि स्वीक्रियत एवास्माभिः। एतच्च होलकाद्याचाराधिकरणे सुस्पष्टमेव । वैष्णवशैवादिषूपासनाभेदेऽपि यथा न वैदिकधर्मानुयायित्वविनाशः, तथैवेतरत्रापि कुतो न स्यात् । म्लेच्छादिशब्दास्तु हिन्दुसैतानादिशब्दवत् भारतवर्षीयैः परत्वज्ञानार्थं नीचत्वबोधनार्थञ्च प्रयुक्ता इत्येव मन्तव्यमिति तदनुसारेणैव म्लेच्छापशब्दाधिकरणमिति न तयोर्विरोधः । एवञ्च सर्वेऽपि हिन्दवो वा चातुर्वर्ण्यान्तर्गता वेति कथमपि वस्तुतो न तेषां तात्विको भेद इति ।

वेदमूलकत्वमपि तेषामाचाराणां तु स्यादेव; वेद-

[ म्लेच्छाद्याचाराणां वेदमूलकत्वव्यवस्थापनम् ]

स्यासंख्येयत्वात्, अनेकशाखानामुच्छिन्नत्वेन, तस्यादर्शनेऽपि अदृष्टवेदवाक्यमूलकस्मृतेरिवेतरेषां धर्मग्रन्थस्यापि कुतो न प्रामाण्यम्? किंच चोदनालक्षणोऽर्थो धर्म इत्यत्र न वैदिक्येव चोदनेति शब्दतः प्रतिपाद्यते, किन्तु सामान्यतश्चोदनापदात् "चोदनेति क्रियायाः प्रवर्तकं वचनमिति" भाष्याच्च प्रवर्तकवाक्यमेव चोदनार्थः। वाक्यस्य प्रवर्तकत्वन्तु तेषां धर्मग्रन्थेष्वपि दृश्यत एव। न च तत्र कर्तृबुद्धिः प्रवर्तिका, तथा सति वेदेऽपि तथा सम्भावितत्वम्। न च तस्यापौरुषेयत्वम्; वेद इव तेषामपि नित्यत्वस्य सम्भवित्वात्। शब्दस्यार्थस्य तत्सम्बन्धस्य च नित्यत्वम्मीमांसकैर्येन न्यायेन प्रतिपादितम्, तस्यात्रापि विद्यमानत्वात्। न च दृढतरकर्तृस्मृतेरुपलम्भाद्वैलक्षण्यम्, तथा सति वेदेऽपि कर्तृस्मृतेः काठकादिपदेभ्यः सम्भवात् सामान्यम्। तत्र प्रवचननिमित्तत्वे त्वत्रापि सर्वत्र तथैव प्रतिपाद्यते। न हि कुराणं वा बायबलं वा मया कृतमिति वदति महम्मदो वा ख्रिस्तो वा। किन्त्वीश्वराज्ञैव मंत्रवन्मया साक्षात्कृत्योच्चार्यते इति। अस्माभिस्तेषां विगीतत्वम्, तैश्चास्माकं विगीतत्वमिति परस्परविगीतत्वे सुन्दोपसुन्दन्यायेन कस्यापि प्रामाण्यासम्भवः। अतः प्रकृतिगुणदृष्ट्यैव विचारोऽत्यावश्यक इति। तथा सति सर्वेषां प्रामाण्यम्, सर्वेऽपि चातुर्विध्यान्तर्गता इत्येव मन्तव्यम्।

अत एव "एक एव पुरा वेदः एकोऽग्निर्वर्ण एव च"। (भागवत),

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्॥

(भारत वनपर्व),

इत्यादिवाक्यान्यपि तत्र तत्रास्यैवार्थस्य प्रतिपादकानि समुपलभ्यन्ते। एवं चाधुनातनीं शब्दप्रवृत्तिमुद्दिश्य विचारितेऽस्मिन् विषये वैदिकधर्मानुयायित्वमेव तद्व्यपदेशनियामकम्। वस्तुतस्तु सर्वेऽपि हिन्दवो वा चतुर्विधमानवजातिघटका इत्येव सिद्धान्तः। तत्रापि गुणानामेकस्याधिक्याद्यनुसारेण त्रैविध्यमेव। चातुर्विध्यन्तु तत्रावान्तरतारतम्येनेत्यपि सूक्ष्मतया निर्णेतुं सुशकमिति मन्तव्यम्। नात्रोच्चनीचभेदः। स च स्वाभिमानात्काल्पनिको मनुष्यबुद्धिकल्पितः, न तु प्रकृत्येति मन्तव्यम्।

एतेन—धर्मतत्त्वविनिर्णयः केवलं युक्त्यधीनः, उत शास्त्रनिबन्धन इति—प्रश्नोऽपि—व्याख्यातः।

अस्योत्तरावसरे किंनाम शास्त्रम्, को नाम धर्मः, युक्तिश्च कीदृशी, किं केवलं तर्कात्मिकोत हेतुहेतुमद्भावादिव्याप्तिमूलकानुमारूपेत्यादयो विचाराः परिस्फुरन्ति॥

तदर्थं चादौ—"शास्त्रपदेन किं वेद एव विवक्षित उत स्मृतिपुराणेतिहासशिष्टाचारा अपि? वेदशब्देन किं मंत्रभागस्यैव ग्रहणमुतब्राह्मणादेरपि?" इति विचारणीयम्—

वेदशब्दार्थविचारः

तत्रादौ वेदशब्दार्थस्तथा प्राचीनानामेतद्विषयका उल्लेखाश्च समालोचनीयाः। तत्र वेदशब्दार्थविचारेऽधुनातनीं व्याकरणशैलीमनुसृत्य व्युत्पत्तिः क्रियते चेदनेकेऽर्थाः सम्भवन्ति। विद्यत इति वेद इति भावे घञि ज्ञानार्थके विद्धातौ च वेदो नाम ज्ञानं, तत्साधनीभूताश्च ग्रंथाः लक्षणया वेद एवेति सिध्यति। "अकर्तरि च कारके संज्ञायामि" त्यनेन निष्पन्नस्य वेदशब्दस्यार्थस्तु ज्ञानसाधनम्, ज्ञानकर्म, ज्ञानसम्प्रदानमित्यादयो भविष्यन्ति। संज्ञात्वेऽपि यथाकथंचिदुपदेशसंज्ञादि-

वत्साधुत्वं स्यादेव। तत्रापि ज्ञानार्थकविदिधातुस्वीकार एवैतेऽर्थाः। अन्यार्थकधातुस्वीकारे तु ते तेऽर्थाः स्युः। परं चात्र ज्ञानार्थक एव विदिधातुः स्वीकर्तव्य इत्यपि प्रभतात्पर्यान्निश्चीयते। अतस्तदेवाङ्गीकृत्य विचारावसरे व्युत्पत्त्यनुसृत्या अनेकेषामर्थानाम्प्रादुर्भावे तन्निर्णयार्थं "संयोगो विप्रयोगश्च साहचर्यं विरोधिते" त्याद्यभियुक्ताभिमतानां कस्यापि स्वीकारेऽपि निर्णयासम्भवस्तुल्य एव। वस्तुतस्तु नात्र पूर्वोक्ताभियुक्तोक्तस्य कस्यापि प्रवृत्तिः असम्भवात्। औचितीसम्भवेऽपि तयोर्निर्णयासंभवात्। अतो ग्रन्थान्तरीयोल्लेखस्य पर्यालोचनं कर्तव्यम्। तत्रापस्तम्बादिसूत्रेषु मन्त्रब्राह्मणयोर्वेदनामधेयमित्युक्तम्। पुराणादिभ्यस्तु स्मृतिपुराणेतरः कश्चन ग्रन्थविशेषो वेद इत्येव सिध्यति। वेदत्वेनाभिमतेषु ग्रन्थेष्वपि वेदशब्दः श्रूयते। तत्र च कीदृशोऽर्थः स्वीकरणीय इति तु संदिग्धमेव। तदर्थञ्चादौ वेदशब्दो वेद एव कुत्र कदा वाऽऽगत इत्येतदर्थं कानिचित् स्थलानि निर्दिश्यन्ते।

"यः समिधा य आहुती यो वेदेन ददाश मर्तो अग्नये यो नमसा स्वध्वरः" "वेदेन वेदाध्ययनेन ब्रह्मयज्ञेनेति" सायणाचार्याः॥ ऋ० ८। १९। ५॥

"यस्मिन् वेदा निहता विश्वरूपाः" (अथर्व० ४। ३५। ६)।

"ऋचं साम यदप्राक्षं हविरोजो यजुर्बलम्। एष मा तस्मान्मा हिंसीत् वेदः पृष्ट शचीपते" (अथर्व० ७। ५७। १)।

"ये अर्वाङ् मध्य उत वा पुराणं वेदं विद्वांसमभितो वदन्ति। (अथर्व० १०। ७। १७)।

"ताभ्यामुद्धृत्य वेदमथ कर्माणि कृण्महे।" (अथर्व०। ६७। १)।

"यस्मात्कोशादुद्भराम वेदम्" (अथर्व०) १९। ७२। १।

"ब्रह्म प्रजापतिर्धाता लोका वेदाः सप्त ऋषयो अग्नयः" (अथर्व॰ १९। ९। १२)।

ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथर्वांगिरसमितिहासपुराणं पंचमं वेदानां वेदमिति बृहदारण्यकोपनिषत्।

"वेदा अवेदा लोका अलोका" बृहदारण्यकम्। "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत, इत्यादीनि सुबहूनि वाक्यानि वेदशब्दघटितानि वेद एव समुपलभ्यन्ते। तत्र च त्रयी एवार्थ उतान्य इति न निश्चेतुं पार्यते। यतो वेद एव स्वनामधेयपूर्वकं स्वस्य प्रतिपादनं न कर्तुं पारयति। वक्ता तु कश्चन ऋषिरेव। स तु स्वाभिप्राये स्वेनोच्चारितात् मंत्रादन्यमेव वेदशब्दार्थमभिप्रैति। अन्यथा स्ववाक्यस्यैव वेदत्वे तेन कर्माचरणादिकं कर्तव्यत्वेन निर्दिश्यमानं कथं युज्येत? किंच वेद एव चातुर्विध्यं यदि सिद्धवन्निर्दिश्यते, तर्हि व्यासेन वेदश्चतुर्धा कृत इति पौराणिकः सिद्धान्तो व्याहन्येत। किंचैक एव पुरा वेदः एकोऽग्निर्वर्ण एव चेत्यादिवचनैः प्रतिपाद्यमानं वेदैकत्वमपि व्याहतमेव। 'पुरूरवस एवासीत्त्रयी त्रेतामुखे नृप। अग्निना प्रजया राजा लोकं गान्धर्वमेयिवानि" त्याद्यैरितिहासिकप्रमाणमप्यप्रमाणं स्यात्।

वेदशब्दार्थनिर्णयासम्भवः

एवं च वेदवक्तु ऋषेरन्यत्र तात्पर्यनिर्धारणात्। वेददैकत्वस्य पुराणेषु प्रतिपाद्यमानत्वात्, त्रेतामुखे त्रय्या उत्पत्तेः प्रतिपादनाच्च परस्परव्याघाताद्वेदशब्दस्य न कश्चन निश्चितोऽर्थः सम्भवति। यदि लोकरूढिमनुसृत्यैव वेदशब्दार्थो निश्चेतव्यस्तर्हि प्राकृतभाषानिबद्धानां पर-

मेश्वरस्तावकानां सत्पुरुषोपप्रणीतानां गाथानामपि वेदत्वं स्यादेव। उच्यते च तत्रैव तैरपि सत्पुरुषैः—वेदाचा तो अर्थ आम्हांसी च ठावा, इतरानीं वहावा भार माथा॥ वाचें बोलूं वेद नीती। करूं सन्ती केलें तें। (तुकारामस्याभंगवाणी)। मंत्रवत्फलसाधनत्वमप्येतेषामस्त्येव, तत्र तत्रानुभवात्; अनेकेषां सिद्धिदर्शनाच्च। किंबहुना? यवनमंत्राणामपि इष्टानिष्टफलत्वन्तु सर्वत्र सुप्रसिद्धमेवेति कीदृशो वेदशब्दार्थ इति न निश्चयः। अत्रायं निष्कर्षः—वेद एव वेदमूलककर्माचरणप्रतिपादनात्, व्युत्पत्तिशास्त्रेणानिर्णयात्, पूर्वं वेदैकत्वस्य पुराणादिषु प्रतिपादनात्, त्रेतामुखे त्रय्या उत्पत्तिदर्शकैतिहासिकप्रमाणाच्च, पुरुषसूक्तादिषु मूलत एव त्रयीभेदप्रतिपादनेन व्यासकर्तृकचातुर्विध्यप्रमाणस्य विरोधेन च परस्परव्याघाताच्च वेदशब्दार्थनिर्णयः कथमपि न सम्भवतीति का नाम कथा वेदशब्देन मंत्रभागस्यैव ग्रहणमुत ब्राह्मणादेरपीति प्रश्नस्य।

[वेदलक्षणम्]

एवंसत्यपि रूढिमनुसृत्यैव वेदशब्दार्थनिर्णयः कर्तव्यश्चेत्तदा कथमपि 'इष्टानिष्टफलसाधनत्वबोधकं वाक्यमेव वेदः' इति लक्षणं युज्यते वक्तुम्। चोदनासूत्रप्रामाण्यात्। चोदनातिरिक्तस्य सर्वस्यापि वेदभागस्य, चोदनैकवाक्यतयैव प्रामाण्यबोधनेन स्वातन्त्र्येण प्रामाण्यन्नास्तीति विधिना त्वेकवाक्यत्वादित्यधिकरणे सुविशदमेव मीमांसकानाम्। न च स्मृतिपुराणादीनामप्रामाण्यापत्तिः। तेषामपि चोदनामूलकत्वेनैव प्रामाण्यात्। एवं च चोदनायामेव तात्पर्यपर्यवसानम्। अत एव "चोदनालक्षणोऽर्थो धर्मः" इति सूत्रे—

केवलं चोदनापदमेवोपात्तम्। न तु वैदिकी चोदनेति वेदशब्दस्तत्रोपात्तः। नचैवं पुरुषवाक्यस्यापि प्रामाण्यापत्तिः। कारण-

दोषाभावे तस्या अपीष्टत्वात् । वेदानां पौरुषेयत्वेऽपि पुरुषशक्तीनां भिन्नत्वेन कस्यचित्पुरुषस्यालौकिकफलसाधनत्वग्रहे सामर्थ्यस्याव्याहतेः । इदं सर्वमप्यभ्युपेत्यवादेन । वस्तुतस्तु पूर्वोक्तकारणपरम्परया न कश्चन विनिर्णीतो वेदशब्दार्थः ।



**मन्त्रभागमात्रस्य वेदत्वनिरासः**

ये तु मंत्रभागस्यैव वेदत्वमिति प्रति[illegible]न्ति, त एवं प्रष्टव्याः—मंत्राणामेव वेदत्वमिति कुतोऽवगम्यते ? प्रत्युत वेदे " ताभ्यामुद्धृत्य वेदमथ कर्माणि कुर्महे " इत्यादि मंत्रेषु वेदमुद्धृत्य कर्मणः क्रियमाणत्वस्य प्रतिपादनादेतन्मंत्रातिरिक्तस्यैव वेदत्वबोधने वक्तुस्तात्पर्यमित्यवगम्यते । न हि वेदादिदं सम्भूतमिति वेद एव शक्नोति प्रतिपादयितुम् । किंच मंत्रभागस्यैव वेदत्वे तद्विनियोजकस्यान्यस्य प्रमाणस्यास्वीकारे शब्दानामनेकार्थत्वेनार्थस्य व्याख्यातृबुद्ध्यनुसारेणानेकधा सम्भवात् नार्थसामर्थ्यरूपं लिङ्गमपि विनियोजकं सम्भवति । किंच यथाकथंचित् लिंगस्य विनियोजकत्वे स्वीकृतेऽपि अस्मिन्नेवार्थेऽस्य मंत्रस्य विनियोग इति विशेषनिर्धारणस्य तथाप्यसम्भवः । तद्यथा—शन्नोदेवीरिति मंत्रस्य जलस्तावकत्वेऽपि तदनुसारेणाचमनादावेवास्य विनियोगः, न तु गुदप्रक्षालनादाविति विशेषतोऽनिर्णयस्तदवस्थ एव । तस्मान्निरर्गलप्रलपितमिदमित्येव पश्यामः ।

**१ मन्त्रब्राह्मणयोर्वेदनामधेयत्वनिरासः**

एवमेव ये खलु मंत्रब्राह्मणयोर्वेदनामधेयमिति सूत्रात्तयोरेव वेदत्वं मन्यन्ते, तेऽपि प्रष्टव्याः—किं तयोरेव वेदत्वे प्रमाणम् ? केवलं पूर्वोक्तसूत्रादिदं स्वीक्रियते चेत्, तेन सूत्रकारेणापि लक्षणमिदं कथन्तावदवगतम् ? किं लोकरूढ्योत प्रमाणान्तरेण ? तदि प्रमाणान्तरेण, कीदृशं खलु तत्प्रमाणमित्यपि विचारणीयम् । यदि लोकरूढ्या, सापि किं किं-

चित्प्रमाणमूलिकोत स्वतंत्रा ?

प्रवर्तकनिवर्तकवाक्यानामेव वेदत्वम- भ्युपेत्यवादेन।

वयन्तु पश्यामः—सिद्धस्यैव पदार्थस्य गुणधर्मानुसारेण लक्षणं यथा गन्धवती पृथिवीति क्रियते। सिद्धस्तु वेदपदार्थो न सम्यगवगन्तुं शक्यतेऽधुनातनैः। सूत्रलक्षणे तु सांकेतिकत्वमेव दोषः। लक्षणन्तु तदेव यल्लक्ष्यतावच्छेदकसमनियतम्। अत्र च लक्ष्यतावच्छेदकवेदत्वस्यैव ज्ञानाभावेन तत्समनियतो धर्मस्तु दूरत एव। अतोऽभ्युपेत्यवादेन चोदनैव वेद इति कथमपि वक्तुम्पार्यते। चोदनार्थस्तु प्रवर्तकं वाक्यमिति सर्वेषामपि प्रवर्तकवाक्यानामप्रामाण्यकारणीभूतकारणदोषरहितानां वेदत्वं युक्तमिति सुव्यक्तमेव विचारचातुरीचतुराणां सुधियाम्। अत एव सायणाचार्यैः कृष्णयजुर्वेदप्रस्तावनायामादौ कोऽयं वेदो नाम, किंच तल्लक्षणमित्याद्युपक्रम्य लक्षणावसरे—"इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति, स वेद इति लक्षणमुपात्तम्। इदमेव वेदानां वेदत्वम् यत्—"प्रत्यक्षेणानुमानेन यस्तूपायो न बुद्ध्यते। एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता" इति। एवं चालौकिकतादृशोपायबोधकं वाक्यं वेद इति फलति। तच्च चोदनैवेति फलितं चोदनैव वेद इति। अत्र कर्त्रर्थे घञः स्वीकारस्तु चिन्त्य एव। इदमेव शास्त्रम्। "प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा। पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयत" इति तल्लक्षणात्।

म्लेच्छादिधर्मचोदनाप्रामाण्यम्

एवं च यथाकथंचिदेतल्लक्षणाङ्गीकारे स्यान्नाम वेदपदार्थज्ञानम्। परं न तन्मंत्रब्राह्मणयोरेव। किन्तु या या चोदना सा सर्वाऽपि वेद एवेति सर्वासां धर्मपरचोदनानां वेदता तावत्सुस्थिरैवेति सुव्यक्तमेव। न चेतरधर्मचोदना-

नां पौरुषेयत्वेनाप्रामाण्यकारणीभूतदोषसम्भवात् न तत्र प्रामाण्य-निश्चय इति वाच्यम् । शब्दप्रामाण्यन्तु स्वत इति तु मीमांसकानां राद्धान्तः । का नाम कथा शब्दप्रामाण्यस्य, अपि तु सर्वेषामपि प्रमाणानां स्वतःप्रामाण्ये शब्देऽपि तत्स्वीकारो गलेपतित एव । स च शब्दो मनुष्यकृतोच्चारणेनैवाभिव्यज्यत इत्यपि राद्धान्तः । एवं च येन केनाप्युच्चारिते शब्दे तत्कर्तृत्वं वा तदुच्चारयितृत्वमात्रं वा तस्य कल्पनीयमित्यस्योभयत्रापि सामान्यात् न विशेषत इदं वक्तुं पार्यते, यत् संस्कृतभाषामयप्रबन्धविशेषचोदनैवापौरुषेयी, नान्येति । ज्योतिष्टोमादीनामितरप्रमाणागोचरफलसाधनत्वप्रतिपादनादिवेतरमतेऽपि तादृशफलसाधनीभूतस्य कस्यचन कर्मणः प्रतिपादनात्तत्रापि अलौकिकोपायत्वेन स्वतःप्रामाण्यं वेदत्वं चापौरुषेयत्वं च तुल्यमेवेति सुधियो विदांकुर्वन्तु । मन्त्रादिदृष्टसिद्धिस्तु प्रत्यक्षत एवेत्युक्तं प्रागेव । एवंच बहुशः पर्यालोचिते वेदपदार्थे न निश्चेतुमलमिति निष्पक्षपातमुन्मीलयन्तु चक्षुरिति किमधिकलेखनेन ।

चोदनाया एव शास्त्रत्वम्

एवं च चोदनैव वेद इत्यभ्युपेत्यवादेनाङ्गीकृते तदेव शास्त्रमित्यर्थादायाति सिद्धान्तपथम् । अभ्युपेत्यवाद इत्यत्रायमेवाभिसन्धिः, यत्--क्रियाणां यत्किंचिदलौकिकफलसाधनत्वं चोदनया प्रतिपाद्यमानमपि किंमूलकमिति । यतो न किमपि कर्म कस्यापि फलस्य साधकमिति सामान्यव्याप्त्या तस्य संभवः । एवमपि फलविशेषसाधनत्वस्यानिश्चयेनाप्रामाण्यात् । एवं च सर्वाऽपि चोदनैतिहासिकवृत्तान्तमूलिकैवेति प्रागुक्तमेव युक्तम् । एवं च शास्त्रमपि चोदनैव नान्यदिति सिद्धं भवति । वेदस्य शास्त्रपदवाच्यत्वन्तु शास्त्रयोनित्वादिति सूत्रे भाष्ये तत्र तत्र धर्मग्रन्थेषु चोरीकृतमेवेत्यतिरोहितम् । स्मृतिपुराणशिष्टाचाराणां चोदनामूल-

कस्यैव प्रामाण्यमिति मीमांसकराद्धान्तस्त्वत्रापि तुल्य एव ।

शास्त्रस्य युक्तिमूलकत्वोपपत्तिः

तदिदं शास्त्रं किं युक्तिभिरुपष्टब्धस्यार्थस्यैव बोधनाय प्रवृत्तमुत युक्त्यनपेक्षया स्वातन्त्र्येण तत्प्रवृत्तमिति तृतीयप्रश्नविचारावसरे युक्तिभिरुपष्टब्धस्यैवार्थस्यावगमनाय शास्त्रप्रवृत्तिरिति युक्तमुत्पश्यामः । यतो या खलु चोदना कस्यचित् कर्मणः किंचित्फलसाधनत्वमवगमयति, सापि किंचित्प्रमाणमूलिकोत स्वतंत्रा ? तत्र शब्दानां स्वातन्त्र्येण यत्किंचिदर्थबोधने सामर्थ्याभावेनोच्चारणस्यार्थानुसन्धानपूर्वकत्वस्य "आत्मा बुध्या समेत्यार्थान् मनो युंक्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णाञ्जनयते,, इत्याद्यभियुक्तोक्तवचनप्रामाण्येनावश्यं स्वीकर्तव्यत्वात् चोदनापि तदुच्चारयित्राऽर्थानुसन्धानपूर्वकमेवोच्चारितेति युक्तम् । तच्चार्थानुसन्धानं किंप्रमाणकमिति विचारप्रसंगे यदि शब्दप्रमाणकमित्यङ्गीकर्तव्यम्, तदा पूर्वोक्तापत्तिस्तदवस्थैव । अतस्तत् शब्दातिरिक्तप्रमाणमूलकमेवेत्यङ्गीकर्तव्यम् । शब्दातिरिक्तं च प्रमाणं प्रत्यक्षमनुमानं वा, नातिरिक्तमन्यत् । उपमानस्य शब्दशक्तिज्ञान एव विनियोगादत्र प्रयोजनाभावः; अर्थापत्त्यादीनां सर्वानभिमतत्वात् । एवं चावशिष्टे प्रमाणद्वयेऽनुमानस्य प्रत्यक्षमूलकत्वेनैव प्रवृत्तेः प्रत्यक्षमेवार्थानुसन्धाने प्रमाणम् । एवं चानया क्रिययेदम्फलम्भवतीति प्रत्यक्षज्ञाने इयमेतत्फलसाधिकेति भवति ग्रह इष्टानिष्टफलसाधनत्वस्य, तदेवोत्तरकाले सर्वेषामवगत्यै शब्दद्वारा प्रतिपाद्यते । सैव चोदनेति सिध्यति सिद्धान्तोऽयम्—यत् युक्तिभिरुपष्टब्धस्यार्थस्य बोधनाय शास्त्रप्रवृत्तिरिति ।

किंच ऋषयो मन्त्रद्रष्टार इति जनश्रुत्यापीदमेव सिद्धान्तपथमारोहति यत्प्रत्यक्षेणार्थमनुसन्धाय तस्यैव श्रेयस्करत्वं पाश्चात्यानामनुष्ठानबोधनाय परमकारुणिकै ऋषिभिः शास्त्राणि नानारूपाणि निरमायिषतेति। अत एव वेदेषु तत्र तत्रोपनिबन्धनमितिहासवृत्तस्योपपद्यते। अन्यथाऽर्थानुसन्धानपूर्वकविरचितत्वाभावरूपापौरुषयेत्वस्वीकारे तु तत्र तत्रोद्ग्रथ्यमानं इतिहासो न संगच्छेत। सोऽयमितिहासो देवापिः, शन्तनुः, इत्यादिनाम्नामुपलम्भात् द्वापरान्तेऽपि। अत एव छान्दोग्ये कृष्णाय देवकीपुत्रायोक्त्वोवाचेत्याद्युल्लेखः संगच्छते। अत एव द्वापरान्ते द्वैपायनेन वेदस्य संहितीकरणं चतुर्धाकरणं च कृतमिति पुराणोल्लेखोऽपि संगच्छते। अन्यथोपलभ्यमानानां वेदग्रन्थानामिदानीन्तनानुपूर्वीपूर्वकैतादृशसमूहस्य सृष्टिकालादारभ्यैव तथात्वे पूर्वोक्तमुपलभ्यमानं सर्वमसंगतमेव। न च याः किलार्वाचीना व्यक्तयः पुराणेषूपलभ्यन्ते, तासामेवोल्लेखो वेदे इत्यत्र किम्प्रमाणमिति वाच्यम्। तथासति पुराणेष्वप्यर्वाचीना एवेत्यत्र विनिगमकाभावात्। तथा च सर्वथा प्राचीनत्वमर्वाचीनत्वं वा समानमेव। किंच दृष्टे सत्यदृष्टकल्पना न न्याय्येतिन्यायेनार्वाचीनानामेव पुराणोपनिबद्धानां व्यक्तीनां ग्रहणमिति समुचितमेव तथाच प्रत्यक्षेतिहासमूलकमेव शास्त्रमिष्टानिष्टसाधनत्वे बोधयति क्रियाणामिति सिद्धम्।

शास्त्रतर्कयोर्विरोधे शास्त्रस्य प्राबल्यम्

शास्त्रयुक्त्योर्विरोधे च प्राबल्यं शास्त्रस्यैव। अत्र च युक्तिर्नाम तर्क एव केवलम्, न पूर्वोक्ता, पूर्वोक्तयुक्त्या साकं शास्त्रविरोधाभावात्, प्रत्युत प्रत्यक्षेतिहासस्योपजीव्यत्वेन शास्त्रेण तन्निराकरणे संनिपातलक्षणन्यायविरोधः। अतः स्वकपोलकल्पिततर्केण शास्त्रस्य विरोधे शास्त्र-

मेव प्रबलमिति युक्तम्।

यदि युक्तिभिरुपष्टब्धस्येति प्रश्नेऽपि युक्तिशब्दस्तर्कवाचकोऽभिमतस्तर्हि तत्रेदमुत्तरम्—न तावच्छास्त्रं युक्तिपरवशम्, न वा स्ववशम्, किंतु इतिहासमूलकमेव। अत एव धर्मतत्त्वविनिर्णयोपि न शास्त्रनिबन्धनः, न वा युक्तिनिबन्धनः, अपि तु इतिहासनिबन्धन इति सर्वमपि सुव्यक्तमेव। एवं च त्रयाणामेतेषामनुयोगानामुत्तरेऽयं संक्षेपः—

१—वेदपदार्थानिश्चयादनुयोगानौचित्यम्।

२—चोदनेत्यभ्युपेत्यवादाद्वा तल्लक्षणम्।

३—तथैव स्मृत्यादयोऽपि।

४—वेदे ब्राह्मणे विप्रतिपत्तेरभावस्तथाभिमतेः।

५—युक्तिस्तु प्रत्यक्षेतिहासः।

६—तन्निबन्धनं शास्त्रम्, सा च चोदना।

७—तथाच स्वातन्त्र्याभावः।

८—तर्काप्रतिष्ठानात्तदनपेक्षा।

९—तल्लक्षणश्च धर्मः।

१०—तर्कनिबन्धनत्वे त्वनवस्था—इति।

पञ्चमप्रश्नस्योत्तरं तु प्रथमानुयोगविवेचन एतदनुयोगविवेचने चान्तर्गतमिति तत्रैव द्रष्टव्यम्।

अत्रायं षष्ठोऽनुयोगः—क्रियाणां स्वरूपतो धर्मत्वमुत फलविशेषसाधनत्वेन ?

धर्मलक्षणविचारः

परं चैतत्प्रश्नविचारात् प्राक् तावत् क्रियापदार्थो धर्मपदार्थश्चावश्यमेव पर्यालोचनीयौ। नो चेत्कर्मणो वा धर्मस्य वा कस्यापि ज्ञानाभावेन तस्य केन रूपेण धर्मत्व-

मिति विचार एव नास्पदं लभेत। अतः किन्नाम कर्म, को नाम धर्मः, कश्च तयोः सम्बन्धः, किं कर्मैव धर्मः, उतान्यदित्यादयः प्रश्नाः समुन्मिषन्तः पर्यालोचनीयाः।

[ शुभवासनाया एव धर्मत्वम् ]

तत्र केचित्—द्रव्यमात्रेणैव फलसिद्धेः, सर्वेषां भावानां क्षणिकत्वेन कर्मोत्पत्तिकाले स्थिरद्रव्यस्यैवाभावात् फलोत्पत्तेः प्राक् विद्यमानं द्रव्यमेव तत्र कारणमिति वृथा कर्मकल्पनेत्यभ्युपगच्छन्ति। अतः कर्मपदार्थाभावादेव न तस्य धर्मत्वम्, अपि तु चित्तस्य शुभा वासनैव धर्मः। धर्मशब्दोऽयं पाचकादिशब्दवत्सभाग एव धृतिसाधने वर्तते। धृङा धृतिः प्रत्ययेन च तत्साधनमभिधीयते। धृतिरिति प्रीतिपर्यायः। एवं च प्रीतिसाधनं धर्म इति तल्लक्षणम्फलितम्। प्रीतिश्च शुभवासनयैवेति स एव धर्मः, नान्यः कश्चन धर्मपदार्थः, इति।

[ कर्मरूपधर्मस्यानुमेयत्वम् ]

अन्येतु—द्रव्यमात्रेण फलासिद्धेः, सर्वेषाम्भावानामस्थिरत्वे शुभवासनारूपधर्मस्यापि विना कारणं वृथा स्वीकारापत्त्या सर्वेषां स्थिरत्वाभ्युपगमस्य गले पतितत्वात् पूर्वदेशविभागोत्तरदेशसंयोगरूपस्य गमनक्रियाफलस्यासमवायिकारणीभूतगमनक्रियाया अभ्युपगमादिव सर्वेषां फलानामसमवायिकारणरूपं किंचित्कर्मशब्दवाच्यमवश्यमेवाभ्युपेयम्। तच्च न प्रत्यक्षम्, किन्तु तादृशफललिङ्गकानुमानेनासमवायिकारणत्वेनानुमेयमेव; अतः कर्मणोऽप्रत्यक्षत्वाद्धर्मस्यापि न प्रत्यक्षत्वम्, किंतु धर्मोऽप्यनुमेय एव। जगद्वैचित्र्यस्य तं विनाऽनुपपत्त्या तल्लिङ्गकानुमानेन तादृशवैचित्र्यकारणीभूतः कश्चनालौकिको विशेष एव धर्म इत्यभ्युपगच्छन्ति। अत एव धर्माधर्मयोरदृष्टपदवाच्यत्वमप्युपपन्नम्। दृश्यमानां क्रियाणामेव

धर्मत्वे तु नादृष्टपदवाच्यता धर्माधर्मयोः कदापि लोकव्यवहारे दृश्येत। अतोऽदृष्टविशेषो धर्मः। सच "पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते" इति न्यायेन पूर्वार्जितकर्मरूपं दैवं वा भवत्वन्यद्वा। सर्वथा तयोरनुमेयत्वमेव, न प्रत्यक्षत्वमित्यभ्युपयन्ति।

मीमांसकमतेन धर्मपदार्थविचारः

मीमांसकास्तु— गमनफलस्योत्तरदेशरूपस्य भूम्यां मनुष्ये च द्वयोरप्युपलम्भेऽपि मनुष्य एव चलति न भूमिरिति सार्वजनीनप्रत्ययात् प्रत्यक्षं कर्म। अत एव विधिना श्रेयःसाधनत्वेन प्रतीयमानं यागादिकमपि प्रत्यक्षमेव। स एव धर्मः। अत एव यागादिकर्तरि धार्मिकत्वेन व्यपदेशः सार्वजनीनः संगच्छते, नापूर्वमन्तःकरणप्रवृत्तिविशेषो वेति; लोकप्रसिद्धिविरहात्। तच्च यागादि कर्म चोदनयैवावगम्यत इत्यतः सैव धर्मे प्रमाणम्। तेन प्रमाणेनावगम्यमान एव धर्मपदार्थः। स च यागादिरित्यतिरोहितम्। अत एव भाष्ये "चोदना हि भूतं, भविष्यन्तम्, सूक्ष्मम्, व्यवहितम्, विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुम्, नान्यत् किंचनेन्द्रियम्" इत्युक्तम्। अग्रे च "यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते, यश्च यस्य कर्ता स तेन व्यपदिश्यते, यथा पाचको लावक इति" इत्युक्तम्। अतो यागादिक्रियैव धर्मः, क्रिया च प्रत्यक्षेति धर्मोऽपि प्रत्यक्ष एवेत्यभ्युपगच्छन्ति॥

ऐतिहासिकमतेन धर्मपदार्थविचारः

वयन्तु ब्रूमः—यद्यपि क्रिया प्रत्यक्षा, धर्मोऽपि प्रत्यक्षः, क्रियापदार्थोऽपि चलनाद्यात्मकः सिद्धः; तथापि न क्रियैव धर्मः, नापि तत्र चोदनैव प्रमाणम्, किंतु इष्टसाधनत्वेन प्रतीयमाना क्रिया धर्मपदवाच्येति। सा चेतिहासप्रमाणगम्या। अत इतिहासप्रमाणको

धर्मः । चोदनापीतिहासमूलिकैवेत्युक्तम्प्राक् ?

[मीमांसकमतखंडनं]

न च मीमांसकैरपीष्टसाधनत्वरूपेणैव क्रियाणां धर्मत्वमङ्गीक्रियत इति वाच्यम् । तथा सति इष्टसाधनत्वस्य तन्मते चोदनैकगम्यत्वेनाप्रत्यक्षत्वात् क्रियाप्रत्यक्षत्वसिद्धान्तो व्याहन्येत । किंच यो हि यागमनुतिष्ठतीति भाष्यमपि न संगच्छेत । अपि च क्रियासामान्यप्रत्यक्षत्वस्वीकारे धर्मस्य यागादिक्रियारूपत्वाभ्युपगमे तस्य चोदनैकगम्यत्वे चान्योन्यं विरोधः, क्रियाप्रत्यक्षत्वे यागादीनामपि प्रत्यक्षत्वम् । तथा च चोदनैकगम्यत्वव्याकोपः; क्रियाणामिष्टसाधनत्वरूपेणैव धर्मत्वात्तस्य च चोदनैकगम्यत्वाच्च । तदभ्युपगमे तु क्रियाप्रत्यक्षत्वव्याघातः । पूर्वोक्तभाष्यासङ्गतिश्च । अत एव—

"अन्यत्साध्यमदृष्ट्वैव यागादीननुतिष्ठतः । धार्मिकत्वसमाख्यानं तद्योगादिति गम्यते" इत्यप्युक्तं संगच्छते । किंच यदि क्रियाणामपीष्टसाधनत्वरूपेणैव धर्मत्वम्, तर्हि "ननु न तावद्यागादीनां स्वरूपमेव धर्मः, तेषामैन्द्रियकत्वेन धर्मत्वनिषेधात्, श्रेयःसाधनत्वेनैव धर्मत्वोक्तेः, तच्च रूपमतीन्द्रियत्वादपूर्ववदेवाप्रत्यक्षम् । ततश्चान्यत्साध्यमदृष्ट्वैवेत्यनेन न्यायेन यागादिस्वरूपस्यैव धर्मत्वमित्यापन्नम् । स्वरूपाविधाने चैकस्यैव धर्मपदस्य नानाजातीयेषु द्रव्यगुणकर्मस्वनेकशक्तिकल्पना स्यात्, न च सकलानुगतप्रीतिसाधनत्वाददोष इति वाच्यम्; तस्यातीन्द्रियत्वात्, विशिष्टवाचकस्य प्रीतिरूपविशेषणाभिधानप्रसंगाच्च," इत्यादिशंकाग्रन्थोऽप्यसंगतः स्यात् । नहि सिद्धान्त एव पूर्वः पक्षः । अतोऽयमेव सिद्धान्तो मीमांसकानामिति प्रतीमो यत् क्रियाणामेव प्रत्यक्षाणां स्वरूपतो धर्मत्वमिति । यत्तु यागादिरेव श्रेयःसाधनत्वरूपेण धर्मः,

तद्रूपाभावाच्च न शूद्रकृतस्य धर्मतापत्तिरिति शास्त्रदीपिकावचनम्, तस्य यागादिरेव स्वरूपतो धर्मः, परञ्च श्रेयःसाधनत्वं तत्र चोदनयैवावगम्यते। अतः शूद्रकृतस्य यथाकथंचिद्धर्मत्वेपि श्रेयःसाधनत्वाभावेन तेन तन्नाचरणीयमिति। अत एव पूर्वं चोदनालक्षण एव धर्मः श्रेयस्कर इत्यर्थ इत्युक्तं चोदनासूत्रतात्पर्यमपि संगच्छते। अनेन च श्रेयस्करो धर्मश्चोदनालक्षण एव नान्य इत्यर्थ इति बोध्यते। अतोऽश्रेयस्करस्यापि धर्मत्वमस्त्येवेत्याकूतम्। परं च श्रेयस्करस्तु चोदनालक्षण एवेत्यनेन चोदनया केवलं श्रेयस्करत्वमेवावगम्यते। धर्मस्तु स्वरूपतः क्रियैवेति। अतः स्वरूपतः क्रियाणां धर्मत्वमित्येव मीमांसकराद्धान्तः; अन्यथा शास्त्रदीपिकावचनयोरन्योन्यं विरोधेनाप्रमाण्यापत्तिः, पूर्वोक्तशंकाग्रन्थस्याप्यसंगतिश्चेति कृतबुद्धयो विदांकुर्वन्तु।

[श्रेयः साधनत्वेन क्रियाणां धर्मत्व निर्णयः]

एवं च यद्यपि मीमांसकानामयं सिद्धान्त आपातरमणीयः; तथापि तेन न धर्मस्वरूपं वा क्रियास्वरूपं वा निर्णीतं भवति; क्रियाणां स्वरूपतो धर्मत्वस्वीकारेऽनवस्थाप्रसंगात्। यदि या कापि यमधिकारिणमुद्दिश्य यस्मै फलाय यस्मिन् काले श्रेयःसाधनत्वेन बोधिता चोदनया, साऽऽकल्पन्तथैवेति धर्माधर्मविचारपरिसमाप्तिरेव, तथा सत्यन्यासां धर्मत्वेनाभिमतानां देशकालाद्यनुसारेण धर्मज्ञैः पुराणोपदिष्टानां क्रियाणां धर्माभासत्वं नैव परिसंख्येयता स्यात्। वयन्तु ब्रूमः—यस्यामवस्थायां या क्रिया श्रेयस्करी स धर्मः। क्रियाणां प्रत्यक्षत्वन्तु पूर्वमेवोक्तम्। एवं च यतोऽभ्युदयनिश्रेयससिद्धिः स धर्मः इत्येव धर्मलक्षणं फलितम्। गीताभाष्य आचार्यपादैर्वैशेषिकैश्चेदमेवाङ्गीक्रियते। अभ्युदयसाधकत्वन्तु जागतं स्पर्धात्रं

लोकानां शक्तिह्रासादिपरिस्थितिञ्चानुसृत्येतिहासद्वारा निर्णेतुं सुशकमितीतिहास एव तत्र प्रमाणम्। अत एवानृतादिपातकाना- मप्यपातकत्वं "गोब्राह्मणार्थे हिंसायां नानृतं स्योज्जुगुप्सितमि" ति बोध्यते। तथैव कन्यादानादिषु "सकृत्कन्या प्रदीयते" इत्येकवार- त्वादिबोधनेऽपि प्रथमादधिकगुणवतो लाभे तस्मै बलादपि दानं तत्र तत्रानुमन्यते। किमधिकलेखनेन? पाषंडादिसमर्थैर्बलात्कारेण स्त्रीणां पातिव्रत्यभंगप्रसंगे संप्राप्ते तन्निराकरणस्य कर्तुमशक्यत्वे च "न स्त्री दुष्यति जारेण" इत्यादिशास्त्रस्य प्रवर्तनन्तत्र तत्र धर्मोपदे- ष्टृणामभिमतमेव "न स्त्री दुष्यति जारेणे" ति अत्रिस्मृतिप्रामाण्यात्। तथैव भागवतसम्प्रदायेन वेदाध्ययनशैथिल्ये समुत्पन्ने तस्यापि नि- न्दनमत्रिणा कृतम्—"वेदैर्विहीनाश्च पठन्ति शास्त्रं शास्त्रैर्विहीनाश्च पुराणपाठाः। पुराणहीनाः कृषिणो भवन्ति भ्रष्टास्ततो भागवता भवन्तीति"। तस्मादितिहास एव धर्मे प्रमाणम्। धर्मस्य क्रियायाश्च सम्बन्धोऽपि साध्यसाधनभावरूपः "तेजो वै घृतमितिवत्साधने त- त्त्वारोपेण। "यो हि यागमनुतिष्ठति तं धार्मिक इति समाचक्षते" इति भाष्यमप्युपपन्नमेव।

[श्रेयस एव मुख्यतया धर्मत्वम्]

अत्रायं निष्कर्षः—यतोऽभ्युदयनिश्श्रेयससिद्धिः स धर्म इत्यत्रापि साधने साध्यारोपेण भाव्यम्। धर्मशब्दो हि धृतिसाधनवाचकः। धृतिश्च श्रेय- सैव; नो चेत् श्रेयस आकांक्षा, कोऽपि न किंचिदपि व्यापारयिष्य- ति। अतः श्रेयोऽनुसृत्यैव सर्वेषां जीवनम्। अतो धारणसमर्थं श्रेयः। तच्चैहिकमामुष्मिकं चेत्युभयथापीति केषांचिन्मतम्। कथमपि भवतु। सर्वथा श्रेय एव धर्मः, तत्साधनीभूतासु क्रियासु तत्त्वारोपाद्धर्मत्वम्। इष्टमिवेष्टसाधनमपि सर्वेभ्यो रोचत एवेति

तत्रैव सर्वेषां प्रवृत्तिः। तदेवेष्टं येन केनचिद् व्यापारेण विनापि सिद्धयति चेत् कोऽप्यायाससाध्ये कर्मणि न प्रवर्तेत। अत इदमेव युक्तं पश्यामः, यत् श्रेयो धर्मः, तत्साधनीभूताः सर्वा क्रिया धर्म एव। तयोश्च साध्यसाधनभावः सम्बन्धः। तन्निर्णयश्चेतिहासादिति प्रागेवोपपादितम्। नान्यत्किंचिदपि धर्मप्रमाणमिति सिद्धम्।

एवं च न क्रियाणां स्वरूपतो धर्मत्वम्, किंतु फलविशेषसाधनत्वेनैव। या हि क्रिया यस्मिन् काले यस्य यदिष्टं साधयति, सैवेतरस्मिन् काले तस्य तदेवेष्टं साधयितुमसमर्था। अत एवापद्धर्माः शास्त्रेषूपदिष्टाः। आपत्कालेऽधर्मस्यापि धर्मत्वं धर्मस्याप्यधर्मत्वं शास्त्रेणोपदिश्यते। तत्राप्ययमेवाभिसन्धिः—यत्क्रिया न स्वरूपतो धर्मः, किंतु फलविशेषसाधनत्वेनेति। तथैवानृतवदनावपि।

एवमन्यदप्यूह्यम्। एवं च यस्मिन् काले या क्रिया श्रेयस्करी, सैव तदा धर्म इति क्रियाणामिष्टफलसाधनत्वेनैव धर्मत्वम्, नान्यथेति सिद्धम्।

क्रियाफलस्य प्रत्यक्षत्वमेव

तस्यास्य धर्मस्य फलं किं प्रत्यक्षमप्रत्यक्षमुभयविधं वेति पर्यनुयोगे तु वयं तत् प्रत्यक्षमेवेति प्रतिजानीमः। नाप्रत्यक्षमुभयविधं वा; अप्रत्यक्षस्य ज्ञानाभावेन तत्र शब्दव्यापारस्यासंभवात्। "शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" इति परिगणितेषु शक्तिग्रहकारणेषु कस्याप्यदृष्टेऽसंभवात्। नचेह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीत्यत्र मधुकरपदवदत्रापि सिद्धपदसान्निध्याद् भविष्यति स्वर्गादिफलेऽदृष्टेऽपि स्वर्गपदशक्तिग्रह इति वाच्यम्। स्वर्गकामो यजेतेत्यादौ कामपदसान्निध्यात्कथंचित्

सामान्यत इष्टत्वेन तस्य बोधेऽपि तस्य विकल्पात्मकत्वेनाप्रामाण्यात्, विकल्पात्मकबोधस्तु वस्तुशून्य एव । "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इति तल्लक्षणात् ॥

क्रियाफलस्यादृष्टत्वनिरासः अपि च ये तु स्वर्गादिकमदृष्टत्वेन व्यपदिशन्ति त एवम्प्रष्टव्याः—किमेषामदृष्टत्वे प्रमाणमिति ? शब्द इति चेत् शब्दात्तु सर्वत्र जायमानमपि ज्ञानमप्रत्यक्षमेवेति नात्र तत्प्रयोजकम् । शब्दमात्रमिति चेच्छक्तिग्रहासंभवः । दर्शनाभाव इति चेत्, किं सर्वेषां दर्शनाभावस्तव वा । यदि सर्वेषाम्, तर्हि मिथ्यैव स्वर्गः, तद्बोधकम्प्रमाणमपि मिथ्या । नृशृङ्गकामोऽरण्यमाविशेदिति शतशो बोधितेऽपि न कश्चित् प्रेक्षावान् तत्र प्रवर्तते । किंच यदि स्वर्गादीनामप्रत्यक्षता, तर्हि तल्लाभार्थं यागादिकमनुष्ठेयतयोपदिश्यमानमपि व्यर्थमेव, तस्य सर्वथाऽदर्शनात् । अपरं च मंत्रद्रष्टृभिः ऋषिभिरपि दृष्टो न वा स्वर्गः ? दृष्टश्चेत् अप्रत्यक्षत्वव्याघातः । अथो न दृष्टः, कथन्तर्हि तत्साधनीभूतं कर्मापि दृष्टम् ? तत्साधनत्वेन मंत्रा वा दृष्टाः । अतो मम दर्शनाभाव इति वक्तव्यम् । परं च न त्वं सर्वज्ञः सर्वसाक्षी वा । अन्यथा लौकिकानां घटादीनां सर्वेषान्तव प्रत्यक्षविषयता स्यात् । तदभावेऽपि यदि घटादयो लौकिकाः पदार्था नादृष्टाः, तर्हि स्वर्गोऽपि तथा । ननु तर्हि कथन्न दृश्यत इति चेत्, सामग्र्यभावादिति गृहाण । न हि सर्वेऽपि पदार्थाः सर्वैरपि प्रत्यक्षेणावगम्यन्ते । सत्यां सामग्र्यान्तु प्रत्यक्षता स्यादेव । अतो न किंचिदपि क्रियाफलमप्रत्यक्षम् । नन्वेवं भाविनः फलस्यानुसन्धानं कथं सम्पन्नमृषीणामिति चेत्तत्सामग्र्या ।

क्रियाफलस्य दृष्टत्वमात्रोऽपादम्

किंच स्वर्गलक्षणादेव स्वर्गस्य प्रत्यक्षयोग्यतेति प्रतीयते। तल्लक्षणन्तु "यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदमिति। अत्र च सुखविशेषस्यैव स्वर्गपदवाच्यता प्रतीयते। सुखन्तु सर्वेषां प्रत्यक्षमेवेति तद्विशेषोऽपि प्रत्यक्षः। अन्यथा सुखकालेऽपि तज्ज्ञानार्थं प्रमाणव्यापारप्रसंगः। तस्मान्नादृष्टं कर्मफलम्, अपि तु प्रत्यक्षमेव। लौकिके व्यवहारेऽपि गच्छति सर्पे पूर्वदेशविभागोत्तरदेशसंयोगौ प्रत्यक्षतयैवावगम्येते। अतः सर्वमपि कर्मफलं प्रत्यक्षमेव। वस्तुतस्तु न स्वर्गो नाम कश्चन पदार्थः। तत्र प्रमाणाभावात्, शक्तिग्रहप्रयोजकस्य कस्याप्यसम्भवेन शब्दव्यापारस्यापि तत्र कुंठितत्वात्। न च पूर्वोक्तलक्षणाद्भविष्यति शक्तिग्रहः, भविष्यति च शब्दवाच्यतेति वाच्यम्, तस्यात्मसुखानतिरेकात्। तस्यैव स्वर्गत्वे तु सर्वप्रत्यक्षत्वेन नादृष्टत्वम्। एवमेवान्यदप्यूह्यम्। सर्वथा नादृष्टं क्रियाफलमित्येव तात्पर्यम्। अयन्तु विशेषः—यत् कस्यचित् क्रियाफलस्य, क्रियाया अव्यवहितोत्तरकाल एवोपलम्भात् झटिति प्रत्यक्षत्वग्रहः, यथा गमनक्रियाऽव्यवहितोत्तरकाल पूर्वोत्तरदेशसंयोगोपलम्भः, कस्यचित्तु कालान्तरेणोपलम्भान्न तत्र झटिति प्रत्यक्षत्वग्रहः। निर्बलस्यापन्नस्य वा ताडने निन्दने च कालान्तरेण स एव सबलः सम्पन्नो वा तस्यैव कर्मणः फलं जनयति कर्मकर्तरि। तत्र च सत्यां सामग्र्यां तस्यैव कर्मणः फलमिति प्रत्यभिजानीयात्। नोचेत् नेति विशेषः। सर्वथा कर्मफलं प्रत्यक्षमेवेत्यत्र न विशयलेशोऽपीति बोद्धव्यम्।

धर्मस्य परिवर्तनार्हत्वम्

इदमत्र तात्पर्यम्—फलविशेषसाधनत्वेन क्रियाणां धर्मत्वे तत्फलानां च प्रत्यक्षत्वे प्रत्यक्षत्वापादकसा-

मप्रथायां सत्यां तादृशफलानुसारेण धर्मोऽपि विपरिवर्तनीयः। अत एव कृतत्रेताद्वापरादिभेदेन तत्र तत्र धर्मभेदः स्मृतिपुराणादिषूपनिबद्धः संगच्छते। "अन्ये कृतयुगे धर्माः त्रेतायां द्वापरे युगे। अन्ये कलियुगे नृणां युगरूपानुसारतः" (पराशरस्मृतिः अ० १-८८) इत्यादिवचनानि पर्यालोचनीयानि। अन्यथा कृतयुगे धर्मत्वेनाभिमतस्य कर्मणः कलियुगेऽधर्मत्वेनोपदेशो व्यर्थ एव स्यात्। अत एव कलिवर्ज्यानां कलावनुष्ठानेऽधर्मत्वन्तत्र तत्राभिमतं दृश्यते, तत्र तादृशफलसिद्धेरनिश्चयात्। यदि चाप्रत्यक्षमेव कर्मफलम्, तर्हि कथमश्रेयस्करत्वमिदानीं पूर्वं च श्रेयस्करत्वमित्यवगम्यते। वचनं तु व्यर्थमेवेत्युक्तं प्राक्। किंच ऋतौ भार्यामुपेयादिति धर्मस्यापि "यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्। स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः" (आचाराध्यायः ८१) इतियाज्ञवल्क्यवचनेन परिवर्तनं कृतमेव। तत्र च हेतुरपि निर्दिष्टः 'स्त्रियो रक्ष्या यतः स्मृता' इति। एवं च स्त्रीरक्षणार्थमधर्मोऽप्युपदिष्टः। न च विकल्पेन तथाभिधानात्सोऽपि धर्म एव, वचनात्प्रवृत्तिर्वचनान्निवृत्तिरिति किल सिद्धांतो वैदिकधर्मस्य, "तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ" इतिभगवद्वचनादिति वाच्यम्, प्रत्यक्षतो हेतूपन्यासेऽपि यदि धर्मत्वमेव, तर्हि हेतुदर्शनाच्चेति शास्त्रव्याकोप एव। तदनुसारेणास्याप्रामाण्ये तु अधर्मस्यापि धर्मत्वव्यपस्थापनेऽनुकूलः खलु याज्ञवल्क्यः। तस्मान्न शास्त्राज्ञयैव धर्मविनिर्णयः कर्तव्यः। शास्त्रीयवचनानामुद्देश्यं मनसिकृत्य तदनुसारेणैव वर्तितव्यमित्येवास्माकम्मतम्। यदि शास्त्राज्ञैवेति विनिर्णयस्तर्हि भवतु नामात्रिवचनात् व्यभिचारः प्राकट्येन। इदं हि तद्वचनम् "न स्त्री दुष्यति जारेण ब्राह्मणो वेदकर्मणा। नापो मूत्रपुरीषाभ्यां नाग्निर्दहति कर्मणा" (अ-

त्रिस्मृतिःश्लोकः १६०)इति। अत्रोक्तं सर्वमपि धर्मोऽस्मिन् काले चेत्, अनुष्ठेयं प्रकाशम्। एवं मनुरपि "न मांसभक्षणे दोषो न मद्ये न च मैथुने। प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला" अ० ५।५६ इति। अस्य नियामकत्वन्तु पूर्वापरसंदर्भमूलकहेतुमनुसृत्यैव। तस्माच्छास्त्रहेतुम्मनसिकृत्यैव धर्माधर्मविनिर्णयः कर्तव्यः। अत एव न शास्त्रमस्तीति प्रयोक्तव्यम्, वचने नातिभारोस्तीत्यादिवचनानि संगच्छन्ते। अन्यथा गोहिंसायामपि सत्यमेव वक्तव्यं स्यात्, "सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियमिति मनुवचनात्। एवं च क्रियाणां स्वरूपतः सवत्र सामान्येऽपि फलस्य परिस्थित्यनुसारेण निष्पत्तेरनिष्पत्तेश्च धर्मविनिर्णयः सर्वथा परिस्थितिदर्शकेतिहासाधीन इत्येव पर्यवसितम्। अन्यान्यप्युदाहरणानि ऊहनीयानि, विस्तरभयान्नोपन्यस्यन्ते।

एवं च क्रियाफलं दृष्टमेव नादृष्टमुभयं वा। तदनुसारेण देशकालपरिस्थितिमनुसृत्य परिवर्तनमपि योग्यफलपर्यवसायि भवितुमर्हति. इति सिद्धम्।

उक्तप्रबन्धानुवादः

अत्र प्रबन्धे—वेदशब्दार्थो न निर्णेतुं शक्यः, शक्यत्वेऽपि लौकिकचोदनातिरिक्तं शास्त्रं नाम किमपि न साधयितुं शक्यते। ऋषयो मन्त्रद्रष्टार इति वचनानुसारेण प्रमाणान्तरेणार्थमुपलभ्य वेदानां ऋष्यादिविरचितत्वमेवोरीकर्तव्यम्। तथाच तदनुभवमूलत्वमेव वेदस्य। तादृशानुभव एवेतिहासशब्देन युक्तिशब्देन च व्यवह्रियते। स्वर्गादिकमपि तेषांप्रत्यक्षमेव। अन्यथा हि कथन्तत्र शक्तिग्रहः? सुखविशेष एव हि स्वर्गः। कथं च सोऽनुभवयोग्योऽपि सुखान्तरमिव नानुभूतो भवति। न हि कदाचिदप्रत्यक्षं सामग्र्यभावेन सर्वदाऽप्रत्यक्षम्भवति।

अन्यथा ब्राह्मण्यादिकमपि कस्यापि न प्रत्यक्षं स्यात् । न हि कस्यापि कर्मणः फलमप्रत्यक्षं नाम । इयान् विशेषः—यत्कस्यचित्कर्मणः फलं कारणानन्तरमेव प्रत्यक्षम्, कस्यचित्तु किंचित्कालव्यवधानेनेति । जन्मान्तरेऽपि त्वन्ततो गत्वा प्रत्यक्षत्वं सुखविशेषस्योरीकर्तव्यमेवेति दृष्टफलकत्वमेव सर्वेषां कर्मणाम् । एवं च सति धर्माधर्मपरिवर्तनमपि यथाकालं यथायोगं च योग्यमेव भवति । अत एव हि कलिवर्ज्यप्रकरणादिकमुपपद्यते । अन्यथा हि कालान्तरधर्माणां कालान्तरेऽधर्मत्वव्यवस्थापनं कथमिवोपपद्येत ? सम्मतमिदं प्राचीनानामपि—यत् धर्मोऽधर्मो वा कथमपि विपरिवर्तनमर्हतीति । अत्र प्रसंगे इदमपि सूच्यते—धर्मपरिवर्तनमिदं हेतुमपेक्ष्यैव कुत्रचन कुत्रचन क्रियते इत्यवश्यमेवोरीकर्तव्यम् । अन्यथा—"यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन् । स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः" इतियाज्ञवल्क्यवचने ऋतुकालगामित्वनियमपरिवर्तने 'स्त्रियो रक्ष्या यतः स्मृताः' इति स्त्रीरक्षणस्य हेतुत्वं प्रतिपादितं कथमुपपद्यते ? अत्र च प्रत्यक्षतो हेतूपन्यासस्थलेऽपि यदि धर्मत्वम्, तर्हि 'हेतुदर्शनाच्चेति, सूत्रस्य कथं न व्याकोप इति प्रश्ने तु इदमेव प्राचीनानामपि वक्तव्यम्—यत् कामक्रोधाद्यसद्धेतुमूलकत्वे न धर्मत्वमन्यथा तु धर्मत्वमिति । एवं च सति हि प्रत्यक्षमूलकत्वमेव सर्वत्र धर्माधर्मव्यवस्थापनस्येत्यवश्यमेवोरीकर्तव्यमित्यपि स्पष्टतरमुपपादितम् ।

उक्तप्रबन्धसमालोचनम्

अत्र च पूर्वमेवास्माभिः फलस्य तत्साधनत्वस्य वा प्रत्यक्षादिना नावगम इति वार्तिकाद्यवष्टम्भेन विवेचितमेव । एवमप्यत्र धर्मस्याप्रत्यक्षत्वे यानि यानि दूषणानि संसूचितानि, तेषामनवकाशत्वं हि अवश्यमेव निरूपणीयमि-

ति तदर्थं प्रथमतः प्रवर्तामहे ।

ऋषीणां मन्त्रद्रष्टृत्वविचारः । सत्यं 'ऋषयो मन्त्रद्रष्टारः इतिवचनं प्राचीनानामपि सम्मतम् । अत्रेदमेव विचारणीयम्—किमुक्तवचनेन मन्त्रद्रष्टृत्वमात्रमुपन्यस्यते, उत मन्त्रार्थद्रष्टृत्वमपि ? न हि मन्त्रशब्देन मन्त्रार्थो लक्ष्यत इति कल्पने किमपि प्रमाणमस्ति । मन्त्रद्रष्टृत्वं हीदं यदि प्रत्यक्षेणार्थमनुसन्धाय तस्यैव श्रेयस्करस्य पाश्चात्यानामनुष्ठानार्थं परमकारुणिकै महर्षिभिर्निर्मितत्वम्, तर्हि इदमेवात्र द्रष्टव्यम्—कथं वा विश्वामित्रादिदृष्टानामेव मन्त्राणामनेकेषां भिन्नभिन्नेषु मण्डलेष्वाम्नानमुपपद्यते ? बहव एव विश्वामित्रास्तत्र मन्त्रद्रष्टार इति कल्पनायामपि हीदमेवात्र विचारणीयम्—कथं वा योगिनामपि मन्त्रार्थदर्शनं संजातमिति । न हि लौकिकं प्रत्यक्षं योगिनामपि धर्माधर्मविषयं सम्भवति । अन्यथा ह्यस्मदादीनामपि प्रत्यक्षत्वापत्त्या स्वभाववादो हि न प्रसज्येत । अलौकिकं प्रत्यक्षं ज्ञानलक्षणप्रत्यासत्तिनिबन्धनं प्रमाणान्तरेण धर्माधर्मज्ञानमन्तरा न सम्भवति । एतेन योगजसन्निकर्षोऽपि व्याख्यातः । योगजसन्निकर्षोऽपि हि योगित्वसिद्ध्यनन्तरमेव भवति । योगित्वं च न कर्मानुष्ठानमन्तरा सम्भवतीति न चोदनाप्रामाण्यमन्तरा तस्यापि सिद्धिः । तदुक्तं शंकरभगवत्पादैः—शक्यं कपिलादीनामप्रतिहतज्ञानत्वादिति चेन्न । सिद्धेरपि सापेक्षत्वात् । धर्मानुष्ठानापेक्षा हि सिद्धिः । स च धर्मश्चोदनालक्षणः । तथाच पूर्वसिद्धायाश्चोदनाया अर्थो न पश्चिमसिद्धपुरुषवचनेनातिशंकितुं शक्यते " इति । तदिदं सिद्धम्—न मन्त्रनिर्मातृत्वेनर्षीणामृषित्वम्, किन्तु मन्त्रद्रष्टृत्वेनेत्यकामेनाप्यूरीकर्तव्यम् । मन्त्रदर्शनं चेद मन्त्राणां शब्दरूपत्वात् तच्छ्रवणरूपं प्रतीयते । तच्च यदि

प्राथमिकम्, तर्हि विश्वामित्रतः पूर्वमेतेषां मन्त्राणामध्ययनाध्यापनपरम्पराविषयत्वन्नासीदिति वक्तव्यम्। तदपि 'अग्निमीडे, इत्यादिप्रपाठकचतुःषष्टीनामेवंरूपेण सर्वदाऽसत्त्वं गमयेदिति "प्रपाठकचतुःषष्टिनियतस्वरकैः पदैः। लोकेष्वप्यश्रुतप्रायैः ऋग्वेदं कः करिष्यती" ति भट्टवार्तिकविरोधादसङ्गतम्। न ह्यस्मिन् पक्षेऽपि विश्वामित्रकृतानामन्यकृतानाञ्चेदानीन्तनक्रम एव पूर्वमप्यासीदिति कल्पनं प्रामाणिकं प्राचीनाचार्यसम्मतं च भवति। अतो मन्त्रविशेषसाधनेनैव तदृषित्वमित्यवश्यमूरीकर्तव्यम्। मन्त्रसिद्धश्च मन्त्रर्षिरिति निष्कर्षः। अत एव विष्णुसहस्रनामादीनामेकैकनाम्नोऽपि तत्तदुपासकर्षिस्मरणादिनैव फलोपयोगित्वमिति भगवत्पादभाष्यादौ व्यक्तम्। मन्त्रसाधने तु गुरुपरम्पराश्रवणमप्यत्यन्तमेवोपयुक्तं भवति। अन्यथा साधनमिदं सफलं स्यादुत विफलमिति शंका हि कथमपि न निवार्येत। विश्वामित्रादीनान्तु मन्त्रविशेषसाधनाधिकारस्तपोविशेषानन्तरं तत्तद्देवताविशेषानुग्रहेणैव सञ्जातः। अद्वैतसिद्ध्यादौ हि स्वप्नोपलब्धमन्त्रविशेषस्य साध्यमानस्य फलविशेषसाधनत्वं यदुपन्यस्तम्, तदपीदानीमुपपद्यते, जन्मान्तरसाधितस्य मन्त्रस्यैव तदानीं स्मरणेन निर्वाहात्। अत्र च स्मरणे तत्तद्देवतानुग्रह एव कारणम्, न त्वन्यत्किमपि। "यो यस्यार्थपत्यमिच्छन् स्तुतिं प्रयुंक्ते, तद्देवताकः स मन्त्रो भवति" इतिनैरुक्तवचनमप्यत्रैवानुकूलम्। अत्र हि वचने यस्येन्द्रादेर्यो हि स्तुतिं येन मंत्रेण प्रयुंक्ते, साधयति तद्देवताकः स मन्त्रो भवतीति तात्पर्यं विवक्षितम्। तथाचेन्द्रमन्त्राणामग्न्यादिस्तुतौ विनियोगविषयोऽपि व्याख्याताः। कदाचनेतिमंत्रेण हि अग्निरेव स्तुतोऽर्थपतित्वं संपादयामासेति हि पर्यवसन्नम्। एतेन—"शन्नो देवीरभिष्टये आपो

भवन्तु पीतये । शंयोरभिस्रवन्तु नः" ॥ "उद्बुध्यस्वाग्ने" इत्यादीनां शनैश्चरादिस्तुतौ स्मार्तो विनियोगो दृश्यमानोऽपि व्याख्यातः । यत्तु छान्दोग्योपनिषदादौ प्राणविद्यादिषु "प्रस्तोतर्या देवता प्रस्तावमन्वायत्ते"त्यादिना चाक्रायणेन देवताज्ञानं विनाऽनुष्ठानेऽभिशापादिकमुपन्यस्तम्, तदप्यन्येषामृत्विजां यत्किंचिदेव तज्ज्ञानं विद्यमानमपि न समीचीनमिति गमयति । अनुष्ठातारो हि सर्वे सामान्यतो विशेषतो वा परोक्षतया मन्त्रार्थविद एव, परन्तु तदानीं चाक्रायणस्येव तत्तन्मन्त्रसिद्धिर्न संजातेति स्वीकरणीयम् । अन्यथा हि कल्पसूत्रादिभिः प्रस्तावादीनां देवतास्वरूपमपि सामान्यतोऽपि न ज्ञातं तदाऽऽसीदिति कल्पनायां हि महाननाश्वासः सम्पद्येत । इदानीमपि सामान्यतो मन्त्रदेवताज्ञानपूर्वकमेव याज्ञिकाः प्रस्तावादिकमाचरन्तीति स्थिते कथं पूर्वं तन्नासीदिति कल्पनं संभवति । तथाच तत्तन्मन्त्रसिद्धस्य हि सन्निधाव सिद्धमन्त्राणां मन्त्रोच्चारणमपि तदपूजनेऽफलं भवत्येव सिद्धान्तः । अत एव तत्पूजानिष्पत्त्यनन्तरमेव तदनुमत्या संपादितं प्रस्तावादिकं सफलं संवृत्तमिति तत्तदुपासकानामेव तत्तदृषित्वेन व्यवहारः, न तु तत्तन्मन्त्रद्रष्टृणाम् । अत्र चान्येषां साधकानामपि ऋषितुल्यत्वं भवत्येव । ऋषित्वव्यवहारस्तु प्रथमस्यै वसाधकस्येत्यंगीकारे न कोऽपि दोषः । नह्यस्मिन् पक्षे मन्त्राणामेकर्षिकाणां केषांचन प्रथममण्डले केषांचन मंडलांतरे चाम्नानमप्युपपन्नम् । न ह्येकेन क्रमेणैव मन्त्राः साधनीया इति कोऽपि नियमः समस्ति, नापि वाऽध्ययनाध्यापनपरंपरायामेतेषां मन्त्राणां विश्वामित्रतः पूर्वमप्यभाव इति कल्पनमप्यप्रामाणिकमिदानीं कल्पनीयम्भवति । सर्वथा तु मन्त्रद्रष्टारो ऋषय इति वचनमर्थमनुसंधाय मन्त्रनिर्मातृत्वपरमेवेति न कथमपि युक्तमिति तदनुसारेण मन्त्रार्थज्ञानं

केषामपि मन्त्रतः पूर्वमासीदिति कल्पनं न विकल्पसहम् ।

मन्त्रेण देवतासाक्षात्कर्तृत्वरूपर्षित्वे प्रमाणानि

यत्तु अनुक्रमणिकाभाष्ये-याजनाध्यापनं चैवमविचार्य पठेद्द्विजः। ऋषिछंदो ह्यविज्ञातमवीर्यं कर्म निष्फलम्॥ बृहद्देवतायाम्—अविदित्वा ऋषिच्छन्दो दैवतं योगमेव च। योऽध्यापयेज्जपेद्वापि पापीयान् जायते तु सः॥ मन्त्राणां देवताविद्यः प्रयुंक्ते कर्म कर्हिचित्॥ जुषन्ते तस्य देवासो हविर्नादेवताविदः॥ माध्यंदिनानुक्रमणिकायां कात्यायनोक्तिश्च—न हि कश्चिदविज्ञाय याथातथ्येन देवताः। श्रौतानां कर्मणां विप्रः स्मार्तानां चाश्नुते फलमिति। मनुः—अनभ्यासेन वेदानामाचारस्य च वर्जनात्। आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति॥ शिक्षायामपि—मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥ अविचार्य पठेद्वेदं शिष्यानध्यापयेत्ततः। म्रियते तु भवेत्पापी यमलोकं स गच्छति॥ इति। चातुर्मास्यमाहात्म्ये—अतिसूक्ष्मविचारोऽयं दुर्ज्ञेयं स्थूलदृष्टिभिः। तथाप्येतद्विचार्यं स्यात्स्वस्वज्ञानानुसारतः। यस्तु सत्यधिकारेपि ज्ञाने वा पठनेपि वा। प्रयत्नं नैव कुर्वीत स मृतो जायते पशुः॥ इति। मन्त्रदेवतायाः अज्ञानेन कर्मकरणे दोषः छांदोग्योपनिषद्युक्तः प्रथमप्रपाठके—मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणकमुवास सहेभ्यं कुल्माषान् खादन्तं बिभिक्षे। तँ होवाच नेतोऽन्ये विद्यन्ते यच्च ये म उपनिहिता इत्येतेषां मे देहीति होत्राच तानस्मै प्रददौ। हन्तानुपानमित्युच्छिष्टं वै मे पीतँ स्यादिति। स होवाच न स्विदेतेप्युच्छिष्टा इति। न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानमिति। स ह खादित्वातिशेषान्

जायाया आजहार, साथ एव सुभिक्षा बभूव, तान् प्रतिगृह्य निदधौ। स ह प्रातः संजिहान उवाच यदुतान्नस्य लभेमहि २ धनमात्रा ँ राजासौ यक्ष्यते, स मा सर्वैरार्त्विज्यैर्वृणीतेति। तं जायोवाच हन्त पत इम एव कुल्माषा इति तान् खादित्वाऽमुं यज्ञं विततमेया य, तत्रोद्गातॄन् स्तोष्यमाणानुपोपविवेश, स ह प्रस्तोतारमुवाच प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीत्येवमेवोद्गातारमुवाचोद्गातर्या देवतोद्गीथ-मन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीत्येवमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेद-विद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति ते ह समारतास्तूष्णी मासांचक्रिरे ॥१०॥ अथ हैनं यजमान उवाच भगवन्तं वा अहम् विविदिषाणीत्युषस्तिरस्मि चाक्रायण इति होवाच, स होवाच भग-वन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषम् भगवतो वा अहमवित्त्वा-न्यानवृषि। भगवांँ स्त्वेव मे सर्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत एव समतिसृष्टाः स्तुवताम्, यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्यादिति। तथेति ह यजमान उवाचाथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्य-तीति मा भगवानवोचत्, कतमा सा देवतेति? प्राण इति होवाच, सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशंति प्राणमभ्यु-ज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्, तथोक्तस्य मयेत्यथ हैनमुद्गातोपससादोद्गात-र्या देवतोद्गीथमन्वायत्ता तां वेदविद्वानुद्गास्यसि मूर्धा ते विपति-ष्यतीति मा भगवानवोचत्, कतमा सा देवतेत्यादित्य इति होवाच सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति। सैषा

देवतोद्गीथमन्वायत्ता तां चेदविद्वानुदगास्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति, अथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्, कतमा सा देवतेत्यन्नमिति होवाच, सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति तथोक्तस्य मयेति॥ ११ ॥

भाष्ये—उद्गीथोपासनप्रसंगेन प्रस्तावप्रतिहारविषयमप्युपासनं कर्तव्यमिति आरभ्यते॥ आख्यायिका सुखावबोधार्था॥ मटच्यः अशनयस्ताभिर्हतेषु नाशितेषु सस्येष्वित्यर्थः॥ ततो दुर्भिक्षे जाते आटिक्या अनुपजातपयोधरादिस्त्रीव्यंजनया सह जाययोषस्तिर्ह नामतः, चक्रस्यापत्यं चाक्रायणः, इभो हस्तीति तमर्हतीतीभ्य ईश्वरो हस्त्यारोहो वा तस्य ग्राम इभ्यग्रामः, तस्मिन् प्रद्राणकोऽन्नालाभात्तु द्राकुत्सायां गतौ कुत्सितां गतिं गतोऽन्त्यवस्थां प्राप्त इत्यर्थः। उवास उषितवान्। कस्यचिद् गृहमाश्रित्य सोऽन्नार्थमटन्निभ्यं कुल्माषान् खादन्तं भक्षयंतं यदृच्छयोपलभ्य बिभिक्षे याचितवान्। तमुषस्तिं सह उवाचेभ्यो नेतोस्मात् मया भक्ष्यमाणादुच्छिष्टराशेः कुल्माषा अन्ये विद्यन्ते। यच्च ये राशौ मे मम उपनिहिताः प्रक्षिप्ता इमे भोजने किं करोमीत्युक्तः प्रत्युवाचोषस्तिरेतेषामेतानित्यर्थः, मे मह्यं देहीति होवाच। तान् स इभ्योऽस्मा उषस्तये प्रददौ दत्तवान्। अनुपानीयं समीपस्थमुदकं हन्त गृहाण। अनुपानमित्युक्तः प्रत्युवाचोच्छिष्टं वै मे ममेदमुदकं पीतं स्याद्यदि पास्यामीत्युक्तवन्तं प्रत्युवाचेतरः—किं न स्विदेते कुल्माषा अप्युच्छिष्टा इत्युक्त आहोषस्तिर्न वै अजीविष्यन्न जीविष्यामीमान् कुल्माषान्

न खादन्न भक्षयन्निति होवाच, काम इच्छातो मे मम उदकपानं लभ्यत इत्यर्थः। अतश्चैतामवस्थां प्राप्तस्य विद्याधर्मयशोवतः स्वात्मपरोपकारसमर्थस्यैतदपि कर्म कुर्वतो नागःस्पर्श इत्यभिप्रायः। तस्यापि जीवितम्प्रत्युपायान्तरे सति जुगुप्सितमेतत्कर्म दोषाय। ज्ञानावलेपेन कुर्वतो नरकपातः स्यादेवेत्यभिप्रायः।

स खादित्वाऽतिशेषानतिशिष्टान् जायायै कारुण्यादाजहार। साऽऽटिश्चयग्र एव कुल्माषप्राप्तेः सुभिक्षा शोभनभिक्षा लब्धान्ना इत्येतद्, बभूव संवृत्ता; तथापि स्त्रीस्वाभाव्यादनवज्ञाय कुल्माषान् पत्युर्हस्तात् प्रतिगृह्य निदधौ निक्षिप्तवती, स तस्याः कर्म जानन् प्रातरुषःकाले संजिहानः शयनं निद्रां वा परित्यजन्नुवाच पत्न्या शृण्वन्त्याः, यद्यदि बतेति खिद्यमानोऽन्नस्य स्तोकं लभेमहि, तद्भुक्त्वान्नं समर्थो गत्वा लभेमहि धनमात्रां धनस्याल्पं यतोऽस्माकं जीवनं भविष्यति। धनलाभे च कारणमाह-राजासौ नातिदूरे स्थाने यक्ष्यते, यजमानत्वात्तस्यात्मनेपदम्। स च राजा मां पात्रमुपलभ्य सर्वैरार्त्विज्यैः ऋत्विक्कर्मभिः ऋत्विक्कर्मप्रयोजनायेत्यर्थः। वृणीत, एवमुक्तवन्तं जायोवाच—हन्त गृहाण हे पते! इम एव ये मद्धस्तेषु निक्षिप्तास्त्वया कुल्माषा इति। तान् खादित्वामुं यज्ञं राज्ञा विततं विस्तारितं ऋत्विग्भिरेयाय। तत्र गत्वोद्गातृपुरुषानागत्य, आस्तुवन्त्यस्मिन्नित्यास्तावः, तस्मिन्नास्तावे स्तोष्यमाणानुपोप विवेश, समीप उपविष्टस्तेषामित्यर्थः। उपविश्य सह प्रस्तोतारमुवाच-हे प्रस्तोतरित्यामन्त्र्याभिमुखीकरणाय। या देवता प्रस्तावं प्रस्तावभक्तिमनुगताऽन्वायत्ता तां चेद्देवतां प्रस्तावभक्तेरविद्वान् प्रस्तोष्यसि विदुषो मम समीपे मदपरोक्षे चेद्विपतेत्तस्य मूर्धा। कर्ममात्रविदामनधिकार एव कर्मणि स्यात्। तच्चानिष्टम्; विदुषां कर्मदर्शनाद्दक्षिणमार्गश्रुतेश्च।

अनधिकारे चाविदुषामुत्तर एवैको मार्गः श्रूयेत । न च स्मार्तकर्मनिमित्त एव दक्षिणः पन्थाः, यज्ञेन दानेनेत्यादिश्रुतेः, तथोक्तस्य मयेति विशेषणात् । विद्वत्समक्षमेव कर्मण्यनधिकारो न सर्वत्र । अग्निहोत्रस्मार्तकर्माध्ययनादिषु चानुज्ञायास्तत्र दर्शनात् कर्ममात्रविदामप्यधिकारः सिद्धः कर्मणि इति । मूर्धा ते विपतिष्यतीत्येवोद्गातारं प्रतिहर्तारमुवाचेत्यादि समानमन्यत् । ते प्रस्तोत्रादयः कर्मभ्यः समारता उपरताः सन्तो मूर्धपातभयात्तूष्णीमासांचक्रिरेऽन्यच्चाकुर्वन्तोऽर्थित्वात्, अथानन्तरं ह एनमुषस्तिं यजमानो राजोवाच । भगवन्तं वै अहं विविदिषाणि वेदितुमिच्छामि इत्युक्त उषस्तिरस्मि चाक्रायणस्तवापि श्रोत्रपथमागतो यदिति होवाचोक्तवान् । स ह यजमान उवाच । सत्यमेवमहं भगवन्तं बहुगुणमश्रौषं सर्वैश्चर्त्विक्कर्मभिरार्त्विज्यैः पर्यैषिषं पर्येषणं कृतवानस्मि । अन्विष्य भगवतो वा अहमवित्त्याऽलाभेनान्यानिमानवृषि वृतवानस्मि । अद्यापि भगवांस्त्वेव मे मम सर्वैरार्त्विज्यैः ऋत्विक्कर्मार्थमस्त्वित्युक्तस्तथेत्याहोषस्तिः किं त्वथैव ह्येत एव त्वया पूर्वं वृता मया समतिसृष्टा मया सम्यक् प्रसन्नेनानुज्ञाताः सन्तः स्तुवताम् । त्वया त्वेतत्कार्यम्—यावत्त्वेभ्यः प्रस्तोत्रादिभ्यः सर्वेभ्यो धनं दद्याः प्रयच्छसि, तावन्मम दद्याः इत्युक्तस्तथेति ह यजमान उवाच । अथ हैनमौषस्त्यं वचः श्रुत्वा प्रस्तोतोपससादोषस्तिं विनयेनोपजगाम । प्रस्तोतर्या देवतेत्यादि मा मां भगवानवोचत् पूर्वम्—कतमा सा देवता या प्रस्तावभक्तिमन्वायत्तेति पृष्टः, प्राण इति होवाच युक्तं प्रस्तावस्य प्राणो देवतेति । कथम् ? स्थावरजंगमानि भूतानि प्राणमेवाभिसंविशन्ति, प्रलयकाले प्राणमभिलक्षयित्वा प्राणात्मनैवोज्जिहते प्राणादेवोद्गच्छन्तीत्यर्थः उत्पत्तिकाले । सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रास्तोष्यः

प्रस्तवनं प्रस्तावभक्तिं कृतवानसि यदि, मूर्धा शिरस्ते व्यपति-ष्यत् पतितमभविष्यत् तत्काले मूर्धा ते विपतिष्यतीत्यतः साधु कृतं त्वया निषिद्धकर्मणो यदुपरममकार्षीरित्यभिप्रायः। तथो-द्गाता पप्रच्छ कतमा सोद्गीथभक्तिमनुगताऽन्वायत्ता देवतेति पृष्टः—आदित्य इति होवाच सर्वाणीमानि भूतान्यादित्यमुच्चैरूर्ध्वं सन्तं गायन्ति शब्दायन्ति; स्तुवन्तीत्यभिप्रायः। उच्छब्दसामान्यात् प्रशब्दसामान्यादिव प्राणोऽतः। सैषा देवतेत्यादि पूर्ववत्, एवमेवा हैनं प्रतिहर्तोपससाद कतमा सा देवता प्रतिहारमन्वायत्ता इति पृष्टोऽन्नमिति होवाच सर्वाणि ह वा इमानि भूतानि अन्नमेवा-त्मानं प्रति सर्वतः प्रतिहरमाणानि जीवन्ति। सैषा देवता प्रतिशब्द-सामान्यात्प्रतिहारभक्तिमनुगता। समानमन्यत्। तथोक्तं मयेति। प्रस्तावोद्गीथप्रतिहारभक्तिः प्राणादित्यान्नदृष्ट्योपासनेति समु-दायार्थः। प्राणाद्यापत्तिः कर्मसमृद्धिर्वा फलमिति—इत्युक्तम्। अनेन हि मन्त्रसिद्धेस्तत्तद्देवतासाक्षात्कारपूर्वकत्वं स्पष्टमेव गम्यते। तथाच पुरश्चरणादिना मन्त्रसाधनप्रयुक्तमेवर्षित्वम्, न तु तत्तन्मन्त्रविरचयितृत्वप्रयुक्तमित्येवोरीकर्तव्यम्।

इदमेवाभिप्रेत्योक्तं देवीरहस्ये तन्त्रे—"षष्टिकल्पसहस्राणि येनैव विहितो जपः। तथाब्दषष्टिलक्षाणि षष्टिजन्मान्तरेषु च॥ पुरश्चर्याकरो देवि सर्षिरित्यभिधीयते॥" इति॥

श्रीमद्वाल्मीकिरामायणमप्यत्रानुकूलम्। तद्यथाः—

कृत्वा शापसमायुक्तान् पुत्रान् मुनिवरस्तथा।
शुनःशेपमुवाचार्तं कृत्वा रक्षां निरामयम्॥
पवित्रपाशैरासक्तो रक्तमाल्यानुलेपनः।
वैष्णवं यूपमासाद्य वाग्भिरग्निमुदाहरत्॥

इन्द्रविष्णू सुरश्रेष्ठौ स्तुहि त्वं मुनिपुत्रक ।
इमे तु गाथे द्वे दिव्ये गायेथा मुनिपुत्रक ॥
अम्बरीषस्य यज्ञेऽस्मिन् ततः सिद्धिमवाप्स्यसि ॥
शुनःशेफो गृहीत्वा ते गाथे द्वे सुसमाहितः ।
त्वरया राजसिंहं तमम्बरीषमुवाच ह ॥
राजसिंह महासत्त्व शीघ्रं गच्छामहे सदः ।
निर्वर्तयस्व राजेन्द्र दीक्षां च समुपाविश ॥

इति (वा० रा० बा० कां० स० ६२)

ननु "हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजपुत्र आसे" त्यादिबह्वृच-ब्राह्मणोक्तेतिहासविरुद्धोऽयं कथमुपपद्यत इति चेत्, अम्बरीषस्यैव हरिश्चन्द्र इति संज्ञान्तरमित्यविरोधस्य नेयत्वात् ॥ २७।२६ ॥ इति तद्व्याख्या ।

अनेन चेदं स्पष्टमवगम्यते यत् शुनःशेफर्षिकाः ऐन्द्रादिमन्त्राः शुनःशेफतः पूर्वमपि अध्ययनसंप्रदायेऽवर्तन्तेति । तथाच पुरश्चर्यादिकृतसाधकत्वप्रयुक्तमेवर्षित्वमिति सिद्धम् । अत्र च केचन मन्त्राः शुनःशेफर्षिकाः पूर्वमपि संप्रदाये आसन् इत्यादिज्ञानार्थं साधकत्वप्रयुक्तमेवर्षित्वमिति विनिर्णयार्थं चैतरेयब्राह्मणगतानि कतिचन वाक्यान्यपि संगृह्णीमः ।

तद्यथा—तस्य ह विश्वामित्रो होतासीज्जमदग्निरध्वर्युर्वसिष्ठो ब्रह्माऽऽयास्य उद्गाता । तस्मा उपाकृताय नियोक्तारं न विविदुः, स होवाचाजीगर्तः सौयवसिर्मह्यमपरं शतं दत्ताहमेनं नियोक्ष्यामीति । तस्मा अपरं शतं ददुस्तं स नियुयोज । तस्मा उपाकृताय नियुक्तायाप्रीताय पर्यग्निकृताय विशसितारं न विविदुः । स होवाचाजीगर्तः सौयवसिर्मह्यमपरं शतं दत्ताहमेनं विशसिष्यामीति ।

तस्मा अपरं शतं ददुः । सोऽसितिन्निःशान एयायाथ ह शुनःशेफ ईचांचक्रेऽमानुषमिव वै मा विशसिष्यन्ति, हन्ताहं देवता उपधावामीति । स प्रजापतिमेव प्रथमं देवतानामुपससार "कस्य नूनं कतमस्यामृतानामित्येतयर्चा, तं प्रजापतिरुवाचाग्निर्वै देवानां नेदिष्ठस्तमेवोपधावेति । सोऽग्निमुपससाराग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चा,तमग्निरुवाच सविता वै प्रसवानामीशे तमेवोपधावेति । स सवितारमुपससाराभित्वा देव सवितरित्येतेन त्र्यृचेन । तं सवितोवाच वरुणाय वै राज्ञे नियुक्तोऽसि तमेवोपधावेति । स वरुणं राजानमुपससारात उत्तराभिरेकत्रिंशता, तं वरुण उवाचाग्निर्वै देवानां मुखं सुहृदयतमस्तन्नु स्तुह्यथ त्वोत्स्रक्ष्याम इति । सोऽग्निं तुष्टावात उत्तराभिर्द्वात्रिंशता । तमग्निरुवाच विश्वान्नु देवान् स्तुह्यथ त्वोत्स्रक्ष्याम इति । स विश्वान् देवांस्तुष्टाव नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चा । तं विश्वेदेवा ऊचुरिन्द्रो वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमस्तन्नु स्तुह्यथ त्वोत्स्रक्ष्याम इति । स इन्द्रं तुष्टाव यच्चिद्धि सत्य सोमपा इति चैतेन सूक्तेनोत्तरस्य च पंचदशभिस्तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा हिरण्यरथं ददौ । तमेतया प्रतीयाय शश्वदिन्द्र इति । तमिन्द्र उवाचाश्विनौ नु स्तुह्यथ त्वोत्स्रक्ष्याम इति । सोऽश्विनौ तुष्टावात उत्तरेण त्र्यृचेन । तमश्विनावूचतुरुषसन्नु स्तुह्यथ त्वोत्स्रक्ष्याम इति । स उषसं तुष्टावात उत्तरेण त्र्यृचेन । तस्य ह स्मर्च्युक्तायां विपाशो मुमुचे कनीय ऐक्ष्वाकस्योदरं भवति उत्तमस्यामेवर्च्युक्तायां विपाशो मुमुचेऽगद ऐक्ष्वाक आस ॥ १६ ॥ तमृत्विज ऊचुस्त्वमेव नोऽस्यान्हः संस्थामधिगच्छेति, अथ हैतं शुनःशेपो नः सवं ददर्श तमेताभिश्चतसृभिरभिषुणाव यच्चिद्धि त्वं गृहे गृह इत्यथैनं द्रोणकलशमभ्यवनिनायोच्छिष्टं च-

न्त्रो भरेत्येतयर्चाऽथ हास्मिन्ननन्तरारब्धे पूर्वाभिश्चतसृभिः सस्वाहाकारामिजुह्वांचकाराथैनमवभृथमभ्यववनिनाय त्वं नो अग्ने वरुणस्य विद्वानित्येताभ्यामथैनमत ऊर्ध्वमग्निमाहवनीयमुपस्थापयांचकार" शुनश्चिच्छेपं निदितं सहस्रादि"ति अथ ह शुनःशेपो विश्वामित्रस्याङ्कमाससाद स होवाचाजीगर्तः सौयवसिर्ऋषे पुनर्मे पुत्रं देहीति। नेति होवाच विश्वामित्रो देवा वा इमं मह्यमरासतेति। स ह देवरातो वैश्वामित्र आस। तस्यैते कापिलेय बाभ्रवाः। स होवाचाजीगर्तः सौयवसिस्त्वं वेहि ह्वयावहा इति। स होवाचाजीगर्तः सौयवसिरांगिरसो जन्मनास्याजीगर्त्तिः श्रुतः कविः। ऋषे पैतामहात्तन्तोर्मापगाः पुनरेहि मामिति। स होवाच शुनःशेपो दर्शुस्त्वा शासहस्तं न यच्छूद्रेष्वलप्सत गवां त्रीणि शतानि त्वमवृणीथा मदंगिर इति। स होवाचाजीगर्तः सौयवसिस्तद्वै मा तात तपति, पापं कर्म मया कृतम्। तदहं निन्हुवे तुभ्यं प्रतियन्तु शता गवामिति। स होवाच शुनःशेपो-यः सकृत्पातकं कुर्यात्कुर्यादेनत्ततो परम्। नापागाः शौद्रान्न्यायादसन्धेयं त्वया कृतमित्यसंधेयमिति ह विश्वामित्र उपससाद। स होवाच विश्वमित्रो भीम एव सौयवसिः शासेन विशिशासिषुः। अस्थान्मैतस्य पूत्रो भूर्ममैवोपेहि पुत्रतामिति। स होवाच शुनःशेपः स वै यथा नो ज्ञपया राजपुत्र तथा वद। यथैवांगिरसः सन्नुपेयां तव पुत्रतामिति। स होवाच विश्वामित्र ज्येष्ठो मे त्वं पुत्राणां स्यास्तव श्रेष्ठा प्रजा स्यात्। उपेयादेवं मे दायं तेन वै त्वोपमंत्रय इति। स होवाच शुनःशेपः संज्ञानानेषु वै ब्रूयात्सौहार्घ्याय मे श्रियै। यथाहं भरत ऋषभोपेयां तव पुत्रतामिति। अथ ह विश्वामित्रः पुत्रानामन्त्रयामास मधुच्छन्दाः शृणोत न ऋषभो रेणुरष्टकः। ये के च भ्रातरः स्थ नास्मै ज्यैष्ठ्याय कल्पध्वमिति॥ १०॥ तस्य ह विश्वामित्र-

स्यैकशतं पुत्रा आसुः पञ्चाशदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत्कनीयांसस्तद्ये ज्यायांसो न ते कुशलं मेनिरे।ताननुव्याजहारान्तान्वः प्रजा भक्षीष्ठेति। त एतेऽन्ध्राः पुण्ड्रा शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्ति वैश्वामित्रा दस्यूनां भूयिष्ठाः। स होवाच मधुछन्दाः पञ्चाशता सार्धं यन्नः पिता संजानीते तस्मिंस्तिष्ठामहे वयम्। पुरस्त्वा सर्वे कुर्महे त्वामन्वञ्चो वयं स्म सीति। अथ ह विश्वामित्रः प्रतीतः पुत्राँस्तुष्टाव—ते वै पुत्राः पशुमन्तो वीरवन्तो भविष्यथ। ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त माम्। पुर एत्रा वीरवन्तो देवरातेन गाथिनाः। सर्वे राध्यास्थ पुत्रा एष वः सद्विवाचनम्। एष वः कुशिकावीरो देवरातस्तमन्वित। युष्मांश्च दायं म उपेता विद्यां यामु-च विद्मसि। ते सम्यञ्चो वैश्वामित्राः सर्वे साकं सरातयः। देवराताय तस्थिरे धृत्यै श्रैष्ठ्याय गाथिनाः। अधीयत देवरातो रिक्थयोरुभयोर्ऋषिः। जन्हूनां चापि पत्ये दैवे वेदे च गाथिनाम्। तदेतत्परऋकशतगाथं शौनःशेपमाख्यानं तद्धोता राज्ञेऽभिषिक्तायाचष्टे हिरण्यकशिपावासीन आचष्टे हिरण्यकशिपावासीनः प्रतिगृह्णाति, यशो वै हिरण्यं यशसैवैनं तत्समर्द्धयत्योमित्यृचः प्रतिगर एवं तथेति गाथायाः। ओमिति वै दैवं तथेति मानुषं दैवेन चैवैनं तन्मानुषेण च पापादेनसः प्रमुञ्चति। तस्माद्यो राजा विजिती स्यादप्ययजमान आख्यापयेतैवैतच्छौनःशेपमाख्यानं न हास्मिन्नल्पं च नैनः परिशिष्यते। सहस्रमाख्यात्रे दद्याच्छतं प्रतिगरित्र एते चैवासने श्वेतश्चाश्वतरी रथो होतुः पुत्रकामा हाप्याख्यापयेरन् लभन्ते ह पुत्रान् लभन्ते ह पुत्रान्॥ १८॥ इति।

इतिहासादिभिरपि न वेदपौरुषेयत्वक्षतिः। एतेन—तत्तन्मन्त्रेषूद्ग्रथ्यमानमितिहासादिकमपि व्याख्यातम्। अत्रास्मदादिवाक्यापेक्षया वेदवा-

क्यानामयं विशेषोऽवश्यमेवोरीकर्तव्यः—यत् भाविनामपि बहूनामर्थानां तत्र समुल्लेखो वर्तते, अस्मदादिवाक्ये तु न स सम्भवतीति। वेददृष्ट्या हि सर्वस्य भावित्वमेवेति कथमतीतानामितिहासानां वेदेषु संग्रथनमिति हि बहूनामयमाक्षेपः। अत्रेदमेव नैयायिकमतेन समाधानम्, यन्मते प्रलयादिकमूरीक्रियते—यत् तत्तत्कल्पदृष्ट्या भाविनामपि पूर्वतनकल्पदृष्ट्याऽतीतत्वमिति न दोष इति। एतेन पौराणिकं मतमपि व्याख्यातम्, तत्रापि हि सृष्टिप्रलययोरूरीकरणात्। मीमांसकमते तु यत्र न सृष्टिप्रलययोरङ्गीकारस्तत्र न कदाचिदनीदृशं जगत् इति सिद्धांतस्यैवोरीकरणात् अनादित्वमेव संसारस्येति भावित्वमतीतत्वं वा नियतमेकस्य वक्तुं न पार्यत इति न दोषः। व्यक्तं चैतत् "समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात्। स्मृतेश्च" इति सूत्रे शंकरभगवत्पादादिभिर्विवेचितम्।

[ इतिहासानां धर्माप्रामाण्यम् ]

वस्तुतस्तु—इतिहासानां सर्वेषां न धर्मप्रमाणता मीमांसकानामपि सम्मता। प्रमाणान्तराविरोधे तदप्राप्तावेव खल्वर्थवादानामपि धर्मप्रमाणता। तत्र चेतिहासशैलीसमादरणमात्रम्, नत्वितिहासत्वम्। विशदमिदं सर्वेषाम्—यत्सार्थवादा इव निरर्थवादा अपि बहवो विधय उपलभ्यन्ते। तत्रार्थवादसत्त्वे तस्य स्तावकत्वमन्यथा तु विधेरेव स्तावकत्वमपीति। तत्रेदमवश्यमूरीकर्तव्यम्—यद्विनाप्यर्थवादं स्तावकत्वे विधेरेव सिद्धेऽपि आम्नायस्य गतिं वक्तुं प्रभवामो नाम्नायं पर्यनुयोक्तुमिति न्यायेन कथञ्चिदर्थवादानां सार्थक्यसम्पादनार्थमेव पूर्वमीमांसकैः स्तावकत्वमूरीक्रियतेऽन्यथा तस्य वैयर्थ्यादिति। अत एव हि अत्र रक्तपटन्यायावतारणं भाष्यकाराणामुपपद्यते।

यदि हि तेषां स्तावकत्वं विहायानुष्ठेयधर्मबोधकत्वमपि स्यात्, किमित्येतावान् परिश्रमो मीमांसकानाम्। वस्तुतस्तु अर्थवादानां विधित्वं न सम्भवतीति स्पष्टतरमेव शबरस्वामिभिरर्थवादपादे विवेचितम्। व्यवस्थापितं चेदमर्थवादाधिकरणे यत् रुद्र अरोदीदितीतिहासानुसारेण नास्मदादिभिरपि रोदितव्यमिति विधिकल्पना संभवतीति। धर्मो हि नामानुष्ठेयं कर्म, न तु कथंचिदपि मन्त्राद्युपात्तोऽर्थः, न च धर्मः सिद्धवन्निर्दिश्यमानानामितिहासानां तात्पर्यविषयतामर्हति। अत एव हि अर्थवादोद्धारेण मन्त्रोद्धारेण वा धर्मतत्त्वविनिर्णयो न महतोऽप्रतिहतज्ञानान् सिद्धान् विना संभवतीति मन्वादिभिरेव स्मृतिप्रवर्तनं युक्तं नास्मदादिभिरनाश्वासात्। व्यक्तं चैतत्कुमारिलपादा अपि स्मृत्यधिकरणे निरूपयन्ति। तथा चेतिहासानां धर्मप्रमाणताऽतिसूक्ष्मबुद्धिगम्येति यत्र तैर्धर्मनिर्णयस्तत्र विधिसरूपत्वमेवार्थवादस्योरीकर्तव्यम्। अत एव निर्विधिकार्थवादस्थलेऽर्थवादस्यैव विधित्वमिति वृत्तिकाराणां सिद्धान्त उपपद्यते। सर्वथा तु नेतिहासदर्शनमात्रेणार्थानुसन्धानपूर्वकमेव विरचितत्वं वेदस्यापादयितुं शक्यते।

[ अनुवादकत्वेऽपीतिहासानां प्रामाण्यम् ]

अयं भावः—त्रिविधा इतिहासाः। केचित् प्रमाणान्तरप्राप्तार्थविषयाः, केचित् प्रमाणान्तरविरुद्धार्थविषयाः, केचित् प्रमाणान्तराप्राप्ताविरुद्धार्थविषयाः। तत्र प्रथमद्वितीयानामितिहासानां प्रमाणान्तरपूर्वकाणां न धर्मनिर्णयोपयोगित्वम्, तृतीयानान्तु धर्मनिर्णयोपयोगिनां प्रमाणान्तरपूर्वकत्वाभावात् विधिसारूप्यमिति। शब्दप्रमाणं हि सिद्धार्थविषयं कार्यार्थविषयं चेति द्विविधम्। तत्र प्रथमं स्वदृष्ट्या नानुवादकमपि तु पुरुषदृष्ट्यैवानुवादकम्। द्वितीयन्तु पुरुषदृष्टाऽप्यपूर्वम्। अयमा-

शयः—प्रमाणान्तरयोग्यार्थविषयाणि वाक्यान्यनुवादकानि, तद्योग्यविषयाण्यपूर्वाणीति । न हि प्रमाणान्तरयोग्यविषयकत्वमित्येतावता तन्मूलकत्वं संभवति । तदुक्तं देवताधिकरणे भामत्याम्—"तस्माद्यत्र प्रमाणान्तरविरोधस्तत्र गुणवादेन प्राशस्त्यलक्षणेति लक्षितलक्षणा । यत्र तु प्रमाणान्तरसंवादस्तत्र प्रमाणान्तरादिवार्थवादादपि सोऽर्थः प्रसिद्ध्यति । द्वयोः परस्परानपेक्षयोः प्रत्यक्षानुमानयोरिवैकत्रार्थे, प्रमात्रपेक्षया त्वनुवादकत्वम् । प्रमाता ह्यव्युत्पन्नः प्रथमं यथा प्रत्यक्षादिभ्योऽर्थमवगच्छति, न तथा आम्नायतः; तत्र व्युत्पत्त्यपेक्षत्वात्, न तु प्रमाणापेक्षायाम्, द्वयोः स्वार्थेऽनपेक्षत्वात् इत्युक्तम्" इति । अत्र कल्पतरुकाराः—नन्वनुवादकानामर्थवादानामप्रमाणत्वात् कथं विधिभिरेकवाक्यता? अत आह—यत्र त्विति । न स्मृतिवत्सापेक्षत्वम्, किंतु प्रत्यक्षादिभिस्तुल्यविषयत्वम् । न चैतावता भवत्यप्रमाणता; प्रत्यक्षानुमानयोरपि तुल्यविषयत्वादित्यर्थः । तर्हि कथमनुवादकत्वप्रसिद्धिरत आह—प्रमात्रपेक्षयेति । प्रमातरि चरमप्रत्ययाधायकत्वादाश्रयस्यानुवादकत्वसिद्धिरित्यर्थ इति । अनेन हीदं स्पष्टमवगम्यते यदर्थवादानामितिहासानां प्रमाणान्तरयोग्यार्थविषयाणामपि न प्रमाणान्तरसापेक्षत्वम्, किन्तु तुल्यविषयत्वमेवेति । तथा चेतिहासानामपि प्रमाणान्तरमूलिकैव प्रवृत्तिरित्यसम्भवात् का वाऽनुपपत्तिस्तत्रतत्रेतिहासश्रवणस्येति सर्वे एव विवेचयन्तु । यथा चेतिहासेषु कृष्णादिशब्दादीनामुल्लेखोऽपि न विरुद्धस्तथा पूर्वमेव समाननामरूपत्वाच्चेतिसूत्रभाष्यादिसंग्रहेण विवेचितम् । यत्तु वेदस्य संहितीकरणादिकम्, तत्सर्वन्तु प्रमाणान्तरेणार्थमुपलभ्य रचितत्वं नापेक्षते । न हीदानीमपि संहितीकरणं बहुभिः क्रियमाणं तत्तदर्थानुसन्धानपूर्वकं ग्रन्थानां संहितीक-

तृं पुरुषरचितत्वं विना नोपपद्यते। तदिदं सिद्धम्—यथा नेतिहासानां वेदगतानां प्रत्यक्षादिसापेक्षत्वम्, एवं विधिवाक्यानामपि नेतिहासादिमूलकत्वमिति।

[युक्तिप्राबल्यनिरासः]

अत एव युक्तिशास्त्रयोर्विरोधे शास्त्रस्य प्राबल्यमिति उक्तनिबन्धसिद्धांत उपपद्यते। अन्यथेतिहासमूलत्वे युक्तिमूलकत्वे वा शास्त्रस्य कथं न युक्तरेव प्राबल्यं स्यादिति प्रकृतनिबन्धकारा एव विवेचयन्तु। यत्तु प्रकृते युक्तिपदेन तर्कस्यैव ग्रहणम्, नेतिहासस्येति विवेचितम्, तत्रेदमेवास्माकं वक्तव्यम्—यत् प्रकृतप्रश्ने यादृशयुक्तेरुपष्टम्भकत्वं पृष्टम्, तादृशयुक्तेरेव प्राबल्यदौर्बल्यविचारः प्रस्तुत इति सर्वविदितमिदम्। यत्तु तर्कपरत्वशङ्कैव न समुदेतीति युक्तिपदेनेतिहासस्यैव ग्रहणमिति वर्णितम्, तदिदमपि पूर्वमेवेतिहासपरवशत्वस्यापि निरासान्नोपपन्नम्। तथा हीतिहासमूलकत्वं धर्मस्य कथमपि न सम्भवति। इतिहासो हि नाम तात्कालिकानुभवविशेष इति खलु प्रकृतप्रबन्धकाराणामपि सम्मतम्। नच धर्मस्य धर्मत्वमनुभवगम्यं भवितुमर्हति, न हि किया स्वरूपतो धर्मतामर्हति, किन्तु फलविशेषसाधनत्वेनेति खलु मीमांसका मन्यन्ते। व्यक्तं चैतत्कुमारिलवार्तिकोपष्टम्भेन पूर्वमेव विवेचितम्। यागाद्यनुष्ठायिषु धार्मिकत्वप्रसिद्धिर्हि तेषामेव दृष्टया, ये खलु वेदतो यागादेः फलविशेषसाधनत्वं सम्यगवगच्छन्ति।

[धर्मस्याप्रत्यक्षत्वम्]

एतेन—मीमांसकमतरीत्या क्रियायाः स्वरूपत एव धर्मत्वमिति प्रकृतग्रन्थे योऽनुवादः, स न मीमांसकसिद्धान्तानुसारीति सूचितम्। यत्तु न क्रियैव धर्मः, किंतु फलसाधनक्रियाविशेष एव। स च प्रत्यक्ष इति विवेचितमुक्ते प्रबन्धे;

तत्रेदमेवास्माकं प्रष्टव्यम्—कथं क्रियानुष्ठानानन्तरमेव फला- दर्शनेऽपि साध्यसाधनभावोऽनुभवगम्यः ?। साध्यसाधनभावो हि यदनन्तरमेव यस्योत्पत्तिस्तयोः खलु श्रुतिनिरपेक्षानुभवसिद्ध इति व्यपदेशः। न हि सर्वस्य कर्मणोऽनुष्ठानानन्तरमेव किमपि फल- मनुभूयते। यानि पुनर्दृष्टार्थानि कारीर्यादीनि, तेषामपि हि किं- चित्कालव्यवधानेनैव वृष्ट्यादिफलजनकत्वम्। कालव्यवधानेन च संजाता वृष्टिः कारीरीफलमुतान्यफलमिति संशयो हि शास्त्रावगते- नैव साध्यसाधनभावेन परिहरणीयः। यदा च दृष्टफल एवैवं संशयोऽ दृष्टफले का कथेति सर्व एव विजानन्तु। यच्छरीरावच्छेदेन कर्मक- र्तृत्वं तच्छरीरावच्छेदेनैवोपभोग्यत्वमेव दृष्टफलत्वम्, शरीरान्तरा- वच्छेदनोपभोग्यत्वमदृष्टफलत्वमिति विवेकः। तत्र च दृ- ष्टफलानां कारीर्यादीनां साधनताविशेषनिर्णयोऽपि शास्त्रैकनिब- न्धन इत्यवश्यं स्वीकर्तव्यम्। दृष्टफलेषु हि भोजनादिषु सर्वेषाम- ङ्गानां दृष्टविधयैवोपयोग इति सर्वविदितमिदम्। न हि कारीर्या- दिष्वङ्गानां प्रयाजादीनां सर्वेषामपि दृष्टविधयैवोपयोगः सम्भवदु- क्तिकः। अयमेव भोजनादिदृष्टफलेभ्यः कारीर्यादेर्विशेषः, यत् भोज- नादिकं न शास्त्रगम्यम्, कारीर्यादिकन्तु शास्त्रैकनिबन्धनम्। न हि शास्त्रे दृष्टफलमेकमपि कर्म तादृशं वर्तते, यददृष्टानपेक्षमेव वर्तते।

[ वैदिककर्मणां केवलदृष्टार्थ- त्वनिरासः। ]

यत्तु शबरस्वामिना—"तथा प्रत्युपस्थापितनियमा- नामोच्चारणां दृष्टार्थत्वादेव प्रामाण्यम्। गुरोरनु- रागात् प्रीतो गुरुरध्यापयति, ग्रन्थग्रन्थिभेदिनश्च न्यायान् परितुष्टो वक्ष्यतीति। तथाच दर्शयति "तस्माच्छ्रेयांसं पूर्वं यन्तं पापीयान् पश्चादन्वेती"ति। प्रपास्तटाकानि च परोप- काराय न धर्मायेत्येवावगम्यते तथाच दर्शनम्— " धन्वन्निव प्रपा

असि" इति । तथा "स्थलयोदकं परिगृह्णन्ति" इति च । गोत्रचिन्हं शिखाकर्म । दर्शनं च—"यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव" इति । तेन ये दृष्टार्थाः, ते तत एव प्रमाणम् । ये त्वदृष्टार्थास्तेषु वैदिकशब्दानुमानमिति सिद्धान्तः" इति विवेचितम् । तस्यापातदर्शनेन यद्यपि केवलदृष्टार्थान्यपि कर्माणि वेदे समुपदृश्यन्ते, तत्र च न श्रुतिमूलत्वम्, केवलादृष्टार्थेष्वेव श्रुत्यनुमानमिति गम्यते, सूक्ष्मदृष्ट्या पर्यालोचने तु दृष्टार्थानामपि श्रुतिमूलकत्वमेव न प्रत्यक्षमूलकत्वमिति गम्यते । अत एव हि प्रतिविषयम् 'तथा च दर्शनम्' इति मन्त्रलिङ्गानां प्रदर्शनमुपपद्यते । अनेन हीदं स्पष्टमवगम्यते—यत् दृष्टार्थानामपि कर्मणां नियमनं मन्त्रलिङ्गमूलकत्वे एव सम्भवति,नान्यथा, अन्यथा तु श्रुत्याद्यविरोधे यथेच्छमनुष्ठानम् , तद्विरोधे बाध इति । तथाच मन्वादिस्मरणानामपि न तदीयप्रत्यक्षमूलकत्वम् । कथमन्यथा "सर्वस्मरणानि हि प्रत्यक्षाद्यवगतेऽर्थे तदानुरूप्येणोपजायमानान्यर्थं समर्थयन्ति ? तदिहाष्टकादीनां स्वर्गादिसाध्यसाधनभावं प्रत्यक्षादीनि तावन्न गृह्णन्तीति साधितम्" इत्यादि स्मृत्यधिकरणगतानि वार्तिकवचनान्युपपन्नानि भवेयुः । यद्यपीदं वाक्यमदृष्टार्थस्मृतिविषयमेव, न दृष्टार्थस्मृतिविषयम् , तथापि कुमारिलपादमतरीत्या केवलदृष्टार्थस्यैकस्यापि श्रौतस्य कर्मणोऽभावान्न दोषः । अस्मिन् प्रसंगे ह्यवश्यमस्माकं दृष्टार्थानां दृष्टार्थत्वेनैव, प्रामाण्यमिति शाबरभाष्यं कुमारिलपादैः कथं व्याख्यातमिति परीक्षणमत्यन्तं समुचितमिति, तत्संग्रहमत्र प्रथमतः सम्पादयामः । तद्यथा—"ये वृद्धवयःप्रत्युत्थानादयस्तेषां दृष्टार्थत्वादेव प्रामाण्यमिति , एतदयुक्तम्, कुतः ? धर्मं प्रति यतोऽत्रेदं प्रामाण्यं प्रस्तुतं स्मृतेः । तस्मात्

कृष्यादिवत्तेषामुपन्यासो न युज्यते ॥ न हि यावत्किंचिदाचरणं तस्य सर्वस्य मूलमिह प्रमाणीक्रियते, धर्मजिज्ञासाऽधिकारात् । यदि च गुर्वनुगमनादीनां केवलं दृष्टार्थत्वमेव स्यात्, ततः कृष्यादिवद्धर्मं प्रत्यप्रामाण्यमेवेति नोपन्यसितव्याः । स्यादेतत्, अप्रमाणत्वेनैवैषामुपन्यास इति । न, तथासति हेतुदर्शनाच्चेत्यत्रोदाहर्तव्या भवेयुः "तस्माच्छ्रेयांसमि"ति च दर्शनं निष्फलम् । न च नियोगतःशास्त्रोदृते प्राप्तिः । शक्यते ह्युपायान्तरेणापि सामदानादिना गुरुरध्यापनादीनि कारयितुम् । तत्रास्ति नियमविधेरवकाशः । सर्वत्र च यथाकथंचिल्लोकपंक्तिसहायोपादानात्मरक्षणप्रीत्युत्पादादिका दृष्टार्थता भाष्यकारोक्ता शक्या वक्तुम् । न चावघातादीनां वृष्टिकामयागादीनां च दृष्टार्थानामवैदिकत्वम् । तस्मात्सत्यपि दृष्टार्थत्वे सम्भाव्यते वेदमूलत्वम् ; नियमादृष्टसिद्धेरनन्यप्रमाणकत्वात् । अतश्च गुर्वनुगमनादेर्नैमित्तिकत्वादक्रियायां प्रत्यवायः, करणे च स न भवति । दृष्टं च प्रीतो गुरुरध्यापयतीत्येवमादि निष्पद्यते । नियमाच्चाविघ्नसमाप्त्यर्थापूर्वसिद्धिः । एवं चाचाराद् गृह्यमाणेषु तथा स्यादित्यत्र सकृदसकृद्वाऽनुष्ठानमिति विचारो युक्तः, इतरथा तु दृष्टार्थत्ववशेनैवोदकपानादिवदवधारणं स्यात् । यत्तु भाष्यकारेण दृष्टार्थत्वादेव प्रामाण्यमित्युक्तम्, तत्पूर्वपक्षवाद्यतिशयार्थम् । एतदुक्तम्भवति—यास्तावददृष्टार्थाः स्मृतयः, ताः कथंचिदप्रमाणीकुर्याद् भवान्, इमाः पुनर्गुर्वनुगमनादिविषयाः कथमिवाऽप्रमाणं भविष्यन्तीति ? सभाप्रपादीनां यद्यपि विशेषश्रुतिर्नैव कल्प्यते, तथापि परोपकारश्रुत्यैव समस्तानामुपादानात्प्रामाण्यम् । तस्माच्छ्रेयांसमित्यश्वे गर्दभेनाऽनुगन्तव्ये सिद्धवच्छ्रेयसामूनैरनुगमनं दर्शयति । यत्तु गोत्रचिन्हं शिखाकर्म, तत्राप्याचारनियमस्यादृष्टार्थत्वान्नैव

तावन्मात्रमेव प्रयोजनम्, शक्यं ह्युपायान्तरेणापि गोत्रं स्मर्तुम्, तेनान्य एवाभिप्रायः। कर्माङ्गभूतं तावच्चतुरवत्तादिविभागसिध्द्यर्थमवश्यं गोत्रं स्मर्तव्यम्। अतश्च तच्चिन्हार्थमपि तावच्छिखाकल्पस्मृतेः प्रामाण्यमस्तु, तन्नियमाद्दृष्टस्य त्वेकान्तेनैवानन्यगतिकत्वात्पुरुषार्थता सेत्स्यति। तेन सर्वस्मृतीनां प्रयोजनवती प्रामाण्यसिद्धिः। तत्र यद्धर्ममोक्षसम्बन्धि तद्वेदप्रभवम्। यत्त्वर्थसुखविषयं तल्लोकव्यवहारपूर्वकमिति विवेक्तव्यम्। एषैवेतिहासपुराणयोरुपदेशवाक्यानां गतिः। उपाख्यानानि त्वर्थवादे व्याख्यातानीत्यादि"।

अनेन हि सन्दर्भेण स्पष्टमिदमवगम्यते यत् दृष्टार्थेषु साधनस्वरूपादिकं प्रत्यक्षगम्यम्, नियमादृष्टादिसम्बन्धमात्रमनुमितश्रुतिगम्यम्। अदृष्टार्थेषु तु साधनसाध्यतत्सम्बन्धादिकं सर्वमनुमितश्रुतिगम्यमेवेति। तथाच शबरस्वामिना दृष्टार्थत्वेनैव प्रामाण्यमिति यदुक्तम्, तत्रैवकारस्य प्रामाण्यमित्यत्रैव योजनया विवरणं युक्तम्, न तु यथाश्रुतान्वयेन। तथाच गुर्वनुगमनादिस्थलेऽपि वेदैकमूलकत्वमित्येव सिद्धान्तान्न कोऽपि दोषः। अयं भावः—द्विविधं दृष्टार्थं कर्म, तत्रैकत्र दृष्टस्य प्रकृतकर्मणि दृष्टविधयोपयोगद्वाराऽदृष्टपर्यवसानम्, अपरत्र दृष्टस्य दृष्टविधया प्रकृतकर्मण्यनुपयोगेनादृष्टपर्यवसानम्। प्रथममवघातादि, द्वितीयं होमादिकम्। अस्ति हि होमादावपि भस्मसाद्भावादिकं दृष्टफलम्। एतेन युद्धादिकमपि व्याख्यातम्। तत्रापि राज्यप्राप्त्यादिकमानुषङ्गिकमेव फलम्। नित्यकर्मस्वपीयं रीतिर्योजनीया। तथा चानुषङ्गिकतया दृष्टफलार्थत्वात् गुर्वनुगमनादीनां तेषां दृष्टार्थत्वेनैव प्रामाण्यमिति वचनं पूर्वपक्षिवाग्यतिशयार्थमिति युक्तमेव।

मधुसूदनसरस्वतीभिरपि द्वितीयाध्याये गीतायां 'हतो वा प्राप्स्यसि स्वर्ग' मिति श्लोकव्याख्यावसरेऽयमर्थ उपपादितः । तद्यथा— "जित्वा वा भोक्ष्यसे महीमिति त्वानुषंगिकफलकथनमिति न दोषः । तथाचापस्तम्बः—तद्यथाऽऽम्रे फलार्थे निर्मिते छाया गन्ध इत्यनुत्पद्येते, एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते, नो चेदनूत्पद्यन्ते न च धर्महानिरिति" । " अतो युद्धशास्त्रस्यार्थशास्त्रत्वाभावात् पापमेवाश्रयेदस्मानिति निराकृतं भवतीति। तथाच केवलदृष्टार्थं स्मरणमेकमपि नास्तीति सिद्धम् । यत्तु भाष्यकारेण प्रपाकरणादीनां परोपकाररूपदृष्टार्थत्वेन, तथा गुर्वनुगमनादीनां गुरुप्रीतिरूपदृष्टार्थत्वेन प्रामाण्यमुक्तम् , तद्वार्तिक एव निरस्तमिति वदन् प्रभावलीकारोऽपि भाष्यस्य यथाश्रुतं व्याख्यानं नो स्वीकर्तुमर्हमिति गमयति । सर्वथा त्वदृष्टानपेक्षमेकमपि कर्म शास्त्रीयं नास्तीति खलु पूर्वाचार्याणां सिद्धांतः । अत्र दृष्टांशसाधनत्वादिनिर्णय इवादृष्टांशसाधनत्वनिर्णयः कथमपि कस्यापि न सम्भवतीति कथं वा प्रत्यक्षानुभवमूलकत्वमेव सर्वेषामपि शास्त्राणामिति सिद्धांतः प्रकृतप्रबन्धगत उपपद्यते इति सर्व एव विवेचयन्तु ।

[ क्रियायाः स्वरूपतो-धर्मत्वे शाबरभाष्याद्युपपत्तिः ] यथाच न क्रियायाः स्वरूपतो धर्मत्वं मीमांसकसम्मतम्, तथा पूर्वमेवोपपादितमिति तत्र तत्र क्रियास्वरूपधर्मत्वमेव मीमांसकसिद्धांत इति व्यपदेशो नवीनानामत्यन्तमेवायुक्तः । अत एव यागादिरेव श्रेयःसाधनत्वरूपेण धर्मः, तद्रूपाभावाच्च न शूद्रकृतस्य यागस्य धर्मतापत्तिरिति शास्त्रदीपिकावचनमुपपद्यते । एतेन—"श्रेयस्करो धर्मश्चोदनालक्षण एव" इत्यादिव्यपदेशोऽपि व्याख्यातः । अत्र हि श्रेयस्कर-

शब्दस्य विवरणमेव धर्मशब्देन क्रियते, न श्रेयस्कर इति धर्मशब्दस्य विशेषणम्। येनाधर्मोऽपि कश्चन श्रेयस्करो वर्तते इति बुद्धेरवकाशः। तदुक्तं शाबरभाष्ये—य एव श्रेयस्करः स एव धर्मशब्देनोच्यत इति। तथाचोक्तव्यपदेशानुसारेण स्वरूपतोऽश्रेयस्करस्यापि धर्मत्वमिति मीमांसकसिद्धान्त इति व्यवस्थापनं मीमांसास्वरूपाज्ञाननिबन्धनमेव। अस्तु वा कथमपि मीमांसकसिद्धान्तः, प्रकृतनिबन्धकाराणान्तु श्रेयःसाधनत्वेनैव धर्मत्वमित्येव खलु सिद्धान्तः। अत्रेदमेवास्माकम्प्रष्टव्यम्—कथं भवन्मतरीत्या धर्माधर्मनिर्णयः प्रत्यक्षमूलको भवतीति। न हि सर्वं फलं तस्य साधनस्य च सम्बन्धो वा कस्यापि प्रत्यक्षतामधिगच्छति।

[अदृष्टे स्वर्गादौ शक्तिग्रहोपायः] यत्तु स्वर्गादेरप्रत्यक्षत्वे कथं वा स्वर्गादिपदात् शक्तिग्रहः? व्यवहारादेव खलु शक्तिग्रहः। न चादृष्टेन व्यवहारो भवतीत्यादिकमुपवर्णितम्, तत्रेदमेवास्माकं वक्तव्यम्—यत् न व्यवहारमात्रं शक्तिग्राहकम्, किंतु वाक्यशेषोऽपि। तत्र यद्यपि व्यवहारेण न शक्तिग्रहः। एवमपि वाक्यशेषेण शक्तिग्रहो भवत्येव। तदयं वाक्यशेषः—यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमिति। विवेचितं चेदं तत्त्वचिन्तामणौ। व्युत्पत्तिवादेतु—"न च स्वर्गादिविशिष्टसाधनत्वं न विधिप्रत्ययवाच्यं सम्भवति, स्वर्गत्वादेर्गङ्गास्नानादिजन्यस्वर्गादिसाधारणत्वेन यागादिजन्यतानवच्छेदकतया यागादौ स्वर्गत्वादिविशिष्टसाधनत्वाभावात्, न हि जन्यतानवच्छेदको धर्मो जनकतानिरूपके विशेषणमिति वाच्यम्, स्वर्गत्वादेः शक्यविशेषणत्वेऽपि तदुपलक्षितवैजात्यावच्छिन्ननिरूपिताया जनकताया यागादावबाधितायाः स्वर्गादिजनकतात्वेन विधिप्रत्ययतो

भानसंभवात्" इति निरूपितम् । अयं भावः—यद्यपि स्वर्गशब्देन सुखसामान्यमेव गम्यते, सुखविशेषस्तु न गम्यते, तथापि शाब्दबोधे सुखविशेषसंसर्गस्यैव भानं भवति, न तु सुखसामान्यसंसर्गस्य । न हि घटमानयेत्यादावपि घटसामान्यस्यानयनसामान्यस्य च संसर्गो गम्यते, किंत्वच्छिद्रघटस्यानयनस्य च संसर्ग एव । तदुक्तं शब्दशक्तिप्रकाशिकायाम्—"इतरबाधलब्धस्य छिद्रेतरत्वादेरपदार्थस्याप्यवगाहित्वेन शाब्दमतेरनुव्यवसीयमानत्वादि"ति । अप्रत्यक्षेऽपि फले वाक्यजन्यज्ञानमात्रेण प्रवृत्तिर्हि संभवत्येव । न हि कुत्रापि साध्यस्य फलस्य साधनानुष्ठानदशायां प्रत्यक्षं संभवति । न ह्यप्रत्यक्षमित्येतावता शशशृङ्गायमाणं भवितुमर्हति, शतशो व्यभिचारात् । किं च "यदि स्वर्गादीनामप्रत्यक्षता, तर्हि तल्लाभार्थं यागादिकमनुष्ठेयतया विधीयमानमपि व्यर्थं स्यात्" इति ग्रन्थेन किं श्रोतृदृष्ट्या वैयर्थ्यमापाद्यते, उतोपदेष्टृदृष्ट्या ? आद्ये दत्तमुत्तरम्, द्वितीये तु तत्रैवोपदेष्टुस्तत्तत्साधनफलविशेषसंबन्धादिप्रत्यक्षमपेक्षितं यत्र तस्यैव तद्वाक्यं भवति । अन्यवाक्यैरुपदेष्टृत्वस्थले तूपदेष्टॄणां तद्वाक्यार्थप्रत्यक्षता नापेक्षिता । न हि रामायणादितत्त्वोपदेष्टॄणामिदानीन्तनानां सर्वेषां तत्तदितिहासाप्रत्यक्षं दोषाय भवति । तत्तदुपदेशवैयर्थ्यं वा । एतेन—मन्त्रद्रष्टृभिरपि ऋषिभिः स्वर्गो दृष्टो न वा ? आद्येऽप्रत्यक्षत्वव्याघातः, द्वितीये कथं तत्साधनस्य कर्मणोऽपि दर्शनमित्यादिशंका परास्ता । न हि वयं मन्त्रद्रष्टॄणामप्यृषीणां मन्त्रविषये किमपि स्वातन्त्र्यं पश्यामः । व्यक्तं चैतत्पूर्वमेव विवेचितम् । अङ्गीकृतं च प्रबन्धकृतापि सामग्र्यभावादस्मदादीनां स्वर्गो न प्रत्यक्ष इति । तत्रेदमेवास्माकम्प्रष्टव्यम्—यत् केयमसाधारणी सामग्री केवलं योगिन एवाश्रित्य वर्तमान-

तथा भवतामभिमतेति। उपपादितं हि पूर्वं योगजसंन्निकर्षो लौकिकसन्निकर्षोऽलौकिकसन्निकर्षो वा न योगिनामपि धर्मस्य चोदनाऽगम्यतावादिनायां सम्भवतीति। एतेन—स्वर्गलक्षणादेव स्वर्गस्य प्रत्यक्षयोग्यतेति सिद्धान्तोऽपि—परास्तः। सत्यम्, स्वर्गस्यापि सुखविशेषरूपत्वात् प्रत्यक्षयोग्यता वर्तते। न हि सुखविशेषत्वेन अन्यस्यापि सुखमन्यस्य प्रत्यक्षम्। न वा सुखविशेष इति भाव्यपि सुखविशेष इदानीं प्रत्यक्षो भवितुमर्हति। न हि वयमपि स्वर्गस्य जन्मान्तरे उपभोगकाले न प्रत्यक्षत्वमिति वदामः। इदमेव खलु वयम्मन्यामहे—यत् भिन्नकालिकयोः स्वर्गतत्साधनयोः सम्बन्धो न कस्यापि प्रत्यक्ष इति न कोऽपि विरोधः। अधिकं च पूर्वमेवोपपादितमिति न पिष्टपेषणार्थं प्रवर्तामहे। सर्वथा तु धर्मतत्त्वनिर्णयस्य केवलं चोदनाधीनत्वात् प्रत्यक्षानधीनत्वात् धर्माधर्मपरिवर्तनार्था प्रवृत्तिरधुनातनानामत्यन्तमेवानुचितेति पश्यामः।

[धर्मपरिवर्तनायोगः] अयमाशयः—तदैव हि धर्मपरिवर्तनं सम्भवदुक्तिकं भवति यदि यस्य धर्मस्य यत्फलं तत्साधनान्तरेणाधिगन्तुं पार्यते इति वा, तत्फलं तेन न सम्भवतीति वा निर्णेतुं शक्यते। न हीदानीन्तनानां केषामपि येषां साध्यसाधनभावज्ञानं नास्ति तेषां उभयविधोऽपि निर्णयो वर्तते। न हि कोऽपि स्वर्गादिकं प्रदर्श्येदमनेन साधनेन न भवति साधनान्तरेण वा भवतीत्यनुभावयितुं शक्नोतीति सर्वविदितमिदम्।

[यथाकामीत्यत्र न शासनपरिवर्तनम्] यत्तु ऋतौ भार्यामुपेयादिति नियमितस्य धर्मस्यापि "यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्। स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः" इतियाज्ञवल्क्यवचनेन परिवर्तनं कृतमिति वर्णितम्। तत्रेदमेवास्माकं वक्तव्यम्—यत् "ऋतौ

भार्यामुपेयात्" इति वाक्ये यदि "ऋतावेवोपेयात्" इति परिसंख्याविधिर्नियमविधिर्वा विवक्षितस्तर्ह्येवोक्तस्याक्षेपस्यावसरः। अत्र च नियमविधिस्थले सर्वत्र कस्य व्यावृत्तिरिति विचारावसरे शास्त्रतः प्राप्तेतरस्येत्यवश्यमेवोरीकर्तव्यम्। अन्यथा हि कथं वा "व्रीहिभिर्यजेत" इति नियमविधिना यवानां "यवैर्यजेते" ति विधिना व्रीहीणां वा व्यावृत्तिर्न स्यादिति सर्व एव विभावयन्तु। अत एव "शब्दतः फलतो वा पाक्षिकायोगव्यावृत्तिरूपो नियमो यस्य शास्त्रस्य विषयस्स नियमविधिः। यथा 'सत्यमेव वदेत्' 'व्रीहीनवहन्ती'त्यादौ। नियमे पाक्षिकायोगश्च तन्मात्रविध्यप्रवृत्तिनिमित्तकः, विध्यन्तराप्रवृत्तिसहितैतद्विध्यप्रवृत्तिनिमित्तकश्चेत्यादिप्रकारेण बोध्यः। व्रीहीनवहन्तीत्यादावाद्यः, व्रीहिभिर्यजेतेत्यादौ द्वितीयः। यवविध्यभावसहितैतद्विध्यप्रवृत्तौ व्रीहीणां पक्षेण प्राप्तत्वात्" इति भाट्टदीपिकावचनमुपपद्यते। तथाच ऋतौ भार्यामिति वाक्येऽपि ऋतुपदेन तस्यैव कालस्य व्यावर्तनं क्रियेत, यो वचनान्तरेण न प्राप्तः। स्त्रीकामोपलक्षितकालोऽपि यदि प्रमाणान्तरप्राप्तस्तर्हि तु तस्य व्यावर्तनं न कथमपि सम्भवति। ऋतुकालस्येव स्त्रीकामोपलक्षितकालस्यापि प्राप्तिस्तु श्रौतलिङ्गेनैव सिद्धा वर्तते। तदिदं श्रौतं लिङ्गम्—"ता अब्रुवन् वरं वृणीमहे ऋत्वियात् प्रजां विन्दामहै, काममाविजनितोस्सम्भवाम। तस्मादृत्वियाः स्त्रियः प्रजां विन्दन्ते। काममाविजनितोः सम्भवन्ति, वारे वृतं ह्यासामि"ति। सूचितं चेदं "वरमनुस्मरन्" इत्युपक्षिपता याज्ञवल्क्यमहर्षिणापि। अत एव "ऋतावुपेयादनृतावपि स्त्रीकामनायां सत्यां प्रतिषिद्धवर्जमिति" गौतमस्मरणमुपपद्यते। सर्वथा तु ऋतौ भार्यामुपेयादित्यनेन व्यावर्तितस्य प्रापणं "यथाकामी भवेद्वापि" इति वचनेन न

कृतमिति केषाञ्चन मतम्। मिताक्षराबालक्रीडादियाज्ञवल्क्यव्याख्यासम्मतस्तु पक्षो "नात्र परिसंख्याविधिः, न वा कालनियमविधिः, किन्तूपगमननियमविधिः, इति। अत्र च "ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति। घोरायां ब्रह्महत्यायां युज्यते नात्र संशयः"इति वचनं गमकम्। अत्र च कालान्तरव्यावृत्तेरकरणात् यथाकामीत्यत्र न किमपि परिवर्तनं कृतम्पश्यामः। अत्र च पक्षे यथाकामीत्यत्रैवानृतुकाले नियमविशेषः क्रियते। तद्यथा स्त्रीकामनानुरोधेनैवानृतुकाले उपगन्तव्यम्, न तु स्वेच्छानुसारेणेति। न हि पूर्वतनवचनेऽन्यत्र वा कुत्रापि स्वेच्छानुसारेण पुंसा स्त्रिया उपगमनं कर्तव्यमिति बोधितं वर्तते, येन नियमपरिवर्तनमत्रापादयितुं शक्येतेति न कुत्रापि विहितस्य धर्मस्य परिवर्तनं कृतम्पश्यामः। एतेन "स्त्रियो रक्ष्या यतः स्मृताः" इति हेतुनिर्देशोऽपि व्याख्यातः। अत्र हि यथाकामी भवेदित्यत्र स्त्रियो रक्ष्या इति न हेतुः, किन्तु पूर्वोक्तश्रौतलिङ्गमेव। अत एव स्त्रीणां वरमनुस्मरन्तिति सार्थकम्भवति। स्त्रीरक्षणं हि उपगमनस्य फलमेव, न हेतुः। यथा च दृष्टफलस्थले सर्वत्र स्मृतीनां श्रुतीनां वा नादृष्टानपेक्षं प्रामाण्यम्, तथा पूर्वमेव विवेचितमिति तदनुसारेण स्मृतीनां नियमान्तराणां चेतिहासमूलकत्वव्यवस्थापनमत्यन्तमेवायुक्तमिति जानीमः। तदिदं सिद्धम्—यच्छास्त्रत एव धर्मनिर्णयो न प्रत्यक्षतो युक्तितो वा। सर्वथा तु धर्मपरिवर्तनं नास्मदादीनामिदानीं कथमपि योग्यम्, किन्तु यथाशक्ति सर्वेषां परिपालनमेव। यथाशक्तिन्यायश्च नित्यनैमित्तिकयोरेव भवति, न काम्येषु निषेधेषु वेति पूर्वमेव सूचितमिति विस्तरभयादुपरमन्तो वयमस्यैव प्रबन्धस्य वेदस्वरूपनिर्णयासम्भवादिविषयमनन्तरं समालोचयिष्यन्तो वेदस्यापि

प्रमाणान्तरेणार्थज्ञानं विना न विरचितत्वसम्भव इति विषयमिदानीं समालोचयितुम्प्रवर्तामहे।

[वेदार्थस्य परिच्छित्त्याद्यमूलकत्वम्] अत्र न वेदस्यापि वाक्यत्वात्तदर्थानुभवः कस्यचन प्रवर्तकस्य पूर्वमपेक्षित इति शङ्कासारः। अत्र हि नैयायिकं मतं यदि समाद्रियते, तर्हि नित्योऽनुभव ईश्वरस्य प्रमारूपो वर्तत इति कुसुमाञ्जल्यादौ विवेचितमिति तदनुभवमूलकत्वेन वेदप्रवृत्तिर्नानुपपन्ना। मीमांसकमते यत्र नेश्वराङ्गीकारस्तत्र वेदविषये न कस्यापि स्वातन्त्र्यमिति सर्वविदितमिदम्। सेश्वरमीमांसकमते तु ईश्वरस्यापि वेदमूलकमेव वेदार्थज्ञानमिति न वेदविषये ईश्वरस्य स्वातन्त्र्यम्, इयान् विशेषः—वाक्यानित्यतायां सर्वत्र समानायामपि ईश्वरस्य नैयायिकमते वाक्ये स्वातन्त्र्यमित्येकं मतम्, तत्र न स्वातन्त्र्यमित्यपरं मतम्। मीमांसकमते तु न स्वातन्त्र्यमिति। सर्वथा त्वीश्वरातिरिक्तानामनुभवो न वेदप्रवृत्तेर्मूलमित्यवश्यमेवोरीकर्तव्यमिति यदि धर्मस्य परिवर्तनं किमपि कर्तव्यम्, तर्हि भगवदवतारं विना न कथमपि सम्भवति। तदेवाभिप्रेत्योक्तं गीतायाम्—"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्" इति। अत्रापि वचने यस्य धर्मस्य ग्लानिस्तस्यैव प्रतिष्ठापनमुपन्यस्तमिति धर्मपरिवर्तने भगवतोऽप्यनधिकारः, न वा भगवतापि तत्करिष्यत इति च गम्यते।

[पराशरादीनामपि न धर्मान्तरप्रवर्तकत्वम्] न हि पराशरादयोऽपि धर्मस्याधर्मत्वेन अधर्मस्य धर्मत्वेन वा परिवर्तनमकुर्वन्। स एव हि तस्य धर्मो यो यत्राधिकृतः शक्तश्च। कलिवर्ज्यानान्तु वर्जननिमित्तं सर्वेषां नानधिकारः, किन्त्वशक्तिः। यत्र हि कामोद्रेकस्य सम्भावना, तेषामेव खलु कलौ वर्जनं कृतम्, न तु नित्यानाम्।

पराशरादयोऽपि कलौ मानवानामशक्तिपर्यालोचनेन नैमित्तिकानां प्रायश्चित्तानामेव संकोचं कल्पयामासुरिति व्यक्तमिदं माधवीयादिदर्शिनाम्। न हि वयमपीदानीं काम्यानामकरणमधुनातनैरपेक्षितमसङ्गतम्पश्यामो यद्यपि तानि विहितानि। एतेन "सर्वज्ञप्रणीतत्वेऽपि तस्य सर्वविषयकज्ञानस्यापेक्षणीयत्वेन तस्य प्रमाणसापेक्षत्वात्, प्रमाणनिरपेक्षत्वे तु पुनरप्यप्रामाण्यापत्तिः, अतो यत्किंचिदपि प्रमाणमनुसृत्यैव चोदनयेष्टानिष्टसाधनत्वं बोधयितुं शक्यते, न स्वातन्त्र्येण। वाक्यस्य तु स्वभावोऽयं यत्प्रमाणान्तरेण विज्ञातस्यैवार्थस्य ज्ञापकत्वम्। न हि वेदवाक्यं स्वतःसिद्धं भवितुमर्हति, अनित्यं हि वाक्यमानुपूर्वीविशेषविशिष्टम्, सम्मतं चैतत्सर्वेषामपि मीमांसकानाम्। व्यक्तं चैतत् भामत्यां शास्त्रयोनित्वाधिकरणादौ। कथमीश्वरोऽपि निसर्गविरोधेन ब्रूयात्" इत्यादिशंकापि—परास्ता, दत्तोत्तरत्वात्। न हि प्रमाणाजन्यत्वेऽप्रमात्वम्।

[ ईश्वरस्यापि न धर्मे स्वातन्त्र्यम् ]

तदुक्तं कुसुमाञ्जलौ "ननु नेश्वरज्ञानं प्रमा, नित्यत्वेन प्रमाणाजन्यत्वात्, नापि प्रमाणम्, अकारणत्वात्। अत एव न तदाश्रयः प्रमातेति। उच्यते—मितिः सम्यक् परिच्छित्तिस्तद्वत्ता च प्रमातृता। तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते॥ समीचीनो ह्यनुभवः प्रमेति व्यवस्थितम्। तथाच अनित्यत्वेन विशेषणमनर्थकम्, नित्यानुभवसिद्धौ तद्व्यवच्छेदस्येष्टत्वात्। असिद्धौ च व्यवच्छेद्याभावात्" इति। व्याख्यातं चेदं वर्धमानोपाध्यायेन—"यथार्थानुभवत्वमेव प्रमात्वं नित्यानित्यसाधारणम्, न च क्रियात्वविरोधः, धात्वर्थमात्रस्यैव नित्यानित्यसाधारणस्य सत्तादेरिव क्रियात्वात्। अनित्यत्वेन तद्विशेषणस्य गौरवेण व्यर्थत्वा'

दिति । तथाच प्रमाणाजन्यत्वेऽपि प्रमात्वमीश्वरानुभवस्य नानुपपन्नम् । एतेन निसर्गाविरोधोऽपि व्याख्यातः । न ह्यस्मदादेरिव निसर्गः ईश्वरस्यापीति कोऽपि मन्यते । तथा-चोन्मत्तप्रलपितत्वमेव प्रमाणाजन्यत्वे ईश्वरवाक्यस्यापि इति प्रलाप एवोन्मत्तप्रलाप इति वयम्पश्यामः । सर्वथा चेतिहासमूलत्वमेव वेदस्येति वादो निरालम्ब एवेति सिद्धम् । एतेन—'शास्त्रं नामाद्वेषरागाणां निःस्पृहाणां निःस्वार्थानां महात्मनां विदुषामीश्वरप्रसादलब्धज्ञानमूलकानुभवमूलकाः तर्कमूलकाश्च ये हृदयाभ्यनुज्ञाता विचारास्तेषां व्यवस्थितः संग्रहः । निरुक्तं चैतच्छास्त्रत्वं व्याकरणन्यायादौ, वैद्यके, आन्वीक्षिक्याम्, त्रय्याम्, वार्तायाम्, दण्डनीत्याम्, लौकिकेऽलौकिके, भौतिकेऽभौतिके, च सर्वत्र शास्त्रजातेऽनुगतम् । एतेन—द्वितीयादिप्रश्नत्रयं संक्षेपेण व्याख्यातम् । मीमांसापरिपाट्यां द्वैविध्यमन्तर्भवति । वाक्यार्थनिर्णायको न्यायसंग्रहः । एकवाक्यतापद्धतिश्चेति । तत्र ग्रन्थकाराणां देशकालादिभेदेन द्वैविध्यात् तदेकवाक्यतायां नातीवाभिनिवेष्टव्यमिति युक्तमुत्पश्यामः । वाक्यार्थनिर्णयोपयोगिनो न्यायाश्चावश्यका एवेति नात्र वैमत्यम् । ऐतिहासिकपद्धतेश्चैते तपस्विनः पण्डितप्रवराः सन्तः कथं बिभ्यतीति न जानीमः । लोके हि जीर्णं चानुपयुक्तं चानुपपन्नं च परित्यजन्तो नवतरं कल्याणतरं युक्तियुक्तं चाददतः श्रीमद्भागवतोक्तसार्थवाह इव गच्छन्तीति प्रत्यक्षमेवैतत्सर्वेषाम् । न केवलं लौकिकविषय एवेदमिति भ्रमितव्यम् । पारलौकिकविषयेऽपि सैवेयं रीतिः, केवलमाग्रहिकतया तदेवेदम्, प्राचीनमेवेदम्, न वयं नूतनं स्वीकुर्म इति वदन्तः प्रत्यक्षन्तु पूर्वोक्तामेव रीतिं स्वीकुर्वते । सर्वेऽपि मन्दतया गच्छन्तीति स्पष्टमेवेदं सर्वेषाम् । तस्यैवास्य

व्यवहारस्य यावच्छक्यमामूलात् परीक्षणमेवैतिहासिकपद्धतिर्नाम। मीमांसकपरिपाटीव इतिहासपरिपाट्यपि पण्डितैरात्मसात्कर्तव्या। सर्वज्ञा वयमिति व्यर्थानुमानेन जगति प्रकटतामापाद्यमानानि नवनवानि विज्ञानानि गजनिमीलिकया सुदूरमुत्सारयन्तस्तान्यनाकलयन्त इमे पण्डितम्मन्याः कां गतिं गच्छन्तीति स एव भगवानवगच्छतु गिरिजाजानिः" इत्यादि श्रीमराठेनारायण शास्त्रिणां प्रबन्धांशोपि व्याख्यातः। एतेऽपि हीश्वरप्रसादलब्धज्ञानविज्ञानादिमतामेव विदुषामनुभवादिमूलकविचारसंग्रहस्यैव शास्त्रत्वम्मन्यमानाः कथं वेश्वरप्रसादाविर्भावः कस्यापि विदुषो भवतीति कथं वा विवेचयिष्यन्तीति न वयं जानीमः। खण्डितं हि पूर्वमेव कपिलादिसिद्धानुभवमूलकत्वं न शास्त्रस्येति तत एवास्य निरासः सिद्ध इति सर्वविदितमिदम्। एतेन—एकवाक्यताऽयोगोऽपि—परास्तः, दत्तोत्तरत्वात्। एकवाक्यतापि हि मीमांसकैर्वाक्यार्थनिर्णायकन्यायानुसारेणैव साध्यते, न स्वतन्त्रमिति वाक्यार्थनिर्णायकन्यायावश्यकतयैवैकवाक्यतावश्यकतापि सिद्ध्यति। ऐतिहासिकपद्धतिर्नाम हि बहुकालपर्यन्तमनुवर्तमानस्य सर्वस्य व्यवहारस्य यावच्छक्यमामूलं परीक्षणमिति खलु शास्त्रिमहोदयानां मतम्। तत्रच सर्वापि शक्तिः सर्वैरपि भगवत्पादादिभिर्नियोजितेत्यत्र न विशयलेशः। परीक्षितं हि तैरपि सिद्धानुभवमूलत्वं धर्मस्य भवति नवेति। न वयमत्र नूतनां कामपि परीक्षारीतिमेतैः सूच्यमानां अस्माकं स्वीकरणीयां पश्यामः। न हि केऽपि पण्डिताः स्वेषां सर्वज्ञत्वं मन्वाना विद्वेषेण भीत्या वा युक्तिमूलकत्वं धर्मस्य तिरस्कुर्वते। कीदृशो वाऽनुभवःपूर्वाचार्याणामीश्वरप्रसादलब्धज्ञानविज्ञानादिमतां तदासीत्? कश्च तेषु दोषो नवीनैरपि दृष्ट इति शास्त्रिमहोदया एव विवेच-

यन्तु। सत्यम्, प्राचीनमतमेव समीचीनमिति बहवः पण्डिता मन्यन्ते। अत्र च कारणं सर्वेषां यथावदेव साध्यसाधनतत्सम्बन्धानुभव एव। नवीनानामपि न सोऽनुभवोऽस्तीति न विवादास्पदमिदम्। अन्धपरम्परयैव खल्विदानीमपि स्वीयानुभवाभावेऽपि पामराः शिक्षितम्मन्यैरेतः प्रवर्तनीया नूतनेषु परिवर्तितेषु धर्मेष्विति व्यर्थोऽयमुपहासः पण्डितवराणाम्। न हि वयं तादृशमतिगभीरत्वमैतिहासिकपरिपाट्यां पश्यामः। सुदूरं गमनेन तु तत्तदिच्छैव शास्त्रमिति खलु कल्पनीयं स्यादिति व्यर्थमनेन प्रयासेन पण्डितनिन्दार्थेन। अङ्गीकृतं हि पारलौकिकफलमपि शास्त्रिवरैरिति तत्प्रबन्धत एवावगम्यते। दृष्टफलार्थानां कृष्यादिप्रकाराणां परिवर्तनं को हि नाम निवारयति। सर्वथा तु युक्तिमूलकत्वाभावाच्छास्त्रस्य परिवर्तनवादोऽयं न समुचितः। एतेन हिन्दुपदार्थोऽपि—व्याख्यातः। निन्दार्थं परेषां प्रयुक्तमिति पक्षेऽपि हि व्यावृत्तं धर्ममादायैव तस्य—

[ हिन्दुपदार्थः ] प्रवृत्तिर्निरूपणीया, नान्यथेति माहम्मदादिव्यावृत्तो हिन्दुपदबोध्यःको धर्म इति नियतमिदं वक्तव्यम्। तत्र चाहिंसादिसाधारणधर्माः,भक्तिः,ईश्वराङ्गीकारः, इत्यादिकं सर्वं साधारणमिति जातिवर्णाश्रमभेदप्रयुक्तश्रुतिस्मृतिपुराणप्रोक्तधर्मविशेषेणैव हिन्दुत्वम्, नान्यथेति, तत्पदार्थविवेचनप्रसंगेन वैदिकक्रियाणामपि सादित्वं यत् सूचितम्, तदिदमनवसरमेव।

[ कुराणादीनां वेदतुल्यत्वनिरासः ] एतेन—माहम्मदादिप्रचारितकुराणादीनामपि वेदतुल्यप्रामाण्यमिति सिद्धान्तोऽपि-परास्तः। महाजनपरिग्रहः खलु प्रामाण्यनियामकः, सच ईश्वरातिरिक्तैर्बहुभिः समकालं प्रचार्यमाणत्वे भिन्नभिन्नास्तिकप्रस्थानपक्षपातिभिरपि अंशतः परिग्रह एव च संभवति नान्यथा। नहि कुराणादिकं माह-

म्मदादिकाले बहुभिः प्रचार्यमाणमासीत्, न वाऽस्तिकदर्शनपक्षपातिभिः कैरप्यंशतः परिगृह्यते। अतः प्रतारणार्थमेव हिन्दूनां माहम्मदादीनां कुराणादिकम्। यथाच तेषामेव प्रतारणार्थत्वम्, नतु वेदस्य, तथा कुसुमांजलिवाक्यानां संग्रहणेन पूर्वमेवापीपदाम। अस्मिन् प्रसंगे बौद्धागमस्य वेदतुल्यप्रमाणतानिरासावसरगतानां श्लोकवार्तिकानां सव्याख्यानां चोदनासूत्रगतानां संग्रहणमत्यन्तमेव समुचितम्। तानि यथा :—

सर्वज्ञकल्पनाद्यैस्तु वेदे चाऽपौरुषेयता।
तुल्यता कल्पिता येन, तेनेदं संप्रधार्यताम् ॥ ११६ ॥
सर्वज्ञो दृश्यते तावन्नेदानीमस्मदादिभिः।
निराकरणवच्छक्या न चासीदिति कल्पना ॥ ११७ ॥
न चागमेन सर्वज्ञस्तदीयेऽन्योन्यसंश्रयात्।
नरान्तरप्रणीतस्य प्रामाण्यं गम्यते कथम् ॥ ११८ ॥
न चाप्येवंपरो नित्यः शक्यो लब्धुमिहागमः।
नित्यश्चेदर्थवादत्वं तत्परे स्यादनित्यता ॥ ११९ ॥

---

एवंवादिना वक्ष्यमाणमनन्तरं संप्रधार्यते—येन सर्वज्ञो निष्प्रमाणको नाऽपौरुषेयत्वमिति, तत्र सर्वज्ञकल्पनायास्तावदप्रमाणत्वं दर्शयति—सर्वज्ञ इति। ११७। तेन प्रत्यक्षं तावन्नास्ति तत्सद्भावे प्रमाणमिति। नाप्यनुमानेनासावासीदिति शक्यते कल्पयितुं विपरीतस्यैवाऽनुमानादित्याह—निराकरणवदिति। न हि सद्भावस्याऽनुमापकं लिङ्गमस्ति, निराकरणस्य त्वस्ति लिङ्गम्, अतीतः कालः सर्वज्ञशून्यः कालत्वाद्यत्ववदिति, बुद्धो वाऽसर्वज्ञः पुरुषत्वादस्मदादिवदिति। नाप्यागमगम्यत्वं सर्वज्ञस्येत्याह—न चागमेनेति।११८। कथमित्याह—तदीये इति। सिद्धे हि सर्वज्ञे तदीयस्याऽऽगमस्य प्रामाण्यं तत्प्रामाण्ये च तत्सिद्धिरिति।

नरान्तरप्रणीतस्य तु मूलान्तराऽसंभवान्न सर्वज्ञसद्भावे प्रामाण्यं संभवतीत्याह नरान्तरेति। नापि नित्यागमगम्यत्वं तदभावादित्याह—न चेति।११९। नन्वस्त्येव सर्वज्ञः

आगमस्य च नित्यत्वे सिद्धे तत्कल्पना वृथा ।
यतस्तं प्रतिपद्यन्ते धर्ममेव ततो नराः ॥१२०॥
यो ऽपीन्द्रियार्थसम्बन्धविषये सत्यवादिताम् ।
दृष्ट्वा तद्वचनत्वेन श्रद्धेये ऽर्थे ऽपि कल्पयेत् ॥१२१॥
तेनापि पारतन्त्र्येण बाधिता स्यात् प्रमाणता ।
प्रामाण्यं चेत्स्वयं तस्य का ऽपेक्षा ऽन्येन्द्रियादिषु ॥ १२२ ॥
यथैवात्रेन्द्रियादिभ्यः परिच्छेदात्प्रमाणता ।
श्रद्धेये ऽपि तथैव स्यान्न स्वातन्त्र्येण लभ्यते ॥१२३॥
यथा च तेषां सत्यत्वं सिध्यत्येतेन हेतुना ॥
तथा ऽन्या ऽनवबुद्धार्थप्रामाण्या ऽभावसाधनम् ॥ १२४ ॥
अश्रद्धेयार्थसत्यत्वं श्रद्धेये चाऽप्यसत्यता ।
पूर्वज्ञानानुवादित्वं दृष्टान्तवदिहेष्यताम् ॥ १२५ ॥

---

सर्वविदित्यादिरत आह नित्यश्चेदिति । किमित्यर्थवादत्वमत आह तत्परे इति । अनित्यस्य विग्रहवतः पुरुषस्य सर्वज्ञत्वं प्रतिपादयन्नागमोऽप्यनित्यः स्यादिति । किं चागमनित्यत्वे ऽङ्गीकृते वृथैव सर्वज्ञकल्पनेत्याह आगमस्येति १२० । कथमित्याह यतस्तमिति । येनैवागमेन सर्वज्ञत्वं प्रतिपाद्य तेन धर्म एव प्रतिपाद्यतां किमन्तर्गडुना सर्वज्ञेनेति । अत्र कश्चिदाह मा भूत्सर्वज्ञः, धर्मज्ञस्तु भविष्यति, तदुक्तम्—

कीटसंख्यापरिज्ञानं तस्य नः क्वोपयुज्यते ।
दूरं पश्यतु मा वा ऽसौ तत्त्वमिष्टं तु पश्यति ॥ इति ।

धर्मज्ञत्वे चास्ति प्रमाणम् । अस्मदादिप्रमाणगोचरार्थे क्षणिकं सर्वसंस्कृतमित्यादि बुद्धवाक्यं सत्यं प्रमाणमूलं दृष्टमतः श्रद्धेये ऽर्थे धर्मे यच्चैत्यवन्दनादिवाक्यं तदपि प्रमाणमूलं तद्वचनत्वात् अनुमीयते । तदुपन्यस्यति यो ऽपीति १२१ । इन्द्रियादिसंबन्धविषये, प्रत्यक्षादिविषये इत्यर्थः । दूषयति तेनापीति १२२ । कथमित्याह प्रामाण्यमिति । यदि हि क्षणिकादिवाक्यस्या ऽस्मदादिप्रमाणा ऽनादरेण स्वातन्त्र्यं स्यादस्मदादीन्द्रियोपन्यासो ऽनर्थकः स्यात्, इतस्तद्वदेव श्रद्धेयार्थस्या ऽप्यस्मदादिपरतन्त्रमेव प्रामाण्यं व्याप्नुयादनेन हेतुः साधयेन्न स्वतन्त्रमिति । तदेव विवृणोति यथेति १२३ । सो ऽयं धर्मविशेषविपर्ययसाधनाद्विरुद्धो हेतुरिति । विरुद्धाव्यभिचारी चायं हेतुरित्याह यथा चेति १२५ । सो ऽनेक एव

अपि चालौकिकार्थत्वे सति पुंवाक्यहेतुकम् ।
मिथ्यात्वं वेदवाक्यानां स्यादन्योन्यं सपक्षतः ॥१२६॥
धर्माऽधर्मातिरिक्तार्थे प्रामाण्यञ्च प्रसज्यते ।
सांख्यादिषु च जीवत्सु दृष्टान्तो दुर्लभोऽस्य च ॥ १२७ ॥
अलौकिकार्थवाचित्वं नृवाक्यत्वे सतीति च ।
परस्परमपेक्ष्यैव बौद्धादेः स्यान्मृषार्थता ॥ १२८ ॥
वदेदेवं च यो नाम वादी प्रथमसङ्गतः ।
तस्यापि हेतुः स्यादेष भवन्तं प्रत्यसंशयम् ॥ १२९ ॥
बुद्धादीनामसार्वज्ञ्यमिति सत्यं वचो मम ।
मदुक्तत्वाद्यथैवाग्निरुष्णो भास्वर इत्यपि ॥ १३० ॥
प्रत्यक्षं च मदुक्तत्वं त्वया साध्या तदुक्तता ।
तेन हेतुर्मदीयः स्यात्सन्दिग्धाऽसिद्धता तव ॥ १३१ ॥
प्रत्यक्षाद्यविसंवादि प्रमेयत्वादि यस्य च ।
सद्भाववारणे शक्तं को नु तं कल्पयिष्यति ॥ १३२ ॥

---

हेतुः सत्यत्वमसत्यत्वं च मिथो विरुद्धमव्यभिचारात्साधयन्विरुद्धाऽव्यभिचारीति । विरोधान्तराणि दर्शयति अश्रद्धेयेति १२५ । सप्रतिसाधनश्चायं हेतुरित्याह अपि चेति १२६ । अविशेषितेनैव वा पुंवाक्यत्वेन धर्माऽधर्मातिरिक्ते ऽप्रामाण्यमन्योन्यदृष्टान्तेनैव साधयितव्यमित्याह धर्मेति १२७ । दृष्टान्तोऽपि साध्यविकल इत्याह सांख्यादिष्विति । पूर्वोक्तमेव प्रतिसाधनं विशेषणविशेष्यभावव्यत्ययेन वाच्यमित्याह अलौकिकार्थेति १२८ ।

सप्रतिसाधनप्रसङ्गेनेदानीं सर्वज्ञदूषणमेवोपक्रम्य सर्वज्ञोऽस्मीति बुद्धेन यदुक्तं तदसत्यं तदुक्तत्वाज्ज्योतिरुष्णमशैत्ययादृव इतिवदित्यस्य परोक्तस्य सर्वज्ञसाधनस्य प्रतिसाधनं दर्शयति वदेदेवमिति । १२९ । एवमिति चैष इति च वक्ष्यमाणप्रतिसाधनपरामर्शनम् । तदेव दर्शयति बुद्धादीनामिति । १३० । इदमेव साधनं न त्वदीयमित्याह प्रत्यक्षमिति १३१ । असर्वज्ञत्ववचनस्य मदुक्तत्वं प्रत्यक्षसिद्धं सर्वज्ञोऽस्मीत्यस्य बुद्धोक्तत्वमसिद्धं न ह्यत्यन्ताऽनृतमुद्धतं च बुद्धो वदतीति संभावयामः, असिद्धश्च न हेतुर्भवतीति । अतितुच्छश्चायं सर्वज्ञवादो यस्य सर्वसाधारणैरपि प्रमेयत्वादिभिः प्रमाणान्तराऽविरोधेनैव निराकरणं संभवतीत्याहप्रत्यक्षादीति । १३२ ।

न चापि स्मृत्यविच्छेदात्सर्वज्ञः परिकल्प्यते ।
विगानाच्छिन्नमूलत्वात्कैश्चिदेव परिग्रहात् ॥ १३३ ॥
सर्वज्ञो ऽसाविति ह्येव तत्कालो तु बुभुत्सुभिः ।
तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथम् ॥ १३४ ॥
कल्पनीयाश्च सर्वज्ञा भवेयुर्बहवस्तव ।
य एव स्यादसर्वज्ञः स सर्वज्ञं न बुध्यते ॥ १३५ ॥
सर्वज्ञो ऽनवबुद्धश्च येनैव स्यान्न तं प्रति ।
तद्वाक्यानां प्रमाणत्वं मूलाज्ञाने ऽन्यवाक्यवत् ॥१३६॥
रागादिरहिते चास्मिन् नुर्व्यापारे व्यवस्थिते ।
देशना ऽन्यप्रणीतैव स्याहते प्रत्यवेक्षणात् ॥ १३७ ॥
'सान्निध्यमात्रतस्तस्य पुंसश्चिन्तामणेरिव ।
निःसरन्ति यथाकामं कुड्यादिभ्यो ऽपि देशनाः ॥१३८॥
एवमाद्युच्यमानन्तु श्रद्दधानस्य शोभते' ।
'कुड्यादिनिःसृतत्वाच्च नाश्वासो देशनासु नः ॥१३६॥

---

ननु बुद्धः सर्वज्ञ इत्यस्ति लौकिकानामविच्छिन्ना स्मृतिः, अतोऽस्ति बुद्धस्य सर्वज्ञत्वं तदानीन्तनैश्च प्रमितमिति कल्पयामो ऽत आह न चापीति । १३३ । कारणमाह विगानादिति । विप्रलिप्सुना बुद्धेनागमः प्रणीत इत्यपि स्मृतिरस्तीति । असंभवन्मूलं च सर्वज्ञस्मरणमित्याह छिन्नमूलत्वादिति । विगानं विवृणोति कैश्चिदिति । छिन्नमूलतां विवृणोति सर्वज्ञ इति । १३४ । तज्ज्ञानज्ञेयं यत्सर्वं तद्विषयज्ञानरहितैर्नरैः कथं सर्वज्ञो ज्ञायताम्, अतो न सर्वज्ञे कस्यचित्किंचित्प्रमाणं संभवतीति निर्मूलैव स्मृतिरिति । यदि त्वन्यो ऽपि कश्चित्सर्वज्ञ इष्यते बुद्धस्य सर्वज्ञत्वज्ञानार्थं ततस्तेनैव प्रकारेणाऽन्यस्याऽन्यस्य कल्पनायां बहुसर्वज्ञापत्तिरित्याह कल्पनीया इति । १३५ । कथमित्याह य एव स्यादिति ।

एवं सर्वज्ञो न केनचित्प्रमातुं शक्यत इत्युक्तम्, एवं च सम्यङ्मूलत्वाऽज्ञानात्तदागमस्याऽपि रथ्यापुरुषवाक्यवन्न प्रामाण्यं सिध्यतीत्याह सर्वज्ञ इति । १३६ । इतश्च तदागमस्याऽप्रामाण्यमित्याह रागादीति । १३७ । लाभपूजाख्यातिरागनिमित्तं हि आगमप्रण-

किन्तु बुद्धप्रणीताः स्युः किमु कैश्चिद्दुरात्मभिः ।
अदृश्यैर्विप्रलम्भार्थं पिशाचादिभिरीरिताः ॥ १४० ॥
एवं यैः केवलं ज्ञानमिन्द्रियाद्यनपेक्षिणः ।
सूक्ष्माऽतीतादिविषयं जीवस्य परिकल्पितम् ॥ १४१॥
नर्ते तदागमात्सिध्येन्न च तेनागमो विना ।
दृष्टान्तोपि न तस्यान्यो नृषु कश्चित्प्रवर्तते ॥ १४२॥
नित्यागमावबोधोपि प्रत्याख्येयोऽनया दिशा ।
न हि तत्रापि विस्रम्भो दृष्टोऽनेन कृतोऽथ वा ॥१४३॥

---

यत्नं स्वयूथ्यस्पर्द्धानिमित्तं वा प्रक्षीणरागादिदोषस्य बुद्धस्य न संभवति निर्व्यापारश्चायं नासावर्थप्रतिपादनाय शब्दं समुच्चारयितुं शक्नोति । कथं, प्रत्यवेक्षणपर्यायस्य विकल्पस्याऽसंभवादस्येदं साधनमनेन च शब्देनेदं प्रतिपादयितुं शक्यमिति यावन्न विकल्प्यते न तावद्वाक्यप्रणयनं संभवति, न चायं विकल्पो निर्विकल्पकेन प्रत्यक्षेणाऽखिलं जगदध्यक्षयतो बुद्धस्यास्ति, तस्मादन्येन केनचित्प्रणीतो देशनाधर्मोपदेश * इत्यप्रामाण्यमिति । तस्मिन्निर्व्यापारेऽपि तत्संनिधिमात्रेणैव कुड्यादिभ्योपि देशना निःसरन्तीति चेत्, श्रद्धानस्योच्यमानमिदं शोभते नास्माकमित्याह सांनिध्येति । १३८ । सार्द्धेन । श्रद्दधानं प्रत्युच्यमानमित्यर्थः । कुड्यादिनिःसृतासु च बुद्धप्रभावकृतत्वं न निर्णेतुं शक्यमन्यथापि संभवादित्याह कुड्यादीति । १३९ । सार्द्धेन । ततश्च न प्रामाण्याऽध्यवसायः संभवतीति । एवं तावच्छाक्यसर्वज्ञो निराकृतः ।

अन्यन्मतं स्वभावादेवायमिन्द्रियाद्यनपेक्ष्यैव पुरुषः सर्वं जानाति, देहावृतस्त्विन्द्रियाद्विद्वारेण किंचिदेव वेत्ति, विगलितदेहस्य तु स्वाभाविकं सर्वज्ञत्वमाविर्भवतीति, तदुपन्यस्यति एवमिति । १४१ । केवलमिन्द्रियादिकारणाऽनपेक्षमेवेति । तद्दूषयति नर्त्विति । १४२ । न हि मुक्तस्य सर्वज्ञत्वे तदागममन्तरेणाऽन्यत्प्रमाणमस्ति, अतः सर्वज्ञप्रणीतत्वे सिद्धे तदागमस्य प्रमाणत्वं तत्प्रामाण्ये च तत्सिद्धिरितीतरेतराश्रयम् । अशरीरस्य च ताल्वादिरहितस्यागमप्रणयनमपि कथमपि न विद्मः । शरीरयुक्तेन त्वसर्वज्ञेन प्रणीतस्य न प्रामाण्यं स्यादिति । यदि त्वद्यत्वेऽपि कश्चिन्मुक्तः सर्वज्ञो दृश्येत ततोऽर्हन्नपि मुक्तः सर्वज्ञ इति युज्यते न तु तदस्तीत्याह दृष्टान्त इति ।

यत्तु वेदवादिभिरेव कैश्चिदुक्तं नित्य एवाऽयं वेदः प्रजापतेः प्रथममार्षज्ञानेनाऽवबुद्धो भवतीति तदपि सर्वज्ञवदेव निराकार्यमित्याह नित्येति । १४३ । अनुच्चरितशब्दज्ञान-

सर्वदा चापि पुरुषाः प्रायेणाऽनृतवादिनः ।
यथाऽद्यत्वे न विस्रम्भस्तथाऽतीतार्थकीर्तने* ॥१४४॥
स्वप्नादिज्ञानवच्चापि प्रत्ययो ऽस्यागमार्थयोः ।
भवेदिति सशङ्कानां प्रामाण्यं गम्यते कथम् ॥१४५॥
पुरुषातिशयश्चेष्टः सैव चाऽऽगमनित्यता ।
कल्पितं स्मरणं चास्य जन्मान्तरनिबन्धनम् ॥ १४६ ॥
ग्राह्यत्वे चागमस्यैवं द्वेषोऽर्थग्रहणे वृथा ।
यो ह्यनुच्चारितं शब्दं गृह्णात्यर्थे ऽस्य का कथा ॥१४७॥
पुमांस्तावत्स्वतन्त्रः स्यादर्थग्रहणवादिनाम् ।
आगमप्रतिभाने* तु पारतन्त्र्यं द्वयोरपि ॥ १४८ ॥

---

मपि सर्वज्ञज्ञानवद्धर्माऽधर्मज्ञानवच्चाकारणकमेवेति । नन्वेतस्मिन्पक्षे वेदस्यैव धर्मे प्रामाण्याच्चोदनैवेत्यस्याऽविरोधात् किमिति तन्निराकरणमत आह न हीति । कृतकत्वाशङ्कया प्रामाण्योच्छेदनान्निराकार्योऽयं पक्ष इति । न च तद्वचनाद्विस्रम्भसंभवः अद्यत्ववत्तदानींतने ऽपि काले पुरुषाणां प्रायेणाऽनृतवादित्वसंभवादित्याह सर्वदेति १४४। किं चायमागमस्याऽऽगमप्रतिभासः स्वप्नादिवद्यादृच्छिको निर्निमित्तो ऽप्रमाणं स्यादित्यपि शङ्कासंभवान्न प्रामाण्यसिद्धिरित्याह स्वप्नादीति । १४५ । अर्थग्रहणं तुल्यन्यायतया तस्यापि शंक्यमानत्वात् । तस्मान्निराकार्योऽयं पक्ष इति । निराकरणं चानया दिशेति सर्वज्ञनिराकरणमार्गेण दर्शितं, तद्विवृणोति पुरुषेति । १४६ । अद्यतनानामदृष्टो ऽतिशयः प्रजापतेः कल्पितः, अनुच्चरितशब्दाऽङ्गीकारात् । तं च कल्पयित्वा पुनरागमनित्यता वृथैवाऽङ्गीकृतेति । यदि तु स्मृतिर्वेदस्य न ग्रहणं तत्राह * कल्पितमिति । जन्मान्तराऽनुभवनिबन्धनं स्मरणं निमित्ताऽसंभवादेव कल्पितं, कथं हि द्विपरार्द्धसंख्याकं प्रलयकालमतीत्यैतावान् ग्रन्थराशिर्मात्रया ऽप्यन्यूनाऽनतिरिक्तः स्मर्यतेति ।

पुनरपि ग्रहणपक्षमेव दूषयति ग्राह्यत्वे इति । १४७ । ग्राह्यत्वमागमस्येच्छतां शाक्यादिसमाश्रिते धर्माऽधर्मग्रहणे वृथैव प्रद्वेष इति । नन्वैन्द्रियकः शब्दः, धर्मस्त्वतीन्द्रियः, इति कथं तुल्यत्वमत आह यो हीति । शब्दो ऽप्यनुच्चरितो ऽतीन्द्रिय एवेति शाक्यादिपक्षादपि पापीयानयं पक्ष इत्याह पुमानिति । १४८ । तन्मते हि पुरुषस्य स्वातन्त्र्यात्तत्प्रत्य-

अनेकपुरुषस्थत्वादेकत्रैव च जन्मनि ।
ग्रहणस्मरणाद्वेदे न स्वातन्त्र्यं विहन्यते ॥ १४९ ॥
अन्यथाकरणे चास्य बहुभ्यः स्यान्निवारणम् ।
एकस्य प्रतिभानं तु कृतकान्न विशिष्यते ॥ १५० ॥
अतश्च संप्रदाये च नैकः पुरुषः इष्यते ।
बहवः परतन्त्राः स्युः सर्वे ह्यप्यत्ववन्नराः ॥ १५१ ॥

एतेन—पट्टाम्बिशम्भुभट्टशर्मणां प्रबन्धोऽपि—व्याख्यातः । स यथाः—

धर्मतत्त्वनिर्णयः केवलं युक्त्यधीन उत शास्त्राधीनः ? इति । अत्रेदमुत्तरम् ।

धर्मस्यकेवलयुक्तिगम्यत्वम्

यदि धर्मतत्त्वनिर्णयः केवलं युक्त्यधीनः, तर्हि पूर्वोक्तप्रकारेण हिन्दुसनातनधर्मसंस्कारः कर्तुं शक्येत । यदि केवलं शास्त्राधीनः, तर्हि कथं

---

यादर्थनिश्चयो युक्तः, अस्मिंस्तु पक्षे पुरुषो ऽप्यर्थनिश्चये वेदपरतन्त्रः सो ऽपि स्वरूपसिद्धये तत्तन्त्र इति न कस्य चित्स्वातन्त्र्यमिति ।

ननु तवाऽपि पूर्वपूर्वपुरुषाऽधीनमुत्तरोत्तरेषां वेदस्य स्वरूपाऽवधारणमिति तुल्यपारतन्त्र्यमत आह अनेकेति। १४९ । एकपुरुषाधीनत्वे हि पारतन्त्र्यं भवति तत्र हि कृतकत्वाशङ्कया दृष्टत्वे ऽपि यथावद्दृष्टो विप्लवो वा जात इति संशयान्न स्वातन्त्र्येण प्रामाण्यं सिध्यति, अनेकपुरुषस्थे तु वेदे नैव दोषो भवति । किं च जन्मान्तरानुभूतमतिदीर्घकालव्यवहितं स्मर्तुमशक्यं मन्यमाना नूनमयं कृत्वैव वेदं श्रद्धार्थं स्मृतमुपदिशतीति शङ्कमाना न विश्वस्युः, एकस्मिन्नेव तु जन्मनि बहुशो ऽनुभूय स्मर्यमाणे ऽयमपि दोषो न भवतीति न स्वातन्त्र्यहानिरिति । अनेकपुरुषस्थत्वे को गुणो ऽत आह अन्यथेति ।१५०। एकेन विनाशितस्याऽन्यैर्बहुभिर्निवारणात्तत्पारतन्त्र्यं निवर्त्तत इति । एकस्य तु प्रतिभानं कृतकादविशिष्टमिति स्यादेव पारतन्त्र्यमित्याह एकस्येति । उपसंहरति अतश्चेति ।१५१। पूर्वस्मिन् काले यथैकः कर्ता वेदानां नास्ति तथा संप्रदायप्रवर्त्तको ऽपि नैकः किं त्वद्यत्ववदेव बहवः परतन्त्रा एवेति ।

नाम प्राचीनधर्मशास्त्रमर्यादामुल्लंघ्य साधारणजनानुग्रहग्रहिलतया तथा कर्तुं शक्येतेत्यस्ति कश्चित्प्रश्नावकाशः। अत्र यदि पुनरवहितेन चेतसा निपुणं विचार्यते, तर्हि ध्रुवं प्रतिभायात्, धर्मतत्त्वनिर्णयः केवलं युक्त्यधीन इति। तथा हि—शास्त्राणि हि शासनार्थं प्रवर्तन्ते, शासनीयानामर्थानां शासयितृभिः पूर्वमेव निर्णयः कर्तव्यः। अनिर्णीतार्थस्य शासनासंभवात्। तेषामपि निर्णयः केवलं शास्त्राधीनो भवितुं नार्हत्येव। किन्तु युक्त्यधीनः। यदि शास्त्राधीनः, किंशास्त्रं प्रमाणीकृत्य अयं धर्मनिर्णय इति वक्तव्यम्। ततः प्राचीनं किमपीति चेत्, तत्राप्ययमाक्षेपः। अतः अनवस्थापत्त्या धर्मतत्त्वनिर्णयो युक्त्यधीन इत्यास्थातव्यम्। किञ्च यत् शास्त्रं पूर्वमासीत् तेनैव गतार्थतया तन्मात्रमूलकत्वेन नव्यानुशासनवैयर्थ्यम्। दृश्यन्ते चानेके धर्मशास्त्रप्रबन्धाः तदा तदा प्रवर्तिताः क्वचिदंशेषु विसंवादिनोपि। तस्मादनुमीयते तत्तद्देशकालानुरोधेन युक्तिभिः प्राचीनसिद्धान्ता एवावापोद्वापाभ्यां संस्कृत्यानुशिष्टानि धर्मशास्त्राणीति। अतोपि युक्त्यधीनत्वमस्य युक्तम्। अपि च यद्युत्तरोत्तराणि शास्त्राणि प्राचीनानां व्याख्यानरूपाणीत्याग्रह्यते, तदापि न किञ्चिदतोऽन्यदुक्तं भवति। अन्यत्र वाक्यभेदात्। न हि सर्वेपि धर्माः सर्वादौ समानकालमेव केनचिदनुशिष्टा इति शक्यं वक्तुम्। सर्वादौ वर्णाश्रमविभागस्यैवाव्यक्तत्वात्। तद्व्यवस्थापनकाल एव ततः साङ्कर्येण जनिष्यमाणानां सर्वेषां धर्मस्य व्यवस्थापनं कृतमित्यपि युक्तिव्याहतमेवैतत्। किमधिकेन। शाङ्करस्मृतिप्रभृतिषु "अन्यत्राचरणाभावादनाचार इतीरितः" इतिनिरूक्ताश्चतुष्षष्टिधर्मा व्यवस्थापिताः। अपि तेऽपि प्रागेव सर्वमूलभूते प्रबन्धे बीजादौ वृक्षादिरिव अव्यक्तरूपा आसन्निति किं वक्तुं शक्यते?

तस्मात् देशकालानुरोधेनानुकूलानायोज्य प्रतिकूलान् परित्यज्य प्राचीनधर्मा एव प्रकाशिता इति हेतोर्व्याख्याप्रवादः, न पुनरूहापोहाद्यविषयतया यथास्थितार्थविवरणमात्ररूपतया। अयं भावः—सर्वैरपि धर्मशासनकारैर्युक्तिभिः प्राधान्येन धर्मतत्त्वनिर्णयः कर्तव्यः। पश्चात्तेषामनुशासनम्। न युक्तिपर्यालोचनाय साधारणो जनः प्रभवतीति तदनुजिघृक्षैवानुशासनप्रयोजनम्। तत्र चानुशासने श्रद्धासंपादनाय गृहीतप्रामाण्यप्राचीनवचनसम्मतिसंपादनादिर्व्याख्यातृजनसुलभः संप्रदायः। सिद्धे चानुशासने पश्चाद्धर्माधर्मव्यवस्था तदधीनैव। संप्रदायोयं लौकिकवैदिकसाधारणः। एतदेवोपजीव्यायं प्रवादः "धर्मतत्त्वनिर्णयः शास्त्राधीन" इति। न हि सिद्धे देशकालानुगुणे धर्मानुशासने प्रत्येकं युक्तिरेकैकेनापि गवेषणीया। नापि गवेषयितुं शक्यते। ततस्तदेवानुशासनं शरणीकरणीयम्। अतश्च युक्त्यनुरोधेन प्राचीनशास्त्रादिकमवलोक्य देशकालावनुरुन्धानैरेव शास्त्रार्थनिर्णयः कर्तव्यः, न केवलं शास्त्रमाश्रित्य। तथा चोक्तम् "केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः। युक्तिहीनविचारे तु धर्महानिः प्रजायते"। इति

शास्त्रस्य युक्तिमूलकत्वम्

"युक्तिभिरुपष्टब्धस्यार्थस्य बोधनार्थं शास्त्रं प्रवृत्तं उत युक्त्यनपेक्षया तत् प्रवृत्तम्" इति। अत्रोत्तरम्—शास्त्रं नाम विधेयस्य करणीयस्यार्थस्य विधानाय चोदनार्थं प्रवृत्तम्। ततस्तत्र करणीयतानिर्णयः शास्त्रेणेति न संभवति। अनवस्थाप्रसङ्गात्। किन्तु युक्तिभिरेव निर्णीतानामनुशासनम्। विवृतमेतत् पूर्वम्। युक्तय; पुनः सर्वत्र संप्रति न सुबोधाः। तावता निरपेक्षया तत् प्रवृत्तमिति कल्पनं न युक्तम्, यतस्तत्रापि कयाचित् युक्त्या भाव्यम्। सर्वेणापि हि शासनेन यस्य कस्याप्यनर्थस्य परि-

हाराय अभ्युदयस्य संपादनाय वा कृतेन भाव्यम्। न हि शासनमेव स्वयं पुरुषार्थः। येन तस्मिन् युक्त्यनपेक्षया प्रवृत्तिरुपपद्यते, किन्तु युक्त्या अभ्युदयसाधके अनर्थनिवारके वा प्रवर्तनं निवर्तनञ्च शास्त्रेण क्रियते। न हि "नाप्सु मूत्रपुरीषं कुर्या" दित्यादिषु बहुषु शास्त्रेषु संप्रत्यपि युक्तिविसंवादः। यत्र क्वापि विसंवादो युक्त्यनवगममूलः। अनवगमश्च विस्मृतिमूलः। विस्मृतिरपि विहितानां कर्मणामदृष्टद्वारकताप्रकाशनेन प्ररूढेति संभाव्यते। न ह्यनेन कर्मणा अनया प्रणालिकया फलं साध्यत इति क्वचिदपि वो प्रकाशितं दृश्यते। विहितात् कर्मणः किमप्यदृष्टम्, तेन साक्षात् फलं जन्यते इति निगूह्यैवोपदेशः सर्वत्र। अहो किमधिकेन, पात्राणां सम्मार्जनादिभिरपि अदृष्टमेव कल्पयन्तो वयं युक्तिनिराशंसाः आगमिकं प्रस्थानं मूलत एव व्यस्मराम। 'दृष्टे सत्यदृष्टकल्पनाया अन्याय्यत्वम्" जानाना अपि नैतादृशेषु स्थलेषु न्यायममुं व्यापारयामः। ततोहं सुदृढं विमृश्यैव ब्रवीमि युक्तिभिरुपोद्बलितस्यैवार्थस्य बोधनाय शास्त्रं प्रवृत्तम्। न तु युक्तिनिरपेक्षया तत् प्रवृत्तमिति।

[शास्त्रयुक्त्योर्विरोधाभावः] अथ "शास्त्रयुक्त्योर्विरोधे कस्य प्राबल्यम्"। उच्यते। परमार्थतो न कथमप्यनयोर्विरोधो भवितुमर्हति। परन्तु शास्त्रस्य युक्त्याभासैः युक्तीनां वा अनिर्धारितपारमार्थिकतत्त्वैः शास्त्रै र्भवति विरोधः। युक्त्यनुगृहीतस्यैवार्थस्य बोधनाय शास्त्रप्रवृत्तेः। युक्तिविरुद्धार्थकल्पनप्रयासस्य तदनुशासनेन लोकविप्रलंभनैकोद्यमस्य तत्प्रणेतृषु कल्पनमत्यन्तमनुचितमेवेति को नाम न वेद। अन्यथा कथं परप्रतारणार्थं प्रवर्तमानास्तदैव ते न निगृहीताः। साधारणजनस्य अशक्तावपि प्राचीनैर्म-

हाराजैः कथं न प्रतिषिद्धाः। सर्वमेतत् भवतु यथाकथञ्चित्, कथमद्ययावत् तदनुयायिनः अनुयानाशक्तावपि सुदृढानुयानश्रद्धालव एवाधोधिका अवलोक्यन्ते। ततोऽनुमीयते शास्त्रमिदं युक्तिभिर्निर्धार्य बहुमतानुरोधेन प्रायोगिकत्वं प्रापितमिति। अतः कथमिदं युक्तिविरुद्धं स्यात्।

[शास्त्रयुक्त्योर्विरोधोद्घोषे बीजम्]

अथ संप्रति सर्वत्र श्रूयमाणः धर्मशास्त्रस्य युक्तिविरुद्धतोद्घोषः किं निष्प्रमाणः? उच्यते। अत्राप्यस्ति पारमार्थिकं किमपि तत्त्वम्। तथाहि—यदेतत् शास्त्रं पूर्वं तत्तद्देशकालानुरोधेन युक्तिपुरस्कारेण व्यवस्थापितमभूत्, तत् सर्वात्मना तेनैव रूपेण संप्रति प्रायोगिकतया प्रचारयितुं दुश्शकम्। अबाधितरूपतया ग्रन्थमात्रावस्थितिः सुसंपादापि सा नातीवोपयोगाय। या पुनरुपयोगाय कल्पते प्रायोगिकतया प्रवृत्तिरूपेण अवस्थितिरूपा, सा दुस्संपादा। अतः सांप्रतिकयुक्तीनां शास्त्रेण सहास्ति विरोध इति।

[युक्तिपदार्थनिर्वचनम्]

अथ युक्तिभेदः। युक्तिर्नाम योगः आनुगुण्यम्=औचित्यम्। सा च देशकालावस्थादिभेदेन भिद्यते। यच्चापणे युक्तं कर्तुं व्यवहर्तुं वा, तत् न राजसदसि। शास्त्रीयस्तु अनुपनीतेन भार्यया च सहभोजनादिः क्वचिद्विप्रतिषिद्धः। क्वचिन्न। तथा उर्णाविक्रयादिरपि। तदुक्तं बौधायनेन "पञ्चधा विप्रतिपत्तिर्दक्षिणतः ... .... ... ... ... ... ... तथोत्तरतः .. .. इतरदितरस्मिन् कुर्वन् दुष्यति इतर इतरस्मिन् कुर्वन् दुष्यति। तत्र तत्र देशप्रामाण्यमेव स्यात्" इति। एवं कालभेदाच्च युक्तयो भिद्यन्ते। यदन्हि युक्तम्, तत् न रात्रौ युक्तं युज्यते। यद्वा शीतकाले, तन्नोष्णकाले।

अथ शास्त्रीयम्। "रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्तिता हि सा। सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते ॥" २८०-३-मनुः। अवस्थाभेदादपि भिद्यन्ते, यथा हि क्षुधितस्य भोजनमुचितं, तथा नारोचके। अथ शास्त्रीयम्। ये पुनरापदि धर्मा न ते अनापदि। तस्मात् देशकालावस्थाभियुक्तीनां भेदः संभवतीति युक्तमनुमातुम्। ततश्च युक्तीनां संभाव्यते शास्त्रविरोध इति।

[शास्त्रस्य युक्ति-विरोधे परिहारः]

विरोधपरिहारः। येन शास्त्रेण सह विरोध इत्युच्यते, न तस्य शास्त्रस्य पारमार्थिक उद्देश एव सम्यग्विज्ञातः। यदि विज्ञातस्तर्हि तेन सह विरोधं युक्तीनां भवान् न ब्रूयात्, शास्त्रस्य तु पारमार्थिक उद्देशोऽनर्थपरिहरणमभ्युदयसंपादनञ्च। यद्येतदन्यथापि सिद्धम्, तर्हि तत्र कामचारः। किञ्च देशकालावस्थाभेदेन शास्त्रविहितधर्मानुष्ठाने अधिकारिनिर्द्धारणं क्रियमाणममुमेवार्थमस्माकं गूढमवगमयति। तथाहि—"यावज्जीवमग्निहोत्रं जुहोति" इति गृहस्थस्य नित्यो विधिः। यदि पुनर्येन केनापि अपरिहरणीयेन निमित्तेन तदनुष्ठातुं न चेत् कश्चित्प्रभवति, तर्हि स गृहस्थधर्मात् प्रच्युत इति कल्पनमति हि नाम साहसं भवति। अत एव हि "अर्थी समर्थो विद्वान्" इत्येवमाद्यधिकारिव्यवस्था धर्मवेदिभिर्विहिता। अपि च अनर्थपरिजिहीर्षा अभ्युदयसंपिपादयिषा वा यदि नास्ति तर्हि सोपि कर्मणि नाधिकरोति इति व्यक्तमाहुर्वेदान्तिनः—"अग्नीन्धनाद्यनपेक्षा" इति व्या० सू०। मनुनाप्युक्तम् "अकामस्य क्रिया काचित् दृश्यते नेह कर्हिचित्। यद्यद्धि कुरुते किंचित्तत्तत् कामस्य चेष्टितम् ॥" मनु-२-४ इति। एवं चेत् क्रमेण धर्मह्रासो भवेत्। यद्यदाचरति श्रेष्ठ इति न्यायेन लोकस्याप्यनुकरणसंभवात् इति चेत्

अमुमेवार्थं हि मन्वानः लोकक्षेमकामः मुमुक्षुं कर्मसन्यासिनम् "लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि" इत्यभ्यर्थयति। अन्यच्च विहितसकलधर्मानुष्ठानविमुखोपि विशिष्टगरिष्ठगोष्ठीभिः संप्रत्यपि संव्यवह्रियमाण एवावलोक्यते। एतादृशीभिरुपपत्तिभिरहमभिप्रैमि, सामान्यतः प्रवृत्ते शास्त्रे तद्देशकालावस्थानुरोधेन धर्मज्ञैरधिकारिविशेषसमुद्भावनद्वारा युक्तिविरोधः समुन्मूलमुच्छेत्तव्य इति।

[युक्तेरेव विरोधपरिहारकत्वम्]

समुद्भावितविरोधं शास्त्रं युक्त्यनुरोधेन नेयार्थम्। "उदिते जुहोतीति" श्रुतिः। "अनुदिते जुहोती" ति श्रुतिः। "अतिरात्रे षोडशिनं गृह्णाति" इति च श्रुतिः। एवं यवव्रीह्यादिविधयोपि वेदे वर्तन्ते। कथमनयोर्न विरोधः? विरोधे वा प्रामाण्यम्? अन्यतरप्रामाण्यमिह श्रुतित्वाविशेषाद्व्यवस्थापयितुं न युक्तम्। तस्मात् किमत्र युक्तमिति युक्तिरेव समाश्रयणीया। युक्त्या हि उदितानुदितहोमयोः कर्तृभेदः परिकल्प्यते, तथा च यः उदितहोमं प्रक्रान्तवान्, स चेत् कदाचित् अनुदितहोमं कुर्यात्, तर्हि "श्यावोऽस्याहुतिमभ्यवहरति य अनुदिते जुहोति" इत्यादिना सूचितं वैफल्यं भजते इत्यस्मिन्नर्थे उदितानुदितहोमविधायकश्रुत्योः तात्पर्यं परिकल्प्य युक्त्या विरोधः परिह्रियत इति शास्त्रीय एवायं पन्थाः। एवं षोडश्यादिस्थलेष्वपि विकल्पादिपरिकल्पनया विरोधः परिहर्तव्य इति नायमपरिचितो मार्गः। अतः शास्त्रयोरपि विरोधे तत्परिहाराय युक्तिरनुग्राहिका, तदनुरोधेन नेयार्थं शास्त्रम्। तस्मात् युक्तेरेव प्राबल्यम्। युक्तिमनुरुध्य हि शास्त्राण्यन्यथा कृतान्यवलोक्यन्ते। पूर्वं तावत् विशिष्टेन धर्मज्ञेन यत्किमपि पृष्टोऽविचारितमेव दद्यादित्यासीद्धर्मज्ञ-

समयः। एवंस्थिते अनपत्यः कश्चन शिष्टः श्वेतकेतुसमक्षं तत्पितरं पुत्रैषणाया तत्पत्नीमभ्यर्थयामासेति, ततः परं ततःक्षुब्धोऽयं श्वेतकेतुर्नाम धर्मोयमधर्मत्वेन परिगणनीय इति समयं च व्यवस्थापितवानिति महाभारते आदिपर्वणि दृश्यते। एवं "समांसो मधुपर्कः"।

"पितॄणां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः।
तच्चामिषेण कर्तव्यं प्रशस्तेन प्रयत्नतः॥

६२३—३—मनुः। इयं प्राचीन व्यवस्था।

संप्रति तु तत्स्थाने अन्यदेव प्रतिनिधीक्रियते। एवं "पितृदेवातिथिपूजायामप्येवं पशून् हिंस्यादिति मानवं, तथापि "ब्राह्मणाय वा राजन्याय वाभ्यागताय महोक्षाणं महाजं वा पचेदेवमेवास्मा आतिथ्यं कुर्वन्ति" इति श्रूयते। वसिष्ठेनाप्युक्तम्। "भक्ष्यौ तु धेन्वनडुहौ मेध्ये वाजसनेयके" इति। संप्रतीयमपि निषिद्धैव व्यवस्था। एवं "नष्टे मृते प्रव्रजिते क्लीबेऽथ पतिते पतौ। पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते"॥ इति बृहस्पतिः। तत्र अनिर्द्धारणे साङ्कर्यप्रयुक्तं महान्तं दोषं पश्यन्तः केचन धर्मज्ञाः निर्धारणं कृतवन्तः "अपतिरपत्यलिप्सुर्देवरात्"। गो०। "अलाभे पिण्डगोत्रऋषिसंबन्धेभ्यः" गो०। तदलाभे "योनिमात्रेभ्यः" गो०। योनिर्ब्राह्मणजातिः। "नादेवरादित्येके" गो०। इयं प्राचीनव्यवस्था। पश्चाच्च देवरादपि सुतोत्पत्तिं न्यषेधुः "अश्वालंभो गवालंभः सन्यासं पलपैतृकम्। देवरेण सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्"॥ इति। तस्मादनुमीयते युक्त्यनुरोधेन शास्त्राण्यन्यथाक्रियन्त इति। एवमन्यथाकरणे युक्तय एव मूलमिति शास्त्रयुक्त्योर्विरोधेऽपि युक्तेरेव प्राबल्यं कल्पनीयमिति मां प्रतिभाति। न चैतावता शास्त्रविरोधः संपादितः स्यादित्यधिक्षेप्तव्यम्। शास्त्रस्य देश-

कालानुरोधेन युक्त्यनुरोधेन च प्रवृत्ततया देशकालभेदं प्रकल्प्य विकल्पादीन् वा परिकल्प्य विरोधस्य परिहर्तुं शक्यत्वात् युक्त्यनुरोधेन शास्त्रस्य नेयार्थत्वात्। अमुमेवाभिसन्दधानाः शिष्टा आहुः "आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः"॥ इति

[ शास्त्रलक्षणम् ] किं शास्त्रम्? कर्तव्याकर्तव्ये यत् प्राधान्येन शास्ति विधत्ते तच्छास्त्रम्। एतदेव हि शास्त्रस्य काव्यादिभ्यो विलक्षणं लक्षणम्। काव्यादिषु गृह्यकथाबाहुल्यम्, शास्त्रे त्वनुशासनप्राबल्यम् दृश्यते चैतत् सर्वेषु धर्मशास्त्रेषु। अतः शास्त्रपदव्यपदेशार्हन्ती प्राधान्येन स्मृतीनामेव भवितुमर्हति, न वेदस्य ( मन्त्रभागस्य )। अत एव वेदशास्त्रपुराणेतिहासादेरिति वेदादीनां शास्त्रातिरिक्ततया ग्रहणमुपपद्यते। एतदेव कल्पनमुपोद्बलयति "अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः। धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश"। इत्याद्यभियुक्तोक्तिः। एतद्व्याख्याने विवृतं मस्कर्याचार्यैः "तेषां मध्ये परिगणितमिदं धर्मशास्त्रमारभ्यते" इति। इदमपि शास्त्रस्य तेभ्यो भेदमेव व्यनक्ति। एवं "श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रन्तु वै स्मृतिः" ७०—२—मनुः इत्यादिकमत्र प्रमाणं स्वयमनुसंधेयम्। तस्मात् शास्त्रपदेन प्राधान्येन वेदः विवक्षित इति वक्तुं न शक्यते, किमुत वेद एवेति। अत्र कारणम् वेदे (मन्त्रभागे) देववृत्तान्ताः, गृह्याः कथाः, प्रकृतिसौभाग्यवर्णनं इत्येवमादय एव दृश्यन्ते, न तु शास्त्रव्यपदेशौपयिकम्, एवं कार्यं एवं न कार्यमित्येवमादिविधिनिषेधरूपं शासनं हि शास्त्रपदनियामकम्, तत्तत्र कुत्रापि न दृश्यते। किंच प्रामाणिकपरिगणनमपि वेदस्य शास्त्राद्बहिरेव, यथा "वेदः शास्त्रं पुराणञ्च"। किंच शास्त्रं शासनौपयिकं, वेदो विज्ञानौप-

यिकः। तदनयोरस्ति व्यापारभेदः। एवं तुल्ययुक्त्या पुराणेतिहासशिष्टाचारादेरपि न प्रधानं शास्त्रत्वम्, किंतु गौणम्। नियोगप्राधान्येन धर्मेष्वप्रवर्तनात्, पुराणकथाकथनप्राधान्येन धर्मेष्वपि प्रवृत्तिः ताभ्यामानुषंगिकतया क्रियते। यद्यनयोरपि शास्त्रत्वं समर्थ्यते, तर्हि तयैव युक्त्या काव्यादीनामपि तत् कल्पनीयं स्यात्। आचारः शास्त्रमिति तु व्यवहारः सर्वथा गौणः। न हि सोयं धर्ममनुशास्ति। तस्मात् स्मृतिरेव शास्त्रपदेन प्राधान्येन व्यवह्रियते, नापि पुराणेतिहासशिष्टाचारा इति।

[ वेदे शास्त्रपदस्य भाक्तत्वम् ]

अथ शास्त्रपदेन वेदादीनपि विवक्षमाणानां का उपपत्तिरिति विचारयामः, तत्र भाक्तो व्यवहार इत्येकं समाधानमुक्तप्रायम्। भक्तिरिह धर्मे प्रवर्तकत्वसाम्यात्। अत एव हि धर्माधर्मनिर्धारणे मूलतयैव वेदादय उक्ताः, न तु धर्मशास्त्रत्वेन। यथा "वेदो धर्ममूलम्" १-१-गौ० "तद्विदांच स्मृतिशीले १-२-गौ०। वेदाद्धर्मो हि निर्बभौ। वेदोखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ॥६-२—मनुः। "वैकल्पिके आत्मतुष्टिः प्रमाणम्, गर्गः। एतेन धर्मव्यवस्थापनमूलभूतत्वादेव वेदादीनां शास्त्रत्वम्, न तु एवं कुरु, एवं मा कुरु, इति प्रवृत्तिनिवृत्तिविधायकत्वात्। अथ वेदः शास्त्रमित्यत्र अन्यदप्यस्ति नियामकम्, यत् वेदपदेन ब्राह्मणमपि गृह्यत इति। तच्च ब्राह्मणं विधिनिषेधप्रधानभूतमिति शास्त्रं भवति। ततश्च वेदः शास्त्रमिति सामान्येन व्यवहारः प्रवृत्तः।

ब्राह्मणभागस्यावेदत्वम्

अथ ब्राह्मणं वेदपदेन गृह्यते न वा इति विचार्यमाणे न ग्राह्यं इत्येव मां प्रतिभाति तथापि प्रतिपक्षसिद्धांतं प्रथमतः प्रकाशयामः। "नास्तीयन्तो

वेदभागा इति क्लृप्ते रभावतः। मन्त्रश्च ब्राह्मणश्चेति द्वौ भागौ, इति न्यायमालायाम् "मन्त्राश्च ब्राह्मणाश्च वेदः" शबरस्वामी। "शेषे ब्राह्मण" मिति ३३-६-२ जै०। अतः ब्राह्मणस्यापि वेदत्वे सिद्धे ब्राह्मणभागस्य सामान्येन विधिपरतया शास्त्रत्वसिद्धौ वेदस्यैव शास्त्रत्वं सिद्धमिति।

परमार्थतस्तु ब्राह्मणं वेदाद्भिन्नमेव। मूलवेदे हि कर्मचोदना नास्ति। ब्राह्मणेष्वेव अवलोक्यते। आपस्तंबेन चोक्तम् "कर्मचोदना ब्राह्मणानि" इति। अयमभिप्रायः—शबरस्वामिभिरुद्धृताभिरेताभिः कारिकाभिर्व्यक्तीभवति "हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः। परक्रिया पुराकल्पो व्यवधारणकल्पना॥ उपमानं दशैते तु विधयो ब्राह्मणस्य वै" इति। एते मूलवेदेषु विरलाः। अतः ब्राह्मणं मूलवेदस्य व्याख्यानम्। निरुक्तकारिकया प्रदर्शितं स्वरूपं व्याख्यानस्यैव हि संगच्छते। अपि च इतिशब्दायोजनेन मूलवेदस्थं पदं वाक्यं वोपादाय बहुत्र व्याख्यायते ब्राह्मणे। यथा "ऋतसत् इति मूलवेदपदम्। तस्य व्याख्याब्राह्मणम् "ऋतमित्येव सत्यं ऋतजा इत्येव सत्यजाः। ऋतसदित्येव सत्यसत्,, ऐ०ब्राह्मणम्। एवं "समुद्रादर्णवादधि संवत्सरो अजायत। २-७६० मण्डलम्। अत्र संवत्सर इति मूलवेदस्थं पदम्। अस्य व्याख्याब्राह्मणानि—संवत्सरः प्रजापतिः प्राजापत्यायतनाभिरेव आभीराध्नोति" ऐ०ब्रा०। "संवत्सरः खलु वै देवानां पूः। संवत्सरः खलु वै देवानामायतनं, एतस्माद्वै आयतनात् देवा असुरानजयन् इति च यजुषि संवत्सरपदं श्रूयते। एवमितियोजनेन इत्थयोजनेन च पदव्याख्या। मूलवेदम् "पिता यत् स्वां दुहितरं अधिष्कन् दमया रेतः संजग्मानो निषिञ्चत्' ७ ६७—७०म०। व्याख्याब्राह्मणानि "प्रजापतिः स्वां दुहितरं अभ्य-

ध्यायत्, दिवमित्यन्ये आहुः, उषसमित्यन्ये" इत्येवमादि। ऐ—ब्रा०। "प्रजापतिः स्वां दुहितरं अभिदध्यौ, दिवं वा उषसं वा, मिथुनी एनया स्यामिति, इत्येवमादि शतपथम्। एवं "यज्ञेन यज्ञमयजन्त देवा इति मूलवेदम्। ७६-६०७० म। यज्ञेन वै तद्देवा यज्ञमयजन्त इत्यादि ऐतरेयव्याख्याब्राह्मणम्। एवं स्वयमूहनीयम्।

अथ क्वचिन्मूलानुक्ता अप्यर्थाः प्रकाशिताः। अतोऽस्य कालक्रमेण वेदत्वं समागतमिति। परन्तु तत्रापि वेदाशयप्रकाशनपरतया स्वस्य व्याख्यानरूपत्वमेव मन्यते ब्राह्मणम्। तथाहि तैत्तिरीयब्राह्मणे "ता वा एता उभितयो व्याख्यायन्ते" इति। अतोऽनुमीयते वेदपदेन मन्त्रभागस्यैव ग्रहणं युक्तम्, न तु ब्राह्मणस्यापीति। अन्यथा तु किमपराद्धं उपनिषदा? किं वारण्यकेन। अतो मन्ये कर्मप्रामाण्यव्यवस्थापनसौकर्याय मीमांसकमतानुयायिभिः कल्पितोऽयं व्यवहारः "मन्त्रब्राह्मणयोर्वेदनामधेयम्" इति। अयमत्र संपिण्डितार्थः—शास्त्रपदेन ब्राह्मणभागः स्मृतिश्च प्राधान्येन गृह्यते, इतरेषां ग्रहणं पुनरौपचारिकम्—इति।

शास्त्रार्थविनिर्णयो मीमांसकपरिपाट्या संपादनीयः उतैतिहासिकशैल्या? इति।

[ शास्त्रार्थपदार्थविचारः ]

अत्रादौ कः शास्त्रार्थनिर्णयपदस्यार्थ इति विचार्यते। शास्त्रस्यार्थः शास्त्रार्थः। शास्त्रं ब्राह्मणस्मृत्यात्मकमित्युक्तम्, तस्यार्थोऽभिप्रायः। यथा उदितानुदितहोमयोः, षोडशिग्रहणनिषेधयोः, गवालंभादिविधिनिषेधयोः, प्राथमिकविरोधदर्शनात् क्वचिदनिर्णयः। क्वचित् "नान्तरिक्षे न दिवि अग्निश्चेतव्यः" इत्यभागिप्रतिषेधात् (अप्राप्तनिषेधात्) अनिर्णयः। "शास्त्रदृष्टविरोधात्" "तथा फलाभावात्" "आनर्थक्यात्"

"अनित्यसंयोगात्" च भवति संशयः । अत्र प्रत्येकं विषयवाक्यानि जै-सू० १-२-२ प्रभृतिसूत्रव्याख्याने शबरस्वामिभिर्दर्शितानि द्रष्टव्यानि । एवं भूतानां सन्दिग्धप्रामाणानां अनिर्णीतार्थानां वा वाक्यानां संप्रयोगेण स्पष्टमप्रकाशमानस्य ब्राह्मणादिवाक्यस्य अभिप्रायनिर्णय एव शास्त्रार्थनिर्णय इत्येकः पक्षः । अथ शास्त्रस्य विधिनिषेधरूपस्य अर्थः प्रयोजनं—किमर्थमिदं शास्त्रं प्रवृत्तम् ? किमर्थमस्मिन् कर्माणि लोका नियुज्यन्ते ? किमर्थं वास्मात् निवर्त्यन्ते ? इत्येवमादिरूपं यत्, तस्य किं फलं विहितानुसरणे ? किं वा निषिद्धवर्जने, को वा दोषो विपर्यये इत्यादिविचारणापुरस्सरमागमिकप्रस्थानानुरोधेन निर्द्धारणं शास्त्रार्थनिर्णय इति द्वितीयः पक्षः । अथ शासनीयोऽर्थः शास्त्रार्थः, तस्य निर्णयः—एवं कृतवतां एते गुणाः समागताः, एवं कृतवतामेते दोषाः, तस्मादेते विधेयत्वेन एते वर्जनीयत्वेन च शासनीया अर्था इत्येवंरूपो निर्णयः शास्त्रार्थनिर्णय इति तृतीयः पक्षः ।

[आद्यपक्षे-मीमांसा परिपाट्युपयोगः] एष्वाद्यो मीमांसकपरिपाट्या संपादनीयः । तथाहि मीमांसाशास्त्रं धर्मजिज्ञासया प्रवृत्तम् । धर्मश्च चोदनालक्षणोऽर्थ इति लक्षितः । चोदना विधिवाक्यम् । अत एव वाक्यार्थनिर्णयौपयिकत्वादिदं शास्त्रं वाक्यपदेन प्राचीनैर्व्यवह्रियते पदवाक्यप्रमाणज्ञैः इत्येवमादिषु । पदं प्रकृतिप्रत्ययादिविभागेन पदसंस्कारकं व्याकरणशास्त्रम्, वाक्यं विधिनिषेधपरिसंख्यासमुच्चयविकल्पादिपरिकल्पनया वाक्यसंस्कारकं पूर्वमीमांसाशास्त्रम् । प्रमाणं हेतौ (युक्तौ) पक्षसत्त्वविपक्षासत्त्वाबाधितत्वादिगुणपरिगणनया व्यभिचारादिदोषपरिगणनया चार्थव्यवस्थापनौपयिकानुमानसंस्कारकं न्यायशास्त्रम् । अतः विधायकवाक्यार्थनिर्णयो मी-

मांसाधीन इति गम्यते। किञ्च क्रियैव हि चोद्यते। कर्मचोदनारूपस्य ब्राह्मणवाक्यस्य अर्थनिर्धारणानुगुणो विचारोऽत्र युक्तिरूपः। न त्वक्रियार्थानां वाक्यानां निर्णय इति सन्देहं व्यपनोदयञ्जैमिनिः "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति स्वयं पूर्वपक्षमुद्भाव्य विध्येकवाक्यतया सिद्धार्थानामप्यत्र विचारो युक्त इति संसूचयति। प्रदर्शिता च विधायकवाक्यातिरिक्तवाक्यानां स्तुतिनिन्दापरकृतिपुराकल्पभेदेन विध्येकवाक्यता। तस्मादवगम्यते प्राधान्येन विधिवाक्यार्थनिर्णयाय प्रवृत्तोऽपि जैमिनिर्वाक्यसामान्यनिर्णयनौपयिकतया सामान्यतः शास्त्रं प्रणीतवानिति। एतेन—जैमिनिराम्नायपदेन प्राधान्येन ब्राह्मणभागमेव गृह्णाति, तदेकवाक्यतया च मन्त्रभागम्। प्रकाशयति चामुमर्थं "विधिर्वास्याद-पूर्वत्वाद्वादमात्रं ह्यनर्थकम् २-२६, इत्याक्षिप्य "न पूर्वत्वात्" २-२७, "उक्तन्तु वाक्यशेषत्वम्" २-२२ इत्यादिस्पष्टोक्त्या। अत एवोक्तं पूर्वम्, वेदपदेन ब्राह्मणभागो ग्राह्य इति मीमांसकानां ग्रह इति सिद्धम्। एतेन च प्रथमपक्षानुरोधेन यः शास्त्रार्थनिर्णयः स मीमांसापरिपाट्या संपादनीय इति सिद्धम्।

[ द्वितीये ऐतिहासिकशैल्युपयोगः ] अथ द्वितीयपक्षानुरोधेन यः शास्त्रार्थनिर्णयः स ध्रुवमैतिहासिकशैलया संपादनीयः। तथाहि "सत्यं वद, धर्मं चर, मातृदेवो भव" इत्यादिधर्मानुशासनम्। अत्र कुत एतदनुष्ठेयम्? अननुष्ठाने को दोषः? किमर्थमिदमनुष्ठेयतया अनुशिष्टम्? इत्येवमादिकस्य शास्त्रार्थस्य निर्णयः कथं मीमांसया क्रियते? न हि तत्र कोऽप्यागमिकप्रस्थानानुरोधेन विचारः कृतः। अतोऽत्रैतिहासानुरोध एव गरीयान्। तथा हि सत्यानुसन्धस्य धर्मचारिणः मातापितरौ देववदाराधयतो धर्मराजस्य

सर्वमनुकूलपर्यवसायि, सर्वे श्रेयस्कामाः, किमधिकं शत्रुतया रणा-ङ्गणं स्वयमागता अपि महानुभावाः तस्यैव विजयमाशंसन्ति। इत्येवमादिकं कथारूपेणोपदिश्य धर्ममनुसरतः सकललोकानुगुण्यं पार्यन्तिकपारमार्थिकविजयश्च भवतीति विशदमुपदिशन् व्यासः सत्यं वदेत्यादि धर्मानुशासनं किंप्रयोजनकमित्याकांक्षां समूल-मुन्मूलयति, विपर्यये विपर्यय इति सुयोधनवृत्तान्तेन च विशद-यति। अतश्चान्वयव्यतिरेकाभ्यामभ्युदयसाधकं धर्मं विजानीयात्, स एव शास्त्रे प्रपञ्चेनानुशिष्यते, यथा नानुशिष्टत्वाद्धर्म इति, किन्तु धर्मत्वादनुशिष्ट इति। तस्मात् कुतोऽयं धर्मः? कुतोऽयमधर्मः? इत्यादिविवेचनं न मीमांसकपरिपाट्या कर्तुं शक्यते। सा हि इतिकर्तव्यताभागं परं पूरयति। इतरत्र तु इतिहासपुराणादिसर-ण्यनुसरणमेव शरणम्।

[तृतीयेऽपि ऐतिहासिकदृष्टिरेव] अथ तृतीयोऽपि ऐतिहासिकसरण्यैव संपादनीयः। अत्र हि शासनीयार्थनिर्धारणं शास्त्रार्थनिर्णयः। न हि मीमांसायां क्वचिदपि अयमर्थः शासनीयोऽनया प्रणाडिकया अभ्युदयजनकत्वात्, अयमर्थो निषेद्धव्यो अनया प्रणाडिकयाऽपक-र्षजनकत्वात्, इत्यादिप्रदर्शनं क्रियते, परन्तु अस्य विधिवाक्यस्य कर्म-विधित्वमुत गुणविधित्वम्, अत्र समुच्चय उत विकल्पः इति, अत्र निषेध उत परिसंख्या इत्येवमादि विचारः परं प्रकाश्यते। कथमतोऽ-नया शासनीयार्थो निश्चीयताम्। धर्मनिर्द्धारणे प्रमाणतया वेदा-दय एव प्रदर्शिताः, न तु मीमांसा। "अथातो धर्मं व्याख्यास्यामः। श्रुतिप्रमाणको धर्मः" हारीतः। "वेदो धर्ममूलम्" गो०॥ वेदोऽखि-लो धर्ममूलं स्मृतिशीले च तद्विदाम्। आचारश्चैव साधूनामा-त्मनस्तुष्टिरेव च।" मनुः २-६। अत्र साधूनामाचारः प्रत्यक्षतो

दृश्यमानः पुराणेतिहासादिभिरवगम्यमानश्च। अत एव "इतिहासं पुराणञ्च सर्वं वेदोपबृंहणम्" इत्याहुः। तथाच शास्त्रार्थ इतिहासपुराणाद्यनुरोधेन शक्यते निर्णेतुम्। अत्र हि एतदाचारः एतामवस्थां गतवानिति, एतद्विरुद्धाचार एतत्प्रतीपामवस्थां गतवानिति च वृत्तान्वाख्यानपुरस्सरं धर्माधर्मविवेचनचातुर्यमेव प्रधानं लक्ष्यं कृत्वा सम्यगुपदिश्यते। शक्यते चेयमेव सरणिः। क्वचित् धर्मव्यवस्थापकवचनाभावेपि युक्त्यनुरोधेन कल्पयितुम्। ततः शक्यत्वात्, वचनावलोकनेप्युत्सर्गापवादभावस्य तत्रापि युक्त्यनुरोधेनैव कल्पनीयत्वेन युक्त्यपेक्षणस्य तुल्यत्वात्। परं त्विदं सर्वं विद्वद्विषयम्। साधारणजनस्य स्पष्टतया विधिनिषेधबोधकं वाक्यमेवोपयोगाय, न तु सः नक्रचक्राद्याक्रान्तान्महासागरगर्भान्मुक्तानिकरमिवात्युक्त्यतिशयोक्त्याद्यत्यारूढात् पुराणादितिहासाद्वा धर्मसञ्चयं कर्तुं प्रभवति। साधारणतमस्तु शिष्टमेव पृष्ट्वा निर्द्धारयेदिति विवेकः। इदमत्रावधेयम्—सिद्धे धर्मानुशासने तदेव धर्मनिर्णायकत्वेन समादरणीयमिति युक्तम्, धर्मानुशासनकाले तु पुराणेतिहासाद्यनुरोधेन पूर्वमेव धर्मो निर्णेयः। तत्र च निर्णये मीमांसा नातीवोपकुर्यात्। तस्या ब्राह्मणादिवाक्यार्थनिर्द्धारणमात्रोद्देशेन प्रवृत्तत्वात् सा याज्ञिकसंकेतविज्ञानाय दृढमुपकरोतीति सत्यम्। इति।

क्रियाणां स्वरूपतो धर्मत्वमुत फलविशेषसाधनत्वेन ? इति प्रश्ने तु इदमेवोत्तरम्—

[ क्रियाणां फलसाधनत्वेन धर्मत्वम्]

क्रिया नाम प्रोक्षणहोमादिरूपं कर्म। तच्च गुणकर्मार्थकर्मभेदेन द्विविधम्। तत्र गुणकर्मोत्पत्त्याप्तिविकृतिसंस्कृतिभेदाच्चतुर्विधं क्रमेण "अग्नीनादधीते"त्यनेन आहवनीय उत्पत्तिरूपम्, "स्वाध्यायोऽध्येतव्य" इत्यनेन स्वाध्याय आ-

तिरूपम्, व्रीहीनवहन्तीत्यनेन व्रीहौ विकृतिरूपम्, व्रीहीन् प्रोक्षतीत्यनेन व्रीहौ संस्कृतिरूपं च संस्कारं जनयति, तद्द्वारा च यथाकथञ्चित् फलविशेषसाधकत्वमेषां संपादयितुं शक्यते। अर्थकर्म तु पुनः नित्यनैमित्तिककाम्यभेदात् त्रिविधम्। तत्र काम्यानां स्पष्टमेव फलजनकत्वम्, नित्यनैमित्तिकयोरग्निहोत्रजातेष्ट्योः परं फलं नास्तीति सिद्धान्तात् फलजनकत्वं न संभवतीति स्वत एव धर्मत्वमभ्युपगन्तव्यं भवति। अत्रापि "नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्।" इत्युक्त्यनुरोधेन दुरितनिवृत्तिः फलमिति वक्तुं शक्यतयाऽर्वाचीनमीमांसकैस्तथैवाभ्युपगतत्वेन च स्वरूपतो धर्मत्वप्रवादो बलवान एव। अभावस्य तु पुरुषार्थत्वं न संभवतीत्येतत् प्रत्याख्यातमेव निःश्रेयसस्वरूपं निरूपयद्भिः शङ्करमिश्रैः। मीमांसकपुंगवैः पार्थसारथिमिश्रैरपि मोक्षस्वरूपनिरूपणावसरे सुखदुःखादिसमस्तवैशेषिकात्मगुणोच्छेदो मोक्षः, अभावात्मकत्वेपि मुक्तेर्नापुरुषार्थता इत्येवं वदद्भिः प्रत्याख्यातम्। अपि च स्वरूपत एव धर्मत्वे तस्य पुरुषार्थत्वमपि स्वत इत्यायातम्। तच्च तस्य क्लेशरूपत्वात् सुतरामेव न संभवति। किञ्च फलविशेषस्य कालान्तरभाविनः श्रुतिबोधितकारणत्वोपपादनायादृष्टस्वीकारोऽपि निर्निबन्धनः स्यात्। स्वतः पुरुषार्थत्वे फलजनकत्वसमर्थनस्यानपेक्षितत्वात्। अन्यच्च "न कुर्यान्निष्फलं कर्म" इति निष्फले प्रवृत्तेर्निषिद्धत्वात् सफलत्वस्यावश्यमभ्युपगन्तव्यत्वेन क्लेशरूपस्य कर्मणः स्वतः पुरुषार्थत्वकल्पनानौचित्येन चाकामेनापि फलविशेषसाधनत्वेनैव धर्मत्वमित्यभ्युपगन्तव्यम्। एवं सति "यतोऽभ्युदयनिश्रेयससिद्धिः स धर्मः" इति तन्त्रान्तरानुग्रहोऽपि संपादितो भवति। अत एव यत्र क्वापि फलविशेषाश्रवणे "सः स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वा" दिति

स्वर्गफलकत्वकल्पनप्रयासोऽर्थवान्। तस्मात् विहितस्य कर्मणो दृष्टमदृष्टं वा किमपि फलमस्तीत्यभ्युपगम्य तत्साधकत्वेन धर्मत्वं संपादनीयमिति ममाभिप्रायः।

[कर्मणःस्वरूपतो धर्मत्वप्रवादोपपत्तिः] अथ स्वतो धर्मत्वप्रवादः कथमागत इति विचारयामः—कर्मणा देवाः प्रसीदन्ति, प्रसन्नैर्देवैः फलमुत्पाद्यते इति बहुप्राचीनः सिद्धान्तः। अयं सिद्धान्तः "देवता वा प्रयोजयेदतिथिवत् भोजनस्य तदर्थत्वात्" (९-७-९ जै०)इत्यादिना जैमिनिना निराकृतः। एतदभिप्रायप्रकाशनाय शास्त्रदीपिकात इमानि वाक्यान्युद्ध्रियन्ते। "देवताराधनार्थो यागः। सा चाराधिता फलमाराधयित्रे ददातीति युक्तम्। श्रूयते हि "तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति (अयम् पूर्वपक्षः)। सा विग्रहवती चानित्या स्यात्। यद्यपि देवता विग्रहं परिगृह्य भुक्त्वा तृप्यति प्रसीदति च। तथापि यागादेव फलम्। सत्यपि विग्रहे प्रदत्तस्य हविषो देवतया भोगः प्रत्यक्षविरुद्धोऽशक्योऽभ्युपगन्तुम्। न चाभुञ्जाना प्रसीदतीति युक्तम्, देवताप्रसादादेव फलमित्येतदपि निरस्तम्। न हि तस्याः प्रसादः संभवति" इति। न्यायमालायामपि "न भुक्तिरशरीरस्य" इति दृश्यते। अतः कर्मणः देवताप्रसादनद्वारा न धर्मत्वम्, किन्तु स्वत इति प्रथमं कल्पनम्, कालक्रमेण च फलविशेषसाधनत्वेन धर्मत्वे निष्कामस्य कर्मणि प्रवृत्तिर्न जायेत। ततश्च 'यद्यदाचरति' इति न्यायेन साधारणोऽपि जनः कर्मविमुखः स्यात्, इत्यादि विचार्य कर्मणः स्वतो धर्मत्वप्रवादः प्रवर्तितः। अमुमेवार्थमुपोद्बलयति 'उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्' इत्यादिभगवदुक्तिः। यदि कर्म स्वतो धर्मः, तर्हि यद्यहं न कुर्याम्, तर्हि धर्मप्रच्युतो भवेयं इति किमावदिष्यत्। एवं "लोकसंग्रहमेवापि

संपश्यन् कर्तुमर्हसि" इत्यादयोपि बहवः पारमार्थिका उपदेशाः प्रदर्शितमेवार्थं समर्थयन्ति।

[फलानां दृष्टादृष्टत्वोपपत्तिः] धर्मस्य फलं दृष्टमदृष्टं, उभयं वा? इति प्रश्ने तूत्तरम्—क्वचिद्दृष्टं क्वचिददृष्टं क्वचिदुभयमिति मीमांसकाः। यथा कारीरीपुत्रेष्टिप्रभृतिषु वृष्टिपुत्रादिरूपं दृष्टं फलम्, दर्शपूर्णमासादिषु स्वर्गाद्यदृष्टं फलम्, वायव्यादौ उभयम्। तत्र हि फलत्वेन भूतिरेवोक्ता, सा चैहिकी वा पारलौकिकी वा भवतीति। अत्र विचार्यते दृष्टमित्यस्य कोर्थः? किं तत्तत्कर्मौपयिकशरीराद्यवच्छिन्नेन सर्वेणापि कर्त्रा दृष्टं उपभुज्यमानं इति, किं वा तादृशेन येन केनापि दृष्टमिति। नाद्यः, कारीरीपुत्रेष्टिप्रभृतिषु क्वचित् फलादर्शनस्य दृष्टत्वात्। तत्र प्रतिबन्धकदुरितसद्भावात् तथेति चेत्, किमेतावता सर्वेणापि कर्त्रा फलदर्शनस्याभावात् दृष्टफलकत्वं तस्यैतत्पक्षानुरोधेन दुरुपपादनम्। नाप्यन्त्यः, अदृष्टफलकत्वेन निर्धारितान् यागान् कृत्वा देवान् प्रसाद्य तदनुग्रहेण स्वर्गं गता इति श्रुतिपुराणेतिहासादिषु प्रतिपादितत्वेन कैश्चिद्दृष्टत्वं निमित्तीकृत्यास्य व्यवस्थापनस्य कर्तुमशक्यत्वात् अदृष्टफलके अतिव्याप्तेः। तस्मात् यस्य फलं दर्शनस्वरूपयोग्यं तत् दृष्टफलमित्यभ्युपगम्य व्यवस्था करणीया। अतश्च पूर्वं सर्वं कर्म दृष्टफलमेवासीत्, क्रमेण च गते बहुतिथे काले देवानामवयवसंस्थानादिषु विमतिर्जाता। यथा यास्कः "अथाकारचिन्तनं देवानाम्" इत्यारभ्य "पुरुषविधा इत्येके—अपुरुषविधा इत्येके" इत्याह। मीमांसकास्तु स्वमतानुरोधेन देवतात्वनिर्धारणाय किमपि लक्षणं विधाय तस्य दर्वीस्तोकमण्डूकप्रभृतिषु सत्त्वं प्रदर्श्य देवानां अवयवाः, सन्तोषः, चेतनधर्मः, सर्वोपि

श्रुत्यादिबोधितोपि अर्थवाद इति व्यवस्थापयामासुः। शब्दमयी देवतेति च निरधारयन्। अत्र कारणं—प्रसन्नैर्देवैरिष्टसंपादन-तल्लोकनयनादीनां क्रमेण प्रचारलोपे तदविश्वासः। एवं स्थिते दृष्टार्थोपि धर्मः (यागादिः) अदृष्टार्थः संवृत्तः। धार्मिकजन-श्रद्धानुरोधेन अदृष्टार्थोपि कर्तव्य इत्येव तत्र तत्रोपदिशन्तोपि पारमार्थिकतत्त्वप्रकाशनावसरे तस्य चित्तशुद्धिसंपादनमात्रे उप-योगं प्रदर्शितवन्तः परमार्थज्ञाः। धर्मशास्त्रकारा अपि केचित् यागानपि कांश्चन दृष्टदोषान् वर्जनीयकोटौ परिगणितवन्तः, सर्व-मिदं नासूयवे नोत्पतिष्णवे नाशुश्रूषवे वक्तव्यम्। नितरामेव गोप-नीयम्। तथापि धर्मशास्त्रानुशासनसमारंभे धार्मिकजनमात्राधिकृ-ते विचारे स्वकीयाशयप्रकाशनं न खल्वस्थाने भवितेति परं मन्वान एतावदवदम्। अथ प्रकृतमनुसरामः। यस्मिन् काले यस्य फलं प्रायेण दृश्यते, तत्तदा दृष्टफलमिच्युते। यस्य च न दृश्यते, तद् दृष्टफल-मित्युच्यते। यस्य चांशतो दृश्यते, अंशतश्च न दृश्यते, तद् दृष्टादृष्ट-फलमिति चोच्यते इति व्यवस्था साधीयसी। अतः पुत्रेष्टिकारी-र्यादिषु भूयसा फलं दृष्टं चेदेव तदपि दृष्टार्थकोटौ परिगणनीय-मित्यापतितम्।

[ मीमांसकमतेन दृष्टादृष्टत्वोपपत्तिः ]

अत्र मीमांसकाः—यत् कर्मैहिकफलोद्देशेन प्रवृत्तं तद् दृष्टार्थम्। यदामुष्मिकफलोद्देशेन तददृष्टार्थम्। यदुभयोद्देशेन तदुभयार्थमिति परिभाषन्ते। युक्तं चैतत्। क्वचित् प्रतिबन्धकसद्भावात् फलासंभवेपि उद्देशमात्रेण व्यवहारसंभवात्। परन्तु निष्कामस्य उद्देशासंभवेपि विधायकवाक्ये यत् फलत्वेन श्रूयते, तदवलोक्यैव व्यवस्था करणीया। अश्रुतफलेषु तु वाक्येषु स्वर्ग इति मीमांसकसिद्धान्तः। यदि तदपि वाक्यविहितं दृष्टफलं,

तर्हि न युक्तमदृष्टफलकत्वकल्पनम्। दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वात्। अतो ब्रूमः। यस्य फलं प्रत्यक्षेण युक्त्या वा समुद्भावयितुं शक्यते, तद् दृष्टफलत्वेनैव परिगणनीयम्। यस्य तु विधिबलादेव कल्प्यते, न तु सांप्रतिकयुक्त्या प्रत्यक्षेण वा निर्द्धारयितुं शक्यते तददृष्टफलत्वेनैव परिगणनीयमिति। एतत्सर्वं धर्मशास्त्रोक्तधर्मसाधारणमेवेति प्रत्येकं तदनुरोधेन दृष्टान्तादिकमुपादाय न विवेचितमित्याकलनीयम्।

अदृष्टफलानां धर्माणामधर्माणां वा देशकालपरिस्थितिमनुसृत्य अन्यथा परिवर्तनं फलपर्यवसायि भवितुमर्हति न वा?

[ धर्मस्य परिवर्तनार्हत्वम् ]

अर्हत्येव कुतः? अनुमानात्। तथा हि—दृष्टादृष्टविरोधे दृष्टविरोधस्यैव प्राबल्यमभ्युपगच्छन्ति तान्त्रिकाः। अत एव दृष्टानुरोधेन अदृष्टं संगमयन्ति बहुद्रष्टारः शिष्टाः। यथा पूर्वं समांसो मधुपर्क इत्यासीत्, पश्चाच्च मांसस्य हिंसासाध्यतया हिंसायाश्च सकलसज्जनविगर्हितत्वेन मधुपर्कविधानमन्यथा परिवर्तितम्। एवं अश्वालंभादयोपि दृष्टदोषाः परिवर्तिता अवलोक्यन्ते। तथापि यागस्य सर्वतः सङ्कोचो मा भूदिति पशुः पिष्टनिर्मितः प्रतिनिधीकृतः। यथा "कुर्याद् घृतपशुं सङ्गे कुर्यात् पिष्टपशुं तथा" इति मनुः। अनुष्ठीयते चैवमेव कैश्चित्। सन्यासस्यापि क्वापि विधिः, क्वचिन्निषेधः। एवं देशकालानुरोधेन कस्यचिदभावे प्रतिनिधिकल्पनमपि सर्वतान्त्रिकसम्मतम्। "प्रधानस्य न प्रतिनिधिः" इत्यत्र प्राधान्ये विप्रतिपत्तावपि माध्यस्थ्यवृत्त्या निर्वचनेन सा परिहर्तुं शक्यत एव। एवं बहूनां धर्माणां देशकालानुरोधेन सङ्कोचनरूपं विपरिवर्तनं प्राचीनैरेवाचार्यैः कृतमिति सूक्ष्मेक्षिकया वीक्षमाणानामपरोक्षम्। अत एव कालभेदेन धर्मभेद-

माह मनुः "अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे" इति। तस्मात् सर्वमपि दृष्टफलमदृष्टफलं वा देशकालावस्थानुरोधेन सङ्कोचन-प्रधानं विपरिवर्तनमादौ कृतमिति निश्चप्रचम्। अन्यथा हि परस्परस्पर्धिनां विधिनिषेधादिबोधकानां वाक्यानां कथं नाम विरोधः परिहृियताम्।

परिवर्तनस्य फलपर्यवसायित्वम्

अथैवं परिवर्तनं फलपर्यवसायि न वेति विचारयामः। यदि फलपर्यवसायीति ते न व्यचारयिष्यन्, तर्हि न विपर्यवर्तयिष्यन्। अतः शिष्टानां धर्मज्ञानां मतं काले विपरिवर्तनं फलपर्यवसायीति। किञ्च किमर्थमिदं विपरिवर्त्यते? दृष्टदोषत्वादिति चेत्, विपरिवर्तने तादृशदोषः परिहृियते न वा? परिहृियत इति चेत्, तदेवैकं मुख्यं फलं भवितुमर्हति। न परिहृियत इति चेत्, तादृशं विपरिवर्तनमेव न कार्यम्, फलासिद्धेः। यदि विपरिवर्तितो धर्मः फलायालमिति कथमवगम्यते इति पृच्छसि, तर्हि अपरिवर्तितो धर्मः फलायालमिति कुतोवगतमिति पृच्छामः। शास्त्रादिति चेत्, इदमपि शास्त्रादेव। न ह्येवंरूपेण पूर्वमनुशिष्टम्? न ह्येवंरूपा देशकालपरिस्थितिः तदा आसीत्, येनैवं रूपेणान्वशिष्यन्, तर्हि केन रूपेणानुशिष्टमिति चेदुच्यते। "यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशंकितः" १०४-१२ मनुः। एवं "धर्मज्ञसमयः प्रमाणम्,, इति च। तस्मात् युक्त्या प्राचीनेतिवृत्तगवेषणया युगभेदेन धर्मभेदस्य कण्ठत एवोक्तेश्च सत्यावश्यके तत्तद्देशकालानुरोधेन शिष्टैर्धर्मज्ञैरयं धर्मो अयमधर्म इति समयः कर्तव्य एवेति।

[ धर्मज्ञलक्षणम् ]

धर्मज्ञसमयः प्रमाणमित्यत्र के धर्मज्ञाः? इति। उत्तरम्—धर्मज्ञा आप्ताः आप्ताशिष्टाः। शिष्टा अकामोपहतात्मानः

कामाभिभूतस्य वेदविदोपि क्वचिद्दृष्टो धर्मव्यतिक्रमः। तस्मात् यस्य धर्मज्ञस्य समयः प्रमाणतया स्वीकरणीयस्तेनाकामाभिभूतेन भाव्यम्। अत एवोक्तं वसिष्ठेन "शिष्टः पुनरकामात्मा,, इति। अत्र काम इत्युपलक्षणं क्रोधलोभमोहमदमत्सराणाम्। तेभ्योपि हि महतामपि साहसं दृष्टम्। यथा रामस्य ताटकादिवधः। जामदग्न्यस्य मातृशिरश्छेदः। धृतराष्ट्रस्य नगराद्युधिष्ठिराद्युद्वासनमित्यादि। तस्मात् निगृहीतारिषड्कः शिष्ट इति। अत एव गोतमः 'दंभलोभमोहवियुक्ता' इत्याह। अयमेवार्थः धर्मशास्त्रकारैः संग्रहेणोक्तः "समः सर्वभूतेषु,, इति। निगृहीतारिषट्कोपि देशकालविभागानभिज्ञस्तदनुरोधिनं सामुदायिकं धर्मं व्यवस्थापयितुं न प्रभवति। अतस्तदभिज्ञेनापि भाव्यम् धर्मज्ञेन। तद्विज्ञानञ्च श्रुत्यधीनम्, तस्मात् बहुश्रुतः शिष्टः। अत एव श्रुतं धर्माधर्मव्यवस्थापनस्य मूलभूतत्वेन गरीय इति धर्मशास्त्रकाराः। यथाह गोतमः—"श्रुतन्तु सर्वेभ्यो गरीयः" ६-२२। "तन्मूलत्वाद्धर्मस्य" ६—२३। इति। मनुरपि "धर्मेणाधिगतो यैस्तु वेदः समुपबृंहणः। ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः"। १०—१२१। बहुश्रुतोपि ऊहापोहाद्यसमर्थः समयं कर्तुं न प्रभवति। परस्परस्पर्धिनामनेकेषां श्रुतिस्मृत्यादिवचनानामुत्सर्गापवादभावमेव निर्द्धारयितुं स न शक्नोति, किमुत धर्मव्यवस्थां कर्तुम्। तस्मात् ऊहापोहकुशलेनापि भाव्यं धर्मज्ञेन, न केवलं बहुश्रुतेन। अयमर्थो धर्मवित्पदं निब्रुवता मनुना प्रदर्शितः "आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना। यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥ १०६—१२—इति। तस्मात् बहुश्रुत ऊहापोहकुशलो देशकालविभागज्ञोऽकामोऽक्रोधनोऽलोभोऽमोहोऽमदोऽमत्सरश्च धर्मज्ञः। यस्य समयः प्रमाणम्। अत्राका-

मादयो न धर्मज्ञसामान्यलक्षणे घटकाः, किन्तु यस्य धर्मज्ञस्य समयाः प्रामाण्येन गृह्येरन्, तन्मात्रलक्षणे। सामान्यलक्षणन्तु तद्-घटितं पूर्वोक्तमेव। अत्र च धर्मज्ञसमयः प्रमाणं इत्यत्र को धर्मज्ञ इति पृष्टत्वात् समुदितसकललक्षण एव धर्मज्ञ इत्यवधेयम्। तेन च धर्मो व्यवस्थापनीयः।

[ धर्मज्ञानां धर्मपरिवर्तकत्वम् ]

किमत्र धर्मव्यवस्थापकत्वम्? किं यथा यथा पूर्वशास्त्रेऽनुशिष्टो धर्मस्तथा तथैव तं व्यवस्थापयन्ति = अंशतोपि जायमानमन्यथाभावं निराकृत्य यथाजातमेव गोपायन्तीति, किं वा पूर्वशास्त्राभिप्रायानुरोधेन विशेषेण देशकालावस्थानुसारिभिः समुचितैः संस्कारैरवस्थापयन्ति प्रचलनोन्मुखं स्थिरीकुर्वन्तीति? नाद्यः, अंशतोपि विभेदमन्तरा तथैव व्यवस्थापनस्य कर्तुमशक्यत्वात्, तथा व्यवस्थापनस्यानावश्यकत्वाच्च, पूर्वानुशासनेनैव गतार्थत्वात्, प्राचीनधर्मशास्त्रकारैस्तथा अव्यवस्थापितत्वाच्च। ते हि क्वचिद्दृष्टमन्यथा कृतवन्तः क्वचिद्-दृष्टमायोजितवन्त इति विज्ञायते। तस्माद्द्वितीयपक्ष एव श्रेयान्। पूर्वाचार्यैः प्रचलनोन्मुखस्यैव सनातनधर्मस्य रक्षणाय देशकालावस्थानुरोधेनावापोद्वापाभ्यां सम्यग्व्यवस्थापनस्य कृतत्वात्।

[धर्मज्ञानां स्वातन्त्र्येण धर्मव्यवस्थापकत्वम्]

तेषामेतद्धर्मव्यवस्थापकत्वं शास्त्रमनुसृत्योत स्वतन्त्रम्? स्वतन्त्रमेव भवितुमर्हति। यतोऽयं व्यवस्थापनारम्भः प्राचीनप्रमाणैर्व्यक्तमप्रापितस्य अभ्युदयसाधनस्य अनभ्युदयनिवारकस्य च विधानाय। अत्रापि पूर्वशास्त्रानुसरणस्य कर्तुमशक्यत्वम्। यदि शास्त्रमनुरुध्यते, तेनैव फलसिद्धेरस्यारम्भस्यैव वैयर्थ्यापाताच्च। शास्त्रानुरोधेन प्रामाण्येऽभ्युपगम्यमाने व्यवस्थापने अस्मिन्नविश्वासप्रसंगाच्च। तस्मात् धर्मज्ञानां धर्मव्यवस्थाप-

कत्वं स्वतन्त्रमेव । न ह्येतावता स्वतन्त्रैस्तैर्धर्मज्ञैर्वेदविरुद्धोऽपि अनुशिष्येत, उच्छृङ्खलस्तेषां पन्था अनुमतो भवति इत्याद्येतद्व्यम् । अशिष्टस्यैवानियन्त्रणे दोषसंभवात् । शिष्टानामनियन्त्रणेपि मर्यादानतिलंघनस्यैव दृष्टत्वात् । किंच अयं वेदविरुद्धोऽयमविरुद्ध इति निर्द्धारणे त एवाधिकुर्वन्ति । कथमेवं स्थिते वेदविरुद्धार्थविधानशङ्का नास्थाने भवति ? तस्मात् ते वेदतात्पर्याविषयं नानुशिष्युरिति विश्वास एव श्रेयान् । यत्तैरनुशिष्यते तदनुरोधेन श्रुत्यादिभिर्ध्रुवं नेयार्थैर्भूयेत । अत एव केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः । युक्तिहीनविचारे तु धर्महानिः प्रजायते" ॥ यमोपि "एको द्वौ वा त्रयो वापि यं ब्रूयुर्धर्मपालकाः । स धर्म इति विज्ञेयो नेतरेषां सहस्रश" इति। मनुरपि "अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत् । यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशङ्कितः ॥ इति । एतैः प्रमाणैः केवलं शास्त्रानुसरणं न धार्मिकाणां धर्मव्यवस्थापनौपयिकम्, किन्तु युक्तिरेव मुख्या। तादृशयुक्तिनिर्द्धारणसामर्थ्यन्तु सततशास्त्रपरिचयसमागतम् । एवं शास्त्रसंस्कृतमतिभिः कृतायां धर्मव्यवस्थायां अशङ्कित एव प्रवर्तेत लोक इति स्पष्टमेवाचष्टे मनुः । गोतमोऽप्याह—"यच्चात्मवन्तो वृद्धाः सम्यग्विनीता दंभलोभमोहवियुक्ता वेदविद आचक्षते, तत्समाचरेत्" इति । अत एव याज्ञवल्क्येनापि—"श्रुतिः स्मृतिः सदाचार" इत्यनेन श्रुतिस्मृत्योरिव सद्आचारस्यापि धर्मप्रमाणत्वेन स्वतन्त्रतयैव परिगणनं कृतम् । मनुरपि वेदविदां स्मृतिं शीलञ्च यथा प्रमाणयति, तथैव स्वातन्त्र्येण आचारमपि प्रमाणयति—"आचारश्चैव साधूनाम्"इत्यादिना । गोतमेनाप्युक्तं "तद्विदां स्मृतिश्रुतिशीले" इति । अत्र "शीलं मनूपनिबद्धः सदोचर" इति मस्करी । एतैः प्रमाणैः धार्मिकाणां आ-

चारस्यापि प्रामाण्यं धर्मे अस्तीत्यत्र नास्ति सन्देहस्यावकाश इत्येव प्रतिपत्तव्यम्। किमुत तेषां धर्मव्यवस्थापनाधिकृतानां तद्व्यवस्थापनैकोद्देशेन कृते धर्मानुशासने। तस्मात्तेषां धर्मव्यवस्थापकत्वं स्वतन्त्रमेवेति। परं त्विदमत्रावधेयम्—शिष्टसंपादनमेव कष्टसाध्यम्, यत्नतः संपादनेपि भ्रमप्रमादादीनामविज्ञातोपनिपातसंभवात् समयनिर्णये निरुक्तसकललक्षणसमन्वितोप्येको न वरम्, परन्तु तेषां परिषद्। अत एव मनुः "परिषत् ज्ञेया धर्मसंशयनिर्णये॥' १२—१७२ इति। अलाभेतु बहूनां परमन्तत एकोपि धर्मं व्यवस्थापयितुमर्हतीत्येव मनुराशेते। "एकोपि वा वदेद्धर्मं यं व्यवस्यन् द्विजोत्तमः। विज्ञेयः परो धर्मः। १२—१७३। इयमुक्तिस्तु एकैकस्य सन्दिग्धार्थस्य तात्कालिके निर्णये। परिवर्तने तु परिषदेवार्हतीति विभावनीयम्।

[ पूर्वपरिवर्तने उदाहरणानि ] कदापि कस्यापि धर्मस्याधर्मस्य वा देशकालस्थितिमनुसृत्य धर्मज्ञैः परिवर्तनं कृतं न वा? कृतम्। तथाहि गवालंभादयो बहवः श्रुत्या धर्मत्वेन चोदिताः पश्चात् ते स्मार्तैर्निषिद्धाः। न केवलं स्मार्तैः कृतो निषेधः, किन्तु ब्राह्मणेप्येवं दृश्यते "मा गाः प्रमापय, अश्वान् प्रमापय" इति। "नामांसो मधुपर्कः" इति क्वचित्, "अमांसो मधुपर्कः" इति तस्य निषेधश्च क्वचित्। एवं सन्यासस्य विधिः क्वचिन्निषेधश्च। क्वचित् वर्णाश्रमादिभेदं स्त्रीत्वपुंस्त्वादिभेदं वा विनैव श्रुत्या चोदिता यागाः। राजसूयादीनां परं कर्तृविशेषनिर्द्धारणं ब्राह्मणे दृश्यत इत्यन्यदेतत्। स्मार्तैः पुनरधिकारिविशेषव्यवस्थापनं कृतम्। किमधिकेन वर्णाश्रमादिविभाग एव गुणकर्मविभागशः कदाचित् परिकल्पित इति सर्वानुमतम्। ततस्तदनुरोधेन ततः प्राचीनानां धर्माणां नियतं

विपरिवर्तनमभूदिति शक्यमनुमातुम्।

[परिवर्तनस्य संकोच-रूपत्वम्] तच्च तद्विपरिवर्तनं संकोचनरूपमेवासीदित्याकलनीयम्। तस्माद्विज्ञायते कालानुरोधेन धर्मा अन्यथा क्रियन्त इति। एवं अधर्मत्वेन प्रथिता अपि क्वचिद्धर्मत्वेन व्यवस्थाप्यन्ते। विधवाविवाहो अधर्म इति आसीत् कदाचित्समय इति, तं च समयं वेने राज्यं प्रशासति अन्यथाऽकुर्वन्निति च स्वयमवलोकनीयम्। एवं चतुर्विंशतिधर्मनाम्ना चतुर्विंशत्या धर्मज्ञैः समेतायां परिषदि देशकालानुरोधेन धर्मविपरिवर्तनं कृतमिति वयमासमुखात् आकर्णयामः। किञ्च देशानुरोधेनापि स्मार्तानां धर्माणां विपरिवर्तनं दृश्यते। तथा हि कदाचित् "प्रदानं प्रागृतोः" इत्यासीन्नियमः। पश्चात् ऋतोः पूर्वमदत्ता पातित्यमर्हतीत्यपि कुत्रचिद्देशे सांप्रतिकी व्यवस्था। केरलेषु तु ऋतोरनन्तरमपि विवाहो धर्म्य इत्येव व्यवस्था। यथा "स्त्री तु दृष्टरजस्कापि रामक्षेत्रे न दुष्यति" इति शाङ्करस्मृतौ। सचेलावगाहस्नानेनैव शुद्धिरिति कत्राचित्को नियमः। अत्र निमित्तानि एकैकत्रैकैकं व्यवस्थापयन्ति। कत्रचिद्देशे कौतुकमंगलादिधर्मः, कत्रचिदयं नास्ति। एवं कैश्चिन्महर्षिभिर्धर्मं पृष्टेन याज्ञवल्क्येन देशविशेषप्राधान्येन धर्मव्यवस्थापनं कृतमिति विज्ञायते। "यस्मिन् देशे मृगः कृष्णस्तस्मिन्धर्मान् निबोधत" इति। अयमेव मनुना यज्ञियदेश इति परिभाषित इत्यवगम्यते। बोधायनेन देशभेदेन कांश्चित् आचारानधिकृत्येदमुक्तम् "पञ्चधा विप्रतिपत्तिर्दक्षिणतः, अनुपनीतेन भार्यया सह भोजनं, मातुलदुहितृपितृष्वसृदुहितृपरिणयनमिति, तथोत्तरतः, ऊर्णाविक्रयः, सीधुपानमुभयतोदद्भिर्व्यवहारः, आयुधीयकं, समुद्रयानमिति, इतरदितरस्मिन् कुर्वन् दुष्यतीतर इतरस्मिन्, तत्र तत्र देशप्रामाण्यमेव स्यात्" इति।

अतोऽनुमीयते देशकालयोरवस्थाभेदेन कृतं विपरिवर्तनमिति। "यस्मिन् देशे पुरे ग्रामे त्रैविद्ये नगरेपि वा। यो यत्र विहितो धर्मस्तं तत्र न विचालयेत्" भृगुः। "यस्मिन् देशे य आचारो न्यायतः कल्पितो भवेत्। स तस्मिन्नेव कर्तव्यो न तु देशान्तरे स्मृतः" इति देवलः। इत्याद्युक्तयस्तु न धर्मशास्त्रकारविषयाः। किन्तु सिद्धे धर्मानुशासने अभ्युपगते च तस्य प्रामाण्ये तदनुसृत्यैव पश्चादनुष्ठानं कर्तव्यम्, न तु स्वतन्त्राभियुक्तिभिः (स्वतन्त्रं) प्रवर्तितव्यमिति साधारणजनावगमनपराः।

[पूर्वपरिवर्तनस्य कर्तुः-कालस्य च विचारः] अथ कैरिति कदेति कस्मै प्रयोजनाय विपरिवर्तितमिति विचारयामः। आदौ तावत् चन्द्रेन्द्रशंकरप्रभृतिभिर्लिपिरुद्भाविता। ततः सुरज्येष्ठेन समादिष्टैरग्निवायुसूर्यैर्महर्षिभिः ऋग्यजुस्साम्नां वेदानां समाहरणं कृतम्। अयमेव वेदस्यादिमः संकलनरूपः संस्कारः। अयञ्च त्रेतायां अभूदिति विज्ञायते। दृश्यते हि विष्णुपुराणे— त्रेतायां प्रथमे व्यस्ताः स्वयं वेदाः स्वयंभुवा,, इति। अस्मादष्टादशः संस्कारः "जातुकर्णोऽभवन्मत्तः कृष्णद्वैपायनस्ततः,, इति तत्रैव पुराणे प्रदर्शितः कृष्णद्वैपायनकृतः। एतन्मध्ये संस्कारेषु प्रचलत्स्वेव गच्छति बहुतिथे काले आचारानुशासनमपि मनूपज्ञं क्रमेण व्यवस्थापितमभूत्। एष एव मनुर्मानववंशकुलकूटस्थ इति। ज्ञायते चास्य प्राचीनत्वं प्रामाण्यञ्च "यद्वै किञ्चन मनुरवदत् तद्भेषजम्,, इति तैत्तिरीयकब्राह्मणम्। मनुर्वै यत् किञ्चिदवदत् तद्भेषजं भेषजताया,, इति च्छान्दोग्यम्। बृहस्पतिरपि "मन्वर्थविपरीता तु या स्मृतिः सा न शस्यते,, इति। एवं भारतेपि "पुराणं मानवो धर्मः, इत्यादिना मन्वभिप्रायं उत्कृष्टं मन्यते व्यासः। तस्मात् धर्मशास्त्रप्रवर्तकेषु प्रथमो

मनुः । संप्रत्यवलोक्यमाना मनुस्मृतिः प्राथमिकमनूपज्ञमेव विशदीकृत्य तदनुयायिना भृगुणा सङ्कलिता । तथा हि "एतद्वोऽयं भृगुः शास्त्रं श्रावयिष्यत्यशेषतः ।,, १-५६ म० स्मृ० "यथेदमुक्तवाञ्छास्त्रं पुरा पृष्टो मनुर्मया । तथेदं यूयमप्यद्य मत्सकाशान्निबोधत ,, १-११९ म० स्मृ० । उपसंहारेपि "एवं स भगवान् देवो लोकानां हितकाम्यया । धर्मस्य परमं गुह्यं ममेदं सर्वमुक्तवान् ॥,, १२-११७ म-स्मृ०। अनेनानुमीयते कूटस्थमनूपज्ञं अस्याः स्मृतेः मूलमिति । उक्तञ्च याज्ञवल्क्यस्मृतिव्याख्याने "याज्ञवल्क्यशिष्यः कश्चित् प्रश्नोत्तररूपं याज्ञवल्क्यप्रणीतं धर्मशास्त्रं संक्षिप्य कथयामास यथा मनुप्रोक्तं भृगुः ,, इति । याज्ञवल्क्यस्मृतौ चैवमवलोक्यते "मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः । यमापस्तंबसंवर्ताः कात्यायनबृहस्पती ॥ पराशरव्यासशंखलिखितो दक्षगौतमौ । शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः ,, इति । अत्र याज्ञवल्क्यग्रहणमपि स्मृतिसंकलयितुः कूटस्थात् याज्ञवल्क्यादन्यत्वं व्यनक्ति । एवं क्वचित् क्वचित् कूटस्थादत्यर्वाचीनानां नामनिबन्धनात् प्रक्षिप्ताश्च श्लोकाः समुपलक्ष्यन्त इति निश्चेतुं शक्यते । एवं स्थिते तेषां कालनिर्णयः दुर्निर्द्धारण एव । किञ्च न सर्वेषां पूर्वं प्रदर्शितानां प्रबन्धाः संप्रति सुगमाः । परन्तु क्वचित् क्वचित् पराशरसंहिताव्याख्यानादौ कानिचन वाक्यानि तत्प्रणीतत्वेनोद्धृतानि दृश्यन्ते । अत एते प्रसिद्धाः शास्त्रकारा इति निर्द्धार्यते । एतेषां पौर्वापर्यक्रमः दुर्निर्द्धारणः । अथापि धर्मशास्त्रकालं सामान्यतो विचारयन्तो वयमेवमभिप्रेमः—यदा ब्राह्मणमतप्राबल्येन यज्ञप्रचारः सर्वतोमुखः प्रवृत्तः, तदनुसरणश्रद्धालवश्च साधारणा अभ्यासन्, तदा यज्ञवदन्येपि केचन धर्माः प्राधान्येनानुष्ठेयाः सन्तीति

साधारणजनानुजिघृक्षया कांश्चन धर्मान् व्यवस्थापयामासुः। काल-क्रमेण यागादपि त एव धर्मा अपरिहरणीया इत्यपि व्यवस्थांचक्रुः। तदनन्तरं गवालंभादयो ब्राह्मणचोदिता अपि हिंसामूलकत्वात् सुरा-पानादिश्च प्रमादकत्वादन्ये च केचिदन्यस्मात् कारणात् शास्त्रका रैर्निषिद्धाः। तन्निषेधं हिंसादिमूलकत्वेन प्रवृत्तं मन्वानाः प्रतिनिधिं परिकल्प्य प्रधानान् यागादीन् कर्तव्यानेव व्यवस्थापयामासुः। एवं धर्मशास्त्रस्य प्रचारे प्राबल्ये च दृष्टे वेदान्तिमतं पूर्वमुपनिष-त्सूत्रं क्रमेण प्रवृद्धं शाखोपशाखं विततान। एतेन ब्राह्मणप्रचाराद-नन्तरं वेदान्तिमतप्रचारात् पूर्वं धर्मज्ञैर्धर्मव्यवस्थापनं कृतमिति विज्ञायते। ननु सन्यासादीनामपि विधिनिषेधादयो धर्मशास्त्रेषु दृश्यन्ते। तस्मादनन्तरं वेदान्तिमतप्रचारादिदं धर्मशास्त्रं प्रचा-रितमभूदिति विज्ञायते। उच्यते, वेदान्तमित्यनेन न केवलं शङ्कर-भगवत्पादादिभिर्व्यवस्थापितं अस्माभिरिहोक्तं, किन्तु प्राचीनशु-कप्रभृतीनामेव विचक्षणं कृतम्। न तेन विरोधः। किञ्च अर्वा-चीनवेदान्तिमतप्रचारकाणां व्यवस्थापनादर्वागपि न किमपि धर्म-शास्त्रसंस्करणं प्रवृत्तमित्यवोचाम। इतिवृत्तगवेषणायां कृतायां प्रायेण ब्राह्मणवेदान्तसिद्धान्तयोरन्तराल एव धर्मशास्त्रप्रचारः प्राधा-न्येनासीदिति प्रतीयते। किञ्च देवनिर्मिते ब्रह्मावर्ते देवप्राधान्ये सति नासीदतितरां धर्मनियन्त्रणा। अयं देशः "सरस्वतीदृष-द्वत्योर्देवनद्योर्यदन्तरम्। तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते" इति मनुना प्रदर्शितः। ब्रह्मावर्तात् प्राचीं क्रमेण अभिष्यन्दमाना देवाः प्रस्थानान्तरमातस्थुः। क्रमात्तेषामेव देवानां सन्ततिः ब्रह्मर्षि-पदेन व्यवहृता चासीत्। तैरेव ब्रह्मर्षिभिरधिकृतो देशः ब्रह्मर्षिदेश इत्युच्यते। उक्तश्चायं देशः "कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः

शूरसेनकाः। एष ब्रह्मर्षिदेशो वै ब्रह्मावर्तानन्तरः'. ॥ इति। एत एव ऋषयो मन्त्रद्रष्टार आसन्। आगमज्ञाः चरित्रान्वेषणपटीयांसः इतरैरनुकरणीयाश्चासन्। एतदेवाभिप्रेत्य मनुना "एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः" इत्युक्तम्। पश्चाच्च मानववर्गो देवानामृषीणाञ्चाचारान् नानुमेने। पृथगेव धर्मशास्त्रं व्यवस्थापयामास। तदेतत् सुस्पष्टमेवोक्तम्। "अनुष्ठितन्तु यद्देवैर्मुनिभिर्यदनुष्ठितम्। नानुष्ठेयं मनुष्यैस्तदुक्तं कर्म समाचरेत्" बोधायनेन ॥ अनेन विज्ञायते उक्तं मनुप्रभृतिभिरनुशिष्टं कर्मैव अनुष्ठेयं, न तु प्राचीनानां आचारानुवर्तनमिति। किंच वेदे वर्णविभाग एव प्राधान्येन न क्वापि दृष्टः। देववर्गे वर्णाश्रमविभागः न क्वापि प्रबन्धे प्रतिपाद्यते। ऋषिवर्गे तु क्वचित् क्वचित् वर्णाश्रमविभागोऽस्तीति प्राचीनोक्तिभिरवगम्यते। तथापि निर्नियन्त्रण एवायं दृष्टः। विश्वामित्राद्युपाख्यानानि व्यक्तमेवामुमर्थं समर्थयन्ति। अतश्च ऋषिवर्गेऽङ्कुरितप्रायो वर्णाश्रमादिविभागो धर्मशास्त्रकारैर्मन्वादिभिर्नियन्त्रितः मन्वनुयायिभिश्च अनुष्ठितः। संप्रत्यपि भारतीयमानवसामान्येनानुस्त्रियमाण एवावलोक्यते। तस्मादायातं ऋषीणां मन्त्रद्रष्टृणां मतं यदा प्रचुरं प्रचारं प्राप, ततः परमेव धर्मशास्त्राणि मनुप्रभृतिभिरनुशिष्टानीति।

[ परिवर्तनप्रयोजनम् ]

अथानुशासनप्रयोजनम्। सर्वमेव ह्यनुशासनं योगक्षेमसंरक्षणाय क्रियते। इदमपि तदेव मुख्यं फलमुद्दिश्य कृतमित्यनुमीयते। यदि नानुशिष्यते, तर्हि महत्साङ्कर्यं समापततीति मन्वानैरेव मन्वादिभिर्धर्मोऽनुशिष्टः। गुरुतरप्रायश्चित्तादिविधानाच्च अधर्मे प्रवृत्तिः परिहृतप्राया भवति।

अज्ञानात्प्रवृत्तस्याप्येनोऽपनोदनद्वारा संव्यवहार्यतादिसंपादनेन लोकानुग्रहश्च कृतो भवति। अनियन्त्रणप्रयुक्तं सर्वमप्युत्पथप्रस्थानं निषिद्धं भवति। अतश्च अनियन्त्रणप्रयुक्तामनाशास्यां साङ्कर्यरूपां समुदायापदं दृष्ट्वा मन्वादयो महर्षयस्तत्तद्देशकालानुरोधेन गुण कर्मविभागेन वर्णाश्रमादिविभागपुरस्सरं धर्मं व्यवस्थापितवन्त इति।

[ उक्तप्रबन्धसमालोचनम् ]

अत्रास्माकमिदमेव वक्तव्यम्—यदि शास्त्राणि नाम शासनार्थमपि प्रवर्तन्ते। तत्र च सर्वेषां शास्त्राणां शासयितृपुरुषनिर्णयपूर्वकत्वन्तु नियमेनापेक्ष्यते, तर्हि ईश्वरीयनिर्णयपूर्वकत्वं तेषां कुसुमाञ्जल्युक्तरीत्याऽङ्गीकारे का नाम बाधा भवतीति न वयं जानीमः। व्यक्तं चैतत्पूर्वमेव विवेचितम्, यद्विनापि प्रमाणमीश्वरानुभवस्य प्रमात्वं भवतीति। नह्यत्र पक्षेऽनवस्थादोषः समापतति। एतेन—देशकालानुसारेण धर्माणाम्परिवर्तनमिति विवादोऽपि—परास्तः। धर्मशास्त्रनिबन्धेषु परस्परविसंवादो हि यो दृश्यते, स वैकल्पिकशास्त्रानुसारी, न तु तत्तत्कालानुसारीति हि नियतमिदमूरीकर्तव्यम्। यत्तु कुत्रचन कुत्रचन संकोचो दृश्यते, स तु शक्तिसंकोचाभिप्राय एव, नतु यथेष्टं शास्त्रसंकोचाभिप्रायः। न हि कालभेदेन धर्माणामन्यथाभावे किमपि गमकमस्ति। न हि सर्गादौ वर्णाश्रमविभागो नासीदित्यत्र प्रमाणमस्ति। अन्यथा हि कस्यचन सुखिनः कस्यचन दुःखिनश्च सर्जनात्कथं वा भगवतो न वैषम्यनैर्घृण्ये इति सर्व एव विवेचयन्तु। अस्तु वा कथमपि सर्गादौ भगवता सर्वेषां शुभाशुभं भावि समाकलय्य धर्मशास्त्राणि प्रवर्तितानीति। न हि तावतापि धर्मस्य कालभेदेन परिवर्तनं सम्भवति। भगवता

हि भावि कालादिकं सर्वं समालोच्यैव धर्मव्यवस्था कृतेत्यवश्य मेवोरीकर्तव्यम्। न हि भगवतो भाविकालादिपरिज्ञानं नास्तीति कोऽपि वक्तुम्पारयति। एतेन—स्मर्तारोऽपि-व्याख्याताः। न हि तेषामपि भगवत इव तादृशं भाव्यवस्थापरिज्ञानमिति कल्पनं संभवति। अत एव स्मृतीनामपि श्रुतिमूलत्वेन प्रामाण्यव्यवस्थापनं सार्थकं भवति। अन्यथा स्मृतीनामपि स्वत एव प्रामाण्यं हि कथं वा न संभवति। श्रुतिरिति वेदस्य--मन्वादिनिबन्धानां स्मृतिरिति च व्यवहारोऽपि-प्राथमिकं ज्ञानं वेदस्य स्वरूपतः, मन्वादिनिबन्धानान्त्वर्थतः प्रमाणान्तरापेक्षेति गमयति। यत्तु हेतुदर्शनाच्चेति सूत्रेण मन्वादिनिबन्धानामपि हेतुमूलकानां न प्रामाण्यमिति व्यवस्थापितम्, तदिदं तत्तत्कालदेशपरिस्थितिमूलकत्वं न धर्मशास्त्राणामिति गमयति। यावता च मन्वादीनामपि भाव्यवस्थापरिज्ञानशक्तौ संशयः, तावतेदमपि सिद्धं, यदिदानीन्तनानामस्मदादीनां भाविपरिज्ञानशक्ते र्न वार्तालेशस्यापि सम्भावनेति। न हि कोऽपीदानीं धर्मपरिवर्तनं भाव्यवस्थापर्यालोचनेन कांक्षते, किन्तु वर्तमानावस्थापर्यालोचनेनैव। न हि वर्तमानैवावस्था समालोचनीया, न भाविनीति कोऽपि प्रेक्षावान् वक्तुमर्हति। न हि भाव्यवस्थापरिज्ञानं कस्यापीदानीं वर्तते। अस्तु वा कथमपि भाव्यवस्थापरिज्ञानशक्तिरपि कस्यापि। मन्वादिभिरपि भाव्यवस्थासमालोचनेनैव व्यवस्था कृता। तत्र यद्यसम्भवबुद्धिस्तर्हि कथं वाऽस्मदादिसम्भावनामात्रस्य प्रामाण्यमापतिष्यति। न हि वयं मन्वाद्यपेक्षयापि विज्ञाः शक्तिमन्तो वा। उक्तं ह्यस्मिन्नपि प्रबन्धे—सर्वैरपि धर्मशास्त्रकारैर्युक्तिभिः प्राधान्येन धर्मतत्त्वनिर्णयः कर्तव्यः पश्चात्तेषामनुशासनम्। न युक्तिपर्यालोचनाय साधारणो जनः प्रभु-

वतीति"। अत्रेदमेव तेषामपि सम्मतम्, यत् साधारणानां धर्मशास्त्रपरिवर्तने नाधिकार इति। इदमेवात्रालोचनीयम्—यत्को वाऽसावसाधारणो जन इदानीं पराशरादिव्यवस्थापरिवर्तनेऽपि शक्त इति, साधारणत्वमसाधारण्यं वा कथं निर्णेतव्यमिति च। वयन्तु पश्यामः न कोऽपि तादृश एकोऽपि भाव्यवस्थापर्यालोचनसमर्थो मन्वाद्यपेक्षयाऽप्युत्कृष्टो वर्तत इति। वर्तमानावस्थामात्रपर्यालोचने सर्वोऽपि शक्त एव। न हि वर्तमानावस्थामात्रपर्यालोचनं पर्याप्तं कारणं धर्माधर्मपरिवर्तनस्य। तत्र च साधारणजनानुजिघृक्षैवानुशासनप्रयोजनमित्यत्रास्माकमपि न विप्रतिपत्तिः। यदि साधारणजनपदेन जीवन्मुक्तेतरा विवक्ष्यन्ते, भगवतापि हि तेषामेवानुजिघृक्षया शास्त्रं प्रवर्तितम्। न हि पूर्वतनानामनुशासनानां देशकालीनानुगुण्यमपि साधयितुं शक्यते। अत्रेदं विचारणीयम् को वा धर्म इदानीं देशकालाननुगुणो वर्तत इति। जातिविभागो हि न सर्वथा प्रकृतकालविरोधी, न हि महम्मदीयाक्रमणकालेऽपि जातिविभागः परित्यक्तः। न वाऽस्माभिरपि अत्यन्तापदवस्थायां तस्मिन् क्षणे जातिविभागो गणनीय इति मन्यते। प्रसिद्धं हि विश्वामित्रस्यापि श्वजाघनीभक्षणम्। न हि तादृशी काप्यापदिदानीं वर्तते। अर्थी समर्थो विद्वानधिक्रियत इत्येव खलु वयमपि मन्यामहे। एतेन—पतितपरावर्तनादिकमपि—व्याख्यातम्। तत्रापि वक्ष्यमाणया व्यवस्थया वयम्पश्यामः समाजस्य शास्त्रस्य च रक्षणम्भवतीति। विचारयिष्यते चोपरिष्टात् समुद्रयानादिविषयेऽपि कीदृशी व्यवस्था सम्पादयितुं शक्यते इति सर्वथा च शास्त्रार्थानुसन्धाने युक्तीनामुपयोगो न कस्याप्यनभिमतः। इदमेवात्र विप्रतिपन्नं दृश्यते, यददृष्टार्थेषु कर्मसु युक्तिविनियोगमनुसृत्य विपरिणामः कर्तव्य इति।

न ह्यदृष्टार्थत्वव्यवस्थापनं परप्रतारणार्थमिति हि पूर्वमेव कुसुमाञ्जलिग्रन्थानुसारेण विवेचितम्। दृष्टार्थत्वे हि सर्वेषां विप्रतिपत्तेरनवकाशः स्यात्। न हि वयमपि धर्मस्य देशकालभेदेन भेदं नोरीकुर्मः। सन्ति हि देशधर्माः कालधर्मा अवस्थाधर्माश्च बहवः। इदमेवात्रालोचनीयम्—यद्देशादिभेदेन तेषां धर्माणां भेदोऽपि भवति न वेति। न हि वयमपि ब्राह्मणधर्मं क्षत्रियाणां दिवा धर्मं रात्रौ वोरीकुर्मः, देशधर्मा हि त एव भवितुमर्हन्ति, ये शास्त्रेषु विकल्पेन विहिताः। अविकल्पेन विहितानां निषिद्धानां च सर्वदेशधर्मत्वमेवेति हि होलाकाधिकरणे व्यवस्थापितम्। एतेन कालधर्मा अपि—व्याख्याताः। तेऽपि हि तत्तद्धर्मविध्यर्थवादेषु कालविशेषत्वादिलिङ्गानुसारेणैव व्यवस्थाप्यन्ते। व्यवस्थापितं चैतत् वीरमित्रोदये—"पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते, इतिव्याख्यानावसरे। अत्र पुराकल्पशब्देनार्थवादविशेषो विवक्ष्यत इति तत्र व्यवस्थापितम्। एतेन—कलिवर्ज्यप्रकरणमपि—व्याख्यातम्। शाखाविशेषेऽर्थवादविशेषे वा कालविशेषलिङ्गानुसारेणैव तस्य प्रवृत्तत्वात्। यत्तु महाभारतादौ द्रौपद्याः पञ्चपतित्वादिकमभ्यनुज्ञातमपि पुनरन्यस्या अनेकपतित्वादिकं खण्डितम्। तत्र वयं मन्यामहे—धर्मान्तरविरोधेऽवश्यमभ्यनुज्ञातव्ये पञ्चपतित्वादौ प्रसक्ते स्थितस्य गतिः कल्पनीयेति भावेनैव तत् सम्पादितमिति। पाण्डवानां हि मातृवाक्यपरिपालनं धर्मविशेषोऽपि सम्पादनीयः, द्रौपद्याः पञ्चपतित्वमधर्म इति उभयं परस्परविरुद्धं समापतितमनुष्ठातुमिति सर्वविदितमिदम्। तत्रापि वस्तुगत्या न धर्मत्वबुद्धिर्युक्तेत्यभिप्रायस्तु वार्तिककाराणां दृश्यते। अत एवाचारप्रामाण्यव्यवस्थापनावसरे द्रौपद्याः पञ्चपतित्वमपि वस्तु-

गत्या नासीदिति विवृतम्। अयमत्र कुमारिलपादानामाशयोऽवगम्यते—यद्धर्मशास्त्रेतिहासयोर्विरोध इतिहासस्य कथमप्यन्यथानयनं कर्तव्यमिति। युक्तं चैतत्। इतिहासेन हि व्यक्तिविशेषाणामाचारो वर्तमानतयाऽवगम्यते, नतु धर्मतया, शास्त्रेण तु सर्वसाधारणी व्यवस्थाऽवगम्यते इति सर्वसाधारणव्यवस्थापर्यालोचनावसरे शास्त्रमेव मुख्यतया समादरणीयम्, न त्वितिहासः। एतेन—शास्त्रविरुद्धेतिहासान्तराण्यपि—व्याख्यातानि।

[इतिहासस्य धर्माप्रमाणता]

[स्त्री स्वातन्त्र्यपराणां वचनानामर्थवादत्वम्]

यत्तु महाभारते १२२ तमे अध्याये (आ० प)" अथ त्विदं प्रवक्ष्यामि धर्मतत्त्वं निबोध मे। पुराणमृषिभिर्जुष्टं धर्मविद्भिर्महात्मभिः। अनावृताः किल पुरा स्त्रिय आसन् वरानने। कामचारविहारिण्यः स्वतन्त्राश्चारुहासिनि॥ तासां व्युच्चरमाणानां कौमारात् सुभगे पतीन्। नाधर्मोऽभूद्वरारोहे स हि धर्मः पुराऽभवत्। तं चैव धर्मं पौराणं तिर्यग्योनिगताः प्रजाः। अद्याप्यनुविधीयन्ते कामक्रोधविवर्जिताः। प्रमाणदृष्टो धर्मोऽयं पूज्यते च महर्षिभिः। उत्तरेषु च रम्भोरु कुरुष्वद्यापि पूज्यते। स्त्रीणामनुग्रहकरः स हि धर्मः सनातनः। अस्मिंस्तु लोके न चिरान्मर्यादेयं शुचिस्मिते। स्थापिता येन, यस्माच्च, तन्मे विस्तरशः शृणु। बभूवोद्दालको नाम महर्षिरिति नः श्रुतम्। श्वेतकेतुरिति ख्यातः पुनस्तस्याभवन्मुनिः। मर्यादेयं कृताऽनेन धर्म्या वै श्वेतकेतुना। कोपात्कमलपत्राक्षि यदर्थं तन्निबोध मे। श्वेतकेतोः किल पुरा समक्षं मातरं पितुः। जग्राह ब्राह्मणः पाणौ गच्छाव इति चाब्रवीत्। ऋषिपुत्रस्ततः कोपं चकारामर्षचोदितः। मातरं तां तथा दृष्ट्वा नीयमानां बलादिव। क्रुद्धं तं तु पिता दृष्ट्वा श्वेतकेतुमुवाच ह।

मा तात कोपं कार्षीस्त्वमेष धर्मः सनातनः । अनावृता हि सर्वेषां वर्णानामङ्गना भुवि । यथा गावः स्थितास्तात स्वे स्वे वर्णे तथा प्रजाः । ऋषिपुत्रोऽथ तं धर्मं श्वेतकेतुर्न चक्षमे । चकार चैव मर्यादामिमां स्त्रीपुंसयोर्भुवि । मानुषेषु महाभागे न त्वेवान्येषु जन्तुषु । तदाप्रभृति मर्यादा स्थितेयमिति नः श्रुतम् । व्युच्चरन्त्याः पतिं नार्या अद्यप्रभृति पातकम् । भ्रूणहत्यासमं घोरं भविष्यत्यसुखावहम् । भार्यां तथा व्युच्चरतः कौमारब्रह्मचारिणीम् । पतिव्रतामेतदेव भविता पातकं भुवि । पत्या नियुक्ता या चैव पत्नी पुत्रार्थमेव च । न करिष्यति तस्याश्च भविष्यति तदेव हि । इति तेन पुरा भीरु मर्यादा स्थापिता बलात् । उद्दालकस्य पुत्रेण धर्म्या वै श्वेतकेतुना । सौदासेन च रम्भोरु नियुक्ता पुत्रजन्मनि । मदयन्ती जगामर्षिं वसिष्ठमिति नः श्रुतम् । तस्माल्लेभे च सा पुत्रमश्मकं नाम भामिनि । ऋतावृतौ राजपुत्रि स्त्रिया भर्ता पतिव्रते । नातिवर्तव्य इत्येवं धर्मं धर्मविदो विदुः । शेषेष्वन्येषु कालेषु स्वातन्त्र्यं स्त्री किलार्हति । भर्ता भार्यां राजपुत्रि धर्म्यं वाऽधर्म्यमेव वा । यद् ब्रूयात्तत्तथा कार्यमिति वेदविदो विदुः ॥" इति पुरा कदाचन स्त्रीणां परसंसर्गस्यादोषत्वं वर्णितम् , तदिदं नियोगविध्यर्थवादतया न स्वार्थे प्रमाणम् । अत्र हि " पुराणमृषिभिर्जुष्ट " मिति ऋषिधर्मस्यैवोपक्रमणं कृतम् , ऋषीणां च "तेजीयसां न दोषाय" इति वचनेन न कुत्रापि प्रत्यवायः पश्वादीनामिव भवति । महात्मनां हि ऋषीणां विहिताचरणं प्रतिषिद्धाचरणं वा न शरीरारम्भकं भवति , ज्ञानेन समूलस्याज्ञानस्य नाशितत्वात् । ततश्च भोगयोनित्वमेव ऋष्यादिशरीराणाम् , न कर्मयोनित्वम् । इदं च पश्वादिशरीराणामपि समानम् , तेषामपि केवलभोगयो-

नित्वात्। एतदेवाभिप्रेत्य—"पश्वादिभिश्चाविशेषात्" इति पश्वादिदृष्टान्त एव ज्ञानिनामुपात्तः, न तु पामरादिदृष्टान्तः। तथाच पश्वादीनामिव महर्षीणामपि विधिनिषेधानधिकारित्वादृषीणामाचरणमत्रोपन्यस्तं नास्मदादीनां धर्मशास्त्राधिकारिणां तन्निषिद्धमुपादेयं गमयति। अत एवात्रापि "तं चैव धर्मं पौराणं तिर्यग्योनिगताः प्रजाः। अद्याप्यनुविधीयन्ते कामक्रोधविवर्जिताः" इति तिर्यग्जातावेवानुविधानं बोध्यमानमुपपद्यते। तथाचोक्तेतिहासानुसारेण न पुरा स्त्रीस्वातन्त्र्यादिकं तत्कामचारित्वादिकं वा सर्वं धर्म आसीदिति कल्पनं सम्भवति। एतदेवाभिप्रेत्य प्रकृते नीलकण्ठ्याम्—'यथा स्तेनो भ्रूणहैवमेष भवति योऽयोनौ रेतः सिञ्चती'त्ययोनावदारेषु पुंसां गमनात् प्रत्यवायः श्रुतिसिद्धः, तथाऽमीषां निष्कृतं जारिणीवेति, मन्त्रे जारिण्यादिनिष्कृतेः पीडायाश्च दर्शनात् स्त्रीणामपि परसंसर्गे दोषोऽस्त्येवोक्तः, तथापि श्रौतार्थस्यैव कयाचित् भङ्ग्या व्यवस्थेयं विहितेति ज्ञेयम्। अथवा-व्युच्चरणे तेजस्विनां न दोषः, किन्तु पृथग्जनानामेवेति तात्पर्यम्, अन्यथा कृष्णस्यापि पारदार्यदोषप्रसक्तेः, अहल्यादिजाराणामिन्द्रादीनां तदप्रसक्तेश्च त्यास्तान्तावत्—'इति व्याख्यातम्। एतेन—समांसो मधुपर्कः, मांसश्राद्धमित्यादिव्यवस्था अपि व्याख्याताः। न हि मांसभक्षणं कदापि नित्यतया विहितम्, किन्त्वनिषिद्धमात्रम्। कामत एव हि मांसभक्षणादौ सर्वेषां प्रवृत्तिः, कामोद्रेकनिवारणार्थं मांसभक्षणादिनिषेधः।

[ प्रकृतप्रबन्धविरुद्ध प्रबन्धान्तरम् ]

अत्र उडुपिसंस्कृत कलाशालाध्यक्षाणामाशयोऽपि एतस्योत्तररूपेण संकलनीय इति, तदपि यथावसरमत्र सम्पादयामः। अत्र हि प्रबन्धे मीमां

सापरिपाट्यैव शास्त्रार्थनिर्णयो युक्तो नैतिहासिकशैल्या, न हि धर्मत्वमधर्मत्वं वा प्रत्यक्षादिगम्यम्। अदृष्टफलानामपि संकोचाख्यं परिवर्तनं सम्भवतीत्यादिकं सम्यगेवोपपादितम्। तद्यथा—युक्तिभिरुपष्टब्धस्य अर्थस्य बोधनार्थं शास्त्रं प्रवृत्तं उत युक्त्यनपेक्षतया तत्प्रवृत्तम्? शास्त्रयुक्त्योर्विरोधे कस्य प्राबल्यमिति प्रश्नस्येदमेवोत्तरम्—

[शास्त्रस्य युक्तिविरोधे प्राबल्यम्] दृष्टार्थमदृष्टार्थं चेतिद्विविधं शास्त्रम्, तत्राद्यं भूगोलादिप्रतिपादकं पृथिव्याः समुद्रपर्यंतायाः, "अयं द्वीपः सागरश्च लक्षयोजनविस्तृतौ। यो वा अयं द्वीपः कुवलयकमलकोशाभ्यंतरकोश" इत्यादि श्रुतिस्मृतिरूपं शास्त्रम्, द्वितीयन्तु ईश्वरादृष्टस्वर्गापवर्गादिस्थानतत्प्राप्त्यादिसाधनविशेषप्रमापकम्। तत्र प्रथमं प्रति प्रत्यक्षस्यैवोपजीव्यतया तद्विरोधे तच्छास्त्रं अर्थान्तरपराकल्पनमेवार्हति, युक्तिस्तु अजागलस्तनायिता साधनबाधनयोरक्षमैव। द्वितीये साधनबाधनयोः प्रवर्तमाना युक्तिः पूर्वोक्तानेकातिप्रसंगगहनप्रविष्टा स्वार्थं न संपादयत्येवेत्युभयार्थकमपि शास्त्रं युक्तिकान्तावदनमनवलोक्यैव स्वार्थं वितरति। तद्विरुद्धा नरशिरःकपालशुचित्वादिसाधिका युक्तिरेवाभासतामुपैष्यति। शास्त्रयुक्त्योर्विरोधे शास्त्रमेव बलवत्, अन्यथा पूर्वोक्तातिप्रसंगानिवारणात्। विमतानि कलत्राणि, ममैव भोगायतनानि, कलत्रत्वात्, मदीयकलत्रवदित्यादि विरुद्धानेकसाधनसौलभ्यात्, परन्तु पदशक्तिवशाच्छास्त्रस्य युक्तायुक्तोभयार्थप्रतीतौ अयुक्तमर्थं परित्यज्य युक्तार्थमात्रग्रहणं पूर्वोत्तरमीमांसयोर्दृष्टमिति तत्र युक्तिः गृहिणी गृहस्थस्येव सहकारिण्येव, न स्वतन्त्रा, शास्त्रं सदा स्वतन्त्रमेवेति।

[ शास्त्रपदवाच्य-प्रतिपादनम्] शास्त्रपदेन किं वेद एव विवक्षितः, उत स्मृतिपुराणेतिहासशिष्टाचारा अपि ? वेदपदेन मंत्रभागस्यैव ग्रहणम्, उत ब्राह्मणादेरपीति चतुर्थप्रश्नस्योत्तरम् । प्राज्ञमते वेदपदेन ब्राह्मणोपनिषन्मन्त्रस्मृतीतिहासपुराणानि गृह्यन्ते, प्रकरणानुगुण्यात्क्वचिदेकदेशमात्रमपि ।

ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम् ।
मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥
यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम् ॥
अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत् ॥

इति स्कान्दवचनात्—

ब्राह्मणोपनिषन्मन्त्रभेदा वेदगिरोऽखिलाः ।
यत्क्रीडाभूमयस्तस्मै परस्मै ब्रह्मणे नमः ॥

इत्यभियुक्तैः स्वग्रन्थेषु ब्राह्मणोपनिषदादिसाधारण्येन वेदपदप्रयोगाच्च । किं च वेदशब्दस्तावत् मंत्रब्राह्मणोपनिषत्समुदाये योगरूढ इत्यवगम्यते । "नेन्द्रियाणि, नानुमानम्, वेदा एवैनं वेदयन्ति, तस्मादाहुर्वेदाः" इति पिप्पलादश्रुतौ,

नित्या वेदाः समस्ताश्च शाश्वता विष्णुबुद्धिगाः ।
सर्गे सर्गेऽमुनैवेत उद्गीर्यन्ते तथैव च ॥१॥
तत्क्रमेणैव तैर्वर्णैः तैः स्वरैरेव नान्यथा ।
अतः श्रुतित्वमेतेषां यतस्ते सर्ववेदकाः, —इति पुराणवाक्ये,

वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥

इति श्रीकृष्णगीतादौ च वेदनकरणत्वस्य वेदपदप्रवृत्तिनिमित्तत्वावगमात्, तस्य च ब्राह्मणादावपि समत्वात् । न च पुराणादावप्येतदस्तीति वेदस्तदपि स्यादिति वाच्यम् , रूढ्यभावात् । अत एव

योगरूढ इत्युक्तम् । मन्त्रब्राह्मणलक्षणः, सर्वोप्याम्नायः कार्यनिष्ठ एवेति प्रभाकरैः स्वग्रन्थेष्वपि तस्य तत्र प्रयुक्तत्वाच्च । ब्राह्मणस्य वेदव्याख्यानतायाः सर्वतान्त्रिकसंमतत्वेन तयोरैक्यात् एकपदवाच्यत्वस्यावश्यकत्वाच्च । जैमिनीयादौ तत्र तत्र यागादीनां वैदिकत्वोक्तिदर्शनेन ब्राह्मणादेरवेदत्वे तद्रूपविधिविहितस्य कर्मणो वैदिकत्वायोगाच्च । तस्मादनास्वादितशास्त्ररसानां अनुपासितगुरुचरणानां केषांचिदाधुनिकानां अवेदो ब्राह्मणादिरित्यप्रामाणिक एव वादो जंबूकारावत् उपेक्षणमेवार्हति पण्डितप्रकाण्डानां संसदीति ।

[आचारस्य शास्त्रत्वनिरासः] आचारस्तु शिष्टानुष्ठितकर्मपरंपरामात्ररूपो न शास्त्रपदबोध्यः । अत एव तत्राविगीतपदेन धर्मशास्त्रानिषिद्धत्वं विशेष्यते ।

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।

इति मनुस्मृतौ, वेदो धर्ममूलम्, तद्विदां च स्मृतिशीले, इति गौतमधर्मसूत्रादौ वेदादिरूपशास्त्रात्पार्थक्येन ग्रहणाच्चैतदेवमेवेति ।

[शास्त्रार्थनिर्णये मीमांसापरिपाट्यैव ग्राह्य।] शास्त्रार्थनिर्णयो मीमांसापरिपाट्या संपादनीयः उतैतिहासिकशैल्येति अस्य प्रश्नस्य प्रतिवचनं अत्र मीमांसापरित्यागेन वेदस्मृतिपुराणाद्यर्थवर्णनोद्युक्तस्य शास्त्रीयानर्थप्रदर्शनं पश्चादस्तु, तत्र विरोध एव तावत् प्रदर्शनीयः । मीमांसापरिपाट्यतिक्रमेण शास्त्रार्थवर्णने 'औदुंबरी सर्वा वेष्टयितव्या' 'औदुंबरीं स्पृष्ट्वा उद्गायेदि'त्यादिस्मृतिश्रुत्योः कथं विरोधपरिहारः ? स्मृतेरपि मूलश्रुत्यनुमापकत्वेन प्रामाण्यसंभवात् । अतस्तत्र विरोधपरिहारः केवलं "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमिति" कर्मतन्त्रोक्तन्यायेनैव विधेयः । एवं सहस्राधिकरणेष्वपि

श्रुत्यादीनां परस्परविरोधाभावसमर्थनेनैव सकलश्रुत्यर्थो निर्णीतो जैमिन्याचार्यैः। इत्थमेव ब्रह्मतन्त्रप्रणेतृभिः श्रीमद्बादरायणाचार्यवर्यैरपि "आनन्दमयोऽभ्यासादित्यारभ्य "अनावृत्तिः शब्दादि"त्यापरिसमाप्ति मीमांसापरिपाटीमवलम्ब्यैवाखिलवेदार्थोपि निर्णीत इत्ययमर्थो अधिगतकर्मब्रह्मतन्त्रैः पण्डितप्रकाण्डैः स्वप्नेप्यविस्मृत एवेति नेह विशेषेण प्रपञ्च्यते। किंच तत्र वेदेषु मंत्रादिभागेष्वपि विष्णु-शिव-ब्रह्म-स्कन्द-गणेश-सूर्य-चन्द्रेन्द्रादीनामपि सर्वकर्तृत्व-सर्वेश्वरत्वसर्वोत्तमत्वादिप्रतिपादनदर्शनात्तदविरोधः कथं समर्थनीयः। न चेत्परस्परविरोधेनैषां वाक्यानामप्रमाण्यं वा स्यात्, विरोधवातैव वा लुप्येतेति सर्वापि मीमांसोन्मूलिता स्यात्। एवमनेकानिष्टापत्तयो दुर्वाराः सन्ति, अथापि बहुलेख्यसत्त्वभिया न लिख्यन्ते, अत एव मीमांसारीत्यैव धर्मशास्त्रार्थो वर्णनीय इत्येव मनुः—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः॥ इति।

व्याख्या—ऋषिजुष्टत्वादार्षो वेदः धर्मोपदेशं तन्मूलस्मृत्यादिकं यत्तदविरुद्धेन तर्केण मीमांसया अनुसन्धत्ते विचारयति। स धर्मं वेद जानाति, नेतरः मीमांसानभिज्ञः इति। अत एव कुमारिलभट्टाचार्येणाप्युक्तम्—

धर्मे प्रमीयमाणे तु वेदेन करणात्मना।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति॥ इति॥

धर्मप्रमितिमुपजनयन् वेदः इतिकर्तव्यतामपेक्षते। तं भागं युक्त्यनुसंधानात्मिका मीमांसा पूरयिष्यतीत्यर्थः। बृहस्पतिरपि—

केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः।
युक्तिहीनविचारे तु धर्महानिः प्रजायते॥ इति

वसिष्ठोपि—इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रचलिष्यति ॥ इति ॥

अत्र न वेदार्थः मीमांसामात्रेण शुद्धः सिध्यति, अपितु इतिहासपुराणादिभिरपीत्याह । एवं मीमांसोपकृतानामेव वेदादिशास्त्राणां स्वार्थनिर्णायकत्वम्, ऐतिहासिकरीत्यापि क्वचिदनुसर्तव्यमित्युक्तवचनैः सिध्यति इति ।

[क्रियाणां श्रुत्यादिविहितत्वाद्धर्मत्वम्]

क्रियाणां स्वरूपतो धर्मत्वमुत फलविशेषसाधकत्वेनेति षष्ठः प्रश्नः प्रत्युच्यते । अत्र क्रियाणां स्वरूपतो यदि धर्मत्वम्, तर्हि निषिद्धानां सुरापानगोब्राह्मणहननपरधनवनितापहरणादीनां श्येनयागादीनामपि धर्मत्वं स्यात् । न चैवम् । अतो न स्वरूपतो धर्मत्वम्, नापि फलविशेषसाधनत्वेन, तत्तत्क्रियाकर्त्रभिमतफलसाधनतायाः सर्वत्र सत्वात्, तस्मात्—"श्रुतिस्मृत्युदितो धर्मो ह्यधर्मस्तद्विपर्ययः" इत्यादिप्रमाणावलोकनेन श्रुतिस्मृतिविहितत्वं धर्मत्वम् तन्निषिद्धत्वमधर्मत्वमित्येवाङ्गीकार्यमित्युत्तरमस्मान् जागरयतीति ।

[धर्मफलस्य दृष्टत्वमदृष्टत्वमुभयविधत्वञ्च]

धर्मस्य फलं दृष्टमदृष्टमुभयं वेति सप्तम उत्तीर्यते । यथासंभवं धर्मस्य त्रितयमपि फलभावं भजते, पुत्रकामेष्टिज्योतिष्टोमकेवलेश्वरार्पणबुद्धिकृतेषु यागादिषु तथात्वावगमात् । किंच प्रवृत्तनिवृत्तकर्मभेदेन कर्मद्वैविध्यमतेपि तदनुष्ठातुरनुसंधानभेदेनैकस्यैव कर्मणः उक्तफलत्रयसाधनत्वमप्रतिहतमेव । निष्कामं ज्ञानपूर्वकमनुष्ठितस्य धर्मस्य—

निष्कामं ज्ञानपूर्वं तु निवृत्तमिति चोच्यते ।
निवृत्तं सेवमानस्तु ब्रह्माभ्येति सनातनम् ॥

इत्यादिप्रमाणैः—

आवर्त्तते प्रवृत्तेन निवृत्तेनाश्नुतेऽमृतम् ।

इत्यादिप्रमाणैश्च फलाभिसन्धिभावे प्रवृत्तसंज्ञायाः तदभावे निवृत्तसंज्ञायाः अवस्थाभेदेन फलभेदस्य प्रतिपादनात् । अतोऽनुसन्धानानुसारेण सर्वमपि फलं संपद्यत एवेति ।

[धर्मपरिवर्तनस्य फलपर्यवसायित्वम् ]

अदृष्टफलानां धर्माणामधर्माणां वा देशकालपरिस्थितिमनुसृत्यान्यथापरिवर्तनं फलपर्यवसायि भवितुमर्हति न वा इति चेत् । अत्र धर्माणामधर्माणां वा देशकालाद्यनुसृत्य परिवर्तनं सर्वथा साफल्यमश्नुत एवेत्युत्तरं चकास्ति । अत्रोपपादनप्रकारविशेषः प्रमाणानि चोत्तरप्रश्नप्रतिवचनावसरे प्रदर्शयिष्यन्ते ।

धर्मज्ञसमयः प्रमाणमित्यत्र के धर्मज्ञाः, एतेषां धर्मव्यवस्थापकत्वं शास्त्रमनुसृत्य उत स्वतन्त्रम् धर्मज्ञैः कदापि कस्यापि धर्मस्याधर्मस्य वा देशकालस्थितिमनुसृत्य परिवर्तनं कृतं न वा, कस्मिन् समये कस्मै प्रयोजनाय कैर्धर्मज्ञैः कृतम्, कानि चात्र प्रमाणानीति परः प्रश्नः ।

[ धर्मज्ञलक्षणम् ]

अत्र शास्त्रावगतान्येवोत्तराणवगन्तव्यानि, बोधायनधर्मसूत्रं प्रथमम् । "उपदिष्टो धर्मः प्रतिवेदम्, प्रतिशाखमतीन्द्रियार्थप्रतिपादको ग्रन्थराशिर्वेदः, तत्प्रतिपाद्यो धर्मः" । यद्यप्येकैकस्यां शाखायां परिपूर्णान्यङ्गानि, तथापि कल्पसूत्रांतरैः शाखान्तरोक्तांशोपसंहारः क्रियत एवेति गोविन्दस्वामिनां व्याख्यानम् । तत्रैव तृतीयसूत्रम् "स्मार्तो द्वितीयः" इति । एतेन प्रतिवेदस्मृत्युपदिष्टा धर्माः, तज्ज्ञा धर्मज्ञा इति स्फुटो धर्मज्ञपदार्थः । चतुर्थसूत्रम् 'तृतीयः शिष्टागमः' इति, शिष्टैरागम्यत इति शिष्टागमः शिष्टैराचरित इत्यर्थः । एवं च प्रत्यक्षश्रुतिविहितः प्रथमो

धर्मः; प्रकीर्णमंत्रार्थवादमूलो द्वितीयः, तृतीयस्तु प्रलीनशाखामूलः। सर्वेषां वेदमूलत्वेपि दौर्बल्यमर्थवादप्रसंगाद्बेदितव्यमिति, गो० स्वा० व्याख्या०। अथ शिष्टानाह स एव बोधायनः। पंचमं सूत्रम्। शिष्टाः खलु विगतमत्सराः निरहंकाराः कुंभीधान्या अलोलुपा दंभदर्पलोभमोहक्रोधवर्जिता इति। अपरं तत्रैवोपरितनम्, धर्मेणाधिगतो येषां वेदः सपरिबृंहणः। शिष्टास्तदनुमानज्ञाः श्रुतिप्रत्यक्ष हेतवः, इति। अत्र मात्सर्यं परगुणाक्षमता, अहंकारः अभिजनविद्यादिनिमित्तको गर्वः, कुम्भीधान्या दशाहं जीवनौपयिकधान्याः, शिष्टं स्पष्टम्। 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इत्यतो वेदोपबृंहणमितिहासादि, तत्सहितो वेदः ग्रंथतोऽर्थतश्च यैरवगत इत्यर्थः, । एत एव शिष्टा धर्मज्ञाः, तत्समयः प्रमाणम्, अत एवोत्तरत्र वक्ष्यते।

धर्मशास्त्ररथारूढा वेदखड्गधरा द्विजाः।
क्रीडार्थमपि यद्ब्रूयुः स धर्मः परमः स्मृतः॥ इति॥

गौतमोपि—वेदो धर्ममूलम्, तद्विदां च स्मृतिशीले,, इत्याह। तद्विदां शब्दतोऽर्थतश्च वेदविदां स्मृतिः स्वपरिशीलितवेदार्थविषयकस्मृतिमूलत्वात्तत्कृतग्रन्थोपि स्मृतिरित्युच्यते, सा च शीलमाचारश्चेति द्वे अपि धर्ममूलं धर्मप्रमापकमित्यर्थः, एवं च धर्मप्रमापकग्रन्थप्रणेतृत्वं धर्मज्ञत्वमित्यर्थो लभ्यते। इममर्थमेवाह मनुरपि,,

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्॥ इति॥

इत्थं च प्राक्प्रदर्शितबोधायनाचार्योक्तदिशा विगतमत्सरादित्वे सति शब्दतोऽर्थतश्चावबुद्धसेतिहासपुराणसांगवेदत्वं धर्मज्ञत्वमिति पर्यवस्यति॥ मनुगौतमयोरप्ययमेवाशय इत्यवगम्यते॥

[ धर्मज्ञानां धर्मव्यवस्थापकत्वं शास्त्रमूलकमेव ]

तेषां धर्मव्यवस्थापकत्वं शास्त्रानुसारेणैव, । इतरथा तद्वचनस्य निर्मूलत्वेनाप्रामाण्यम्,

तदुक्तधर्माणामनुपादेयत्वं वा स्यात्, यत्र पुनस्तद्वचनस्य औदुम्बरी सर्वा वेष्टयितव्येत्यादिवत् मूलं प्रत्यक्षतो नोपलभ्यते, तत्रापि जैमिनीयस्मृत्यधिकरणोक्तदिशा मूलानुमापकत्वेनैव प्रामाण्यं, नान्यथा। किंच "यद्वै किंच मनुरवदत्तद्भेषज" मित्यादिश्रुतिप्रशस्तमन्वादिवाक्यानामेव यदेदृशी मूलान्वेषणावस्था तदेतरधर्मज्ञवचसां किं वक्तव्यं मूलान्वेषणायासोऽतिबहुतरोऽस्तीति। अतो यत्पूर्वमुक्तं तत्तथैव।

अपिच धर्मज्ञानां शास्त्रानपेक्षयैव धर्मव्यवस्थापकत्वं दुरधिगमं दुर्वचनं च। यतस्तत्राप्तता कल्प्या, नतु प्रमाणसिद्धा, विवक्षितार्थतत्त्वज्ञानमपि प्रमाणं विनैव कल्प्यम्, विवक्षापि तथैवेत्यप्रामाणिकानेककल्पनं समापतत्यत उक्तैव व्यवस्था।

[धर्मस्य परिवर्तनार्हत्वम्]

अत्रैव प्रश्ने परिवर्तनं नाम किं विनिमयो विवक्षितः, अथ परित्यागः, उत संकोचः, आहोस्विदेकवारमनुष्ठितस्य धर्मस्य पुनःपुनरनुष्ठानम्। आद्योऽदर्शनपराहतः। द्वितीयः क्वचिदेवावकाशमासादयति।

अश्वालंभं गवालंभं संन्यासं पलपैतृकम्।
देवरेण सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्॥

इत्यादिनादिकालीनैर्मन्वादिभिरेव युगान्तरीयधर्माणां कलौ परित्यागस्य विहितत्वात्, एवं धर्मान्तराण्यपि युगान्तरीयाणि कलौ वर्ज्यत्वेन स्मृतिनिर्मातृभिरेव प्रतिपादितानि। अत एवाह मनुः॥

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे।
अन्ये कलियुगे नृणां युगह्रासादिरूपतः॥

एतदेव विविच्याह पुनः स एव महान्—

तपः परं कृतयुगे त्रेतायां ज्ञानमेव च।

द्वापरे यज्ञमेवाहुः दानमेव कलौ युगे, ॥ इत्यादि ॥

अत्र पराशरोपि—

कृते तु मानवो धर्मः त्रेतायां गौतमस्य तु ॥
द्वापरे शंखलिखितौ कलौ पाराशरः स्मृतः ॥ इति ।

मानवः मनुप्रणीतधर्मशास्त्रोक्त इत्यादि व्याख्येयम् । स एवावदत् ।

"त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् ॥
द्वापरे कुलमेकन्तु कर्तारं तु कलौ युगे ॥ इति ॥

पुनरपि—कृते संभाष्य पतति त्रेतायां स्पर्शनेन तु ॥
द्वापरे चान्नमादाय कलौ पतति कर्मणा ॥

इत्यनेनाल्पीकरणरूपसंकोचोऽपि परिवर्तनशब्दबोध्य इति पक्षेपि सोपि स्मृतिकर्तृभिरेव स्वग्रन्थे प्रतिपादित इति। चतुर्थं तु परिवर्तनमत्रानुपयुक्तमेवेत्यवधार्य द्वितीयतृतीयावेव परिवर्तनशब्दार्थतयाऽभ्युपगम्यैतत्परिवर्तनकर्तव्यता तैरेवाभ्यनुज्ञता, तच्च परिवर्तनं एतद्युगादिवर्तिभिरेव कृतमित्यत्र प्रमाणानि स्मृतिमुक्तावल्युदाहृतमादित्यपुराणवचनम्—

दीर्घकालब्रह्मचर्यं धारणं च कमण्डलोः ।
सगोत्रात्तु सपिण्डात्तु विवाहो गोवधस्तथा ॥
नराश्वमेधौ मद्यं च कलौ वर्ज्या द्विजातिभिः ।
ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ॥
कलौ पंच न कुर्वीत भ्रातृजायां कमण्डलुम् । इति ॥
विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् ॥
बालिकाक्षतयोन्योश्च वरेणान्येन संस्कृतिः ।
कन्यानामसवर्णानां विवाहश्च द्विजातिभिः ॥

आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनम् ।
द्विजस्याब्धौ तु नौयातुः शोधितस्यापि संग्रहः ॥
सत्रदीक्षा च सर्वेषां कमण्डलुविधारणम् ।
महाप्रस्थानगमनं गोसंज्ञप्तिश्च गोसवे ॥
सौत्रामण्यां सुराग्राहः चमसोच्छिष्टभक्षणम् ।
अग्निहोत्रहवण्योश्च लेहो लीढापरिग्रहः ॥
वानप्रस्थाश्रमस्यापि प्रवेशो विधिचोदितः ।
यतेश्च सर्ववर्णेषु भिक्षाचर्या विधानतः ॥
वृत्तस्वाध्यायसापेक्षमघसंकोचनं कलौ ।
प्रायश्चित्तविधानं च विप्राणां मरणान्तिकम् ॥
संसर्गदोषस्तेयान्यमहापातकनिष्कृतिः ।
दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः ॥
सवर्णानां तथा दुष्टैः संसर्गः शोधितैरपि ।
हीनेन संग्रहे वृत्ते परित्यागो गुरोः स्त्रियः ॥
अस्थिसंस्पर्शनादुर्ध्वमङ्गस्पर्शनमेव च ।
शूद्रेषु दासगोपालकुलमित्रार्धसीरिणाम् ॥
भोज्यान्नता गृहस्थस्य तीर्थसेवा च दूरतः ।

एतद् गङ्गायात्रादिव्यतिरिक्तविषयम् । कलौ गङ्गां समाश्रयेदिति वचनात् ।

विप्राणां भोजनं तद्वद्गृहे क्षत्रियवैश्ययोः ।
शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिरीरिता ॥
आपद्वृत्तिर्द्विजाग्र्याणां अश्वस्तनिकता तथा ।
प्रजार्थं तु द्विजाग्र्याणां परदारपरिग्रहः ॥
ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया ।

बलात्काराद्धि दुष्टस्त्रीसंग्रहो विधिचोदितः ॥
ब्राह्मणादिषु शूद्रस्य पचनादिक्रियापि च ।
भृग्वग्निपतनं चैव वृद्धादिमरणं तथा ॥
गोतृप्तिशिष्टे पयसि शिष्टैराचमनक्रिया ।
पितापुत्रविरोधे तु साक्षिणां दण्डकल्पनम् ॥
यत्र सायं गृहस्थत्वं सूरिभिस्तत्त्वतत्परैः ।
एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः ॥
निवर्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः । इति ।

[ धर्मपरिवर्तन-प्रयोजनविचारः

एवंविधधर्मपरिवर्तनप्रयोजनन्तु पृथक्पृथगेवोहनीयम् । तथाहि—कालदोषादेव चञ्चलचित्तस्य मद्यादिमदजनकपदार्थग्रहणे 'मर्कटस्य सुरापानं मध्ये वृश्चिकदंशनम् । तन्मध्ये भूतसञ्चारः' इति गाथानुसारेण उन्मत्ततामापन्नस्य वेदशास्त्राद्यध्ययनमेव लुप्येतेति वेदाध्ययनपरिरक्षणार्थम् "न सुरां पिबेदित्यादि निषिद्धसेवनोत्पाद्यपापप्रागभावानुवृत्त्यर्थम् तथा ऊढायाः पुनरुद्वाहे स्थिते क्षतयोन्या अन्यसंसृष्टाया अप्यतिकामिना ग्रहणं स्यात्, तन्मा भूदित्येवमर्थं ऊढायाः पुनरुद्वाहो निवर्तितः, भ्राताऽपरभ्रातृपत्नीं बलान्नोपभुंजीतेत्येवमर्थं देवरेण सुतोत्पादनं निवर्तितम् । एवं भिन्नभिन्नान्येव प्रयोजनानि यथासंभवमूह्यानि, नत्वेकमेव प्रयोजनं सर्वधर्मपरिवर्तनेष्वन्वेति, पृथक्प्रयोजनवत्वस्य तत्तत्परिवर्तनस्वरूपज्ञानादेवावगम्यत्वात्" इति ।

[ कलिवर्ज्यप्रकरणे विचारः ]

अनेन चेदं स्पष्टमवगम्यते—यद्धर्मज्ञानां धर्माधर्मव्यवस्थापकत्वस्य शास्त्रैकमूलतया कल्यादिषु धर्मविशेषव्यवस्थापनं संकोचादिकं सर्वं न केवलपरिस्थितिमात्रमूलकमिति । सर्वथा तु धर्मसं-

कोचोऽयं न युक्त्यधीनः । अत्र च युक्तिपदेन प्रत्यक्षमूलकयुक्तिरेव विवक्षिता । नतु शास्त्रमूलकयुक्तिः । धर्मसंकोचो हि अशक्तिपर्यालोचनेन शास्त्रानुसारिमीमांसान्यायानुगृहीतः । यथाच यथाशक्तिन्यायस्य न काम्यकर्मादिषु नित्येतरेषु प्रवृत्तिस्तथा सर्वविदितमिदम् । यथाशक्तिन्यायेन हि प्रायश्चित्तेष्वङ्गविशेषलोपो नित्यकर्मस्वङ्गविशेषलोपो वा सोढव्यः । कलिवर्ज्यप्रकरणे तु निमित्तं शाखान्तरीयवाक्यविशेष एव भवितुमर्हतीति तु बहूनामेतन्मतम् । शाखाविशेषे हि स्मर्तृभिः कलिकाले कर्मविशेषाणां निषेधादवगम्यते कालविशेषोऽपि कलीतरो निमित्ततयोपात्त इति । न ह्यन्यथा पृथङ्निषेध उपपद्यते । निषेधोऽपि हि शास्त्रप्राप्तस्य विकल्पं विना नोपपद्यत इति पृथङ् निषेधो हि कथमपि नोपपद्यते । न हि विधिनिषेधयोर्विषये सामान्यविशेषन्यायः प्रसरति । अन्यथा—"यजतिषु येयजामहंकरोति, नानुयाजेषु' इत्यत्रापि विशेषप्रतिषेधेन विकल्पोपपत्तौ तत्र विकल्पापत्त्या पर्युदास एव युक्त इति मीमांसासिद्धान्तो नोपपद्यते । यत्र च विभिन्नस्मृत्योरेकवाक्यता क्रियते तत्र तयोरेकमूलकल्पनमिदं मयूखकाराणामपि सम्मतम् । अत एव "प्रायश्चित्तविधानं च विप्राणां मरणान्तिकमिति, कामकृते पापादौ तु न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृत इति, विहितस्य विधानमुपदेशः । एवं च 'मतिपूर्वमनिर्देश्यं प्रामाण्यान्तिकमिति स्थितिः" इति मनुवाक्यमेतद्युगविषयमेव । एकमूलकल्पनालाघवात् " इत्युक्तं तत्र ॥ तथा चोक्तमीमांसासिद्धान्तनिष्णातानां निबन्धकाराणां धर्मज्ञानां वा कालविशेषे निषेधवचनोपन्यासो हि तत्तद्धर्मविधायकवाक्येषु कलीतरकालविषयत्वं विना नोपपद्यत इति कलिवर्ज्यप्रकरणमिदं अर्थसिद्धानुवादपरमित्येवोरीकर्तव्यमिति कलि-

कालावच्छेदेन धर्मत्वस्याप्राप्तत्वात् न धर्मपरिवर्तनवार्ता कुत्रापि वर्तते । एते च निषेधाः इति वार्तिकानुसारिणः । निबन्धानुसारिणस्तु "रात्रौश्राद्धं न कुर्वीत" इति रात्र्यधिकरणकत्वनिषेधेन हि दिवैव श्राद्धं धर्म इति सिद्धान्तो यथा सिद्धा भवति, यथा च प्रातरग्निहोत्रविधिना मध्याह्नेऽग्निहोत्राधर्मत्वं सिद्धं भवति, तथाऽत्रापि व्यवस्थाऽनुसन्धेया— इति वदन्ति ।

धर्मविप्लवा (विकल्पा) पत्तेरेते पर्युदासा एव इति शंकरभट्टसुतदामोदरभट्टैरपि कलिवर्ज्यप्रकरणस्य पर्युदासपरत्वमेवाश्रितम् ।

[ कलिवर्ज्यप्रकरणस्य पर्युदासत्वे उपष्टम्भः[ मांसमीमांसाभिधाने तु निबन्धे कलिवर्ज्यप्रकरणे पर्युदासत्वं प्रतिषेधत्वं वेति पक्षद्वयमप्युपन्यस्तम् । तद्यथा—अस्मन्मते तु प्रकरणाबहिर्भावात् निषेधस्याक्रत्वर्थेन पुरुषार्थत्वेन पुरुषार्थत्वात् कलौ श्राद्धे मांसदानेन सर्वः प्रत्यवैतीति फलवान्निषेधः । प्रकरणाद्धि पुरुषार्थस्यापि निषेधः क्रत्वर्थो भवति । तदाहुर्भट्टपादाः—स्त्र्युपाय मांसभक्षादि पुरुषार्थमपि श्रितः । प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयादिति । न तु क्रत्वर्थस्याप्रकरणे निषेधः । किञ्च निषेधव्यवस्थापकतायां यथाचार इव वनस्य यथाचारं न देयमित्यवक्ष्यत्, न तु प्रदेय ... ... तदा दानानुवादस्यैवापेक्षितत्वात् । न च दाने व्यवस्थापितेऽदानमप्यर्थतो व्यवस्थास्यत इति वाच्यम् । श्रुतानूदितदानव्यवस्थया वचस्युपपत्तेऽश्रुतानूदितव्यवस्थाया अन्याय्यत्वात् । न च विहितप्रतिषिद्धाष्टदोषदुष्टविकल्पपरिजिहीर्षया श्रुताश्रुतयोर्व्यवस्थापनम् । निषेधस्य विशेषविषयतया दीक्षितो न ददाति न जुहोतीतिवत् बाधस्यैवौचित्येन विकल्पाप्रसक्तेः । नन्वेवं न तौ पशौ करोतीत्यनेन आज्यभागाख्यविशेषविषयेणाऽऽ-

ज्यभागानाज्यभागविषयचोदकबाधात् पशावाज्यभागविकल्पो न स्यात् ? अथ प्रापकत्वेन चोदकमुपजीवन्नभ्यनुजानन्नाज्यभाग निषेधो न स्यात्, विशेषविषयोऽपि विकल्प आज्यभागयोश्चेत्तर्हि दीक्षितो न जुहोतीत्ययमपि प्राकरणिकहोमनिषेधायोगात् अग्निहोत्रादिहोमं विकल्पयेत्। अथायं विशेषविषयत्वात् बाधत एव, तर्ह्याज्यभागनिषेधोऽपि बाधेनैव चोदकस्य न विकल्पयेदाज्यभागौ। वक्तव्यो वा विशेषः, श्रूयतामत्र विशेषः। यत्र भावपि विधिप्रतिषेधौ पुरुषार्थौ क्रत्वर्थौ वा स्याताम्, ततः स्याद्विकल्पः। पुरुषार्थतया तु विहितान्यग्निहोत्रादीनि क्रतुमध्येऽपि प्राप्तानि प्रतिषिध्यन्ते, क्रत्वर्थतया वा स्युपगमादिवत्। अतः ऐकार्थ्याभावात् विकल्पोऽप्रसक्तः। क्रतुमध्ये नियतमग्निहोत्रादि वर्जनीयम्। आज्यभागविधिप्रतिषेधयोस्तु एकार्थत्वाद्विकल्पः, एकातिरात्रार्थषोडशीग्रहणाग्रहणवत्। प्रस्तुते तूक्तरीत्या विकल्पाप्रसक्तेन तन्निवृत्तये श्रुताश्रुतयोर्व्यवस्थापनमिति वृद्धपद्धतिमध्यासीनाः। अन्ये तु यथास्थितसूत्रभाष्यानुसारेण दीक्षितो न ददाति न जुहोतीत्यत्र पर्युदास एव, दीक्षितान्यो होमादि कुर्यादिति; जुहोत्यनुवादोपस्थापितेन दूरस्थेनापि तद्विधिनैकवाक्यत्वात्। आर्थिकसमानविषयत्वेन विकल्पापत्तेः पुरुषार्थक्रत्वर्थहिंसाविधिनिषेधयोः क्रत्वर्थपुरुषार्थचमसगोदोहनविध्योर्बाध्यबाधकभाववत्। तत्रापि समानविषयत्वापेक्षणात्। तथापि प्रस्तुते कल्व्यतिरिक्ते मांसं दद्यादिति दूरस्थेनानुवादवलोपस्थापितेनैकवाक्यतया पर्युदासत्वम्। निषेधत्वे हि न तौ पशावितिवद्विकल्पः स्यात्। अपि च क्रत्वर्थाग्निहोत्रहवणीलेहादिनिषेधश्च तदा प्रकरणाभावेऽपि निषेध्यक्रत्वर्थत्वाल्लिङ्गेन निषेधस्यापि क्रत्वर्थता। अन्यथा निषेध्य-

क्रियाकैमर्थ्यचिन्ता व्यर्था स्यात्। तथा च निषेधे क्रत्वर्थे पश्वाज्यभागवद्विकल्पापत्तिः। पुरुषार्थे तु क्रतुवैगुण्यापत्तिः। पुमर्थेन निषेधेन क्रत्वर्थबाध्यभावात् विपर्ययात्। अत एवंजातीयकेषु पर्युदासत्वमेव। आशौचे श्राद्धवैश्वदेवादिषु पुरुषार्थनिषेधे विधिनिषेधयोः पुरुषार्थत्वाद्विकल्पः स्यान्निषेधपक्षे। अतस्तेऽपि पर्युदासाः एवोक्तमार्गेण। कृतविवाहादेः संक्रान्तिमन्वादि इत्यादिषु पिण्डवर्जनेऽपि एवमेव पर्युदासता। अत एव संक्रान्त्यमावास्यादिश्राद्धसन्निपाते तन्त्रेण श्राद्धसिद्धिरुक्ता न्यायविद्भिर्हेमाद्रिप्रभृतिभिः। अन्यथा हि विरुद्धाङ्गकत्वान्न तन्त्रता सम्भवः। न तौ पशाविन्यत्र तु वचनव्यक्तिसंभवात्पर्युदासासंभवेनास्त्वा निषेधो विकल्पश्चेति। तदलमतिदूरं गत्वा। पर्युदासत्वे कलौ श्राद्धे मांसवर्जनस्य न विकल्पापत्तिर्नतरां श्रुताश्रुतव्यवस्थापनं यथाचारवचनेनेति। निषेधत्वे पर्युदासत्वे वा नियमे कलौ श्राद्धे मांसवर्जनं सिद्धम्। आद्ये निषिद्धत्वादेव, द्वितीये मांसप्रापकविधेः कलावप्रवृत्तेर्बाधकाभावेनाष्टविधघातान्यतरापत्त्या निषेधप्रवृत्तेः। अत्र बहुवक्तव्यमपि विस्तरापत्तेर्न वदामः। यत्तु देशाचारः परिग्राह्य इति बृहन्नारदीयवचनम् यच्च देवलस्य वचनम् यस्मिन् देशे य आचार इति, यच्च भृगोर्यस्मिन् देशे पुरे ग्रामे इति, तत् श्रुतिस्मृत्यविरुद्धतत्तद्देशाचाराणां व्यवस्थया ग्राह्यतां वदन्न तद्विरुद्धं श्राद्धमांसदानाचारं गोचरयतीति व्यर्थस्तदुपन्यासः। अत एव "यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः। श्रुतिस्मृत्यविरुद्धस्तु सदाचारः स उच्यते" इति श्रुत्याद्यविरुद्धस्यैव सदाचारत्वमुच्यते। गौतमोऽपि— आचारश्चैव साधूनाम् देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणमिति॥

[प्राप्तिसंभावनया पर्युदासान्न तत्र विकल्पः] सर्वथा तु कलिवर्ज्यानां वर्जनीयत्वमेव, न तु यथेच्छं तस्य परिवर्तनम्। यथा पर्युदासत्वपक्षेऽपि संभावनामात्रेण प्राप्तिरुपपद्यते, यथा च संभावनाप्राप्तिर्नविकल्पापादिका, तथा वीरमित्रोदये गोत्रप्रवरनिर्णयावसरे विवेचितम्। तद्यथा—यत्तु न पर्युदासस्य प्राप्त्यपेक्षा यथा प्रतिषेधस्य, अन्यथा "यजतिषु ये यजामहं करोति नानुयाजेषु" इत्यादौ पर्युदासेऽपि विकल्पः प्राप्नोति। तन्निवृत्तये "नार्षेयं वृणीते" "नानुयाजेषु" इत्यादिषु पर्युदासे लक्षणांगीकारो न स्यादिति, तन्न मनोरमम्, निषेधे प्रापकस्य निवर्तकस्य च वाक्यस्य भेदात्। अनुवादार्थं वाक्यान्तरकृता निश्चयरूपा प्राप्तिर्यथाऽपेक्षिता, न तथा पर्युदासे इति यद्यपि, तथापि यदीदं विशेषणं न स्यात्तदा प्राप्नुयादिति सम्भावनारूपा प्राप्तिर्वाच्यैवेति॥

अस्तु वा कथमपि देशकालानुरोधेन धर्मपरिवर्तनस्य योग्यता, एवमपि हि कल्पादिविभागवत् अवान्तरकालविभागं कंचन कल्पयित्वा खल्वेतावत्पर्यन्तमयं धर्मो न कर्तव्योऽयमधर्मोऽपि धर्मत्वेन स्वीकर्तव्य इति व्यवस्थापनं कर्तव्यम्, न तु सामान्यतः। इदानीं च धर्मस्य कस्यापि परिवर्तनादिकमेतावत्कालपर्यन्तं योग्यमिति भाविकालयोग्यतादिविज्ञानचतुरो धर्मज्ञः को वा वर्तत इति प्रथमतो विवेचनीयम्। अनन्तरमेव धर्मपरिवर्तनकथा बहिः प्रकाशनीया। तदत्र कोऽपि प्रथमतो निर्धारयतु—यत्कियत्पर्यन्तमियं परिस्थितिः स्थास्यतीति। अपरमत्र परिवर्तनवादिना प्रथमतो निर्णेयम्, कस्य धर्मस्य परिवर्तनमिदानीं कांक्ष्यते। कलिवर्ज्यप्रकरणस्य कियत्कालपर्यन्तं प्रवृत्तिः। किमेतल्लक्षणपर्यन्तमेवोक्तमयीति। न हि वयमपि वस्तुगत्या महत्यामापद्युपस्थितायामपि धर्मधर्मकथां

यथोक्तामेव तत्तदवस्थायां परिपालनीयाम्पश्यामः। इदमेवास्माक मत्र वक्तव्यम्—यत्कलिवर्ज्यप्रकरणस्य पुनरपि परिवर्तनकालो नाद्यावधि सम्प्राप्तः। अत्र "चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च। कलौ यदा गमिष्यन्ति तदा त्रेतापरिग्रहः। संन्यासश्च न कर्तव्य इति वेदविदाम्मतम्," इति वाक्येन सत्यं कलिवर्ज्यप्रकरणस्यावधिविशेषो निर्णीत इव प्रतिभाति। अत्र हि संन्यास इति सर्वेषां तत्सहचरितानामुपलक्षणमिति केचिन्मन्यन्ते। वयन्तु पश्यामः—चत्वार्यब्दसहस्राणीत्युपलक्षणं वेदाप्रवृत्तिकालस्य। पूर्वं हि धर्मज्ञैः सामान्यत आलोचितम्, यच्चतुःशताधिकचतुःसहस्रतमकाल एव वेदादिप्रवृत्तिर्न भविष्यतीति। न हीदानीमपि तादृशी दुरवस्था सञ्जाता। दृश्यते हीदानीमपि सर्वत्र वेदानाम्प्रवृत्तिः, चातुर्वर्ण्यविभागश्च। तथाच यावद्वर्णविभागं यावद्वेदप्रवृत्ति च कलिवर्ज्यप्रकरणस्य सम्यगेव संरक्षणमेव समुचितम्। एतदेवाभिप्रेत्येदं वचनं प्रवृत्तम् "यावद्वर्णविभागस्तु यावद्वेदः प्रवर्तते। संन्यासं चाग्निहोत्रं च तावत्कुर्यात्कलौ युगे" इति। तथाच प्रत्यक्षादिना परिस्थितिविशेषस्येदानीमनुभवेऽपि नेयम्पर्याप्ता कलिवर्ज्यप्रकरणपरिवर्तनस्य। सत्यम्, प्रवर्तकं वाक्यजातं शास्त्रपदेन विवक्ष्यते। शासनविशेषप्राधान्यमेव शास्त्रस्य समुपदृश्यते। मन्त्रभागस्यापि तु विध्येकवाक्यतयैव सप्रयोजनत्वमिति हि मीमांसकानां सिद्धान्त इति तस्यापि शास्त्रत्वमविवादमेव। एतेनार्थवादोऽपि व्याख्यातः। इदं च शास्त्रं धर्माधर्मविषयं यदि पूर्वोक्तप्रकारेण कपिलादीनामपि तत्तत्कालिकानुभवाधीनं न भवति, यदि स्वतन्त्रतयैव धर्मे प्रमाणम्, तर्हि तु वाक्यार्थनिर्णयमात्रमेवास्माकं कर्तव्यम्, न तु तत्तत्कर्मणः प्रयोजनविशेषादिविचारादिकम्। न हि

जन्मान्तरीयफलविशेषानुभवो गुणदोषविवेको वा तत्रापेक्षितः। तथाच यदि धर्माधर्मनिर्णयः शास्त्राधीनः कस्यापि कांक्ष्यते, शास्त्रे च यदि विश्वासस्तर्हि वयम्पश्यामः—यदैतिहासिकशैल्या अत्र कथमपि नोपयोग इति । एतत्प्रबन्धकारैरपि प्रयोजनादिविनिर्णयार्थमेव खल्वैतिहासिकदृष्टेरुपयोगो वर्ण्यते । तत्र च यावता प्रयोजनविचारस्य नापेक्षा, तर्हि तु मीमांसापरिपाट्यैव धर्मनिर्णयः कर्तव्य इत्यपि सिद्धमेव । उपपादितं हि पूर्वमेव दृष्टफलानामदृष्टफलानां च साध्यसाधनभावो नानुमानेनानुभवेन वाऽवगन्तुं शक्यत इति । तथाच प्रयोजनविशेषादिनिर्णयस्य पुराण्यसम्भवात् फलविशेषसाधनत्वेन धर्मत्वमधर्मत्वं वा कथमपि न पार्यते व्यवस्थापयितुमित्यकामैरप्यूरीकर्तव्यम् । न ह्यनुभूयमानमपि स्वरूपतः फलमेतत्कर्मादिसाध्यतया कस्यापि प्रत्यक्षम् । एतेन—“पूर्वं सर्वं कार्यं दृष्टफलकमेवासीत् । क्रमेण च गते बहुतिथे काले देवतावयवसंस्थानादिषु विमतिर्जाता । एवंस्थिते दृष्टार्थोऽपि धर्मो यागादिरदृष्टार्थः संवृत्तः । धार्मिकश्रद्धानुरोधेनादृष्टार्थोऽपि कर्तव्य इत्येव तत्र तत्रोपदिशन्तोऽपि पारमार्थिकतत्त्वप्रकाशनावसरे तस्य चित्तशुद्धिसम्पादनमात्रे उपयोगं प्रदर्शितवन्तः परमार्थत इत्यादिसिद्धान्तोऽपि” परास्तः । देवतावयवविमतेर्दृष्टस्यापि फलस्यादृष्टत्वं संजातमिति कल्पनायां हि तदारभ्याफलत्वमेव सर्वेषां कर्मणामिति फलति । अत्र च पक्ष आमुष्मिकफलवार्ता जन्मान्तरकथा च परित्यक्तव्या भविष्यतीति चार्वाकमतप्रवेश एव समापद्येत । स्वर्गोऽपि दृष्टफलमेवेतिवादोऽप्येतेन परास्तः । एतेन—धर्मपरिवर्तनयोगोऽपि—परास्तः । पूर्वं ह्यतिथीनां महात्मनां देवतुल्यपराक्रमाणामवस्थानमासीदिति समांसोऽपि मधुपर्को न दोषावह

आसीत्। कलौ तु तादृशा अतिथयो विरलविरला इति तन्निषेध उपपद्यते, योग्यसंप्रदानस्यालाभात्। एतेन—यागीयहिंसापि व्याख्याता। न हि पिष्टपशुयागः कुत्रापि विहितः। "कुर्याद् घृतपशुं सङ्गे कुर्यात्पिष्टपशुं तथा" इति मनुवचनन्तु न यागीयपशुविषयम्, किन्तु केवलपुरुषार्थमांसभक्षणविषयमेव। अत एवात्र सङ्गे इति पदं सार्थकम्भवति। यागाङ्गमांसभक्षणन्तु क्रत्वर्थं न तु पुरुषार्थमिति न दोषः। एतेन—संन्यासनिषेधोऽपि व्याख्यातः। "यदहरेव विरजेत्तदहरेव प्रव्रजे" दिति उत्कटवैराग्यसम्पत्तावेव खलु संन्यासो विधीयते। तच्च वैराग्यं न चित्तशुद्धिमन्तरा सम्भवति। तदुक्तं 'कर्मणा चित्तशुद्धिः स्यात्तथा तीव्रा विरक्तता' इति। कलौ तु तादृशा विरलविरला इति सर्वविदितमिदम्। तथा च तादृशानामधिकारिणां लाभे तु संन्यासस्वीकरणं न दोषाय, अन्यथा तु न संन्यासेनापि संसिद्धिः। तदुक्तं भगवद्गीतायाम्—"न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते। न च संन्यसनादेव सिद्धिं समधिगच्छति" इति। सर्वथा तु यद्यशक्त्यादिपर्यालोचनेन संकोचरूपं परिवर्तनमेव काङ्क्ष्यते, तर्हि तु नास्माकमपि तत्र विप्रतिपत्तिः। एतेन—"धर्मज्ञसमयः प्रमाणम्"—इत्यपि व्याख्यानम्। अत्र धर्मज्ञपदेनालुब्धधर्मकामादेरेव ग्रहणमिति नास्माकमपि विप्रतिपन्नम्। एतेन—यतोऽयं व्यवस्थापनारम्भः प्राचीनप्रमाणैर्व्यक्तमप्राविलस्याभ्युदयसाधनस्यानभ्युदयसाधननिवारकस्य च विधानाय—इत्यपि व्याख्यातम्। वयमपि व्यक्तं प्रामाणान्तरप्रापितस्यैव परिवर्तनमयोग्यं मन्यामहे। व्यक्तं प्राचीनप्रमाणसिद्धस्यार्वाचीनेन परिवर्तनन्तु भवतामपि यद्यसम्मतम्, तर्हि तु न कापि विप्रतिपत्तिः। प्रमाणानि चात्र वेदस्मृतिपुराणेतिहासादिकमित्यत्रापि

नास्माकं विप्रतिपत्तिः । इदमेवात्र पुनःपुनरपि निवेदनीयम्—यत् वेदादीनां प्रवृत्तौ न कस्यापि पूर्वतनानुभवो निमित्तमिति सिद्धान्तो यदि न परित्यज्यते, यदि च धर्मशास्त्रवाक्यार्थनिर्णयो मीमांसापरिपाट्या संपाद्यते, तर्हि तु व्यक्तं प्रमाणान्तरासिद्धस्य सर्वस्य परिवर्तनं योग्यमेव मन्यामहे । नहि सुरापानं व्यक्तं निषिद्धं बहुभिरिदानीं क्रियते इति निमित्तेन तस्य धर्मत्वव्यवस्थापनमस्माकं समुचितं पश्यामः । सर्वथा तु युक्तिमूलकत्वं धर्मव्यवस्थापनस्य समुचितमिति केवलराजशासनतुल्यत्वं सर्वस्य शास्त्रस्य शंवदमानं नोपपन्नम् ।

अत्र प्रसंगे दफ्तरीमहाशयानां प्रबन्धसमालोचनमत्यन्तमेवावश्यकम् । तत्र हि शास्त्रस्य प्रवर्तकनिवर्तकभेदेन द्विविधस्यांशतः पौरुषेयत्वमंशतोऽपौरुषेयत्वम् । तत्र पौरुषस्य प्रवर्तकस्य चोदनापदेन व्यपदेशः । तस्य लोकसंग्रहानुसारेण प्रवृत्तिरित्यादिकं निरूपितम् । अत्र हि प्रबन्धेऽपरोऽयं विशेषो दृश्यते—यज्जैमिनिसूत्राणामपि स्वाभिप्रायानुसारेण योजनमत्र कृतम्, च शाबरभाष्यस्य तत्र तत्र निरासः कृत इति । अत्र तदीयव्याख्यानसमालोचनात्पूर्वं तद्ग्रन्थसंग्रहं प्रथमतो यथावदेव सम्पादयामः । तद्यथा—

[ धर्मलक्षणविचारः ]

अथातः पुरुषनिःश्रेयसाय धर्मजिज्ञासा इति वसिष्ठसंहितावचनस्य ये हि कर्माकर्मणी निःश्रेयसकरे तयोर्धर्मत्वमित्येवार्थः । यतो हि पुरुषनिःश्रेयसफलाय धर्मजिज्ञासां प्रतिजानाति । यद्धि यदर्थं तस्य तादृक्फलसाधनत्वमित्येव लक्षणं सम्भवति । यतो हि धर्मविचारस्य निःश्रेयसफलत्वम् । तस्मात् निःश्रेयससाधनत्वं धर्मस्य लक्षणं पर्यवसन्नम् ।

तदेवोक्तं मनुनापि—

नैःश्रेयसमिदं कर्म यथोदितमशेषतः—इति।

शंखेनापि—चातुर्वर्ण्यहितार्थाय शंखःशास्त्रमकल्पयत्—अ० १८। १०७ इत्यत्रोक्तम्। एवमेव दक्षात्रिस्मृत्यारंभे। एवं च धर्मविचारार्थं प्रवृत्तानामत एव धार्मिकाणां ग्रन्थानामनुरोधेन निःश्रेयससाधनत्वमेव धर्मस्य लक्षणं फलति। तदेव च ग्राह्यम्। अन्यथा धर्मविचारार्थं प्रवृत्तानामस्माकं प्रतिज्ञाव्याकोपः।

[ धर्मफलविचारः ] सिद्धे खल्वस्मिन् लक्षणे निःश्रेयसमेव धर्मफलमित्यपि सिद्धम्। हितं कल्याणं कुशलं श्रेयः इति त्वनर्थान्तरम्। धर्मातिरिक्तविषयविचारार्थं प्रवृत्तानामपि प्रसंगात् धर्मविचारप्रवृत्तानामन्येषामितिहासपुराणादीनां न धर्मलक्षणान्यत्र गृहीतानि। तत्र तादृक्निर्दोषलक्षणासम्भवात् तत्र शब्दानामतिव्याप्त्यादिदोषनिराकरणपूर्वकलक्षणकथनेऽपरिपूर्णत्वम्। अतएव न तत्र लक्षणेऽतीव विस्रम्भः कार्यः। तथापि तात्पर्यतस्तल्लक्षणस्य पूर्वोक्तलक्षणानतिरिक्तत्वमेव। तत्र वायुपुराणे—

धर्माधर्माविह प्रोक्तौ शब्दावेतौ क्रियात्मकौ।
कुशलाकुशलं कर्म धर्माधर्माविति स्मृतौ॥

एवमेव मत्स्यपुराणेऽपि। महाभारतेऽपि धर्मं हि श्रेय इत्याहुरित्येवोक्तम्।

[निश्श्रेयसपदार्थविचारः] एवंच सिद्धे खल्वेतस्मिन् लक्षणे निःश्रेयसपदस्य को वाऽर्थः इत्याकांक्षायां व्युत्पत्त्यनुसारेणादौ पदार्थो विचारणीयः। शब्दार्थनिर्णये हि व्युत्पत्तेरपि प्रामाण्यमंगीकृतमेव शास्त्रकारैः। तत्र चादौ श्रेयःपदार्थो व्युत्पादनीयः। स चायं प्रियशब्दात् वरत्ववाचके इयसुनि प्रेयसिति शब्दवत् श्रिय-

शब्दादियसुनि श्रेयसिति व्युत्पन्नः । यद्यपि न कुत्रापि श्रियशब्दः स्वातंत्र्येणोपलभ्यते, तथापि श्रियंमन्यः श्रियापतिः श्रियावासीः इत्यादिशब्देष्वन्तर्घटितस्तत्र तत्रोपलभ्यते । दृश्यतामत्र आप्टे महाशयकृतः कोशः । अत्रायं शब्दः न विशेषणम् । तथापि तस्यापि व्युत्पत्तिर्यदि पर्यालोच्येत, तर्हि श्रिञ् आश्रयणे आसक्तौ पूजायामिति धातोः कस्मिंश्चित् प्रत्यये श्रियशब्दसिद्धिः सम्भाव्यते । एवं च पूजार्थकोऽयं न विशेषणम् । अपरार्थस्तु विशेषणम् । श्रेयःप्रकृतिस्त्वयं आसक्तिविषयवाचकः । आसक्तिश्च सुखविषयिण्येव प्राणिनाम्, अतस्तस्य सुखवाचकत्वमेव । एवमेव श्रियापतिश्रियावासिशब्दयोरपि सुखाजात, सुखासक्त, इत्येतदर्थकत्वम् । पारसीकभाषायामपि एतत्सदृशः शिरीं शब्दः मधुरार्थः । शिरिणीशब्दस्तु मोदकाद्यर्थो माहाराष्ट्र्यामपि प्रसिद्धः । अनेन च पूर्वोक्तसिद्धान्तस्य दृढीकरणमेव । एवं च सुखवाचकात् श्रियशब्दादियसुनि निष्पन्नस्य श्रेयःशब्दस्य उच्चतरसुखार्थकत्वेन निःश्रेयसशब्दस्यार्थादेवोच्चतमसुखवाचकत्वं पर्यवसन्नम् ।

[ पारलौकिकसुखस्य निःश्रेयसत्वनिरासः ] केचित्तु निःश्रेयसशब्दस्य पारलौकिकसुखवाचकत्वमभ्युपगच्छन्ति । तदसत् । न हि व्युत्पत्त्या सुखे पारलौकिकत्वं प्रतीयते । केवलं सुखस्योच्चतमत्वविचारणायां मर्यादाविचारस्यावश्यंभावित्वात्तदवसरे ऐहलौकिकसुखापेक्षया पारलौकिकस्य ग्राह्यत्वमधिकमिति शक्यते वक्तुम् । तदनुसारेण तत्साधककर्मणामपि तारतम्यम् । तथापि न धर्मसाध्ये सुखे पारलौकिकत्वं प्रतीमः । केवलं सुखमेव धर्मसाध्यं न तद्विशेष इत्येव प्रतीमः । किंच मनुष्यबुद्धेरगम्यमेव खलु पारलौकिकं सुखं तत्साधनं च । श्रुत्यादीनामपि उपरिष्टात् मनुष्यबुद्धिपरिकल्पितत्वं सा-

धनेन तत्प्राप्तिसौकर्यादपि न पारलौकिकसुखस्य धर्मसाध्यत्वम्। श्रुत्यादिष्वपि धर्मसाध्यत्वेन प्रतिपाद्यमानस्य पारलौकिकसुखस्यावबोधकानि वचनानि केवलं स्तुत्यर्थान्येव।

[निःश्रेयसस्यैव धर्मफलत्वे प्रमाणानि] एवं चोच्चतमसुखमेव खलु धर्मसाध्यम्। इदमेव धर्मेण साकं सुखसम्बन्धबोधकानां वचनानामपि तात्पर्यम्। तद्यथा—

सुखं वाञ्छन्ति सर्वे हि तच्च धर्मसमुद्भवम्॥
तस्माद्धर्मः सदा कार्यः सर्ववर्णैः प्रयत्नतः॥ दक्षः अ० ३।२३

ततो धर्मसमायुक्तः स जीवः सुखमेधते॥
इह लोके परे चैव—भा० अनु० अ० २२२।८६

अधर्मप्रभवं चैव दुःखयोगं शरीरिणाम्।
धर्मार्थप्रभवं चैव सुखसंयोगमक्षयम्॥ मनुः ६।६४

एवमन्यान्यपि वचनानि—

एवं चायमेव सिद्धान्तः, यदतिशयमुच्चतरं सुखमेव धर्मस्य साध्यमिति। यद्यपि न सुखस्वरूपे तारतम्यम्, तथाप्युपाधिभेदात्तारतम्यं स्यादेव। तथापि पूर्वोक्तस्य सुखस्य धर्मसाध्यत्वं नाशक्यम्। अत एव वशिष्ठसंहितायाम्—धर्मं चरत माधर्मं सत्यं वदत मानृतम्। दीर्घं पश्यत मा ह्रस्वं परं पश्यत माऽपरम्। अ०३० इत्युक्तम्।

[श्रेयःशब्दव्युत्पत्त्यैव धर्मपदार्थनिर्वचनम्] यथाहि खलु श्रेयःशब्दव्युत्पत्त्या धर्मस्वरूपं सिध्यति, न तथा धर्मशब्दव्युत्पत्त्या। तथा हि धारणकर्ता धर्मः, नियमितमार्गात् बहिर्गच्छतो नियन्ता, देहधारकः इत्येवार्थः प्रतीयते, न तेन किमिति वा स नियच्छति, देहं धारयतीत्याद्याकांक्षापूरणं भवति। केवलं कस्यचन साध्यस्य कृते स नियच्छति, धारयति वा इत्येव सिध्यति। नैतावता तत्साध्यं स्पष्टं

प्रतीयते। प्रतीयते च श्रेयःशब्दव्युत्पत्त्या। तस्मादकिंचित्करोऽयं धर्मशब्दव्युत्पत्त्या तत्स्वरूपनिर्णयप्रयत्नः।

[ निश्रेयसप्राप्तिः कर्मकर्तुरेव ] अनेन च लक्षणेन प्रतीयमानं निःश्रेयसं साध्यं कर्मकर्तुरेव। नाखिलस्य जगतः। न वा धर्मग्रन्थेष्वपि कर्मकर्तुरतिरेकेण अन्यस्य निःश्रेयसमिति प्रतीतिः। यदि च कर्मकर्तुरन्यस्यापि सुखं कर्तुः कर्मणः साध्यं स्यात्तथा प्रतीतिरपि स्याद्धर्मग्रंथेभ्यः। न च प्रतीयत इत्यतः कर्मकर्तुरेव निःश्रेयसं धर्मसाध्यमित्येव सिद्धान्तः।

[सुखस्यैव पुरुषार्थत्वम्] एवमेव को वा पुरुषार्थः पुरुषाणाम्, किमिति वा कर्मणामनुष्ठेयतेत्यादिविचार इदानीं कर्तव्यः। अत्रानुयोगे उत्तरार्थं बहवः खलु पाश्चात्याः प्रयतन्ते। परं चायं तेषां प्रयत्नस्त्वयोग्यरीत्यैव भवति। ते हि पूरुषार्थनिर्णये प्रयतन्ते। स च निश्चित एव वर्तते। निसर्गेण खलु यत्र प्रवृत्तिर्मनुष्याणां स एव पूरुषार्थः। तद्विरुद्धः कल्पितोऽपि पूरुषप्रवृत्तिविषयः कदापि न भवितु मर्हति। स चायं पुरुषार्थः स्वभावसिद्धोऽपि पुरुषप्रवृत्तिविषयः स्यादिति तत्साधकमार्गप्रदर्शनार्थमेव धर्मशास्त्रम्, न पुरुषार्थनिर्णयार्थम्। तच्च सुखमेव, सर्वाभिप्रेतत्वात्, सर्वेषां तदर्थं प्रयतमानत्वात्। सर्वोऽपि जन्तुः सुखार्थं दुःखविनाशार्थं च प्रयतते। येऽपि नाम परोपकारिणः साधवः परोपकारकरणार्थं दुःखे प्रयतमाना दृश्यन्ते, तेऽपि तद्द्वारा स्वसुखमेव संपादयन्ति, तेनैव तेषां सुखदर्शनात्। यथाकथञ्चित् परसुखार्थं दुःखेऽपि प्रवृत्तिः सम्भवतीत्यङ्गीकृतेऽपि केचन स्वसुखार्थमेव प्रयतमाना दृश्यन्त इत्यवश्यमेवाभ्युपेयम्। एवं च कुत्रचित् स्वसुखेच्छायाः प्रवृत्तिजनकत्वम्, कुत्रचिदन्यस्येति न कार्यकारणभावनिर्धारणम्। अतः सर्वेषां

सुखार्थमेव प्रवृत्तिरित्येवांगीकरणीयम्। तदुक्तं मनुना—सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तय इति। तस्मात्परोपकारादिष्वपि स्वसुखं वर्तत एवेत्यत्र मन्तव्यम्। यस्य यद्द्वारा सुखप्राप्तिसंभवः स तद् द्वारा तल्लब्धौ प्रयतत इति न पूर्वोक्तापत्तिः। कुत्रचिदधिकसुखार्थमल्पस्य त्यागस्तु संभवति। किम्बहुना? अधिकसुखार्थमल्पसुखत्यागेच्छा सर्वेषामेव, तथापि तथा वर्तने कदाचित् सामर्थ्यं न भवेत्। एवं चोच्चतमसुखमेव पुरुषार्थो धर्मसाध्य इत्येव युक्तमुत्पश्यामः। तदेव छान्दोग्ये—यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति, सुखं त्वेव विजिज्ञासितव्यम्—इति।

अत्रैव पूर्वोक्तं दक्षस्मृतिवचनमप्यनुसन्धेयम्। एवं च यत्कर्म निःश्रेयससाधनं स धर्मः। निःश्रेयसं चोच्चतमं सुखमेवेति सिद्धम्।

[धर्मफलस्य प्रत्यक्षानुमितिविषयत्वम्] तत्र किं कर्म निःश्रेयससाधकं किंवाऽनिःश्रेयससाधकमित्यत्र प्रमाणपर्यालोचनायां प्रत्यक्षानुमाने एव तत्र प्रमाणे इति ब्रूमः। तथाहि—कर्मफलं हि भूतवस्तु कर्तुमकर्तुमन्यथाकर्तुमशक्यम्। यथा पृथ्वीधर्माः, आत्मस्वरूपम्, अग्नेर्दाहकत्वमिति। कर्मानन्तरं फलमप्यवश्यं भावि साधु वाऽसाधु, न तन्मनुष्येण विपरिणेतुं शक्यम्। भूते च वस्तुनि प्रत्यक्षानुमानयोरेव प्रवृत्तिः। तदुक्तं शांकरभाष्ये—'परिनिष्पन्ने च वस्तुनि प्रमाणान्तराणामस्त्यवकाशो यथा पृथिव्यादिषु। यथा च श्रुतीनां परस्परविरोधे सति एकवशेनेतरा नीयन्ते, एवं प्रमाणान्तरविरोधेऽपि तद्वशेनैव श्रुतिर्नीयेत। दृष्टसाम्येन चादृष्टमर्थं समर्थयन्ती युक्तिरनुभवस्य सन्निकृष्यते। विप्रकृष्यते तु श्रुतिरैतिह्यमात्रेण स्वार्थाभिधानादि'ति द्वितीयाध्याये प्रथमपादे

चतुर्थसूत्रे । अत्र च युक्तेः प्राबल्यं श्रुत्यपेक्षया प्रत्यक्षेण सन्निकर्षात् । एवं च भूतवस्तुनि अनुभव एव मुख्यं प्रमाणम्, तदपेक्षया युक्तिः, अन्ततः श्रुतिः ।

[ शब्दैकगम्यता धर्मस्य ] एवं च धर्मे मुख्यं प्रामाण्यं प्रत्यक्षानुमानयोरेव । ताभ्यामेव हि धर्मं विनिर्णीय सर्वैरपि वर्तितव्यमिति सिद्धम् । परं च व्यवहारे लौकिकानामाभ्यां प्रमाणाभ्यां धर्माधर्मनिर्णयेऽसामर्थ्यात्, सामर्थ्येऽपि अवसरालाभात् भिषजामिव कुत्रचित् ग्रन्थविस्रम्भस्यावश्यकत्वात्, कासांचित् क्रियाणामापाततः सुखसाधनत्वेऽप्यन्ततो दुःखसाधनत्वात्, तथैव कासांचिदादौ दुःखाधायकत्वेऽप्यन्ततः स्थिरसुखसाधनत्वात् तासामनुष्ठानावसरे भीत्या लोभेन दम्भात् सामर्थ्याद्वाऽधर्मेऽपि केषांचित्प्रवृत्तिसंभवात्, तादृशां निग्रहाय कृत्रिमदण्डप्रलोभनादीनां निर्माणस्यावश्यंभावात्, तेषां च व्यवहारादिद्वारा तत्र तत्राभियोगस्यावश्यकत्वाच्चेदं कर्म धर्मरूपमिदमधर्मरूपमिति निश्चितज्ञानस्यावश्यकत्वेन चावश्यमेव तत् सिद्धमेव ग्राह्यं परप्रणीतग्रन्थेनेति तेषां कृते शब्द एव प्रमाणतया स्वीकर्तव्यः, नात्र प्रत्यक्षानुमानयोरुपयोगः । किंच यदि प्रत्यक्षानुमानाभ्यामेव धर्माधर्मनिर्णयाधिकारः स्याद्व्यवहाराधिकारिणां तर्ह्यनवस्थाप्रसङ्गः । एकेनाधिकारिणा यस्य कर्मणो धर्मत्वं निर्णीतमन्येन तस्यैवाधर्मत्वमपि स्थापयितुं सुशकम् । अतो निश्चितरूपेण धर्माधर्मयोर्ज्ञानमत्यावश्यकं तदेति परप्रणीतग्रन्थद्वारैव तत्सम्भवतीत्यतस्तत्र शब्दस्यैव मुख्यं प्रामाण्यमुररीकरणीयम् ।

[ धर्मस्य परोक्षत्वापरोक्षत्वभेदेन द्वैविध्यम् ] किंच पूर्वोक्तलक्षणेन यस्य निःश्रेयससाधनत्वम्, स धर्मः, यस्य चानिश्रेयससाधनत्वम्, स चाधर्म इत्ये-

व फलति, न तु कस्य निःश्रेयससाधनत्वम्, कस्य वा तदभाव इति विशेषरूपेणेति निःश्रेयसलक्षणस्य धर्मस्य स्वरूपमेव तत्रानिश्चितम्। एतदेव खलु धर्मस्य परोक्षं स्वरूपम्। एवमपि तदेकमेव, न तु प्रत्यक्षरूपवदनेकधा तत्सम्भवति। प्रत्यक्षाणि च स्वरूपाण्यनेकानि सम्भवन्ति। यथा—वैदिकधर्मः, बौद्धधर्मः, जैनधर्मः, ख्रिस्तीधर्मः, माहमदधर्मः, यहुदीधर्म इत्यादि। अत्र च शब्द एव कारणम्। शब्दात्प्रतीयमानं खलु क्रियाणां निःश्रेयससाधनत्वं धर्मस्य स्वरूपं शब्दभेदादनेकधा भिद्यते। अर्थादेव यस्य धर्मस्य प्रत्यक्षरूपे वेदाः प्रमाणं स वैदिकः, यस्य च बायबलं स ख्रिस्तीधर्मः, यस्य च कुराणं स माहंमद इत्यादयो व्याख्याः समुद्भवन्ति। इदमेव स्वरूपद्वयं धर्मस्य नारदेनाप्युक्तम्। तद्यथा—

"सूक्ष्मो हि भगवान् धर्मः परोक्षो दुर्विचारणः।
अतः प्रत्यक्षमार्गेण व्यवहारगतिं नयेत्॥" अ० १—४१।

अत्र च व्यवहारगतिप्रापणार्थं धर्मस्य प्रत्यक्षमार्गः समुपदिष्टः। पूर्वार्धे च सूक्ष्मत्वं दुर्विचारणत्वं च प्रदर्शितम्। अतः प्रत्यक्षमार्गः कश्चनान्य एव प्रतीयते। परोक्षमार्गेण दुर्विचारणत्वप्रतिपादनात्। स चायं मार्गः शब्द एव, अतः शब्दाद्यत्र निःश्रेयससाधनत्वं गम्यते, तत् प्रत्यक्षधर्मस्वरूपमिति फलति। इदमेव खलु चोदनालक्षणस्वरूपं धर्मस्य। चोदना नाम क्रियाप्रवर्तकनिश्चितार्थप्रतिपादकः शब्दः। तत एव कर्तव्याकर्तव्यनिर्णयः।

तदिदं फलितं व्याख्याद्वयम्—

यन्निःश्रेयसकरं स धर्म इति निःश्रेयसलक्षणस्वरूपव्याख्या। अत्र प्रमाणानि प्रागुपन्यस्तानि। यस्य निश्रेयससाध-

नत्वं शब्दात् प्रतीयते स धर्म इति चोदनालक्षणस्वरूपव्याख्या ।

अत्र प्रमाणानि—

"श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम्—मनुः २।१२

"श्रुतिस्मृतिविहितो धर्मः" वशिष्ठः अ० १ । बौद्धायनः—उपदिष्टो धर्मः प्रतिवेदम् ॥

"वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ॥" गौतमः ।

अत्र श्रुत्यतिरिक्तानि प्रमाणानि श्रुतिरूपाण्येवेत्यग्रे प्रमाणविचारे स्पष्टम् ।

[ जैमिनिमतेन धर्मलक्षणम् ]

अत्र जैमिनिव्याख्याऽपि विचारणीया भवति । चोदनालक्षणोऽर्थो धर्म इति किल जैमिनिसूत्रम् । अनेन च कर्मप्रवर्तकात्थावगम्यमानः यः स पुरुषार्थो धर्म इति व्याख्या फलिता । एवं च कर्मणा प्राप्तस्येष्टस्यैव धर्मत्वम् फलति । स चायं विशेषोऽकिंचित्कर एव । अत्र चोदनापदेन वैदिकचोदनामात्रस्यैव न ग्रहणम्, अपि तु सामान्यतो लौकिकवैदिकचोदनानामपि ग्रहणम् । एवं चेदं व्याख्यानं प्रत्यक्ष स्वरूपस्यैव । परं च यदि चोदनापदेन वैदिकचोदनाया एव ग्रहणन्तदा तु प्रत्यक्षस्वरूपाणां मध्ये वैदिकधर्मस्वरूपपरतैवास्य वक्तव्या । एवं च द्वैविध्यं खलु धर्मव्याख्यानस्य । यन्निःश्रेयकरं तन्निःश्रेयसलक्षणधर्मव्याख्यानम् । यत्र खलु शब्दादेव निःश्रेयसकरत्वमवगम्यते तच्चोदनालक्षणधर्मव्याख्यानम् । यस्य च निःश्रेयसकरत्वं वेदादवगम्यते स धर्म इति वैदिकधर्मव्याख्यानम् । चोदनालक्षणनिःश्रेयसलक्षणयोर्द्वयोः सम्बन्धस्त्वयमेव यन्निःश्रेयसकरत्वविज्ञानं विना चोदनास्वरूपमेव न निर्मितं स्या-

[धर्मलक्षणेन विचारणीया विषयाः] दिति। एवं चानयोः कार्यकारणभावः सम्बन्धः। अनेन चैते सिद्धान्ता निष्पन्ना भवन्ति।

( १ )—चोदनास्वरूपनिर्मातुर्निःश्रेयसस्वरूपविषयज्ञानस्यापूर्णत्वे चोदनास्वरूपस्याप्यपूर्णत्वम्।

( २ )—तस्यैव ज्ञानस्य प्रमादयुक्तत्वे चोदनास्वरूपस्यापि तत्त्वम्।

( ३ )—मनुष्यनिर्मितचोदनास्वरूपेणापूर्णेन भवितव्यमेव। मनुष्यज्ञानस्यापूर्णत्वेनाद्यावधिवृद्धिसम्भवात्।

( ४ )—मनुष्यनिर्मितचोदनास्वरूपं प्रमादयुक्तमपि भवितुमर्हति। मनुष्यस्य तत्त्वात्।

( ५ )—कदाचित् मनुष्यकृतचोदनास्वरूपस्य विपरिवर्तनमप्यावश्यकम्।

( ६ )—ईश्वरकृतचोदनास्वरूपेण निर्दोषेण परिपूर्णेन च भवितव्यम्। ईश्वरस्य स्वरूपनिर्माणावश्यकत्वे तन्निर्दोषत्वपरिपूर्णत्वावश्यकताऽप्यर्थादेव स्यात्।

( ७ )—एवमेव सदोषस्यापूर्णस्य च चोदनास्वरूपस्येश्वरनिर्मितत्वासम्भवः।

( ८ )—चोदनास्वरूपाणामनेकत्वं तत्कर्तुरनेकत्वात्। तत्परिस्थितेभिन्नत्वाच्च।

( ९ )—निःश्रेयसलक्षणस्य धर्मस्य स्वरूपन्तु नित्यमविकारि चेति।

[श्रुतीनामानुषकृतिविषयत्वम्] अत्रेश्वरकर्तृकत्वे चोदनाया बहवः किलानुयायिन इति तत्र विचारः कर्तव्यः। यैस्तावदीश्वरकर्तृकत्वं चोदनाया अङ्गीक्रियते, त एवं प्रष्टव्याः—श्रीमतां मते ईश्वरः खलु जगन्नियामकः, निराकारः निरिन्द्रियः सर्वशक्तिमांश्चेति। तत्रेयमाशंका कीदृशं खल्वस्य सर्वशक्तिमत्त्वम्? नहि

मनुष्यकृतिविषयान् पदार्थान्निर्मातुं शक्नोति भवतामीश्वरः । तथाऽनुपलब्धेः, यदि सर्वशक्तिमत्त्वं नाम सर्वपदार्थविषयककृतिमत्त्वं, तर्हि मनुष्यकृतिविषयाणां कर्तरीपेटिकादिपदार्थानामपि निर्माणं स्यात् ईश्वरस्य, अतो मर्यादितमेव तद् वाच्यमीश्वरस्य, तथा च शब्दस्यापि मनुष्यकृतिविषयत्वेन तन्निर्माणेऽप्यसमर्थः खल्वीश्वर इत्येव वक्तव्यम् । दृश्यते चैकस्यैव शब्दस्यान्यत्रार्थान्तरम् । यथा हीश्वरनिर्मितानां वह्न्यादिपदार्थानां दाहकत्वादिधर्माः सर्वत्रैकरूपाः । न तथा शब्दधर्मोऽर्थः सर्वत्रैकरूपः । न हि हि शब्दो यदर्थवाचकोऽस्मिन् प्रदेशे स एव तदर्थवाचकः आंग्लप्रदेशे दृश्यते । तत्र तस्यार्थान्तरवाचकत्वोपलम्भात् । तस्मान्मनुष्यनिर्मिताः शब्दा इत्येव वक्तव्यम् । किंच निरिन्द्रियेणेश्वरेण कथं वा शब्दोच्चारणं शक्यम् । तस्येन्द्रियाधीनत्वात् । तस्मादपि नेश्वरकृतः शब्दः । दृश्यते च मानवनिर्मिता अन्ये शब्दाः । एवं च चोदनाया अपि शब्दरूपत्वान्न तस्या अपि निर्माणे शक्त ईश्वरः । अपि तु मनुष्यनिर्मितैव सेत्यकामेनाप्यभ्युपगन्तव्यम् ।

किंच यत्र खलु श्रुत्यादिभिरपि न धर्मनिर्णयः शक्यस्तत्र परिषन्निर्माणमाम्नातं स्मृत्यादिषु । तस्मादपि श्रुतीनामपूर्णत्वमनीश्वरनिर्मितत्वं चेति स्पष्टं सुधियाम् ।

[श्रुतीनां प्रेरकत्वेनापि ईश्वरनिरपेक्षता ]

एवं च न चोदनालक्षणस्वरूपमीश्वरनिर्मितं न वा तदुच्चारितम् । अत्रापरे प्रत्यवतिष्ठन्ते—सत्यमीश्वरो न साक्षात्स्वरूपेण तन्निर्माणशक्तः, ईश्वरप्रेरणया तु मन्त्रद्रष्टृभिर्ऋषिभिस्तन्निर्माणं सुशकमिति । एवं च न मनुष्यकृतत्वमपि तु ईश्वरकृतत्वमेव । मनुष्यो हि बुद्धिपूर्वकार्यकारी, सर्वत्र ईश्वरप्रेरणेन तु तस्य तद्व्याहतमिति न मनुष्यकृतिविषयता चोदनाया इति ।

अत्र वदामः—यो ह्येवं ब्रूयात्तेन ईश्वरप्रेरितानां तदप्रेरितानां च शब्दानां पृथक्करणमवश्यमेव दर्शयितव्यम्। नहि तच्छक्यम्। तत्कथमेत एव शब्दा ईश्वरप्रेरिता नैते इति शक्यं विज्ञातुम्? सामान्यतस्तु सर्वमपि कार्यमीश्वरप्रेरणयैव भवति। तथा च घटादीनामपि ईश्वरनिर्मितत्वं स्यात्। तथा चाधर्मोऽपीश्वरेणैव निर्मितः स्यादिति वृथा दण्डादिशासनं मनुष्यस्य। तस्मादकिंचित्करमेतत्।

[अनुत्पत्तौरुषेयत्वे मीमांसकमतानुवादः] अत्र च वेदापौरुषेयत्वतन्नित्यत्ववादिनां शबरकुमारिलतदनुयायिनां मतमपि विचारणीयम्। मीमांसाशास्त्रस्य प्रथमाध्यायप्रथमपादपञ्चमसूत्रस्य शबरेणेत्थं विवरणं क्रियते, अथ संबन्धः क इत्यारभ्य तस्माद्बृषभ्यमित्येतदन्तम्। तत्र हि शब्दानां नित्यत्वमपौरुषेयत्वं च साधितं महता प्रयत्नेन। वेदस्यापि शब्दत्वेनार्थादेव नित्यत्वमपौरुषेयत्वं च वाच्यम्। अत्र शाबरीयव्याख्यानं स्पष्टप्रतिपत्त्यर्थमन्ते निवेदयिष्यते तत्प्रसादश्च।

[मीमांसकमतनिरासः] अत्र त्विदमेव वक्तव्यम्। यथा कथमपि शब्दनित्यत्वे सिद्धेऽपि अनेकशब्दघटितानां वाक्यानामानुपूर्वीसम्बद्धानाम् अपौरुषेयत्वं च कथमपि नैव सम्भवति। न च तत्र काप्युपपत्तिस्तेन प्रदर्शिता। इयमेवापत् शबरस्यापि उपस्थिता। अत एव पञ्चविंशतितमे सूत्रे "यच्च एते पदसंघाताः पुरुषकृता दृश्यन्ते, परिहृतं तदस्मरणादि" त्युक्त्या केवलं कर्तृस्मरणाभाव एव तत्र कारणत्वेन दर्शितः। परं च लोके सर्वत्र पुरुषवाक्यानां कर्तृसापेक्षत्वोपलम्भात् कर्तृस्मरणाभावेऽपि कर्त्रभावप्रतिपादनमयुक्तमेव। स्मरणाभावेऽपि तदस्तित्वं भवितुमर्हति। बहुकालान्तरितत्वेन दृढस्मृतेरभावः शक्यः। किंच अनयोपपत्त्या

सर्वेषामपि धर्मग्रन्थ वाक्यानामपौरुषेयत्वं नित्यत्वं च स्यात् । महम्मदादिभिरपि ईश्वराज्ञैव मया निवेद्यते इत्युक्तम् । शब्दार्थ-संबन्धस्तु नित्य एवेत्यपि अनेन साधयितुं सुशकम् । केवलं कर्तृ-स्मरणं तु नास्त्येव । उच्चारयितृस्मरणेन गतार्थत्वात् नहि महम्मदः—अहं कर्तेति वदति । अपि तु ईश्वराज्ञोच्चारयिताऽहमिति । तस्मादकिंचित्करमेतत् ।

[श्रुतिनिर्मातृविचारः] तदेतच्चोदनास्वरूपं को वा निर्मातुं प्रभवतीत्यपि विचारणीयम् । अत्र चेतिहासः पर्यालोचनीयः । प्रसिद्धतरा हि बौद्धधर्मस्योत्पत्तिः । गौतमेन हि केचन धर्मा उपदिष्टास्तदनुयायिभिस्त एव प्रसारिताः । एवं चायं बौद्ध-धर्मः संवृत्तः । किमपि मतं भवतु , तदनुयायिनस्तु जगति भवंत्येव केचनेति नियमोऽयम् । तथैव महम्मदमोसेमादयोऽपि । ख्रिस्त-धर्मे चायमेव विशेषः, यन्महम्मदादय ईश्वरनिवेदितानेव सन्देशान् कथयाम इति वदन्ति । ख्रिस्तस्तु प्रेरितोऽहमीश्वरेण उपदिशा-मीति वदति । एवमेव वैदिकधर्मोत्पत्तीतिहासपर्यालोचनयापि त-थैव स्पष्टं भवति । स चायमितिहासो वायुपुराणे च—

तत्र त्रेतायुगस्यादौ मनुः सप्तर्षयश्च ये ।
श्रौतं स्मार्तं च धर्मं च ब्रह्मणा च प्रचोदितम् ॥ ३९ ॥
दाराग्निहोत्रसंयोगं ऋग्यजुःसामसंज्ञितम् ।
इत्यादिलक्षणं श्रौतं धर्मं सप्तर्षयोऽब्रुवन् ॥ ४० ॥
परम्परागतं धर्मं स्मार्तं चाचारलक्षणम् ।
वर्णाश्रमाचारयुतं मनुः स्वायम्भुवोऽब्रवीत् ॥४१॥वायु० पु०अ०५७
पूर्वेभ्यो वेदयित्वेह श्रौतं सप्तर्षयोऽब्रुवन् ।
ऋचो यजूंषि सामानि ब्रह्मणोऽङ्गानि च श्रुतिः ॥

मन्वन्तरस्यातीतस्य स्मृत्वाचारं पुनर्जगौ ।
तस्मात्स्मार्तः स्मृतो धर्मो वर्णाश्रमविभागजः ॥ वायु० अ० ५६

एवमेव अ० १४४—१४५ इत्यत्र मत्स्यपुराणे वचनानि । अत्र वेदयित्वा पूर्वेषां सकाशात् श्रुत्वा इत्येवार्थः । अत्र च वायुपुराणमेव प्रमाणम् ।

विज्ञेयः श्रवणाच्छ्रौतः स्मरणात्स्मार्त उच्यते ।
इज्यावेदात्मकः श्रौतः स्मार्तो वर्णाश्रमात्मकः ॥ वायु० अ० ५६

एवं च ब्रह्मणा कथित एव धर्मो मनुसप्तर्षिभिर्निवेदितो जगतः कल्याणाय । ब्रह्मणा कथितस्य पुनरेभिः कथने दाराग्निहोत्रकथनरीत्यैव वर्णाश्रमधर्माऽनिवेदने च कारणन्तु वायुपुराण एव दृश्यते । तद्यथा—

वर्णाश्रमव्यवस्थानं तेषां ब्रह्मा तथाऽकरोत् ।
पुनः प्रजास्तु ता मोहात्तान् धर्मान्नह्यपालयन् ॥५५॥
परस्परविरोधेन मनुं ताः पुनरन्वयुः ॥

अस्यैव विवरणम्—

ब्रह्मा स्वयम्भूर्भगवान् दृष्ट्वा सिद्धिं तु कर्मजाम् ।
मर्यादां स्थापयामास यथाऽरक्षन् परस्परम् ॥ १६० ॥
ये वै परिग्रहीतारस्तेषामासन् बलात्मकाः ।
इतरेषां कृतत्राणाः स्थापयामास क्षत्रियान् ॥ १६१ ॥
उपतिष्ठन्ति ये तान्वै यावन्तो निर्भयास्तथा ।
सत्यं ब्रह्म यथाभूतं ब्रुवन्तो ब्राह्मणाश्च ते ॥ १६२ ॥
ये चान्येऽप्यबलास्तेषां वैशसं कर्म संस्थिताः ।
कीनाशं नाशयन्ति स्म पृथिव्यां प्रागतन्द्रिताः ॥ १६३ ॥
वैश्यानेव तु तानाहुः कीनाशान् वृत्तिसाधकान् ।

शोचन्तश्च द्रवन्तश्च परिचर्यासु ये रताः ।
निस्तेजसोऽल्पवीर्याश्च शूद्रांस्तानब्रवीत्तु सः ॥ १६४ ॥
तेषां कर्माणि धर्मांश्च ब्रह्मा तु व्यदधात्प्रभुः ।
संस्थितौ प्राकृतायान्तु चातुर्वर्ण्यस्य सर्वशः ॥ १६५ ॥
पुनःप्रजास्तु ता मोहात्तान्न धर्मानपालयन् ।
वर्णधर्मैरजीवन्त्यो व्यरुन्धन्त परस्परम् ॥१६६॥ वायु० अ० ८

एभिश्च प्रमाणैरिदमवगम्यते, यत् मनोः काले ब्रह्मप्रचोदितो वर्णाश्रमधर्मो न प्रचलित आसीत्, अत एव स्मरणान्निवेदितो मनुना पुनरपि । अत्र च स्मरणं नाम प्राचीनेतिहासपर्यालोचनेन जनितं विज्ञानम् । न तु अनुभवजन्या स्मृतिः । परं च दाराग्निहोत्रधर्मस्तु प्रचलित एवासीत् । एवं च तदनुष्ठायिनां सकाशात् तं श्रुत्वा मनुरकथयत् । अत एव तस्य श्रौतत्वम् । स्मार्तधर्मकथनकारणन्तु तल्लोप एव । एवमेव श्रौतधर्मस्य पुनर्निवेदने सप्तर्षीणां कारणन्तु अग्रिमवाक्येभ्यः स्फुटं स्यात् । तदिदं यास्कवचनम्—

साक्षात्कृतधर्माण ऋषयो बभूवुः, तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः । उपदेशाय ग्लायतोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि चेति (यास्कनिरुक्तम् । अ० १ पादः ६ ।)

अनेन चेदमवगम्यते यत्केवलमुपदेशमात्रेण । धर्मो न रक्षितुं शक्य इति सप्तर्षिभिर्ग्रन्थरूपेण स उपनिबद्ध इति । एवं च मनुना सप्तर्षिभिश्च ब्रह्मप्रचोदितधर्माणामुपदेशः कृत इति फलितम् । श्रौतधर्मस्तु तत आरभ्य प्रचलितः । स्मार्तस्तु मध्ये लुप्तो मनूपदेशादनन्तरं पुनः प्रचलित इति पुनरन्वयुरित्यादिपदेभ्योऽवगम्यते । एवं च ब्रह्मोपदेशानुसारेण लोका अवर्तन्तेत्येव सिद्धम् ।

[ श्रुतीनां ब्रह्मनामक पुरुषकर्तृकत्वम् ]

अस्यैव तात्पर्यम्—यत् कस्यचनोपदेशानुसारेण वर्तने कारणद्वयं सम्भवति । तदुपदेशानुसारेण वर्तने सुखप्राप्तिसम्भव इत्येकम्, अनिच्छयापि शासनात्तथावर्तनमिति द्वितीयम्। प्रकृते तु द्वयोरपि सम्भवः। ब्रह्मोपदेशात्सुखप्राप्तिः। तस्य शास्तृत्वं च। स एव तस्योपदेशश्चोदनालक्षणस्वरूपं धर्मस्य। एवमेव सर्वेषां धर्माणामुत्पत्तिः। अत्र च ब्रह्मा कश्चन मनुष्य एवेति ज्ञायते। शब्दोच्चारणे मनुष्येतरस्यासामर्थ्यात्। ब्रह्मप्रचोदित इत्यत्र ब्रह्मपदेनेश्वरग्रहणेऽपि मनुसप्तर्षिभिः पुनर्निवेदनान्नात्रास्माकीनसिद्धान्तव्याकोपः। तेषां मनुष्यत्वात्। परं च ब्रह्माऽयं तात्कालिकः कश्चन श्रेष्ठोऽधिकारी मनुष्य एवेत्यस्माकं मतम्।

[ ब्रह्मादीनां मनुष्यत्वे प्रमाणानि ]

तदुपोद्बलकानि प्रमाणानि अत्रावसरे नायोग्यानि लिखितुमिति निवेद्यन्ते—

चतुर्दशैव स्थानानि वर्णितानि महर्षिभिः।
लोकाख्यानि तु यानि स्युर्यत्र तिष्ठन्ति मानवाः॥
सप्त तेषु कृतान्याहुरकृतानि तु सप्त वै।
भूरादयस्तु संख्याताः सप्त लोकाः कृतास्त्विह॥
भूर्लोकः प्रथमस्तेषां द्वितीयस्तु भुवः स्मृतः।
स्वस्तृतीयस्तु विज्ञेयश्चतुर्थो वै महः स्मृतः॥
जनस्तु पञ्चमो लोकस्तपः षष्ठो विभाव्यते॥
सत्यस्तु सप्तमो लोको निरालोकस्ततः परम्॥
भूरिति व्याहृतेः पूर्वं भूर्लोकस्तु ततोऽभवत्॥ १८॥
द्वितीयो भुव इत्युक्ते अन्तरीक्षं ततोऽभवत्।
तृतीयं स्वर इत्युक्ते दिवं प्रादुर्बभूव ह॥ १९॥

व्याहारैस्त्रिभिरेतैर्वै ब्रह्मा लोकमकल्पयत् ।
महेति व्याहृतेनैव महर्लोकस्ततोऽभवत् ॥
विनिवृत्ताधिकाराणां देवानां यत्र वै क्षयः ।
सत्येति ब्रह्मणः शब्दः सत्तामात्रस्तु स स्मृतः ॥
ब्रह्मलोकस्ततः सत्याः सप्तमः स तु भास्वरः ॥वायु० अ० १०१

द्वितीयं प्रमाणम्

क्षीणे कल्पे तदा तस्मिन् दाहकाल उपस्थिते ।
देवाश्च पितरश्चैव मुनयो मनवस्तथा ॥
ततस्तेऽवश्यभावित्वात् बुध्वा पर्यायमात्मनः ।
त्रैलोक्यवासिनो देवाः त्यक्त्वा स्थानानि भावनः ॥
महर्लोकाय संविग्ना ततस्ते दधिरे मतिम् ।
ते युक्ता उपपद्यन्ते महसि स्वैः शरीरकैः ॥
गत्वा तु ते महर्लोकं देवसंघाश्चतुर्दश ।
ततस्ते जनलोकाय सोद्वेगा दधिरे मतिम् ॥
दशकृत्व इवावृत्य तस्माद्गच्छन्ति स्वस्तपः ।
तत्र कल्पान् दश स्थित्वा सत्यं गच्छन्ति वै पुनः ॥
एतेन क्रमयोगेन यान्ति कल्पनिवासिनः ।
एवं देवयुगानान्तु सहस्राणि परस्परम् ॥
गतानि ब्रम्हलोकं वै अपरावर्तिनीं गतिम् ।
आधिपत्यं विना ते वै ऐश्वर्येण तु तत्समाः ॥
भवन्ति ब्रह्मणस्तुल्या रूपेण विषयेण च ॥ वायु० अ० ७

तृतीयम्

ततस्तेषु व्यतीतेषु त्रैलोक्येश्वरेष्विह ।
सम्प्राप्तेषु महर्लोकं...————————————॥

एवं देवेष्वतीतेषु महर्लोकाज्जनं प्रति
शून्येषु लोकस्थानेषु महान्तेषु भुवादिषु ।
संहृत्य तांस्ततो ब्रह्मा देवर्षिपितृदानवान् ॥
संस्थापयति वै सर्गं अहृष्ट्वा युगक्षये ॥

ब्र० अ० १—पादः ४ वायु० अ० १००

अत्र च देवानां महर्लोकादिषु गमनप्रतिपादनात्— महर्लोकस्य विनिवृत्ताधिकारिणां वसतिस्थानत्वस्य प्रतिपादनाच्च त्रैलोक्यवासिनो देवा अधिकारिण आसन्निति गम्यते । तादृशां देवानां गणना निघण्टुग्रन्थे कृता वर्तते । एवं च मनुसप्तर्षयो हि द्युस्थानवासिनोऽपि मनुष्याधिकारिण इति सिद्धं भवति ।

तृतीयप्रमाणे तु ब्रह्मणः त्रैलोक्यकर्तृत्वस्य शब्दद्वारा तत्स्थापनकर्तृत्वस्य च प्रतिपादनात् अधिपतिरिति विशेषणाच्च मनुष्याधिकारित्वं गम्यते । एवं च तस्यापि मनुष्यत्वमर्थादेव श्रेष्ठत्वमपीति । अत्रैवाधिपतिरिति विशेषणमप्युपोद्बलकम् । प्रथमप्रमाणे हि "यत्र तिष्ठन्ति मानवाः" इति मानवपदं वर्तते । तत्र मानवपदस्य यस्मिन्कस्मिन्नप्यर्थे वक्तुः स्वीकारेऽपि चतुर्दशस्थानविशेषणात् त्रैलोक्याधिवासिनां सत्यलोकवासिनां चाविशेषो गम्यते । एवं च सत्यलोकवासी ब्रह्मापि मानव एव । चतुर्वर्षकालो हि युगम् । तदेव कल्पमन्वन्तरादिपदवाच्यमिति तु स्पष्टमेव प्रतिपादितं मामकीने कालगणनापद्धतिग्रन्थे, तत्रैव तत् द्रष्टव्यम् । तथैव मनुसप्तर्षीणां कालोऽपि तत्रैव प्रतिपादितो द्रष्टव्यः । एवं च मानवपदस्य मन्वन्तरकालवर्तीत्यप्यर्थः सम्भवति । मन्वन्तरकाले ब्रह्मणो देवनियोजकत्वमपि गम्यते । एवं च महर्लोकवासिनां मध्ये कश्चन ब्रह्मा पूर्वस्मात् ब्रह्मणोऽन्यो नियुक्तः स्यात् । एवं च मन्वन्तरवर्तिन

एव सप्तभुवनवासिन इति। एवं ब्रह्मोऽयं कश्चन मनुष्यः श्रेष्ठोधिकारीत्येव सिद्धं भवति। एवं च आर्याधिपेन ब्रह्मा, सप्तभुवनानि तु अधिकारिणां समितयः इति तात्पर्यम्। ते चाधिकारिणः सुज्ञाः सत्यवक्तारश्चासन्।

एवं च तात्कालिकाः सुज्ञाः सत्यवक्तारश्च। तेषां वचनान्येव चोदनालक्षणस्वरूपमिति सिद्धम्।

अस्य च चोदनालक्षणस्य निःश्रेयसलक्षणेन विरोधो मा भूदिति तत्कर्तॄणां निःश्रेयसलक्षणस्य ज्ञानमत्यावश्यकमेव। एवमपि यथादृष्टवक्तृत्वमपि तेषामत्यावश्यकम्, अन्यथा तादृशधर्मस्य सर्वत्र प्रचारो न स्यादेव। अतस्तादृशां पुरुषाणां चोदनालक्षणनिर्माणाधिकारः इति सिद्धम्। मनुष्यकृतिविशेषत्वं चोदनायाः।

[देवशब्दस्य मनुष्यविशेषवाचकत्वम्]

अत्र च प्रसंगात् देवशब्दस्यान्योऽप्यर्थः प्रकृतार्थपोषकः सम्भवति। मेरुनामकपर्वतनितम्बे वसतामार्यवंशीयानां मनुष्याणामेव देवत्वं केषांचित्। स एव नितम्बो मेरुशब्दवाच्य इति वायुपुराणे ३४ अध्याये वर्णनादवगम्यते। तानीमानि वचनानि—



तत्र देवगणाः सर्वे गंधर्वोरगराक्षसाः।
शैलराजे प्रदृश्यन्ते शुभाश्चाप्सरसां गणाः ॥ ५५ ॥
स तु मेरुः परिवृतो भुवनैर्भूतभावनैः।
चत्वारो यस्य देशा वै नानापार्श्वेष्वधिष्ठिताः ॥ ५६ ॥
भद्राश्वो भरतश्चैव केतुमालश्च पश्चिमाः।
उत्तराः कुरवश्चैव कृतपुण्यप्रतिश्रयाः ॥ ५७ ॥
तस्य पर्वसहस्रे ऽस्मिन् नानाश्रयविभूषिते।
सर्वदेवनिकायानि संति विस्तीर्णान्यनेकशः।

नाकपृष्ठं दिवं स्वर्गमिति यैः परिपठ्यते ।
वेदवेदाङ्गविद्वद्भिः शब्दैः पर्यायवाचकैः ॥ १४ ॥
तदेतत्सर्वदेवानामधिवासं कृतात्मनाम् ।
देवलोको गिरौ तस्मिन् सर्वश्रुतिषु गीयते ॥ १५ ॥

इत्यादि । एवं च तादृशां पुरुषाणां चोदनालक्षणस्वरूपनिर्णाधिकारः सिद्धः ।

[शाबरभाष्यखण्डनपूर्वकजैमिनिसूत्रानुकूल्यप्रतिपादनमत्र विषये] अत्रैव जैमिनिमतमप्यनुकूलमिति सानन्दं निवेदयामः । तदिदं 'सन्नियमात् प्रयोगसन्निकर्षः स्यात्' इति प्रथमाऽध्यायस्य प्रथमपादस्य षड्विंशतितमे सूत्रे स्पष्टम् । परं चाद्य यावत् शाबरव्याख्यानेन भ्रान्तानां विदुषामपि बुद्धिविपर्ययः तन्मूलकप्रवृत्तिविपर्ययश्च दृश्यते । तस्यैव विशदीकरणार्थमादौ शाबरव्याख्यानं प्रमादपरिपूर्णमिति निर्दिश्यते । किम्बहुना ? सर्वोऽप्यायः पादः शबरेण प्रमादित इति क्रमशः प्रथमसूत्रमारभ्यैव व्याख्यानं युक्तम् । अतस्तस्यैवोपक्रमः—

अथातो धर्मजिज्ञासा १।१।१ ।

इदं च प्रतिज्ञासूत्रम् । अतः परं धर्मविचारः कर्तव्य इति प्रतिज्ञातं किल जैमिनिना । अत्र च शबरेण ब्रह्मचर्येण गुरुगृहेऽवस्थाय धर्मविचारः कर्तव्य इति सिद्धान्तः साधितः । ततस्तदनुरोधेन "कान्यस्य साधनानि, कानि साधनाभासानि, किम्परश्चेति शेषलक्षणेन व्याख्यातम्, क्व पुरुषार्थत्वं क्व वा पुरुषो गुणभूत इत्येतासां प्रतिज्ञानां पिण्डस्यैतत्सूत्रम्—अथातो धर्मजिज्ञासा इति । अत्र च प्रतिज्ञासूत्रत्वमपि प्रदर्शितम् । यद्यस्य सिद्धान्तप्रतिपादकत्वम्, तदा हि अतः शब्दोऽध्याहारेण व्याख्यातव्यः सम्प-

द्यते। परं च शबरेण अध्याहारनिषेधः कृतः 'न ह्यध्याहारादिभिरेषां परिकल्पनीयोऽर्थः, इत्यनेन। तस्मात्परस्परविरोधेनाऽप्रमाणमिदं व्याख्यानं शबरस्य। एवं चाग्निमविषयाणां प्रतिज्ञैवात्र सूत्रिता सूत्रकारेण, न तु सिद्धान्तः प्रदर्शित इत्येव समुचितम्पश्यामः।

चोदनालक्षणोऽर्थो धर्मः।१।१।२।

कर्मप्रवर्तकादर्थाज्ज्ञायमानो यः स पुरुषार्थो धर्म इति धर्मव्याख्याप्रतिपादकमिदं सूत्रं शबरेणाऽन्यथा व्याख्यातम्। तथाहि "चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः। तया यो लक्ष्यते सोऽर्थः पुरुषं निःश्रेयसेन संयुनक्तीति प्रतिजानीमहे" इत्यादिवाक्येभ्यः चोदनालक्षितोऽर्थः पुरुषनिःश्रेयसाय कल्पत इति सिद्धान्तं साधयति शबर इत्यवगम्यते। परं चैतादृशः सिद्धान्तश्चेज्जैमिनेरभिप्रेतस्तर्हि तत्कारणान्यपि जैमिनिना प्रदर्शयितव्यानि। नहि प्रमाणेन विना तादृशं गम्भीरं सिद्धान्तं साधयेत् जैमिनिः, नच प्रदर्शितानीति, नेदं सूत्रमेतादृशसिद्धान्तप्रदर्शकमिति सुस्पष्टमेव। न च चोदनायाः निःश्रेयसस्य च कश्चन कार्यकारणभावः सम्बन्धः। न च जैमिनिनाऽपसिद्धान्तः साधित इति साम्प्रतम्। अपसिद्धान्तेन विनापि सरलार्थेन सूत्रस्य चारितार्थ्येऽपसिद्धान्तप्रतिपादनमन्याय्यमेव। किंच यदीदं सूत्रमेतादृशसिद्धान्तप्रतिपादकम्, तर्हि धर्मव्याख्यानिदर्शकमन्यत्सूत्रमवश्यमेव सूत्रितव्यं जैमिनिना। न च सूत्रितम्, तस्मादस्यैव व्याख्यापरत्वं युक्तम्। किंच नात्र चोदनापदेन वैदिकचोदनाया एव ग्रहणम्, येन शबरसिद्धान्तः साधितः स्यात्। अत एव 'वेदांश्चैके सन्निकर्षं पुरुषाख्याः' इत्यारभ्य 'कृते वा विनियोगः कर्मणः सम्बन्धात्' इत्येतदन्तेन वेदप्रामाण्यं प्रतिपादितं जैमिनिना। अन्यथाऽनेनैव सूत्रेण

गतार्थत्वे वैयर्थ्यं स्यात्तस्य । एवं च यद्यपि न चोदनापदार्थो वैदिकी चोदनैवात्र । तथापि अर्थशब्दात् पुरुषार्थवाचकात् चोदनापदार्थो मर्यादितो भवति ।

तस्य निमित्तपरीष्टिः ॥१।१।३॥

तस्य धर्मस्य निमित्तानां प्रमाणानां परीष्टिः कर्त्तव्येति ।

सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥१।१।४॥

पुरुषस्येन्द्रियाणां सता = विद्यमानेन वस्तुना सम्प्रयोगे सति यद्भवति, तत्प्रत्यक्षम् । तच्च न धर्मस्य (प्रापककर्मणां) उपलब्धौ साधनं भवति । यतो येन साकं इन्द्रियसम्प्रयोगस्तस्यैव ज्ञानमिन्द्रियेण भवितुमर्हति । न च चोदनां विना धर्मज्ञानं शक्यम् । चोदना च पुरुषस्याभिप्रेतोऽर्थः । स च परपुरुषेन्द्रियाऽगोचर एव । न चेन्द्रियाणां तत्र सामर्थ्यम् । अतो न प्रत्यक्षेण चोदनास्वरूपस्य धर्मस्य ज्ञानं सम्भवति । अत्र विद्यमानोपलम्भनत्वादिति पदघटकविद्यमानपदं विद् लाभे इत्यस्माद्धातोः शानचि सिद्धमेवास्माभिर्गृह्यते । शबरेण तु विद् सत्तायामित्यस्य स्वीकृतम् । अस्मन्मते भविष्यति काले प्राप्यमाणो धर्मो न प्रत्यक्षविषय इत्यर्थः सम्पद्यते । न चायमर्थः शबरव्याख्यानेन लभ्यत इत्यतोऽस्माकमेव व्याख्यानं युक्तियुक्तमिति विशदमेव निपुणानाम् ।

औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥१।१।५॥

शब्दस्यार्थेन साकमौत्पत्तिकः शब्दोत्पत्तिकालादेव निश्चितः, अग्रे च चिरस्थायी नित्यः सम्बन्धः । अतस्तस्य शब्दस्य ज्ञानमुपदेशो नाम चोदनाज्ञानमेव । एवं च शब्दज्ञाने सत्यपि न चोद-

नाज्ञानं भवति। न चार्थज्ञानं विना चोदनाज्ञानम्। तस्मात् तत् शब्दज्ञानं प्रमाणम्। यतो हि चोदनालक्षणोऽर्थो धर्म इति धर्मव्याख्या। न च तत्र चोदनेतरप्रमाणापेक्षा। एवमेव बादरायणमतमपि। इदमस्मद्व्याख्यानम्। शबरस्तु "शब्दार्थसम्बन्धो नित्यः, तस्मात् उपदेशरूपो शब्द एव धर्मप्रमाणम्, यतो हि प्रत्यक्षादिप्रमाणागोचराणां पदार्थानां ज्ञानं शब्दादेव जायते" इत्यादिव्याख्यातवान्। अत्र च प्रत्यक्षाद्यगोचरस्य पदार्थस्य प्रमा शब्दादेव जायत इत्येवापसिद्धान्तः। तथाहि गोविन्दः शतं रूप्याणि रामाय दत्तानीति वदति, रामो मह्यं न दत्तानीति वदति, उभयस्याप्यर्थस्य ज्ञाने शब्द एव प्रमाणम्, रूप्यदानमपि भूतकालिकं क्रियावत् प्रत्यक्षाद्यगम्यमेव। तथापि नात्रैकस्यापि शब्दो यथार्थं ज्ञानं किमपि जनयति। तस्मान्न जैमिनिसूत्रस्यापसिद्धान्तेन व्याख्यानं युक्तम्। तस्मादस्मद्व्याख्यानमेव समीचीनमित्यालोचयन्तु विद्वांसः। अत्र च सूत्रे विषयद्वयं प्रतिपाद्यते। शब्दार्थसम्बन्धो नित्य इत्येकः। तस्य खण्डनमण्डनादिकं द्वितीयः। अग्रे च द्वितीयविषयस्यैव विवरणं पञ्चविंशतिसूत्रपर्यन्तं जैमिनिना कृतम्। अत्रापि शबरस्य प्रमादः। स हि शब्दनित्यत्वसिद्धान्तस्य खण्डनमण्डनपराणीमानि सूत्राणीति अभ्युपगच्छति। परं च पञ्चमसूत्रेऽस्य सिद्धान्तस्य जैमिनिना अनुपनिबन्धनात् गगनकुसुमायितमेवैतत्। तत्र शब्दार्थसम्बन्धनित्यत्वं जैमिन्यभिप्रेतम्, न तु शब्दनित्यत्वम्। एवं च षष्ठसूत्रमारभ्य पञ्चविंशतितमसूत्रपर्यन्तं जैमिन्यभिप्रेतार्थप्रतिपादकं व्याख्यानं युक्तं शाबरव्याख्यानादतीव समीचीनमपि भवितुमर्हति। गौणत्वान्नात्रोपन्यस्यते। किं च शबरेण २४-२५-२६ इत्येतेषां सूत्राणामन्यदेव प्रकरणं कल्पितम्। परं च

पञ्चमसूत्रोपनिबद्धस्य द्वितीयविषयस्य व्याख्यानसौकार्याय षड्विंशतितमं सूत्रं विहाय व्याख्यानं कर्तव्यम्। स चायं विषयः—चतुर्थे पञ्चमे च सूत्रे शब्दादेव खलु धर्मज्ञानं नान्येभ्यः प्रमाणेभ्य इति सिद्धान्तो व्याख्यातः। अत्रेयमाशंका—किं जगति विद्यमानानां सर्वेषामेव शब्दानां धर्मे प्रामाण्यमाहोस्वित् केषांचिदेव? न हि सर्वे शब्दाः प्रमाणमिति तत्सूत्रसिद्धान्तः। शब्द एव तत्र प्रमाणमित्येव सामान्यतः सिद्धान्तितं तत्र। एवं च यथा ह्यर्थशब्देन चोदना मर्यादिता भवति, तथैव तत्प्रमाणभूतानां शब्दानामपि मर्यादा काचन स्यादेव। सा च कीदृशी इत्येवायं द्वितीयो विषयः। शाबरव्याख्यानात्त्वस्य विषयस्य नामापि न श्रूयते, कुतो जैमिन्यभिप्रेतत्वम्? शाबरमतेन व्याख्याते तस्मिन् सूत्रेऽस्य विषयस्यावश्यकता त्वस्त्येव। यतो हि प्रत्यक्षाद्यगोचरस्याप्यर्थस्यावबोधकाः शब्दाः स्मृत्यादिष्वपि सन्ति, एवं केवलं वैदिकशब्दानामेव प्रामाण्यं कथं जैमिन्यभिप्रेतमित्यस्याः शंकायाः कुत्रापि समाधानेन भवितव्यमेव। न च तच्छाबरव्याख्यानाल्लभ्यते। तच्च षड्विंशतितममेव सूत्रम्। पञ्चमसूत्रे वैदिकशब्दस्यैव प्रत्यक्षाद्यगम्ये धर्मे प्रामाण्यमिति सिद्धान्ते स्वीकृतेऽपि किमिति तेषामेव शब्दानां तादृशं सामर्थ्यमित्यपि विचारणीयमेव। स च षड्विंशतितमे सूत्रे भवतीत्यतस्तस्य व्याख्यानमस्माभिर्दीयते।

लोके सन्नियमात् प्रयोगसन्निकर्षः स्यात् १। १। २६।

लोके सतां सत्पुरुषाणां नियमात् प्रयोगाणां प्रमाणभूतानां चोदनावाक्यानां सन्निकर्षः संग्रहः स्यात्।

एवं च सत्पुरुषैः केषांचिदेव शब्दानां प्रामाण्यमिति मर्यादायाः स्थापनात् तेषां संग्रहः कर्तव्य इत्येवं तात्पर्यम्। अत्र च

सन्नियमशब्दार्थेऽन्यादृशे सति सूत्रार्थोऽप्यन्यादृशः स्यात् । एवं च जैमिन्यभिप्रेतः कीदृशः खलु सन्नियमपदार्थ इति विचारणीयम् । अयमेव शब्दो जैमिनिना प्रथमाध्यायतृतीयपादस्थद्वादशसूत्रे प्रयुक्तः "प्रयोगशास्त्रमिति चेन्नासन्नियमा" दित्यत्र । कल्पसूत्राणां प्रयोगशास्त्रत्वात्प्रामाण्यमिति चेन्न; सन्नियमाभावात् संग्रहाभावादिति तदर्थः । अत्र च कल्पसूत्राणां प्रामाण्याप्रामाण्यविचारः प्रथमपादे प्रमाणविचारानुसारेण युक्त एव । एवं च तदनुरोधेन तदनुरूप एवार्थोऽस्य सूत्रस्यावश्यकः, न तु तद्विरुद्धः । एवं च उभयोरप्येकार्थकत्वमप्यावश्यकम् । स चास्माकीन एव युक्तः । शबरेण त्वत्र सन्नियमपदेन छन्दोबद्धताद्यर्थः स्वीकृतः । परं चासामञ्जस्यात्स त्याज्य एव । एवं च आस्माकीन एवार्थो युक्त इति विचारचातुरीचतुराणां सुव्यक्तमेव ।

अत्रेदं तात्पर्यम्—यदि नाम न स्युः प्रमाणवाक्यानि परिगणितानि, व्यवहाररीतिः सर्वथा विकला स्यात्; प्रतिपुरुषं प्रमाणवाक्यनिर्णयस्यान्यथाऽन्यथा सम्भवनीयत्वात् । एवं च अधर्मानुष्ठातॄणां शिक्षादिकं धर्मानुष्ठातॄणां पारितोषिकादिकं सर्वमपि विपरीतं स्यात् । एवं च व्यवहारलोपः । तस्मात् कर्मणां निःश्रेयससाधनत्वे ज्ञानवतां पुरुषाणां सत्यवादिनां प्रमाणवाक्यनिर्णयाधिकारो योग्य इति । अस्यैवार्थस्योपोद्बलकानि वचनान्तराण्यपि ।

ततस्तेषां तु ये शिष्टाः शिष्टाचारान् प्रचक्षते ।
सप्तर्षयो मनुश्चैव आदौ मन्वन्तरस्य ह ।
प्रारभन्ते च कर्माणि मनुष्या दैवतैः सह ॥१६४ वायु० अ० ६१

महाभारतेऽपि—

ये हि ते ऋषयः ख्याताः सप्त चित्रशिखण्डिनः २७

तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम् ।
वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ ॥ २७ ॥
आस्यैः सप्तभिरुद्गीर्णं लोकधर्ममनुत्तमम् ।
मरीचिरत्र्यंगिरसौ पुलस्त्यः पुलहः क्रतुः ।
वशिष्ठश्च महातेजास्ते हि चित्रशिखंडिनः ॥ २८ ॥
सप्तप्रकृतयो ह्येतास्तथा स्वायंभुवोऽष्टमः ।
एताभिर्धार्यते लोकस्ताभ्यः शास्त्रं विनिःसृतम् ॥ ३० ॥
एकाग्रमनसो दान्ता मुनयः संयमे रताः ।
भूतभव्यभविष्यज्ञाः सत्यधर्मपरायणाः ॥ ३१ ॥
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
लोकान् संचिन्त्य मनसा ततः शास्त्रं प्रचक्रिरे ॥ ३२ ॥
तत्र धर्मार्थकामा हि मोक्षः पश्चात्प्रकीर्तितः ।
मर्यादा विविधाश्चैव दिवि भूमौ च संस्थिताः ॥ ३३ ॥
नारायणानुशास्ता हि तदा देवी सरस्वती ।
विवेश तान् ऋषीन् सर्वान् लोकानां हितकाम्यया ॥ ३४ ॥

आपस्तम्बधर्मसूत्रेऽपि—

(१) अथातः सामयाचारिकान् धर्मान् व्याख्यास्यामः ।
(२) धर्मज्ञसमयः प्रमाणम् ॥
(३) वेदाश्च

अत्र च समयो नाम बहूनामेकत्रावस्थानेन कृतो निर्णय इत्येवार्थः । एवमेव धर्मज्ञसमयो वेदाश्चेति धर्मप्रमाणमिति । एवं च धर्मज्ञैर्बहुभिः कृतो निर्णयः प्रमाणं वेदाश्चेति तात्पर्यम् । अनेन च धर्मज्ञानां धर्मनिर्णये स्वातन्त्र्यमेव बोध्यते । यदि नाम शाबरमतानुसारेण वेदा एव मुख्यं प्रमाणम्, संदेहे सति धर्मज्ञस-

मयः प्रमाणमित्येवार्थोऽभिप्रेतः स्यादापस्तम्बस्य, तर्हि अथातो वैदिकाचारिकान् धर्मान् व्याख्यास्यामः, वेदाः प्रमाणम्, धर्मज्ञसमयश्चेत्येव सूत्रितव्यम्। तस्मात्पूर्वोक्तमेव श्रेयः। तथैव जैमिनिमतमपि। नान्यथा जैमिनिसूत्रार्थः करणीयः। तथैव (प्रश्नः १ पटलं ७ खंड २० सूत्राणि ६।७।८) इत्यत्रापि आदौ धर्मज्ञसमय एव प्रदर्शितः, न तु वेदाः। तत्रैव पटलं ६ खंडः २४ सूत्रं ६ इत्यत्रापि। तद्यथा—

१ प्र० २० खं० ६ सूत्रे "न हि धर्माधर्मौ स्वयमात्मानं निदिशतः अयमहं धर्मः अयमहमधर्म इति। न वा देवगन्धर्वादयः" इति।

(१प्र० ७ प० २० खं० ७ सूत्रे) परं च द्विजातीनां मध्ये सुज्ञा यमाचारं स्तुवन्ति स धर्म इति यं च निन्दन्ति स अधर्म इति ज्ञातव्यम्।

(१ प्र० ७ प० २० खं० ८ सूत्रे) यो हि आचारो देशे जितेन्द्रियै वृद्धैःशान्तैरदांभिकैरलोलुपैरनुष्ठीयते द्विजातिभिः, स एवानुष्ठातव्यः।

(१ प्र० ७ प० २० खं० ६ सूत्रे) एवं च वर्तमानस्य लोकद्वयावाप्तिः। (१ प्र० ६ प० २४ खं० ६ सूत्रे) सर्वाश्रमिणां यत् समयः, तस्यानुष्ठानेन सर्वगामी भवतीति।

मनुनापि द्वितीयाध्यायप्रारम्भे—

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत॥

रागद्वेषविवर्जितैर्विद्वद्भिरनुष्ठीयमानमेव धर्मं निबोधत इति तदर्थः। अग्रे च तत्र प्रमाणं विरागिणामद्वेषिणां च मतमेवेत्युक्त्वा तेनैव वेदप्रामाण्यमित्युक्तम्। एवं चोपरितनप्रमाणवला-

दस्माभिः कृतमेव जैमिनिसूत्रव्याख्यानं युक्ततममिति सुस्पष्टमेव ।

तथैव पुराणादिष्वप्यस्यैवार्थस्योपोद्बलकानि प्रमाणानि समुपलभ्यन्ते । न हि पुराणेतिहासादिप्रमाणान्तराण्यपहाय जैमिनेर्मतमन्यद् भवितुमर्हति । स चायमर्थोऽपि सरलतयैव भवति, न तु तत्र कापि क्लिष्टकल्पना । तस्मात्सन्निथमान्नामसंग्रहात् बहूनां निर्णायादेव चोदनारूपोत्पत्तिरिति सुव्यक्तमेव ।

अत्रायं निष्कर्षः

चोदनानिर्माणाधिकारिणः सत्यवक्तारो धर्मस्य निःश्रेयसस्वरूपविज्ञातारः सन्त एव । तदर्थं कीदृशी खलु योजनेत्येतावानर्थोऽत्र चोदनालक्षणधर्मसिद्धान्ताध्याये प्रपञ्चितः । एतैरेव वैदिकधर्मो निर्मित इति तु वैदिकधर्मेतिहासाध्याये प्रतिपाद्यते ।

[ निःश्रेयसलक्षण धर्मप्रमाणविचारः ]

धर्मव्याख्याविचारावसरे तदनुरोधेन तदुपयोगी प्रमाणविचारः कृतोऽप्यत्र विस्तरेण तस्यैव प्रपञ्चः क्रियते । तस्यैव प्रमाणविचारस्य धर्मस्वरूपद्वैविध्यात् द्वैविध्यम् । तत्रादौ निःश्रेयसलक्षणधर्मप्रमाणविचारः । स चायं चोदनास्वरूपनिर्मातॄणां तत्र चावापोद्वापाभिलाषुकाणां सुधारणावादिनामेव वोपयोगी । तत्र निःश्रेयसलक्षणधर्मप्रमाणानि मनुनोक्तानि—

"प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम् ।
त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥" अ १२।१०५ इति ।

कस्यापि कर्मणः निःश्रेयसकरत्वनिर्णयावसरे प्रत्यक्षानुमानयोरेव मुख्यं प्रामाण्यमिति प्रागुक्तं न विस्मर्तव्यम् । परं च ताभ्यामेव तन्निर्णयो न सर्वत्र सम्भवतीत्यतस्तस्य चोदनास्वरूपमपि निर्मातव्यमवश्यमेव । तदा च कदाचित् कर्मणः कुशलाकुशलत्वयोर्निर्ण-

यार्थमवसरालाभे शब्दस्यापि प्रामाण्यमादरणीयमेव। मन्त्रायुर्ज्योतिःशास्त्रकर्त्तारो हि प्रायेण स्ववाक्यस्य वितथार्थकत्वम् मा भूदिति सत्यमेव यथादृष्टं निवेदयन्तीति तद्वाक्यान्यपि तदा प्रमाणतया स्वीकर्तव्यानि। तथापि प्रमादोऽयं मनुष्यस्वभाव एवेति न तस्य प्रत्यक्षानुमानापेक्षया प्राबल्यम्, अपि तु तदपेक्षया दौर्बल्यमेव। एवं च प्रत्यक्षानुमानयोरभाव एव शब्दस्य धर्मे प्रामाण्यम्।

[ चोदनालक्षण धर्मप्रमाण विचारः] अतः परं चोदनालक्षणधर्मस्वरूपप्रमाणविचारः। तस्य च शब्दप्रमाणकतैव वाच्या, परं च शब्देनैवेतरप्रमाणसंग्रहणमनुमतं तर्हि तदपि ग्राह्यमेव। यथा कस्यचन कर्मणः धर्माधर्मत्वनिर्णयाभावे दशावरपरिषद्द्वारा निर्णयः कृतो मन्तव्य इति शब्देनैव निवेदितम्। एवमेव परंपराप्राप्तनिर्णयादिकमपि प्रमाणत्वेन गौणं स्वीकर्तव्यम्। परं च प्रमाणभूतानां शब्दानां परस्परं विरोधे, तदर्थसन्देहे तन्निर्णायकप्रमाणासंभवे च समाजस्यावश्यकतानुसारेण तत्र परिषन्निर्णय एवावश्यं स्वीकरणीयः। यद्यप्यस्य गौणत्वम् तथाप्येतेषामपि शब्दत्वात्प्रामाण्यं तदा भविष्यति। अयमेव विशेषः—यत् मूलप्रामाणभूतेभ्यः शब्देभ्योऽन्य एवायं शब्द इति। किंच मूलप्रमाणभूतशब्दवदस्य नैकविधमेव कार्यम्, किन्तु कयाचित् परिषदा निर्णीतस्य कस्यचन विषयस्य अन्यया परिषदाऽन्य एव निर्णयः क्रियत इति दृष्टचरत्वात्। एवं चैतादृशविषमत्वनिराकरणाय नूत्नाः केचन शब्दाः प्रमाणत्वेन निर्मातव्या भवन्ति। ते च तन्नियमादिति पूर्वोक्तम्। एवं च गौणप्रमाणभूतानां शब्दानामत्यल्प एवावकाशः। एवमेव खलु व्यवस्था तदा तदा कर्तव्या भवति।

[ चोदनारूपधर्मस्य परिवर्तनार्हत्वम् ] एवं च चोदनास्वरूपाणां शब्दानां सन्निर्मितत्वे

सतां पुरुषत्वात् पुरुषाणां च निर्दोषत्वपूर्णत्वयोः कदाप्यसंभवात् तन्निर्मिततादृशशब्दानामपि कदाचित् सदोषत्वं अपूर्णत्वं च सम्भवतीति तन्निराकरणमपि तदा तदा समाजेन सन्नियमद्वारा कर्तव्यमेव । इदमेव खलु विपरिवर्तनं चोदनालक्षणस्वरूपस्य धर्मस्य, अन्यथा निःश्रेयसलक्षणस्वरूपज्ञानार्थं निर्मितानां चोदनास्वरूपाणां शब्दानां परिणामोऽत्यन्तमेव विपरीतः स्यात् । तथाह्यत्र स्पष्टीकरणार्थं ज्योतिः शास्त्रीयो दृष्टान्तः । प्रथमतः सामान्यानुभवात् ३६५ दिवसानामेकं वर्षमिति सिद्धान्तितम् । कालान्तरेण तादृशनियमानुसारेण वर्षारम्भो यदा नानुभवविषयः, तदा ३६५ १।४ दिवसानां वर्षमिति सिद्धान्तितम् । तत्र व्यवहार्यतासिध्यर्थं वर्षचतुष्टयानन्तरमेकं वर्षं ३६६ दिवसानां स्वीकृतम् । अन्यानि तु ३६५ दिवसानामेव त्रीणि । एवमेव कालान्तरेण विपरिणते वर्षारम्भे तत्संगत्यर्थं ३६५ दा२३ दिवसानामपि वर्षं स्यात् । तदा च पूर्वसिद्धान्तस्य विपरिवर्तनमवश्यमेव कर्तव्यं स्यात् । एवमेव सृष्टेरन्तपर्यन्तं तदा तदा वर्षारम्भसंगत्यर्थमवश्यमेव विपरिवर्तनं कर्तव्यमेव स्यात् । नो चेत् दिनस्याधिक्ये शतवर्षेभ्योऽनन्तरम् २५ दिनानां माधिक्यं सहस्रवत्सरैस्तु २५० दिनानामाधिक्यमिति कदापि कथमपि संगतिर्न स्यादेव । एवमेव सर्वत्र विपरिवर्तनम् । तथाहि—पितृगुणानां पुत्रे संक्रान्तेर्दृष्टत्वात्तदनुरोधेन पुत्रस्य पितृसावर्ण्यमङ्गीकृतम् । परं च कालान्तरेण तस्यैव पुरुषस्य सप्तमपुरुषादूर्ध्वं वाऽग्रिमपुरुषे कस्मिन्नपि यदि न तेषां गुणानामुत्कर्षो दृष्टः स्यात्तदा वर्णव्यवस्थाया विपरिवर्तनमवश्यमेव कर्तव्यमापतति । एवं च यदि पितृगुणानां शूरत्वादीनां पुत्रे संक्रान्तिर्न दृष्टा, तर्हि तदीयगुणानु-

रोधेनैव तस्य वर्णो निश्चेतव्यः। न तु पितृसावर्ण्यं तस्येति युक्तमेव विपरिवर्तितुम्। एवमेव पूर्वमासन्नित्यग्रे स्पष्टं प्रदर्श्यते। एवं च चोदनारूपाणां शब्दानामपूर्णत्वे सदोषत्वे वा कालान्तरेण तेषां विपरिवर्तनेन नूतनानां निर्माणेन च निःश्रेयसाय प्रयतितव्यमेव। नहि चोदनाशब्दानां यावच्चन्द्रदिवाकरमेकरूपत्वेनैवावस्थानं वा प्रामाण्यमिति स्पष्टं सुधियाम्।

[ वैदिकधर्मप्रमाण-विचारः ]

अयं च विचारश्चोदनास्वरूपस्य धर्मस्य। विशेषतो वैदिकधर्मविषये प्रमाणविचारस्तु कर्तव्यतयाऽवशिष्यते। अत्र च जैमिनिनिर्देदितः सिद्धान्त एव प्रदर्श्यते। तत्रादौ वेदप्रामाण्यमेव साधनीयमित्येतदर्थमिदं जैमिनिसूत्रम्। "वेदांश्चैकेऽसन्निकर्षं पुरुषाख्याः," इति।

एके वेदान् सतां सत्पुरुषाणां सन्निकर्षं चोदनावाक्यानां संग्रहं न मन्यन्ते। पुरुषाख्यत्वेन तत्तत्पुरुषकर्तृकत्वदर्शनात्। एवं च न सन्नियमितत्वमिति। अत्र शाबरार्थस्त्वन्य एव। परं च लोके सन्नियमादिति पूर्वोक्तानुसारेणायमेवार्थो योग्यः।

अनित्यदर्शनाच्च १।१।२७।

वेदेषु चोदनावाक्यानामनित्यताऽपि दृश्यते। अयं भावः—यासां परिपालनमत्यावश्यकम्, ता नित्याश्चोदनाः,यासां च नात्यावश्यकं ता अनित्या इति। तादृशीनां वेदे दर्शनात्पुरुषकर्तृत्वमेव, न तु सन्नियमितत्वमिति। एवं च न तेषां प्रामाण्यम्। येन केनापि पुरुषेण प्रमादादपि उच्चारणस्य सम्भवात्। एते पूर्वपक्षसूत्रे। अस्योत्तरन्तु—

उक्तन्तु शब्दपूर्वत्वम् १।१।२९ शब्दज्ञानानन्तरमेवार्थस्य चोदनायाश्च ज्ञानं भवतीति। एवं च यद्यपि शब्दानां पुरुषकृतत्वम्,

तथापि सतामनुमतेस्तत्र सम्भवान्नाऽप्रामाण्यम् ।

आख्या प्रवचनात् १।१।३०। पूर्वोक्तमभ्युपेत्यवादेन । वस्तुतस्तु नाख्या पुरुषनिर्माणात् । अपि तु तैस्तैःपुरुषैर्वेदानां सम्यक्तया व्याख्यातत्वात् । एवं च न केवलमाख्यया अप्रामाण्यम् ।

परन्तु श्रुतिसामान्यमात्रम् १।१।३१।

परं द्वितीयं कारणमनित्यचोदनानां दर्शनं सर्वश्रुतिसाधारणमेव । यत्र कुत्रापि अनित्यचोदनास्तु सन्त्येव । तथाहि—"न तिलान् विक्रीणीयात्' इति निषेधकचोदनानन्तरं स्वक्षेत्रे स्वयमुत्पादितानां तिलानां विक्रयः कार्य इत्यभ्यनुज्ञानमपि दृश्यते। नो चेत् कृषकानां तिलावापो नैव कर्तव्यः स्यात् । तथा च व्यवहारोपयोगिनां तिलानां विनाश एव कृतः स्यात् । कृते च केनचित् तदावापे तस्य हानिः स्यात् । अत एतादृशीनामनित्यानां चोदनानां सर्वश्रुतिषूपलम्भः समान एवेत्यर्थः । कृते वा विनियोगः स्यात् कर्मणः सम्बन्धात् १।१।३२।

वेदानां पुरुषकृतत्वे स्वीकृतेऽपि कर्मणः सन्नियमनरूपस्य सम्बन्धात् तेषां विनियोग उपयोगः चोदनास्वरूपधर्मज्ञाने संभवत्येवेति, नैतावता तेषामप्रामाण्यम् । न हि वेदप्रामाण्यं कर्त्रधीनम्, अपि तु सतां नियमात् ।

[ मन्त्रब्राह्मणोभयप्रामाण्यनिरासः ] नैतावता मन्त्रब्राह्मणयोरुभयोरपि प्रामाण्यमिति भ्रमितव्यम् । तदर्थं जैमिनिसूत्राण्यत्रोपन्यस्यन्ते सव्याख्यानि । तथाहि—

विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् २।१।३०। विधिर्नाम ब्राह्मणम् । मन्त्रश्च तयोरेकशब्दघटितत्वे एकार्थकत्वमेव । तद्यथा—यदि ब्राह्मणे प्रेतपत्नी देवरं विन्दतीति वाक्यं विद्यादिति विधिपरम् ।

मन्त्रेऽपि तादृशवाक्यस्य विधिपरत्वमूरीकरणीयम्। ह्येकत्र विधिरूपोऽर्थः, अन्यत्र भूतार्थोऽपि इति न, अपि तूभयत्राप्येकार्थकत्वमेव। अपि वा प्रयोगसामर्थ्यात् मन्त्रोऽभिधानवाची स्यात्। २।१।३१।

क्रियावाचकानां पदानां प्रयोगस्याभिधानरूपस्य सामर्थ्यात् मन्त्राणां अभिधानवाचकत्वं परिनिष्पन्नार्थबोधकत्वम्। एतौ द्वावपि पूर्वपक्षौ। यद्यप्यत्र सूत्रे निबद्धः सिद्धान्तो जैमिन्यभिमत एव। तथापि पूर्वपक्षत्वे कारणं सूत्रोपनिबद्धमिति जैमिन्यसम्मत इत्यस्यापि पूर्वपक्षसूत्रत्वमेव। तच्चोदकेषु मंत्राख्या २।१।३२।

तत् अभिधानम्, तस्य चोदकाः वाचकाः मन्त्रपदाभिधेयाः। अभिधानवाचकत्वमेव मंत्राणामित्यर्थः। शेषे ब्राह्मणशब्दः २।१।३३

मंत्रातिरिक्तेषु ब्राह्मणपदवाच्यता। एवं च ब्राह्मणानां विधायकत्वमेव। नत्वाभिधानवाचकत्वम्।

[चोदनालक्षणवैदिकधर्मे ब्राह्मणस्यैव प्रामाण्यम्]

अत्र च मन्त्रलक्षणे चक्रकापत्तिः। यो ह्यभिधानवाचकः स मन्त्र इति, यो हि मन्त्रः स एवाभिधानवाचक इति। अस्योत्तरार्थमिदं सूत्रम्—

अनाम्नातेष्वमंत्रत्वम् २।१।३४। आम्नानात् मन्त्रामन्त्रयो निर्णय इत्यर्थः। अयं भावः—वेदप्रवर्तकैरिच्छयाऽभिधानवाचकानां मंत्रेति नामधेयं स्वीकृतम्। इतरेषां ब्राह्मणनाम, एवंच तेषामाम्नात् तादृश एवार्थस्तत्तद्वाक्यानां कर्तव्य इति। एवंच ब्राह्मणग्रन्थानामेव धर्मे चोदनालक्षणस्वरूपे प्रामाण्यं न मन्त्राणामिति। अत्र मन्त्रब्राह्मणविभागः किमितीत्यन्यः प्रश्नः प्रकृतानुपयोगित्वान्नात्र विचार्यते। अत्र चापाततो यद्यपि शाबरव्याख्यानादन्यदेवेदमस्माकं व्याख्यानम्। तथापि फलतो न विशेष इति ज्ञेयम्। शबरप्रमादस्तु नात्र निवेद्यते। एवं च वेदो नाम ब्राह्मणमेव सतां नियमात् धर्मे प्रमाणमिति जैमिन्याशयः।

[ स्मृतिप्रामाण्य-विचारः ] अथातः स्मृतिप्रामाण्यजिज्ञासा—

धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ।१।३।१।

धर्मे वेदस्यैव प्रामाण्यात्तदतिरिक्तानामप्रामाण्यमिति स्मृतयोऽप्रमाणमित्यर्थः ।

अपि वा कर्तृसामान्यात् प्रमाणमनुमानं स्यात् १।३।२।

अपि वेति पूर्वपक्षव्यावृत्तिः। सर्वासां स्मृतीनां कर्तारः वेदानुरूपमेव ताः प्रणयन्तीति तदनुमितश्रुतिवाक्यानि प्रमाणानि । अयमपि पूर्वः पक्षः। शबरस्तूत्तरपक्षीयमिदं सूत्रमङ्गीकरोति । तदसत् । अपि वेति पदाभ्यामुभयोरपि समानत्वस्यावगमात् । शाबरव्याख्यानमप्ययुक्तमेव । यथाहि कर्तृसामान्यादित्यस्यार्थो मदीयः संगच्छते, न तथा शबरस्येति चिन्त्यन्तत् ।

अयमाशयः—सर्वेऽपि स्मृतिकर्तारो वेदानुरूपमेव धर्मं व्याख्यास्याम इति प्रतिजानन्तो धर्मनिरूपणं कुर्वन्तीति तद्वचनाद्वेदमनुमाय प्रमाणं स्वीकरणीय एव । उभयोरपि पूर्वपक्षयोरुत्तरमिदम्—विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् १।३।३।

वेदेन विरोधे स्मृतेरप्रामाण्यमेव । अविरोधेनैव स्मृत्या श्रुतेरनुमानं कर्तव्यम् । बहवः खलु शाखाः प्रणष्टा इति भारतीया मन्यन्ते । एवं च तत्रत्यधर्मनिरूपणायैव प्रवृत्ताः स्मृतय इति ताः प्रमाणम् । परं च प्रत्यक्षमेव वेदविरोधे तत्राप्यविरोधेनैव श्रुतिरनुमातव्येत्यर्थः । तथाहि—षाट्त्रिंशदाब्दिकं चर्यं गुरौ त्रैवेदिकं व्रतमिति स्मृतिः 'कृष्णकेशोऽग्नीनादधीतेति' श्रुतिवाक्येन विरुद्धा । नहि अष्टमे वर्षे उपनयने सति, षट्त्रिंशद्वर्षपर्यन्तं गुरौ व्रतचर्यायां चतुश्चत्वारिंशत् वर्षे कृष्णकेशत्वं सम्भवतीति वैयर्थ्यमेवाधानस्य । अतस्तादृशी स्मृतिर्व्यामोहात् प्रवृत्ता निष्प्रमाणिकैव ।

हेतुदर्शनाच्च १।३।४।

यत्र हेतुदर्शनम्, तस्या अपि अप्रामाण्यमेव। तथाहि—बोधायनस्मृतौ समुद्रयानं प्रतिषिद्धम्। परं च बोधायनात् पूर्वं जातानां गौतमवसिष्ठादीनां स्मृतौ तन्न दृश्यते। तथैव अङ्गवङ्गादिगमनमपि तीर्थयात्रां विना पतनकारणमिति बोधायनोक्तं गौतमवसिष्ठादिभिर्न स्मर्यते। न च गौतमादीनां काले तादृशश्रुतिः प्रणष्टा बोधायनस्योपलब्धेति वक्तुं शक्यम्; तस्य तदनन्तरभावित्वादन्यथयितं बोधयनेनेति मन्यते, श्रुतिप्रणाशस्योत्तरोत्तरमाधिक्यात्। तथाहि—गौतमस्मृतौ नवमाध्याये आर्यजनभूयिष्ठमनलससमृद्धं धार्मिकाधिष्ठितं निकेतनमावसितुं यतेतेत्युक्तम्। अस्य चेदमेव तात्पर्यं यत् धर्माचरणविघ्नो यथा न स्यात् तथा वसितव्यमिति। न चैतावताऽन्यदेशगमनं पतनकारणमित्येतत् वाक्यं शक्नोति बोधयितुम्। एवं च म्लेच्छदेशेऽपि यदि आर्या गच्छेयुः, तत्र च धर्माचरणादिषु परस्परसहायकमाचरेयुश्चेत्, न तत्र पतिषेधः। दृश्यते च तथेतिहासेऽपि कृष्णादिभिर्यदुभिर्द्वारकावासः कृतः। अगस्त्यः सह शिष्यैर्दक्षिणं देशं दण्डकारण्यमधिष्ठितवान् इत्यादि। एवं च व्यामोहात् बोधायनवचनमप्रमाणमेव। अस्यैवाक्षेपकमिदं सूत्रम्—

शिष्टाकोपेऽविरुद्धमिति चेत् १।३।५।—इति।

ननु शिष्टानामधीतवेदानां हेतुमूलकस्मृतिविषये कोपो न स्याच्चेद्, भवतु नाम वेदाविरुद्धत्वेन प्रामाण्यमिति चेत्— न शास्त्रपरिमाणत्वात् १।३।६।

शास्त्रमेव खलु मर्यादा धर्मप्रमाणस्य। तेन विरोधे प्रत्यक्षदृष्टे कथमपि न हेतुमूलकस्मृतेः प्रामाण्यं वेदानुमापकत्वं वेति। द्वितीय-

मुत्तरं यथा— अपि वा कारणाऽग्रहणे प्रयुक्तानि प्रतीयेरन् ।१।३।७।

कदाचित् शिष्टानामपि प्रामाण्यबाधप्रयोजकानां कारणाना-मग्रहणेऽनवबोधे कोपो न स्यात्; तथाप्यधुना तदुपलम्भान्न प्रामाण्यमिति। अत्र सूत्रत्रयस्य व्याख्यानं शबरेणान्यथैव विहितम्। परं च स तस्य प्रमादः। तेन तु पञ्चमषष्ठयोः सूत्रयोः पूर्वपक्षः प्रतिपाद्यते, सप्तमे तूत्तर इत्युक्तम्। परं च अपिवेतिशब्दात् षष्ठसप्तमयोरेकरूपत्वं गम्यते। कुमारिलेन तु शाबरादप्यन्यदेव व्याख्यातम्। पञ्चमषष्ठे बौद्धादिग्रन्थाप्रामाण्यविषये, सप्तमन्तु सदाचारप्रामाण्यविषयकमिति। इदं सर्वमप्यप्रकृतमेव। मदीयन्तु प्रकरणप्राप्तं सरलं चेति सुधियो विदांकुर्वन्तु। अतः श्रुत्योः स्मृत्योश्चान्योन्यं विरोधे विनिर्णायकं सूत्रं व्याख्यास्यामः।

तेष्वदर्शनात् विरोधस्य समा विप्रतिपत्तिः स्यात् १।३।७।

स्मृत्योरन्योन्यं विरोधे तद्विषयस्य वेदेऽदर्शने च समा विप्रतिपत्तिः कार्या। उभयोरपि समबलत्वेन विकल्पः कर्त्तव्यः इत्यर्थः। एवं श्रुत्योरपीति।

शास्त्रस्था वा तन्निमित्तत्वात् १।३।६।

श्रुत्योरपि विकल्पः स्यादेव। यतस्तदेव खलु एकं प्रमाणम्। द्वयोरपि सूत्रयोः पूर्वः पक्षः, अग्रिमन्तु सिद्धान्तपरमिति तु शब्दादवगम्यते।

चोदितन्तु प्रतीयताविरोधात् प्रमाणेन १।३।१०।

चोदितं शिष्टनिवेदितं तत्र ग्राह्यम्। अन्यथा प्रमाणेन विरोधः स्यात्।

अत्र शबरस्तु शब्दार्थनिर्णायकत्वमेतेषां सूत्राणामभ्युपगम्य तथा व्याचष्टे, तदिदं पौर्वापर्यविरोधादसंगतमेव। न हि स्मृति-

कल्पसूत्रयोः प्रामाण्यविचारेऽन्तरेव शब्दार्थनिर्णयार्थं प्रवृत्तः स्यात् जैमिनिः। तस्मादस्मदुक्तमेव समीचीनम्। चोदितमिति केनेत्यत्र सन्देहस्तु उभयसाधारण एव। अस्माभिस्तु पञ्चमसूत्रे शिष्टशब्दस्य समाम्नानात् तदनुरोधेनात्र शिष्टचोदितमित्यर्थः कृत इति विशदमेव। शिष्टानामनाम्नातधर्मनिर्णायकत्वं सर्वग्रन्थसम्मतमेव। अतो युक्तमेव शिष्टचोदितमिति विवरणम्। श्रुत्योः स्मृत्योश्चान्योन्यं विरोधे प्राचीनशिष्टानामपि किं कर्तव्यमिति महान् व्यामोहो दृश्यते। तदर्थं कानिचित् वाक्यानि प्रदर्श्यन्ते। तद्यथा—

"तुल्यबलविरोधे विकल्प इति गौतमः"। तदेतद्गौतममतमयुक्तम्। तथाहि दायभागे सर्वो ज्येष्ठस्यैवेत्येकं वचनम्, सर्वेषामित्यपरम्। तदत्र विकल्पस्वीकारे कश्चिदधिकारी एकं वचनमनुसृत्य ज्येष्ठायैव भागं दास्यति, एकस्तु सर्वेभ्य इति व्यवहारवैषम्यात् लोकयात्रायां महानपकारः स्यात्। अत्र विरोधद्वैधयोर्नैकार्थकत्वमिति ज्ञेयम्। अत एव मनुना द्वैध एव विकल्पः स्वीकृतः, न तु विरोधे। तदिदं मनुवचनम्—

श्रुतिद्वैधन्तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ।
उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः ॥१४॥
उदितेऽनुदिते चैव समयाध्युषिते तथा।
सर्वथा वर्तते यज्ञः इतीयं वैदिकी श्रुतिः ॥ १५ ॥ अ० २।

एवं च द्वैधे द्विकल्पः न तु विरोधात्; तथासति व्यवहारासौकर्यं स्यात्। अत एव याज्ञवल्क्येनान्यदेव मतं प्रदर्शितम्—'स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः' इति अ० २। २१। नारदेनान्यदेव—धर्मशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मृतः १। ४० इत्युक्तम्। नारदमतन्तु न समीचीनम्, व्यवहाराधिकारिणां

भिन्नत्वेन कस्यचित् काचित् स्मृतिर्युक्तियुक्तेति मतं स्यात्, कस्यचिदन्यैवेति पुनरपि तदवस्थमेव असौकर्यम्।

याज्ञवल्क्यमतन्तु यद्यपि न दुष्टम्, तथापि कुत्रचित् व्यवहारेणापि निर्णयो न स्यात्। अतस्तत्र जैमिनिमतमेव ग्राह्यं स्यात्, अतस्तदेव समीचीनम् ; नत्वन्यत्। परं च सन्दिग्धस्थले व्यवहारानुसरणं सर्वजनप्रसिद्धमेवेति। तस्मात् तादृशश्रुतिकल्पने विरोध एव न स्यात्। अत्रावसरे द्वैधविरोधयोर्विशेषः प्रदर्शनीयः। द्वैधलक्षणन्तु जैमिन्युक्तम्—'यत्र द्वयोरपि कर्मणोरेकमेव फलम्, तत्र द्वैधमन्यत्र विरोध इति।' अस्ति चोदितानुदितहोमयोः फलैक्यम्, न च तथा ज्येष्ठदायभागसर्वदायभागयोरिति तत्र विरोधः। इदं चाधिकरणं विरुद्धवचनद्वयविषयकमेव, न तु विरुद्धवेदासमानवचनविषयकमिति ज्ञेयम्। इदमत्र तात्पर्यम्—वेदवाक्यानां शिष्टनिर्मितत्वात् शिष्टानां च विरुद्धकथने तात्पर्याभावात् वेदवाक्यानामविरोधेनैव व्याख्यानं कर्तव्यम्, न तु विरोधेन तानि व्याख्येयानीति।

इतः परमाचारप्रामाण्यविचारः। तत्र च जैमिनिसूत्रम्—अनुमानव्यवस्थानात् तत्संयुक्तं प्रमाणं स्यात् १।३।१५ इति। आचारात् श्रुतेरनुमानमिति युक्तमेव। परं च सोऽयमाचारो यत्र स्यात्तत्रैव प्रमाणं तदनुमितश्रुतिवाक्यमिति व्यवस्थापनं कर्तव्यमित्येकः पूर्वः पक्षः।

आचारप्रामाण्यम्

अपि वा सर्वधर्मः स्यात्तन्न्यायत्वाद्विधानस्य। १।३।१६।

इतरवेदबोधितधर्माणामिव देशाचारानुमितश्रुतिबोधितधर्ममपि सर्वदेशीयत्वं युक्तमिति द्वितीयः पक्षः।

दर्शनात् विनियोगः स्यात् १।३।२७।

वेदे यदि तस्याचारस्य दर्शनम्, तर्हि सर्वदेशीयत्वं युक्तमिति प्रथमपक्षोत्तरम्।

लिंगाभावाच्च नित्यस्य १।३।१८।

परं च यदि न वेदे दर्शनं तस्याचारस्य, तदा न तस्य सर्वदेशीयत्वमिति द्वितीयपक्षोत्तरम्।

आख्या हि देशसंयोगात् १।३।१९।

यदि नाम वेददृष्टस्याप्याचारस्य देशरूपोपाधिनाऽभिधानं स्यात्, तर्हि तद्देशीयत्वमेव तस्य। एवं च न देशान्तरे तस्य प्रामाण्यम्। अयं चाक्षेपः सप्तदशसूत्रोपरि। उत्तरं तु—

स्याद्योगाख्या हि माथुरवत् १।३।२१। इति सूत्रे।

यथा हि मथुरासम्बन्धान्माथुरत्वम्। तथा तद्देशे तदाचारस्य सम्यक् परिपालनात्तादृशमभिधानमिति नैतावता देशान्तरे तस्याऽप्रामाण्यम्।

कर्मधर्मो वा प्रवणवत् १।३।२२।

यद्वा यथा वैश्वदेवकर्मणि प्रवणापेक्षा, तथा तस्याचारस्य तद्देशापेक्षेति सप्तदशसूत्रोपरि द्वितीयोऽयमाक्षेपः। तदुत्तरन्तु—

तुल्यन्तु कर्तृधर्मेण १।३।२३।

वेदानुपदिष्टत्वेऽपि यथा कर्त्रनुसारेण न धर्मपरिवर्तनम्, तथा देशानुसारेणापि तत्रेति ज्ञेयम्।

इदं सर्वमपि व्याख्यानं शाबरातिरिक्तं यद्यपि, तथापि विचारोऽस्माकमेव समुचित इति न उभयोरपि तौलनिकदृष्ट्या विचारः कृतः।

(आचारे ऋषीणां तदा तदा मतस्य परिवर्तनम्) आचारविषये ऋषीणां मतानामुत्क्रान्तिः संजातेत्यनेन गम्यते। तथाहि—प्रथमतस्तावदार्यावर्ताचाराणामेव प्रामाण्यमासीत्। तदुक्तं मनुना

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ १७ ॥
सरस्वती दृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते ॥ १८ ॥
तस्मिन् देशे य आचारः पारम्पर्यक्रमागतः।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥ १९ ॥

वसिष्ठवचनानि तु—

विहितो धर्मः। तदलाभे शिष्टाचारः प्रमाणम्। प्रागादर्शात् प्रत्यक्कालकवनात् दक्षिणेन हिमवतः उत्तरेण विन्ध्यस्य ये धर्मा ये आचारास्ते सर्वत्र प्रत्येतव्याः, न त्वन्ये प्रतिलोमकल्पधर्माः। एतदार्यावर्तमित्याचक्षते। गङ्गायमुनयोरन्तरेत्येके। यावद्वा कृष्णमृगो विचरति, तावद् ब्रह्मवर्चसमित्यन्ये। अथापि भाल्लविनो गाथामुदाहरन्ति। अ० १ सेयं गाथा—यावत्सिन्धुर्विहरणी सूर्यस्योदयनम्पुरा। यावत्कृष्णोऽभिधावति तावद्वै ब्रह्मवर्चसमिति। एवं चार्यावर्तातिरिक्तदेशेषु वेदविरुद्धा अप्याचारा आसन्, ते च तत्रैव प्रमाणमित्यनेन सिद्ध्यति। अग्रे चापि मनुनोक्तम्—देशधर्माञ्जातिधर्मांश्च कुलधर्मान् श्रुत्यभावादब्रवीन्मनुरिति। एवमेव बौधायनस्मृतावपि—

प्राग् विनशनात् प्रत्यक् कालकवनात् दक्षिणेन हिमवन्तं उदक् पारियात्रेण तदार्यावर्तम्। तस्मिन् य आचारः स प्रमाणम्। गंगायमुनयोरन्तराप्येके। अथाप्यत्र भाल्लविनो गाथामुदाहरन्ति—पश्चात्सिन्धुविहरणी सूर्यस्योद्गमनं पुरा। यावत्कृष्णोऽभिधावति तावद्वै ब्रह्मवर्चसम्' इति। एवं च श्रुतेर्मुख्यं प्रामाण्यम्, तदपेक्षया आचारो गौणं प्रमाणम्। तदुक्तमापस्तम्बेन—

श्रुतिर्हि बलीयस्यानुमानिकादाचारात् १।३।४।७—इति।

यस्मादाचारात् श्रुतिरनुमातव्या, तदपेक्षया प्रत्यक्षश्रुतिः प्रबलेति। अनेन चेदं मतं आर्याणां ब्रह्मर्षिदेशात् पूर्वस्यां दिशि वासकाल एव इति गम्यते। द्वितीयन्तु जैमिनिमतम्।

यस्मिन् देशे य आचारः स तत्रैव प्रमाणम्। तस्यैव वेदद्दष्टत्वे सार्वत्रिकं प्रामाण्यम्॥

वेदविरुद्धत्वे तु किं करणीयमिति विचारस्यानिबन्धनात्तस्याऽप्रामाण्यमेव जैमिन्यभिमतमिति। गौतममतमप्येतादृशमेव—

तस्य व्यवहारो वेदो धर्मशास्त्राण्यङ्गान्युपवेदाः पुराणं देशजातिकुलधर्माश्चाम्नायैरविरुद्धा एवेति। अ० १।

अत्रैव वीरमित्रोदयस्थं कात्यायनवचनमपि—

यस्य देशस्य यो धर्मः प्रवृत्तः सार्वकालिकः।
श्रुतिस्मृत्यविरोधेन देशधर्मः स उच्यते॥ इति।

अत्र मतद्वयस्य विशेषस्त्वल्प एव। पूर्वत्र ब्रह्मर्षिदेशाचारस्यैव सर्वत्र प्रामाण्यम्। अत्र तु तद्देशे एव तस्य प्रामाण्यम्। अत्र मते श्रुतिस्मृत्योः श्रैष्ठ्ये तदवस्थेऽपि देशमाहात्म्यं नष्टमेव। एवं च यदा खल्वार्यैरन्यत्र गत्वा वासः कृतः, तदानींतनमेवेदम्मतमिति। तृतीयं मतन्तु बोधायनेनोक्तम्—पञ्चधा विप्रतिपत्तिः दक्षिणतस्तथोत्तरतः, यानि दक्षिणतस्तानि व्याख्यास्यामः—यथैतदनुपेतेन सह भोजनम्, स्त्रिया सह भोजनम्, पर्युषितभोजनम्, मातुलपितृस्वसृदुहितृगमनमिति, अथोत्तरतः—उर्णाविक्रयः, सीधुपानम्, उभयतोदद्भिर्व्यवहरणम्, आयुधीयकम्, समुद्रसंयानमिति। इतरदितरस्मिन् कुर्वन् दुष्यति, इतरदितरस्मिन्, तत्र तत्र देशप्रामाण्यमेव स्यात्।

एवं च तत्तद्देश एव तत्तदाचाराणां प्रामाण्यम्। एवमेव नारदोपि—व्यवहारो हि बलवान् धर्मस्तेनावहीयते, इति वदति। शास्त्राद्रूढिर्बलीयसीत्येतदप्येतन्मूलकमेव। एवं चैतन्मते व्यवहारस्यैव प्राबल्याच्छ्रुतिमाहात्म्यमतीव संकुचितम्, किम्बहुना? नष्टमेव।

अत्र मतत्रये किंवा युक्तमिति विचारणीयम्। तत्राधिकृतानां सत्पुरुषाणां नियमा एव वेदवाक्यानि। तानि विपरिवर्तनार्हाणीत्युक्तम्प्राक्। एवं च तदनुसारेण पूर्वविपरिवर्तनमपि स्यादेव। सैव श्रुतीनां प्रागतिकाऽवस्था। तदेव विपरिवर्तनं यदा प्रतिषिद्धम्, तदा सैव श्रुतीनां स्थिरावस्था। धर्मे विचारिते एवमेव दृष्टिपथमायाति शबरकालात्पूर्वमेव श्रुतीनां स्थिरावस्था सम्प्राप्तेति। अन्यथा शबरेण भाष्ये श्रुतीनां विपरिवर्तनं नैव भवतीति विपरीतसिद्धान्तप्रतिपादनं कृतं कथं सर्वसम्मतं स्यात्। तस्मात्सत्यमतविलोपानन्तरं बहोः कालादिदं शाबरभाष्यं जातमिति युक्तमुत्पश्यामः। परं तु राष्ट्रं कदापि न स्थिरतां भजति इति श्रुतिमहत्त्वमविगणय्य पश्चादाचारमहत्ता प्रतिष्ठापिता तदानीन्तनैः सत्पुरुषैः। एवं च स्थिरावस्थायां तृतीयमतमेव श्रेयः। जैमिनिसिद्धान्तस्तु प्रागतिकावस्थायां युक्त एव। किंच आर्यशास्त्रानुसारेणानार्याणां व्यवहारो न युक्त इति शंकयाऽपि श्रुतिमहत्ता प्रणष्टेति गम्यते। एवं च श्रुतिस्थिरावस्थायां आचारमहत्ता समुज्जृम्भिता युक्तैव। वस्तुतस्तु श्रुतिसिद्धान्तस्य दुष्परिणामे तत्परिवर्तनं युक्तमिति जैमिनिमतमेव प्रागतिकम्, अत एव श्रेष्ठम्।

एवं चाचारमहत्त्वे सिद्धेऽपि किंकालिकः खल्वयमाचारो ग्राह्य इत्यपि विचारणीयम्। तत्र चान्तिममन्वन्तरसमये य आचारः स एव प्रमाणमिति मे मतम्। यत् कारणम्—मन्वन्तरं नाम वेदशुद्धी-

करणकालो नवीनवेदनिर्माणकालश्चेति। एवं च यदि तदानींतनाना-माचाराणां श्रुत्याऽप्रतिषेधः, तर्हि अर्थादेव श्रुतिसम्मतत्वं स्यादेव तेषाम्। न च तत् उपरितनानामाचाराणां सम्भवति। तेषां साधुत्वेपि श्रुतिसम्मतत्वस्य कथमप्यसम्भवात्। अन्तिममन्वन्तरन्तु गत वाराहकल्पस्य २१५२ तमे वर्षे संवृत्तमिति। तदानीं यद्यपि आर्याणां दक्षिणदेशे विदर्भादिषु वसतिः संजाता। तथापि तस्या अल्पत्वेन न विचारणीयत्वम्। अपि तु सर्वेऽपि व्यवहारा विन्ध्यहिमालययोर्मध्यदेश एव आसन्। एवं च तदानीं मनुसप्तर्षीणां दाक्षिणात्याचाराणां ज्ञानमेव नासीदिति कुतस्तत्र तेषां सम्मतिः स्यात्। अत्रापि पूर्वोक्तानि प्रमाणान्यनुसंधेयानि। अतः परं श्रुत्यादिभिरनिर्णये किं कर्तव्यमिति विचार्यते। तदा च परिषन्निर्माणं शास्त्रेणोपदिष्टम्। तथाहि—

अनाम्नाते दशावरैः शिष्टैरलुब्धैरूहवद्भिः प्रशस्तं कार्यम्। चत्वारश्चतुर्णाम् पारगा वेदानां प्रागुत्तमाः, त्रय आश्रमिणः पृथक्धर्मविदस्त्रयः, एतान् दशावरान् परिषदित्याचक्षते। असम्भवे त्वेतेषां श्रोत्रियो, वेदविद् शिष्टो, विप्रतिपत्तौ यदाह, यतोऽयं प्रभवो भूतानां हिंसानुग्रहयोगेषु। गौतमः—अ० ॥२८॥

एवं मनुरपि—अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत्।

यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशंकितः ॥

धर्मेणाधिगतो यैस्तु वेदः सपरिबृंहणः।

ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥

दशावरा वा परिषद्यं धर्मं परिकल्पयेत्।

त्र्यवरा वापि वृत्तस्था तं धर्मं न विचालयेत् ॥ १० ॥

त्रैविद्यो हेतुकस्तर्की नैरुक्तो धर्मपाठकः।

त्रयश्चाश्रमिणः पूर्वे पर्षदेषा दशावरा ॥ ११ ॥
ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च ।
त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये ॥ १२ ॥
एकोऽपि वेदविद्धर्मं यं व्यवस्येद् द्विजोत्तमः ।
स विज्ञेयः परो धर्मो नाज्ञानामयुतायुतैः ॥ १३ ॥ अ० १२ ॥

पुराणविचार: अतः परं पुराणानि विचार्यन्ते । को वा पुराणविषयः । तत्र "पुरा परंपरां वक्ति पुराणं तेन वै स्मृत"मिति पाद्मवचनात्

चक्षुष एष सुतस्य सद्भिर्दृष्टः पुरातनैः ।
देवतानामृषीणां च राज्ञां चामिततेजसाम् ॥ ३१ ॥
वंशानां धारणं कार्यं श्रुतानां च महात्मनाम् ।
इतिहासपुराणेषु दिष्टा ये ब्रह्मवादिभिः ॥ ३२ ॥ अ० १ ।

इति वायुपुराणवचनात्

प्राग्वृत्तकथनं चैकराजकृत्यमिषादिति ।
यस्मिन् स इतिहासः स्यात्पुरावृत्तः स एव हि ॥ ५९ ॥
सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंश्यानुचरितं यस्मिन् पुराणं तत्प्रकीर्तितम् ॥ ६० ॥ अ० ४।३

इति शुक्रनीतिवचनाच्च प्राग्वृत्तकथनमेव पुराणानां विषय इति सिध्यति । एवं च न अर्थे स्वातन्त्र्येण पुराणानां प्रामाण्यम् । परं च वेदविज्ञानार्थं तेषामुपयोगः स्यादेव । तदुक्तम्

यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः ।
न चेत्पुराणं संविद्यान्नैव स स्याद्विचक्षणः ॥ २०० ॥
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति ॥ २०१ ॥

इति वायुपुराणे प्रथमेऽध्याये ।

एवं च वेदानां यथार्थज्ञाने विनियोगः पुराणानामिति पुराणवचनेभ्य एव सिध्यति। किंच "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः" इतिमंत्रोऽप्यत्र प्रमाणम्। अस्य च परमेश्वराङ्गेभ्यः चातुर्वर्ण्यस्य समुत्पत्तिपरत्वं वर्णयन्ति केचन। परं च यदि वर्णोत्पत्तेरितिहासः पुराणवाक्यानि च पर्यालोच्यन्ते, तर्हि लाक्षणिकार्थ एवात्र कर्तव्य इत्येव सिध्यति। एवं पुरावृत्तत्वात्पुराणानां प्राचीनाचारविज्ञानेऽपि विनियोगः स्यात्। तदुक्तं व्याससमृतौ—श्रुतिस्मृतिपुराणानां विरोधो यत्र दृश्यते। तत्र श्रौतं प्रमाणन्तु तयोर्द्वैधे स्मृतिर्वरा। अ०१। अनेन च पुराणानां धर्मे प्रामाण्यं स्वातंत्र्येणेति व्याससम्मतमिति भाति। परं तदसत्। न हि पुराणान्यागत्य वदन्ति वयं धर्मं वदाम इति। लक्षणानि तु इतिवृत्तपराणि। एवं च पुरावृत्तकथनमेव पुराणविषय इति सिद्धम्। एवं निःश्रेयसलक्षणधर्मस्वरूपज्ञानेऽपि तेषामुपयोगः। तदुक्तं शास्त्रं च विविधागममिति। समाप्तप्रायः प्रमाणविचारः। परन्तु इदानीं काले इत्यावश्यकमेकं सूचनं—वर्तते, ततः खल्वस्य समापनम्। तदिदं सूचनं यदि नामेदानीं कस्यचन विषयस्य श्रुत्यादिभिर्निर्णयो न स्यात्तर्हि परिषद्द्वारा निर्णयार्थं प्रयतितव्यमिति।

प्रमाणानां यथार्थतयोपयोगः

समाप्तः खलु प्रायेण प्रमाणविचारः। अतः परं प्रमाणानां यथार्थतया कथमुपयोगः कर्तव्य इत्येतदर्थं विचारः प्रारभ्यते। न हि तदन्तरा निःश्रेयसलक्षणस्वरूपविज्ञानं धर्मस्य सम्भवति। न चापि तदन्तरा शब्दाच्चोदनास्वरूपमध्यवगन्तुं शक्यम्। अतः खलु विचारप्रारम्भः।

तत्र प्रत्यक्षादीनां कथमुपयोगः कर्तव्यो यथार्थतयेति प्रायेण विचारितमेव न्यायशास्त्र इति न पुनस्तस्य विचारणा प्रतन्यते।

शब्दादपि यथार्थतयाऽर्थज्ञानं कथम्भवतीत्यस्याप्येकं शास्त्रं वर्तते। परं च न तद्यावधि पृथक्त्वेनोपलभामहे। परं च चोदनालक्षणस्वरूपविज्ञानार्थमेकं शास्त्रं निरमायि खलु जैमिनिना। तदेव मीमांसाशास्त्रमिति गीयते। तच्च जैमिनिसूत्ररूपमेव मुख्यम्। तस्यास्य शास्त्रस्येदानीमतीवोपयोगः। तत्र प्रायेण सर्वोऽपि विचारः सम्यक्तया कृत एवेति न पुनर्विचारस्यावश्यकता। परं चाधुना न तस्य विज्ञानं सामाजिकानां प्रायेणेति तदर्थं प्राधान्येन वर्तमानानां तत्सिद्धान्तानामत्रोपन्यासो न दोषावह इति प्रस्तूयते।

तेषां च वर्गद्वयं सिद्धान्तानाम्। सर्वग्रन्थसाधारण उपयोग इत्येकः। अपरश्च तत्तद्ग्रन्थोपयोगिनामेव सिद्धान्तानाम्। अत्रापि तदन्तःपातिनो बहवः खलु वर्गाः। तत्र च धर्मशास्त्रविषयकश्चैकः। तत्रापि तत्तद्धर्मविषयका बहवः खलु तदन्तःपातिनो वर्गा इति सुविदितमेव।

तत्रायं प्रथमः सिद्धान्तः—यद्वैदिकधर्मप्रमाणभूतेषु वेदग्रन्थेषु कानिचित् विधायकानि कानिचित्स्तावकानि वाक्यानीति तज्ज्ञानार्थं तल्लक्षणनिवेदनद्वारा तेषां पृथक्करणमत्यावश्यकमेव। तदिदं सर्वमपि विचारितमेव जैमिनिना प्रथमाध्यायद्वितीयपाद इत्यनूद्यते।

आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्
तस्मादनित्यमुच्यते १।२।१।

कृत्स्नस्यापि वेदस्य चोदनार्थनिरूपणपरत्वेन तदर्थरहितानामानर्थक्यमनुपयोगित्वम्, अतः तेषामनित्यत्वं नामाऽप्रामाण्यम्। इत्ययं पूर्वपक्ष एवाग्रेऽपि प्रपञ्चितः।

शास्त्रदृष्टविरोधाच्च १।२।२।

शास्त्रस्थैरेव कैश्चिद्वचनैः प्रत्यक्षार्थेन च विरुद्धं वेदवाक्यमप्यप्रमाणमेव। तथा फलाभावात् १।२।३।

शास्त्रोक्तफलसम्पादनाऽसमर्थमपि वाक्यमप्रमाणमेव।

अन्यानर्थक्यात् १।२।४।

अन्यासां क्रियाणामानर्थक्यप्रतिपादकं वेदवचनमप्यप्रमाणमेव।

अभागिप्रतिषेधाच्च १।२।५।

यस्य प्रतिषेधो नापेक्षितस्तस्य प्रतिषेधबोधकं वचनमप्यप्रमाणमेव। अस्योत्तरम्—

विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः १।२।६।

तुल्यं च साम्प्रदायिकम् १।२।७।

तानीमानि पूर्वोक्तानि वचनानि न हि सर्वथाऽप्रमाणान्येव, किन्तु वाक्यार्थपरित्यागेन लक्षणया विधिस्तावकत्वेन प्रामाण्यमेव तेषाम्। स्तुत्यर्थपरैरेकवाक्यता तु सम्भवत्येव। किंच साम्प्रदायिकत्वं परम्परासम्प्रदायलभ्यत्वं सर्वेषां तुल्यमेवेति प्रमाणमप्रमाणमिति पृथक्करणं न साम्प्रतम्। एवं च स्तावकत्वमेवार्थवादत्वम्।

एवं च षड्भिः सूत्रैः पूर्वपक्षीयैरुक्तलक्षणयुक्तानि वाक्यानि स्तावकानीति सिध्यति। अत्र स्पष्टप्रतिपत्त्यर्थं क्रमश उदाहरणानि—

बौधायनस्मृतौ हि—तदभावे दशावरा परिषत्।

अथाप्युदाहरन्ति—चातुर्वेद्यं विकल्पी च अङ्गविद्धर्मपाठकः।

आश्रमस्थास्त्रयो विप्राः पर्षदेषा दशावरा॥ ९॥

पञ्च वा स्युस्त्रयो वा स्युरेको वा स्यादनिन्दितः।

प्रतिवक्ता तु धर्मस्य नेतरे तु सहस्रशः॥ १०॥

यथा दारुमयो हस्ती यथा चर्ममयो मृगः।

ब्राह्मणश्चानधीयानस्त्रयस्ते नामधारकाः॥ ११॥

यद्वदन्ति तमोमूढा मूर्खा धर्ममतद्विदः ।
तत्पापं शतधा भूत्वा वक्तॄन् समधिगच्छति ॥ १२ ॥
बहुद्वारस्य धर्मस्य सूक्ष्मा दुरनुगा गतिः ।
तस्मान्न वाच्यो ह्येकेन बहुज्ञेनापि संशये ॥ १३ ॥

अत्र हि दशत्रयोदशयोः परस्परं विरोधादेकेन स्तावकेन भवितव्यम् , एकेन च विधायकेन । नहि एको वा स्यादनिन्दितः, तस्मान्न वाच्यो ह्येकेन, इत्यनयोरविरोधः कथमपि सम्पादयितुं शक्यते । तस्मादेकस्य विधायकत्वमेकस्य स्तावकत्वं चाभ्युपेयम् । तत्र किंवा विधायकं किंवा स्तावकमिति विचारे त्रयोदशवचनमेव विधायकं पूर्वार्धोक्तहेतुपूर्वकत्वात्तस्य । न हि बहुद्वारो धर्मः सति संशये ह्येकेन निर्णेतव्य इत्यस्य युक्तत्वम् । दशमवचनन्तु पर्षद्घटकानां योग्यतासूचकम् । अत एव स्तावकं तत् । इदं च शास्त्रविरोधादर्थवादस्योदाहरणम् । दृष्टविरोधेऽपि—

वसिष्ठः—राजा तु धर्मेणानुशासन् षष्ठं षष्ठं धनस्य हरेत् अन्यत्र ब्राह्मणात् । इष्टापूर्तस्य च षष्ठमंशं भजति । इति ह ब्राह्मण आपद उद्धरति, तस्माद्ब्राह्मणोऽनाद्यः, सोमोऽस्य राजा भवतीति । अत्र हि ब्राह्मणस्य सोमराजकत्वं प्रतिपाद्यते । नैतावता ब्राह्मणस्य सोमेनैव दण्ड्यत्वं न तु राज्ञा मनुष्येणेति वाच्यार्थो ग्रहीतुं शक्यते । दृष्टविरोधात् । तस्मात् ब्राह्मणकृतस्येष्टापूर्तस्य षष्ठमंशप्राप्तेर्ब्राह्मणोऽनाद्य इति विधिस्तावकमेव तत् ।

अन्यानर्थक्ये उदाहरणम्—मनुः—

ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोडशीम् ॥ अ० २।८६॥

अत्र यदि विधियज्ञैर्दर्शपौर्णमासादिभिः साकम् पाकयज्ञानां

वैयर्थ्यमेव जपयज्ञे न, तर्हि तृतीयाध्याये मनुनैव—वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि । पञ्चयज्ञविधानं च । इत्यनेन कर्मणः पञ्चयज्ञविधानस्य कर्त्तव्यत्वेनोक्तस्य सर्वथा वैयर्थ्यम् । अतो जपयज्ञस्य स्तुतिरेवेयमिति । अत एव 'स्वाध्याये नित्ययुक्तः स्याद्दैवे चैवेह कर्माणि' इति वचनेन वैश्वदेवस्य नित्यकर्तव्यतोक्ता मनुना संगच्छते । तस्मात् स्तावकमेवेदं जपयज्ञस्येति युक्तम् । किञ्च मनुरेव—तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलेन वा ।

दत्तेन मासं तृप्यन्ति विधिवत्पितरो नृणाम् ॥ ६७ ॥
द्वौ मासौ मत्स्यमांसेन त्रीन् मासान् हारिणेन तु ।
औरभ्रेणाथ चतुरः शाकुनेनाथ पञ्च वै ॥ ६८ ॥
षण्मासांश्छागमांसेन पार्षतेन च सप्त वै ।
अष्टावैणस्य मांसेन रौरवेण नवैव तु ॥ ६९ ॥
दशमासांस्तु तृप्यन्ति वराहमहिषामिषैः ।
शशकूर्मयोस्तु मांसेन मासानेकादशैव तु ॥ ७० ॥
संवत्सरन्तु गव्येन पयसा पायसेन च ।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ ७१ ॥
कालशाकं महाशल्काः खड्गलोहामिषं मधु ।
आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्वशः ॥ ७२ ॥ मनु० अ० ३ ।

अत्र हि नानाविधैर्मांसैरनेकधा तृप्तिर्दर्शिता । नैतावता मांसव्यञ्जनलोपः कर्तव्य इति मनोरभिप्रायः । किञ्च तत्रैवास्ति—पितृयज्ञन्तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ।

पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ॥ १२२ ॥
पितृणां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः ।
तच्चामिषेण कर्तव्यं प्रशस्तेन समन्ततः ॥ १२३ ॥ अ० ३ ।

इति मनूक्तं प्रथमावस्याश्राद्धं व्यर्थमेव स्यात् । अतस्तिलादि-पदार्थानां स्तावकान्येवेमानि वचनानि ।

तथैव—प्रत्यग्निं प्रतिसूर्यं च प्रतिसोमोदकद्विजान् ।
प्रतिगां प्रतिवातं च प्रज्ञा नश्यति मेहतः ॥ ४।५२ ॥

अत्र श्लोकेऽग्न्यादीनां सम्मुखं विण्मूत्रोत्सर्गकारिणः प्रज्ञानाशो भवतीत्युक्तम् । परं च न तादृशां प्रज्ञानाशो कदाचिदपि दृश्यते । अतः प्रत्यग्न्यादि विण्मूत्रोत्सर्गो न करणीय इत्यस्य विधेः स्तावकमेवेदं वचनम् । तथैव वशिष्ठस्मृतावपि—विज्ञायते हीन्द्रस्त्रिशीर्षाणं त्वाष्ट्रं हत्वा पाप्मगृहीतो महत्तमाधर्मसम्बद्धोऽहमित्येवमात्मानमन्यत । तं सर्वाणि भूतान्यभ्याक्रोशन् । भ्रूणहन् भ्रूणहन् भ्रूणहन्निति । स स्त्रिय उपाधावत् । अस्यै मे भ्रूणहत्यायै तृतीयं भागं प्रतिगृह्णीतेति गत्वैवमुवाच । ता अब्रुवन् ऋतौ प्रजां विन्दामहा इति । काममाविजानीमोऽस्तं भवाम इति । तथेत ताः प्रतिजगृहुस्तृतीयं भ्रूणहत्यायाः । सैषा भ्रूणहत्या मासि मास्याविर्भवति । तस्माद्रजस्वलाया अन्नं नाश्नीयात् ।

अत्र हि वृत्रवधान्नतरं ब्रह्महत्याजनितपातकेन लोकापवादेन च संत्रस्त इन्द्रस्तस्य पातकस्य प्रतिग्रहार्थं स्त्रीर्याचितवान्, ताभिश्च कोऽत्रास्माकमुपयोगोऽनेन प्रतिग्रहेणेति पृष्ट इन्द्रो वरप्रदानमनुज्ञातवान् । ताभिश्च याचितं सन्ततिलाभः । आप्रसवं पुरुषसम्भोगः, तस्मिन् सत्यपि कामपूर्तिर्मा भवतु इत्यादि । तथेत्युक्ते तृतीयमंशं ब्रह्महत्याया गृहीतवत्यः स्त्रियः । स एव खलु रजोरूपेण मासि मासि प्रदृश्यते । तस्मान्नाश्नीयाद्रजस्वलान्नमिति । को वाऽभिप्रायोऽस्य वृत्तस्य निवेदने । यो हि वृत्रवधादिकः प्रतीयते स एव वा, उत आप्रसवं स्त्रियं गच्छेदित्याहोस्वित् कश्चनाऽन्य

एव। तत्र विध्यर्थं प्रवृत्तस्य ग्रन्थस्यैतद्वृत्तनिवेदनेन न कोऽप्युपयोगः। नाप्यप्रसन्नं स्त्रियं गच्छेदिति विधिः, ऋतुकालाभिगामी स्यात् पर्ववर्जं स्वदारेषु, इति वचनविरोधात्। तस्माद्रजस्वलान्नं नाश्नीयादिति विधिस्तावकमेवेदं वृत्तान्तनिवेदनम्। अयमेवाम्नायस्य क्रियार्थत्वादित्यादिसूत्राणामर्थः। अभागिप्रतिषेधोदाहरणम्—'न पृथिव्यामग्निश्चेतव्यो नान्तरीक्षे न दिवि, इति। अत्राकाशेऽन्तरिक्षे वा कदाप्यग्निस्थापनमसम्भवीति न तन्निषेधस्यावश्यकता। यदि पृथिव्यां स्थापनस्य निषेधस्तर्हि अग्निचयनस्यैव निषेधः स्यात्; कुत्राप्यग्नेश्चयनासंभवात्। तस्मात् हिरण्यं निधाय चेतव्यमिति विधिस्तावकमेवेदं वाक्यम्।

एवं चोपरितनैः सूत्रैः षट्प्रकाराः स्तावकत्वे प्रदर्शिताः। अपरोऽप्येको वर्तते। तथाहि—

प्रकरणे हि सम्भवन्नपकर्षो न कल्पेत विध्यानर्थक्यं हि तम्प्रति।

एकस्मिन् प्रकरणेऽन्यस्य प्रकृतातिरिक्तस्य विधिर्न सम्भवतीति तत्र विधिवद् भासमानमपि वाक्यं स्तावकमेव। तथाहि—

यो विदग्धः स नैर्ऋतः, योऽशृतः स रौद्रः, यः शृतः स दैवतः, तस्मादविदहता श्रपयितव्यः सदेवत्वाय इति।

अत्र हि दर्शपूर्णमासप्रकरणे न रौद्रस्य वा नैर्ऋतस्य पुरोडाशस्य श्रपणविधिर्युक्त इति अविदग्धस्य देवप्रियस्य पुरोडाशस्य स्तावकमेवेदं वाक्यम्। एवमन्यान्यप्युदाहरणान्यूहनीयानि।

[कर्मणांकाम्यत्वनित्यत्वयोर्विचारः] अतः परं काम्यनित्ययोर्विचारः। को वा विधिः काम्यः, को वा नित्य इति कथं विजिज्ञासितव्यम्। यद्यपि जैमिनिना स्पष्टतया तद्विषये न लक्षणादिविचारणा कृता, तथाप्यनेकाधिकरणविचारेषु काम्यनित्यत्वाभ्यां विधि-

भेदो जैमिन्यभिप्रेतस्तत्र तत्र दृश्यते । स्पष्टत्वादेव न स्वातन्त्र्येण विचारः कृत इति भाति । तदेवम्—यस्य कर्तव्यता इच्छाधीना, तत्काम्यम्, यस्य तु नेच्छाधीनकर्तव्यताकत्वम्, तन्नित्यमिति तयोर्लक्षणम् । 'चित्रया यजेत पशुकामः' इत्ययं चित्रायागः इच्छाधीनानुष्ठेयताक इति काम्यः, इतरे तु नित्याः ।

स्वातन्त्र्येण विचारेऽपीदमेव सिध्यति । तथाहि— गीर्वाणभाषायां हि काम्यत्वनित्यत्वाभ्यां न क्रियापदस्य स्वरूपभेद इति क्रियापदेतरपदैरेव काम्यत्वं नित्यत्वं च बोध्यते । तानि च पदानि कामेच्छार्थादीनि । तथाहि, कामं वा स्वयं कृष्योत्पाद्य तिलान् विक्रीणीयात्, (वसिष्ठः अ० २) चित्रया यजेत पशुकामः, इत्यादिषु कामपदे काम्यत्वबोधकत्वम् । "युग्मासु पुत्रा जायन्ते स्त्रियो युग्मासु रात्रिषु । तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम्" इत्यत्र हि अर्थपदेन काम्यत्वं बोध्यते । एवं च यत्र खलु तादृशपदं तत्प्रायः काम्यमेव । यत्रापि न काम्यत्वनित्यत्वनिर्णयः, तत्र तु नित्यत्वमेवाङ्गीकर्तव्यम्, क्रियापरे वेदेऽनर्थकवाक्यासम्भवात् ।

एवमपि कामादिपदघटितं वाक्यं न सर्वथा काम्यविधिपरमेव, किन्तु कुत्रचित् कामनानित्यत्वे तद्विधेरपि सत्यपि कामादिपदघटितत्वे नित्यत्वमेव । तथाहि 'तस्माद्युग्मासु पुत्रार्थी इत्ययं विधिः सपुत्रस्य काम्योऽपि निःपुत्रस्य नित्य एव, तस्येच्छाया नित्यत्वात् । यथा वा अग्निहोत्रं जुहुयात्स्वर्गकामः । अत्र हि स्वर्गो नाम "स स्वर्गः सर्वान्प्रत्यविशिष्टत्वादि"ति सूत्रेण नित्यकामनाविषयसुखमेवेति तदर्थं बोधितो विधिरपि नित्य एव,सुखेच्छायाः सर्वजनसाधारण्येन नित्यत्वात् । एवं च यः स्वर्गकामः सः अग्निहोत्रं जुहुयादिति नार्थः, अपि तु यस्मात्पुरुषो नित्यमेव स्वर्गकामः, तस्मा-

न्नित्यमग्निहोत्रं जुहुयादिति। एवं चैतादृशां विधीनां नित्यत्वमेव।

अत्र च नित्यविधेरपरिपालनेऽतिक्रमे वा प्रायश्चित्तं दण्डो वा तत्र तत्र विधीयते। तथापि नायं नियमः, यन्नित्यकर्मातिक्रमणे दण्डप्रायश्चित्ताभ्यां भवितव्यमेवेति, किन्तु कुत्रचिदतिक्रमणे निर्णायकस्य कस्याप्यसम्भवेन तत्र रोचनोत्पादनमेव प्रशंसाद्वारा क्रियते। तथाहि इन्द्रियनिग्रहस्य नित्यत्वे सर्वसाधारणत्वेऽपि च तस्यातिक्रमणं क्रियेत न वेत्यत्र नियमेन निर्णयस्यासम्भवात्तस्य यथावदनुष्ठानार्थं प्राशस्त्यबोधनेन रोचनं क्रियते। किं च देवदत्तो यया परिस्थित्याऽतिक्रमणं करोति, न सैव यज्ञदत्तस्येति तत्र निर्णयः कथमपि न शक्यः। किं च नित्यातिक्रमे निसर्गादेव तात्कालिको दण्डो भवत्येवेति न तत्र दण्डप्रायश्चित्ताद्यावश्यकता। एवं च नित्यातिक्रमे दण्डप्रायश्चित्ताभ्यां भवितव्यमेवेति न नियमः, अपि तु रोचनादपि तदतिक्रमस्यासंभव इति यात्रच्छक्यं रोचनादेव प्रवर्तनीयमिति प्राचीनानां सिद्धान्तो युक्ततर एव। तदिदं सिद्धम्—यत् दण्डप्रायश्चित्ताभावेऽपि कुत्रचित् नित्यत्वम्, प्रायेण तदतिक्रमे दण्डप्रायश्चित्तादिकं चेति इति।

[ प्राकृतप्रबन्धसमालोचनम् ] अस्मिन् हि प्रबन्धे सुखसाधनं धर्मलक्षणमिति श्रेयःशब्दस्य सुखवाचकत्वमिति च यन्निरूपितम्, न तत्र कस्यापि विप्रतिपत्तिः। श्रेयःशब्दव्युत्पादनप्रकारः परं वैयाकरणप्रक्रियाविरुद्धः। श्रेयस् 'शब्दो हि 'प्रशस्यस्य श्रः' इति आदेशे ईयसुनि प्रत्यये च पाणिनिना सम्पादितः, न तूक्तप्रकारेण। सर्वथा त्वर्थविषये न फलभेद इति न दोषः। अत्र सुखसामान्यवचनस्यापि निःश्रेयसशब्दस्य प्रमाणान्तरेण क्वचित् पारलौकिकत्वं

क्वचिदैहिकत्वं च लभ्यते, न हि वयमपि पारलौकिकम् सुखमेव निश्रेयसशब्दमुख्यार्थ इति मन्यामहे, यदि निश्रेयसशब्देनाभ्युदयलक्षणमेव सुखं विवक्ष्यते। शङ्करभगवत्पादास्तु निश्रेयसलक्षणं अभ्युदयलक्षणं चेत्युपासनाख्यं धर्मं विभजमानाः निश्रेयसशब्देन शरीरविनाशानन्तरं कालान्तर उपभोग्यम् परमपुरुषार्थमेव मन्यन्ते इति सर्वविदितमिदम्। तन्मतं तु यद्यनुस्त्रियते, तर्हि निश्रेयसशब्देन पारलौकिकं सुखमेव विवक्ष्यत इत्यकामेनाप्यूरीकर्तव्यम्, तत्र धर्मसाध्यस्य शङ्करभगवत्पादसम्मतस्य निश्रेयसशब्दार्थस्याप्रसिद्धत्वेप्युच्चतमं सुखं धर्मसाध्यमेवेत्यत्रापि न कस्यापि विवादः। इदमेव त्वत्र समालोचनीयम्—यदनुच्चतममपि सुखं धर्मसाध्यं वा न वेति।

[ सुखस्य धर्मसाध्यत्वम् ] वयन्तु मन्यामहे—सर्वं खलु सुखं नीचमुच्चतमं वा धर्मसाध्यमेव। अत एव पशुपुत्रस्वर्गादीनां सर्वेषां धर्मसाध्यत्वमुपपद्यते। तत्र च साधारणं सुखं पशुपुत्रादिकमिहैतच्छरीरावच्छेदेनाप्युपभोगयोग्यं भवति, स्वर्गादिकन्तु नैतच्छरीरावच्छेदेनोपभोग्यम्भवति। पशुपुत्रादिकमपि हि नेहैवोपभोग्यमिति नियमः। तथाच शरीरान्तरावच्छेदेनोपभोग्यानां धर्मफलानां तत्साधनानां च सम्बन्धो नैकशरीरावच्छेदेनावगन्तुमलमिति मनुष्यबुद्धिपरिकल्पितत्ववादोऽयं वेदानां नोपपन्न इति पश्यामः। पारलौकिकस्यापि हि सुखस्य मनुष्यबुद्धिगम्यत्वं हि नास्माकमपि विप्रतिपन्नम्। इदमेवात्र वयं विरुद्धं मन्यामहे—यदेकशरीरावच्छेदेनैव सर्वेषां धर्मफलानामनुभव इति। शरीरान्तरावच्छेनोपभोग्यत्वमेव धर्मफलस्य पारलौकिकत्वम्। तथाच किमर्थं वा पारलौकिकसुखावबोधकानां वचनानां स्तुत्यर्थत्वव्यवस्थापनम्? न हि प्रकृतनिबन्धका-

रैरपि सर्वस्यापि धर्मस्यानुष्ठीयमानस्य फलमिहैवोपभोग्यमिति वक्तुं पार्यते। तथाचैहिकपारलौकिकादिसर्वविधसुखसाधनत्वमेव धर्मलक्षणमित्यवश्यमूरीकर्तव्यम्।

[निःश्रेयसस्य सिद्धत्वनिरासः] इदं च निःश्रेयससाधनत्वं यथा न प्रत्यक्षानुमानगम्यम्, तथा पूर्वमेव विवेचितम्। साध्यसाधनभावो हि क्रियाफलयोर्न सर्वदा सिद्धो वर्तते। क्रिया हि साध्या न सर्वदा वर्तते। पुरुषकृतिसाध्या हि सा कृत्यनन्तरमेवात्मानं लभते, न तु ततः पूर्वम्। तदुक्तं समन्वयसूत्रे शङ्करभगवत्पादैः--"कर्मकाण्डे भव्यो धर्मो जिज्ञास्य" इति। तथाच क्रियाफलस्य स्वर्गादेः सिद्धत्वेऽपि न तयोः सम्बन्धः सिद्ध इति न तस्य प्रत्यक्षगम्यत्वं सम्भवति। वस्तुतस्तु क्रियाफलमपि हि जन्यं न क्रियातः पूर्वं सिद्धम्भवतीत्येव सर्वसंमतः सिद्धान्तः। एतेन—कर्मफलं हि भूतवस्तु कर्तुमकर्तुमन्यथा कर्तुमशक्यमिति सिद्धान्तः—परास्तः। न हि कर्मफलं भूतवस्तु। तदुक्तं शङ्करभगवत्पादैः-"अभ्युदयफलं धर्मज्ञानम्, तच्चानुष्ठानापेक्षम्, निःश्रेयसफलन्तु ब्रह्मविज्ञानं न चानुष्ठानान्तरापेक्षम्। भव्यश्च धर्मो जिज्ञास्यो न ज्ञानकालेऽस्ति, इह तु भूतं ब्रह्म जिज्ञास्यं नित्यत्वान्न पुरुषव्यापारतन्त्रम्" इति। तथाच न वयमपि भूतस्य वस्तुनः प्रमाणान्तरगम्यत्वं वारयामः। इदमेवात्र वयं वदामः—यत्कर्मफलं न भूतं नित्यं वा ब्रह्मवदिति। एतेन—"परिनिष्पन्ने वस्तुनि प्रमाणान्तराणामस्त्यवकाशः" इत्यादिप्रकृतप्रबन्धोद्धृतशाङ्करभाष्यमपि नास्माकं प्रतिकूलमिति--सूचितम्। यथाच शङ्करभगवत्पादा अपि—धर्माधर्मनिर्णयो नानुभवानुमानगम्यः, किन्तु श्रुत्येकसमाधिगम्यः—इति निरूपयन्ति, तथा पूर्वमेव विवेचितम्। अत्रापि प्रकरणे शङ्करभगव-

त्वादाः—न तु धर्म इव ब्रह्मण्यध्यनपेक्ष आगमो भवितुमर्हति ? भवेदयमुपष्टम्भो यदि प्रमाणान्तरानवगाह्यः आगममात्रप्रमेयोऽयमर्थः स्यात्, अनुष्ठेयरूप इव धर्मः। परिनिष्पन्नरूपन्तु ब्रह्माऽवगम्यते—इति वाक्यानन्तरं खलु "परिनिष्पन्ने वस्तुनि" इत्यादिकं वाक्यं प्रयुञ्जते। अत्र चेदं स्पष्टमेव प्रतिपाद्यते भगवत्पादैरेव—यद्धर्मविषये तस्यापरिनिष्पन्नरूपत्वान्नानुभवानुमानयोरपेक्षास्तीति, प्रकृतप्रबन्धकाराः किमिति भाष्याशयविरुद्धमेव मतं भाष्यारूढतया बोधयन्तीति न वयं जानीमः। यथाच कपिलादीनामपि विना चोदनां न धर्माधर्मज्ञानम्, तथा पूर्वमेव विवेचितमिति पुरुषबुद्धिपूर्वकत्वं चोदनानामप्रमाणमेव, न प्रमाणान्तरजन्यो वेदार्थानुभव इति हि सर्वास्तिकदार्शनिकसम्मतमिदम्। नैयायिकमते हि नेश्वरानुभवो नित्यः प्रमाणजन्य इत्यादि पूर्वमेव विवेचितम्।

[धर्मस्य सर्वेषु द र्शनेषु चोदनामा त्रगम्यत्वमेव]

यत्तु धर्मेऽस्मदादीनां चोदनामात्रमूलक एव निर्णयो युक्तः, तत्र च शब्द एव प्रमाणमिति चोक्तम्, तदिदं यद्यप्यस्मद्दृष्ट्या सर्वथा वेदार्थपरिवर्तनायोगस्य धर्मव्यवस्थायाश्च तेषामपि सम्मतत्वात् नेदानींतनवेदापौरुषेयत्वसिद्धान्तदृष्ट्या फलतो विरुद्धम्। एवमपि मनुष्यबुद्धिपूर्वकत्वं प्रथमत उपपाद्यानन्तरं चोदनामात्रमूलकत्वमुपपाद्यत इति विरुद्धमिदं वचनमित्यत्र न विशयलेशोऽपि। न ह्येकं वस्तु पुरुषभेदेन प्रत्यक्षमेव, पुरुषभेदेन च परोक्षमेवेत्यादि कल्पनं प्रामाणिकम्भवति। जैमिनिर्हि 'चोदनालक्षणो धर्मः, इति सर्वदृष्ट्या चोदनालक्षणत्वं प्रतिजानीते, नास्मदादिदृष्ट्या। अतः पूर्वाचार्याणां केषांचनानुभवो धर्माधर्मयोरासीदित्यादिकल्पना निरालम्बनैव। "सूक्ष्मो हि भगवा-

धर्मः परोक्षो दुर्विचारणः। अतः प्रत्यक्षमार्गेण व्यवहारगतिं नयेत्” इति नारदवचनन्तु सर्वेषामाचाराणां विरुद्धानां स्मृतीनां वा समूलप्रत्यक्षदर्शनं विना न प्रामाण्यमित्यभिप्रायमेव। इदमेवाभिप्रेत्य कुमारिलपादा अपि विरोधाधिकरणे सर्ववेष्टनस्मृतेर्यात्रत् श्रुतिदर्शनमननुष्ठानलक्षणमप्रामाण्यमिति विवेचयन्ति। अत एव “श्रुतिः स्मृतिः सदाचारः” इत्यादौ श्रुतेरेव प्रथमप्रमाणतया निर्देश उपपद्यते। अन्यथा हि पुरुषबुद्धिकल्पितत्वे श्रुतीनां प्रथमप्रमाणतया श्रुतेरपि मूलभूतं प्रमाणान्तरं खलु प्रथमतो निर्देष्टव्यं स्यात्। न चैतन्निर्दिष्टमस्ति। अतोऽवगम्यते न प्रमाणान्तरमूलकत्वं श्रुतेरिति। अत एव वेदस्य श्रुतिरिति व्यपदेशः। श्रुतिशब्देन श्रवणमात्रं वेदस्य, न तु तदर्थानुभव इति गम्यते। अन्यथा हि वेदस्यापि स्मृतिशब्देन व्यपदेश आपद्येत। मन्वादिस्मृतीनां हि श्रुतिजन्यतदर्थानुभवमूलकानां स्मृतित्वव्यपदेशो हि प्रमाणान्तरमूलकत्वमेव गमकम्, नान्यत्किमपि। युक्तं चैतत्—यदि ब्रह्म प्रत्यक्षानुमानगम्यमपि भवति, तत्रापि प्रथमं प्रमाणं वेदान्त एव, तदुक्तं “तन्त्वौपनिषदम् पृच्छामि” इति, तर्हि कथं वा धर्मस्य प्रत्यक्षादिप्रमाणान्तरमूलकत्वम्, न हि दृष्टफलं यत्र साध्यसाधनभावोऽपि प्रत्यक्षगम्यो वर्तते, तदिदं धर्मशब्दव्यवहारयोग्यं भवति। नहि भोजनादिकं धर्मः, अन्यथा तु सुरापानादिकमपि तात्कालिकतृप्तिविशेषादिसाधनं न कथं धर्मः स्यात्? यत्तु “प्राङ्मुखोऽन्नानि भुञ्जीत” इत्यादि वचनम्, तदपि प्राङ्मुखत्वादिनियमपरमेव। तत्र हि नियमस्य न दृष्टं फलमिति सर्वविदितम्। तथाच यत्र साध्यसाधनभावो न प्रत्यक्षादिगम्यस्तत्रैव धर्मशब्दव्यवहारः, कारीर्यादावपि हि साध्यसाधनभावो न प्रत्यक्षगम्य इति पूर्वमेव विवेचितम्।

[लौकिक चोदनानां चोदनापदेनाग्रहणम्] एतेन—चोदनालक्षणोऽर्थो धर्म इत्यत्र लौकिकचोदनाया अपि ग्रहणमिति—प्रत्युक्तम्। न हि लौकिकचोदनाया धर्मप्रमाणत्वम्। अत्रेदं विचारणीयम्—लौकिकचोदनापदेन कस्य ग्रहणम्? किं केवलदृष्टार्थभोजनादिविधेरुत तत्तत्कालविशेषाद्यनुसारेण धर्मज्ञसम्पादितचोदनाविशेषाणाम्? नाद्यो दत्तोत्तरत्वात्। द्वितीये तु धर्मज्ञानां धर्मव्यवस्थापकत्वं शास्त्रानुसारेणैवेति न तस्य लौकिकचोदनात्वम्। तथाच सर्वासामपि चोदनानामैश्वरत्वादपौरुषेयत्वाद्वा तस्या लौकिकत्वालौकिकत्वाभ्यां विशेषो न प्रमाणमिति सिद्धम्।

[चोदनायाः पूर्णत्वापूर्णत्वादिनिरासः] एतेन—चोदनायास्तत्तत्स्वरूपनिर्मातुरपूर्णत्वेऽपूर्णत्वं पूर्णत्वे पूर्णत्वमित्यादि व्यवस्थापि—परास्ता। न हि निःश्रेयसलक्षणधर्म एवेश्वरचोदनाचोदित इति कल्पनायां किमपि प्रमाणमस्ति। ये खलु नैयायिका ईश्वरकृतत्वं चोदनाया ऊरीकुर्वन्ति, ते हि न तस्य निराकारत्वमूरीकुर्वन्ति।

[उक्तविषये चिन्तामणग्रायुपष्टम्भः] तदुक्तमनुमानचिन्तामणौ जागदेश्याम्—नन्वशरीरात्कथं वेदघटादिशब्दव्यवहारसम्प्रदायः? उच्यते, सर्गादावदृष्टोपगृहीतभूतभेदान्मीनशरीरोत्पत्तौ अदृष्टवदात्मसंयोगात् अदृष्टसहकृतप्रयत्नवदीश्वरसंयोगाद्वा सकलवेदार्थगोचरज्ञानोद्विवक्षासहितान्मीनकण्ठताल्वादिक्रिया तज्जन्यसंयोगाद्वेदोत्पत्तिः। एवं कुलालादिशरीरावच्छेदेनाऽदृष्टसहकृतप्रयत्नवदीश्वरसंयोगात्तद्बुद्धीच्छासहितात् प्रयत्नोत्पत्तौ सकलघटानुकूलव्यापाराद् घटोत्पत्तिः। एवं प्रयोज्यवृद्धप्रयोजकवृद्धभावादिमच्छरीररूपावच्छेदेनाऽदृष्टसहकृतेश्वरज्ञानेच्छाप्रयत्नादेव वाग्व्यवहारः। ततस्तद्दर्शी बालो व्युत्पद्यते। सोऽयं भूतावेशन्यायः। यत्तु

यथा लिप्यादिना मौनिश्लोकमनुमाय पठति, तथा सर्गान्तरोत्पन्न तत्त्वज्ञानवता भोगार्थं सर्गादावुत्पन्नेन मन्वादिना सर्वज्ञेश्वराभिप्रायस्थो वेदः साक्षात्कृत्याऽनूद्यते, ततोऽग्रिमसम्प्रदायः। स एव च कायव्यूहं कृत्वा घटादिवाग्व्यवहारं प्रवर्तयतीति मतम्। तन्न। प्रतिसर्गाद्यनन्तसर्वज्ञकल्पनायां गौरवात्, तेषामेव क्षित्यादिकर्तृत्वसम्भवेनेश्वराननुमानाच्च। एतेन—सर्गादौ सर्गान्तरसिद्धयोगिन एव क्षितिकर्तारः सन्त्विति—परास्तम्। सर्गदावनन्तसर्वज्ञसिद्धिश्च किं प्रमाणान्तरात्, क्षित्यादिकर्तृग्राहकाद्वा। नाद्यः तदसम्भवात्। नान्त्यः अनादिद्व्यणुकादिकार्यप्रवाहस्य सकर्तृकत्वानुमानाल्लाघवसहकृतादेकस्यैव सर्वज्ञस्य सिद्धेः। अथेश्वरज्ञानमूलकशब्दशक्तिग्रहे प्रयोज्यव्यापारानुमितघटज्ञाने घटशब्दस्य कारणत्वग्रहो भ्रमः स्यात्, तदीयज्ञानस्य नित्यत्वात्। तथाच तज्जन्यघटशब्दशक्तिग्रहस्य भ्रमत्वेन सकलशब्दज्ञानम् भ्रमः स्यात्, भ्रमपरम्परामूलकत्वात्। अनित्यसर्वज्ञमूलकशब्दग्रहे च नायं दोष इति चेत्, न, व्यापारानुमितमिदं घटज्ञानं घटपदजन्यमिति ज्ञानस्य शब्दशक्तिग्रहकारणस्य भ्रमत्वेऽपि घटपदं घटशक्तमिति ज्ञानस्य यथार्थत्वात् विषयाबाधात्। न च भ्रममूलत्वेनाऽस्य भ्रमत्वमनुमेयम्। तदंशे व्यधिकरणप्रकाराभावेन बाधात् बाधितविषयत्वस्योपाधित्वाच्च। अत एव घटमानयेति शब्दानन्तरं सूत्रसञ्चाराधिष्ठितदारुपुत्रकस्य घटानयनव्यवहारदर्शनात् बालो घटपदे व्युत्पद्यते। तन्मूलकशाब्दज्ञानमपि न भ्रमः, तस्यापि भ्रमत्वे प्रयोज्यव्यवहारादिदानीं व्युत्पत्तिर्न स्यात्, किमयं प्रयोज्यश्चेतनव्यवहारात् व्युत्पन्नोऽचेतनव्यवहाराद्वेति संशयस्य वज्रलेपायमानत्वादिति। "विश्वतश्चक्षुरुत विश्व-

तो मुखो विश्वतो बाहुरुत विश्वतस्पात्। सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः": इत्यादि श्रुतयः, "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः" इत्यादिस्मृतयश्च मानत्वेनानुसन्धेया इति।

तथैव न्यायकुसुमाञ्जलौ पञ्चमस्तबकेऽपि—ननु व्यवहारयितृवृद्धः शरीरी समधिगतः, न च ईश्वरस्तथा, तत्कथमेवं स्यात्? न, शरीरान्वयव्यतिरेकाऽनुविधायिनि कार्ये तस्यापि तद्वत्त्वात्। गृह्णाति ह्यीश्वरोऽपि कार्यवशाच्छरीरमन्तराऽन्तरा, दर्शयति च विभूतिमिति। अत्राप्यागमः—

पिताऽहमस्य जगतो माता धाता पितामहः॥

तथा,—यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः।

मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः॥

उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्॥ इति॥

एतेन—नमः कुलालेभ्यः कर्मारेभ्य—इत्यादि यजूंषि बोद्धव्यानि॥ इति॥

[ उक्तविषये बौद्धाधिकारोपष्टम्भः ]

बौद्धाधिकारे तु अशरीरत्वेपीश्वरस्य सर्वज्ञत्वं संप्रदायप्रवर्तकत्वं च वर्तत इति निरूपणापूर्वकं महाजनपरिग्रहात् वेदप्रामाण्यमूरीकर्तव्यमिति विवेचितम्। तद्यथा,—

"प्रामाण्यन्तु तस्य कुत इति चेत्, आप्तोक्तत्वात्। तदसिद्धमिति चेन्न, विश्वस्य कर्तुरनुमानसिद्धत्वात्। विवादाध्यासितं सकर्तृकं कार्यत्वात्। विशेषविरुद्धोऽयं हेतुरिति चेत्, न, विरोधिविशेषाप्रतीतौ विरोधस्य प्रत्येतुमशक्यत्वात्, तत्प्रतीतौ वा सहोपलम्भनियमेन विरोधस्य बाधितत्वात्। सर्वथैवाप्रतीतस्याभिप्रायगोचर-

त्वमपि कथमिति चेन्न, स्वार्थानुमानसिद्धत्वात्। ततोऽपि कथं सिध्यत्विति चेत्, अप्रतीते प्रत्यायकं प्रमाणम्, न त्वप्रतीतेन विरोधः शक्यनिश्चय इत्यतो विशेषात्। का पुनरनुमानस्यैवंभूतप्रत्यायने शक्तिरस्तीति चेत्, आकांक्षानुपपत्तिनियमभेदेन त्रिविधः सम्बन्धः, तत्राकाङ्क्षानियमाभ्यामन्वयोऽनुपपत्तिनियमाभ्यां व्यतिरेकीति विभागः। अस्तु तर्हि सत्प्रतिपक्षत्वं शरीराजन्यत्वादिति चेन्न, असमर्थविशेषणत्वेनासिद्धभेदस्यातुल्यबलत्वात्। असिद्धिपरिहारे विशेषणं समर्थमिति चेन्न, एकामसिद्धिं परिहरतो द्वितीयापत्तेः। अन्यथा विवादाध्यासितं नादृष्टहेतुकं शरीराजन्यत्वादित्यनेनापि जन्यत्वस्य सत्प्रतिपक्षत्वप्रसङ्गादिति। तर्हि तर्कापरिशुद्धिरस्तु दूषणम्, शरीरनिवृत्तौ बुद्धिनिवृत्तेः। बुद्धिनित्यत्वे शरीरानुपयोगवद्वा प्रयत्ननित्यतायां ज्ञानेच्छानुपयोगादिति चेन्न, प्रयत्नस्य द्विधर्मकत्वात्। स हि ज्ञानकार्यो ज्ञानैकविषयश्च। कर्तृत्वे तत्र कार्यत्वनिवृत्तौ कारणतया ज्ञानं मापेक्षिष्ट। विषयार्थन्तु तदपेक्षा केन वार्यते ? न वाऽस्य स्वरूपेणैव विषयप्रवणत्वम्, ज्ञानत्वप्रसङ्गात्। अयमेव हि ज्ञानात्प्रयत्नस्य भेदो यदयमर्थाप्रवण इति। न च निर्विषय एवास्त्विति वाच्यम्। अकारणत्वप्रसङ्गात्। तथाच सोप्येकः कथं सिध्येत ? मा सेत्सीदिति चेन्न, तत्र साधनस्य निर्दोषत्वात्। दोषे वा स एव वाच्यः, सर्वविषयत्वात्। तस्य किं विषयनियमार्थेन ज्ञानेनेति चेन्न, तस्य स्वरूपेणार्थाप्रवणत्वाभावात्, भावे वा ज्ञानत्वप्रसङ्गादित्युक्तम्। जीवनयोनिप्रयत्नवद्विषयव्यवस्था भविष्यतीति चेन्न, जात्यन्तरत्वात्। एकजातीयत्वे तस्यापीच्छापूर्वकत्वप्रसङ्गात्, इच्छाया वा तत्कारणत्वं न स्यात्, तामन्तरेणापि तज्जातीयस्योत्पत्तेः। तस्मात्कृतिजातीयस्य

ज्ञानेच्छाभ्यामेव सविषयव्यवस्था, स च साधयितुमीष्ट इति। तार्किकगर्ववाहस्त्वाह—ननु सपक्षविपक्षयोर्दर्शनादर्शनमात्रस्य शतशः प्रवृत्तावपि व्यभिचारोपलम्भात् तल्लक्षणस्यानुपलब्धव्यभिचारस्यापि तथाभावसंभावनाक्रान्तत्वात् लक्षणान्तरं प्रतिबन्धस्य वक्तुमुचितम्, तच्चोपाधिविरहो वा स्यात् तदुत्पत्तिर्वा, विपक्षे बाधकं वेति संक्षेपः। तत्र न प्रथमः, अदृश्योपाध्यभावनिश्चयोपायाभावात्, दृश्येनैवोपाधिना भवितव्यमिति च नियमानुपपत्तेः। नापि द्वितीयः, सा ह्यन्वयव्यतिरेकाभ्यां निश्चीयते। तौ च दृश्यशरीरवच्चेतननिष्ठौ वा स्याताम्, उपाधिविधुरदृश्यादृश्यशरीरचेतनमात्रनिष्ठौ वा। न प्रथमः, विटपादौ व्यभिचारात्, प्रकृतासिद्धेश्च। न द्वितीयः, घटादिकार्यव्यतिरेकसमये तत्प्रयोजककुलालव्यतिरेकवददृश्यचेतनमात्रव्यतिरेकस्य निश्चेतुमशक्यत्वात्। नहि कुलालादिदृश्यव्यतिरेके तस्यावश्यं व्यतिरेकः, विटपादावपि तथाभावप्रसंगात्। तर्हि सन्तानान्तरानुमानमपि कथं? कुम्भकारव्यतिरेके दृश्यादृश्यचिन्मात्रव्यतिरेकासिद्धिवत् स्वचित्तव्यतिरेकेऽपि कम्पं प्रति चिन्मात्रव्यतिरेकासिद्धेरिति चेन्न। वादान्तरत्वात्। यदापि तत्प्रस्तावः, तदापि स्वदेहे स्वपरसन्तानसाधारणचिन्मात्रविनिर्भागवृत्तिदृश्यदेहमात्रस्यैव प्रत्यक्षानुपलम्भाभ्यां कम्पं प्रति कारणत्वप्रतीतेः परचित्तस्यापि कारणत्वं प्रतीयत इति। नापि तृतीयः। विपक्षे बाधकाभावात्। देशकालनियमादीनां स्वकारणायातसन्निधिना कादाचित्केन प्रतिनियतशक्तिना कारणेनाचेतनेनाप्युपपत्तेरिति। उत्तानोल्लपितमेतत्। विकल्पत्रयस्याप्युपपत्तेः। तथाहि चत्वारो जातिभावा भवन्ति, विरोधी, बहिर्वृत्तिः सहवृत्तिरन्तर्वृत्तिश्चेति, न पञ्चमः प्रकारः कांक्षितुमपि शक्यते। विरोधाविरोधयोः

साहित्यासाहित्ययोराधिक्यानाधिक्ययोः परस्परनिषेधरूपत्वात्। तत्र द्वयमत्र नोपाधित्वेन शङ्कनीयम्। अकार्यस्यैवाऽकार्यस्यापि वा सकर्तृकत्वप्रसंगात्। न चेदमिष्टम्। अकार्यस्य कारणवत्तामात्रेण सहजविरोधे कारकविशेषस्य कर्तुरनवकाशात्। नापि तृतीयः। तुल्ययोगक्षेमयोरविशेषात्। व्यभिचारशङ्कानापादकत्वाच्च। चतुर्थस्तु स्यात्। सोऽपि न शरीरान्तर्भूतवृत्तिः। चेष्टमानशरीरहेतुकस्यापि कस्यचिदचेतनपूर्वकत्वप्रसङ्गात्। न चेदमिष्टम्। चेष्टाचेतनयोरविनाभावभङ्गप्रसङ्गात्। नापि सहवृत्तिः। देहस्यानुपाधित्वे तस्याप्यनुपाधित्वात् तयोस्तुल्ययोगक्षेमत्वात्। अतथाभावे वा सहवृत्तिनियमानुपपत्तेः। शरीरस्य च नोपाधित्वम्। कर्त्रव्यापकत्वात्। तत्कार्यत्वस्योपाधेर्विद्यमानत्वात्, नाप्यायतनतया तथाभावः, भोगोपाधित्वात्। नाप्युपकरणप्रापकतया। साक्षात्प्रयत्नानधिष्ठेयतोपाधित्वात्। अन्यथापि तत्प्राप्तेरिति। नाप्यधिकवृत्तिः। शरीरं विना कृतस्य कर्तुः स्वयमनभ्युपगमात्। अस्तु पाक्षिकोऽभ्युपगमः। तेन न कार्यत्वमात्रात् कर्तृमत्त्वसिद्धिः, शंकितोपाधित्वात्। न चोपाधेरेव तत्सिद्धिः। तस्य स्वयं सन्दिग्धासिद्धत्वादिति चेन्न। उभयथाप्यशरीरिकर्तृव्यवस्थितिनियमात्। किन्तु कथञ्चिदुपाधिमादाय स व्यवतिष्ठताम्। यद्वा कार्यत्वमेवेति सन्देहः परिशिष्यते, गत्यन्तराभावादिति सोऽपि निवार्यते। न तावद्देहव्यतिरेकेऽनित्यज्ञानसम्भवः। तयोः कार्यकारणभावनियमात्। ततो नित्यं भवेत्, ततः सर्वविषयञ्च। नियतविषयताया अनित्यत्वेन व्यापनात्। विषयनियमस्य सामग्रीशक्तिसमवधानाधीनतया नित्यत्वात्। तस्याः स्वव्याप्यमुपादाय निवर्तमानाया अनित्ये विश्रामात्। सर्वगोचरे च ज्ञाने चिकीर्षाप्रयत्नयोरपि तथाभावात्। तदेकविषयत्वात्तयोः। तथा च

कंचिदुपाधिमादायाशरीरपूर्वकमपि किञ्चिदेव कार्यं कर्तृपूर्वकं भविष्यतीति शंकापिशाच्याः क्वावकाशः। एवमन्यत्राप्यनया दिशोपाधिशंका निराकरणीयेति निरुपाधिसम्बन्धसिद्धिः। त्रिपक्ष-संभवे च साधनप्रयुक्तसाध्यसद्भावसिद्धौ साध्याभावप्रयुक्तसा-धनाभावलक्षणस्य व्यतिरेकस्यापि सिद्धेः न तदर्थं पृथगपेक्षेति। द्वितीयेऽपि श्रवणसम्पुटमवधाय कलकलस्त्यज्यताम्। तथाहि दण्डादिषूदासीनेषु दृश्योऽदृश्यो वा कारकव्यापारा-विनिर्भागवृत्तिश्चेतनो निवृत्तो न वेति त्वमेव प्रष्टव्यः। न चेत्कुतः कारणान्युदासते। निवृत्तश्चेत् कथमदृश्यव्यतिरेकसंशयः? तथापि यादृशस्यान्वयः तादृशस्य व्यतिरेकोऽप्युपयुज्यत इति चे-त्कोऽत्र विप्रतिपद्यते? कारकप्रयोक्तुरुभयत्रापि तुल्यत्वात्। देही तादृश इति चेत्, कोऽस्यार्थः। किं देहद्वारैव कारकाणि प्रयुङ्क्ते चेतनः, आहो देहं प्रयुञ्जान एवेति। न पूर्वः, देहस्यापि कारकतया देहान्तरप्रयोज्यतायामनवस्थानात्। न द्वितीयः, विषशकलचाल-नादौ व्यभिचारात्। देहं धारयन्निति चेत्, सोऽयं देहो धार्यः किं कारकतया तत्कारकान्तरप्रयोगार्थम्, अथ स्वकर्मोपात्ततामात्रेण। प्रथमे न विरोधः, देहस्य क्वचित्कार्यकारकतयाऽधिष्ठाननियमात्। यत्र तु न तत्कारकम्, तत्रापि तदधिष्ठेयमिति कश्चेतनोऽभिदध्यात्। द्वितीयेऽपि यः साक्षादधिष्ठातुमशक्तः, स साक्षादधिष्ठेयमुपादाय तत् प्रयुञ्जीत, नत्वेकस्य साक्षादधिष्ठानायोगेऽन्यस्यापि तथेति नियमः, देह एव व्यभिचारात्। तृतीये त्वजागलस्तनकल्पः कायो नोपयुक्तांशविवेचने स्वं निवेशयति, यथा धूममात्रं प्रति दहनान्व-यव्यतिरेकयोरालोकवर्त्तेति। यदि चाकारकस्याप्यतत्प्रयोगद्वार-स्याप्यवश्यमपेक्षा स्यात्, य एव कुलालकायवान् कर्ता घटस्य, स

एव करभशरीरत्वानपि दण्डादीन् प्रयुञ्जीत। न खलु स्वकर्मोपात्ततामात्रेण करभकुम्भकारशरीरयोः कश्चिद्विशेषः। कार्यविशेषे कायविशेषोऽनुपयोग्युपेक्षणीय इति चेत्, तत्र कार्येऽनुपयुक्तश्चाप्यवश्यमपेक्षणीयश्चेति व्याघातः। अव्याघाते वा कुम्भे कर्तव्ये करभशरीरमप्यवश्यमपेक्षणीयमविशेषादिति। तस्मात् सन्दंशवदयःपिण्डे कारकतत्प्रयोजकतयैव शरीराधिष्ठाननियमो न तु शरीरत्वेनैव। न च शरीरस्य सर्वत्र कार्ये कारकत्वं तत्प्रयोजकत्वं वेति। एवं तर्हि न प्रतिनियतदेहाधिष्ठातृत्वसिद्धिः। अङ्कुरादिकारकाधिष्ठात्रापि तत्सिद्धेरिति चेन्न, वादान्तरत्वात्। यदापि तत्प्रस्तावः, तदापि न कार्यमात्रेण कारकाधिष्ठानमात्रेण वा तदनुमानम्, ततः कर्तृमात्रसिद्धेः, किन्तु दर्पभयशोकस्मितादिलिङ्गैस्तानुन्नीय तैर्भोक्तुरनुमानमिति न किंचिदेतत्। तृतीयेऽपीर्ष्याकषाये चक्षुषी निमील्य न्यायानुसारः श्रूयताम्। इह जगति नास्त्येव तत्कार्यं नाम, यत्कारकचक्रमवधीर्यात्मानमासादयेदित्यविवादम्। तच्च सर्वं चेतनोपहितमर्यादम्। अन्यथा तल्लक्षणव्यवस्थापकानुपपत्तेः। तथाहि--आधेयकारकोपहितमर्यादमधिकरणस्य रूपमाधारत्वात्, अपनेयापगन्तृकारकोपहितमर्यादञ्च स्वरूपमपादानस्य, तदवधित्वात्। करणीभूतकर्मोपहितञ्च रूपं सम्प्रदानस्य, तदभिप्रेयत्वात्। करणोपहितं च रूपं कर्मणः, तद्व्याप्यत्वात्। कर्त्रुपहितं च रूपं करणस्य, साक्षात्तद्व्यापारविषयत्वात्। समस्तकारकोपहितं च रूपं कर्तुः, तत्प्रयोजकत्वात्। ज्ञानचिकीर्षाप्रयत्नाधारत्वव्यवस्थितेश्च न चक्रकेतरेतराश्रयदोषः। एवं सति कर्तृव्यावृत्तेस्तदुपहितसीमसमस्तकारकव्यावृत्तावकारककार्योत्पत्तिप्रसङ्ग इति स्थूलप्रमादः। भवेदेवं यदि कर्त्रा कारणमात्रव्याप्तिः स्यात्। सैव तु कुत इति, चेत्, कुतः पुनरव्या-

त्तिः। न षड्भ्योऽन्यत् कर्त्रनुपहितं कारकमस्ति। न चैषामेव कर्त्रुप्रधानशून्यं लक्षणमस्ति। एकैकमपोह्य शेषतः कार्यसम्भावनायां सर्वापोहसम्भावनाप्रसंगात्। न च समस्तविशेषापोहे सामान्यस्थितिः। यतः षट्कारकव्यावृत्तावपि कारकमात्रतः कार्यप्रत्याशा स्यात्। एकप्रवृत्तौ तु सर्वप्रवृत्तिरप्रत्यूहेति शृङ्खलाबन्धेन व्यवस्थितेः। अथ मतं तवैवेयं प्रक्रिया, अस्माकन्तु कार्येण अविहितभावाभावं चेतनाचेतनं वा कारणमुच्यते। संहतौ तु सर्वं स्वप्रधानमुपादाने तद्व्यवस्था तु कथंचिदिति चेन्न। तथापि निरुपादानत्वप्रसंगात्, निर्निमित्तं वा प्रसज्येत। उपादानादेव तथाविधात्तदुपपत्तेः। न किंचित् यदेकमेकस्मात्। सामग्र्याः सर्वसंभव इति चेत्, कुत एतत्? निमित्तसहितस्योपादानस्य तद्धेतुत्वे निमित्तवैचित्र्येऽप्येकजातीयत्वप्रत्यक्षानुपलम्भाभ्यां कारणतावधारणादिति चेन्न, दृश्यमात्रविषयत्वात्तयोः। दृश्यत्वं तस्य कथञ्चिदविवक्षितमिति चेन्न, चेतनेऽपि तथा किं न स्यादिति। तस्मादुपादाननिमित्तयोर्यथा परस्परसहितयोरेव कार्यशक्तिस्तथा चेतनाचेतनयोरपीत्येकनिवृत्तावितरनिवृत्तिप्रसङ्गः। अपि च मृत्पिण्डदण्डादिषु स्वव्यापारे पारतन्त्र्यन्तावन्नियमेनोपलभ्यते। तदिदं दण्डादित्वमात्रानुबन्धं वा स्यात्, अदृष्टविशेषोपग्रहानुबन्धं वा, अचैतन्यमात्रानुबन्धं वेति निपुणं निरूपय। तत्र न प्रथमः, वेमादीनां स्वातन्त्र्यप्रसंगात्। तेषां वेमादित्वमात्रानुबन्धमिति चेन्न, दण्डादीनां स्वातन्त्र्यप्रसङ्गात्। न चैतत्कार्यविशेषनियतम्। गवाभ्याजनादौ दण्डादीनां स्वातन्त्र्यप्रसङ्गात्। न द्वितीयः, तस्य जातिविशेषानियतत्वे घटार्थमपि तेषां कदाचित् स्वातन्त्र्यप्रसङ्गात्। तन्नियतत्वे स एवोच्यताम्। न च घटपटशकटकटाहादिगतं दण्डवेमवासीसन्दंशादिगतं वा

सामान्यविशेषमुपलभामहे । अस्त्यसौ, यतः शरीरिकर्तृकत्वानुमानमिति चेन्न, घटत्वादेरेव तथाभावात् । अस्तु वा संस्थानविशेषः, न च स एवात्र निबन्धनम् , तस्याभावेऽपि जलानलादीनां चेतनप्रेर्यत्वदर्शनात् । न च शरीरप्रयोज्यं यत्तदेव चेतनप्रेर्यमिति नियमः, शरीरस्यैव स्वातन्त्र्यप्रसङ्गादित्युक्तप्रायम् । तस्मादचैतन्यमात्रनिबन्धनमेतद्दण्डादिषु । तथा च परमाण्वदृष्टादिष्वपि तस्य भावात्तथाभावो दुर्वारः । तदेतत्कार्यकारणत्वतया व्याप्तम् । सा च विपक्षेऽसम्भवन्ती स्वव्याप्यमुपादाय व्यावर्तमाना सपक्षे विश्राम्यतीत्युभयमुखी प्रतिबन्धसिद्धिः । कः पुनरयं प्रतिबन्धः, स्वाभाविकः सम्बन्धः । कः स्वाभाविकार्थः ? निरुपाधित्वम् । कः पुनरुपाधिः, साध्यप्रयोजकं निमित्तान्तरम् । किमस्य लक्षणम् ? साधनाव्यापकत्वे सति साध्यव्यापकत्वम् । कथं पुनरेवंलक्षणकोऽथः प्रत्येतव्यो निराकर्तव्यो वेति, विपर्ययाविरोधबाधकाभ्याम् । किं बाधकम् ? अन्वयव्यतिरेकोभयदर्शनसाहाय्यकमाचरन्ननुत्तरस्तर्कः । स चात्माश्रयेतरेतराश्रयचक्रकानवस्थानिष्टप्रसङ्गभेदेन पञ्चविधोऽपि क्वचिद्व्यभिचारं निराकुर्वाणः क्वचित्तन्निबन्धनमुपाधिमवधून्वन् सहायीभवतीति फलतो न कश्चिद्विशेषः । तदुदाहरणानि चात्रैव यथायथं परिच्चेयानीति । अथ न्यायदुर्बलस्य प्रतिबन्दीकरणं यदुतैवं शशविषाणस्यापि सिद्धिः स्यात्—न दृश्यमाननियतत्वात्प्रत्यक्षबाधस्य । न च दृश्यत्वनिवृत्तेरेव विषाणत्वनिवृत्तिः ; अव्यापकनिवृत्तावव्याप्यनिवृत्तेरयोगात् । विषाणगतकार्यत्वप्रयुक्तत्वाच्च दृश्यत्वव्याप्तेः । तेन तन्निवृत्तावपि नाकार्यस्य शृङ्गस्य निवृत्तिरिति । तच्च महार्थसिध्द्या कृतकृत्यस्य न परिश्रमाय, निष्प्रयोजनविषयत्वात् । तथापि सम्भावितस्याकीर्तिभिया नोपेक्षामर्हति प्रतिबन्दिरिति चेत्, तर्हि मा भैषीरियमुन्मो-

च्यते। तथा ह्यर्थतः स्वशिरःशृङ्गसाधनप्रवृत्त इदं प्रष्टव्यः। किं ते विषाणशब्देनान्यदेव किञ्चिदभिप्रेतं रोमादि विषाणजातीयं वा द्रव्यम्? प्रथमे सिद्धसाधनम्, लोकविरोधश्च, लोके तद्विपरीतस्यैवार्थस्य विषाणशब्देनाभिधानात्। द्वितीये त्वन्वयव्यतिरेकाभ्यां संस्थानविशेषकार्यत्वात् व्यवहारलक्षणायास्तदभिव्यक्तेः कथं तद्रहितेषु परमाण्वादिषु तत्सम्भवः? सम्भवे वा कथं न तत्र घटत्वादिकमपि। ओमिति ब्रुवतः कथं न जातिसंकरप्रसंगः? कारणं विना कार्यसम्भवप्रसंगो वा? न वाऽन्वयव्यतिरेकौ कार्यकारणाभावे प्रमाणमिति सर्वं समाकुलमेवाकुलमतेः। तस्मादतीन्द्रियं नित्यं वा विषाणमेव न भवति। यच्च विषाणं तत्प्रत्यक्षबाधितमेव। कुतस्तदनुमानावकाशः? एवं तर्हि नित्यं ज्ञानमित्यपि व्याहतम्, इन्द्रियादिविकारमात्रव्यक्तिमात्रव्यङ्ग्यत्वात्, ज्ञानत्वसामान्यस्येति-चेन्न, अतद्भावत्वात्, अतदाक्षेपकत्वाच्च। न हि मातृत्वस्य वन्ध्यात्ववत् नित्यत्वस्याभावो ज्ञानत्वम्। अचेतनानामपि चेतनत्वप्रसंगात्। नापि नित्यत्वं ज्ञानत्वाभावमाक्षिपेत्, ज्ञानत्वेनाविरोधात्, विरोधमूलस्य विपक्षे बाधकस्याभावात्। दर्शनादर्शनयोश्चार्थप्रवणत्वाप्रवणत्वोपाधिग्रस्तत्वात्, रूपत्वानित्यत्वयोश्चक्षुर्मात्रग्राह्यव्यक्तित्वात्। न चेन्द्रियादिविकारो ज्ञानत्वाभिव्यक्तिहेतुः। अर्थप्रवणव्यक्तिमात्रस्यैव तन्निरपेक्षस्य तथाभावात्। एतदनपेक्षस्य तस्यातिप्रसञ्जकत्वादिति।

अथ क्षुद्रोपद्रवाः। केवलस्य कर्तृत्वे विश्वस्य वैश्वरूप्यव्याघातः सततोत्पत्तिप्रसङ्गः, अदृष्टापेक्षायां कल्पनागौरवम्। तत एव तदुत्पत्तेः। स्वार्थं प्रवृत्तावनीश्वरत्वप्रसंगः। परार्थं प्रवृत्तावदुःखमयसर्गप्रसंगः। एवमेव प्रवृत्तावचैतन्यम्। एकत्वे

प्रमाणाभावः। अनेकत्वे त्वसार्वज्ञ्यम्। प्रतिनियतसामग्रीविज्ञत्वादित्येवमादयः। तत्र कारणचक्रस्यैकदेशमुपादाय शेषवैयर्थ्यप्रसञ्जने सर्ववैयर्थ्यप्रसङ्गः। अन्वयव्यतिरेकाभ्यां सिद्धकारणभावस्य न वैयर्थ्यमिति चेत्, अनुमितकारणभावस्याप्येवं प्रमाणसिद्धत्वाविशेषात्। यच्च यदनुगुणत्वेन कल्पितम्, तस्य तेनैव विफलीकरणे सर्वत्रादृष्टमुपादाय दृष्टवैफल्यप्रसङ्गः। तथाच तदपि न स्यात् प्रमाणाभावात्। दृष्टेन ह्यदृष्टमुन्नीयते। परार्थं च प्रवृत्तिः, स्वार्थाभावात्। न च दुःखसृष्ट्या कारुण्यापवादः, जनकाध्यापकचिकित्सकादिषु व्यभिचारात्। अथ दौर्जन्यादेव किन्नैवमिति चेन्न, दोषाभावात्, तदभावश्च मोहाभावात्, तदभावोऽपि सर्वज्ञत्वादिति। एकद्व्यणुककारी च परमाणुमदृष्टमुपकार्यं त्र्यणुकादिभोगपर्यन्तं द्रव्यादिपदार्थषट्कं च जानाति नूनमित्यविवादम्। एषामुपादानादिरूपत्वात्। अवच्छेद्यावच्छेदकभावापरिज्ञानेन चोपादानादिपरिज्ञानानुपपत्तेः। यश्च यज्जातीयमेकं कर्तुं ज्ञातुं वा समर्थः, स तज्जातीयं सर्वमेवेति नियमः। सामर्थ्यस्य जातिनियतत्वात्। केवलं समर्थोऽपि सहकार्यसन्निधेन कुर्यात्, न जानीयात्। तत्र प्रथममिष्यते। कार्यस्य कालदेशनियमोपलम्भात्। द्वितीयस्तु सम्भवेदपि यदि कार्यमस्य ज्ञानं स्यात्। न च तत्तथा। कथमिति चेत् शरीरापाये तदाश्रितानामिन्द्रियादीनामपायात्। न चान्वयव्यतिरेकसिद्धहेतुभावस्याभावेऽपि हेत्वन्तरात्कार्यजन्म। निर्हेतुकत्वप्रसंगात्। न चाहेतुकं कार्यं नाम। ततः स्वतः सिद्धौ वास्य ज्ञानचिकीर्षाप्रयत्नशक्तिर्यद्गोचरा तज्जातीयसमस्तगोचरेति सार्वज्ञ्यसिद्धिः। शरीरापाय एव कथमिति चेत्, दृश्यस्य प्रत्यक्षबाधितत्वात्। अदृश्यस्यापि सावयवतयो मूर्ततया च निबिडतरपा-

षाणामन्यवर्तिनि भेकादौ कार्ये कर्तव्ये नाभग्नस्य प्रवेशः। न च परमाणुरूपं तच्छरीरम्। अनन्तराजत्वेन निर्मनस्कतयेन्द्रियाश्रयत्वानुपपत्तेः। न च बहिर्वृत्ति मनो ज्ञानजननोपयोगि। शरीरवैयर्थ्यप्रसंगात्। न च दिविष्ठ एव सूर्यादिस्तत्कुर्यादिति साम्प्रतम्। कारकानधिष्ठानात्। शरीरस्य तदायतनतया प्रयत्नस्याव्यापकत्वात्। तथापि व्यापकत्वे स्वसमवायिकारणाननुरोधेनाकारणकतया तदेव नित्यत्वम्। न चोद्देशमात्रसम्बन्धेन क्रियाहेतुत्वम्। अस्मदादिप्रयत्नस्यापि तथाभावप्रसंगात्। न च संयुक्तसंयोगादधिष्ठानम्। साक्षादधिष्ठानस्य विवक्षितत्वात्। विषापनोदादौ कथमिति चेन्न, तत्रास्मदादेर्ज्ञानमात्रं प्रति यत्नस्याविरोधात्। विषापनोदादौ तु तत्सहकारिणस्तज्जन्यादृष्टसहकारिणो वाऽन्यस्यैव तत्रस्थो यत्नः क्रियाहेतुरिति। सर्गादौ तु न शरीरगन्धोऽपीति सर्वथा कलेवरविगमादकारणतया बुद्धेः सर्वज्ञत्वमनिवार्यं विश्वेषां कर्तुरेकस्येति।

अस्तु तावदसौ सर्वज्ञः कर्ता। वक्ता तु कथमिति चेत्, वचनशक्तौ सत्यां परार्थैकज्ञानत्वात्। यो हिताहितविभागं विद्वान् परार्थाभिप्रायः संस्थानकरणपाटवे सत्यविदुषेऽवश्यमुपदिशेत्। यथाऽन्धाय दक्षिणेन याहि, वामेन मा गाः, इति पृथग्जनोऽपि तथा भगवानिति। स्थानकरणपाटवमसिद्धं देहाभावात्। तेषां ताल्वादिविवृतादिरूपत्वात्। न च तदन्तरेण वर्णनिष्पत्तिः। तदुत्पत्तेरवधारणात्। न च तत्कारणान्यनधितिष्ठतस्तत्कर्तृत्वमीश्वरस्यापीति चेन्न। यस्य कार्यस्य यत्कारणमन्वयव्यतिरेकसिद्धं तत्कारणाधिष्ठानयोः स्थूलसिध्यर्थं तदवयवपरम्पराकारणाधिष्ठानवदवश्यंभावनियमात्। न तु सर्वत्र कार्ये कायः कारणमिति प्रागुपेक्षितः।

पितृत्वाद्वोपदेशानुमानम् । तथापि कतम आगमस्तेन प्रणीत इति चेत्, वेदायुर्वेदादिरित्यरिकरिकर्णज्वरः सिंहनादः । तथाहि—न तावदयमायुर्वेदोऽप्रमाणं संवादस्य प्रायिकत्वात् । विसंवादस्य काकतालीयनया कर्तृकर्मसाधनवैगुण्यहेतुकत्वात् । पुनस्तत्साद्गुण्ये तत एव फलसिद्धेः । न च निर्मूलस्तथा भवितुमर्हत्यतिप्रसंगात् । न चान्वयव्यतिरेकभावोऽस्य मूलम् । आवापोद्वापेन योगानामनन्ततयाऽर्वाचीनेन अशक्यत्वात् । विषादौ तत्करणे बहुतरानर्थप्रसंगात् । कः प्रेक्षावाननाकलितवस्तुतत्त्वः पाटनप्लोषणक्षारणशिराव्यधनलंघनादियोग्यायै कारयेत् कुर्याद्वा । न चोपदेशस्योपदेशपारम्पर्यमात्रं मूलम् । अवश्यमुपदेशस्य क्वचित्प्रमाणे विश्रान्तेरिति हि व्याप्तेः । न च नित्यागमसम्भवो वाक्यत्वात् । तस्मादतीन्द्रियार्थदर्शिपूर्वकोऽयमिति परिशेषः । तथा चानेन दृष्टान्तेन महाजनपरिगृहीतत्वाद्वेदा अपि सर्वज्ञपूर्वका इत्युन्नीयते ।

ननु महच्छब्दोऽत्र यदि प्रामाणिकवचनस्तदा सन्दिग्धासिद्धविशेषणो हेतुः । अथ बह्वर्थस्तदा सुगताद्यागमैरनेकान्तः । तेषामपि वा सर्वज्ञपूर्वकत्वमिति चेन्न । बहुत्वातिशयत्वस्य विवक्षितत्वात् । कोऽतिशयः, सर्वदर्शनान्तःपातित्वम् । कस्तैः परिग्रहः, अर्थानुष्ठानम् । स्वीकृतव्यवहारव्याकरणादिपालनीयत्वम् । स्वीकृतप्रामाण्यायुर्वेदादिस्वीकृतार्थत्वम् । तथाहि नास्त्येव तद्दर्शनम्, यत्र सांवृतमित्युक्त्वापि गर्भाधानाद्यन्त्येष्टिपर्यन्तां वैदिकीं क्रियां जनो नानुतिष्ठति, स्पृश्यास्पृश्यादिविभागं वा नानुमनुते, व्यतिक्रमे चाचमनादिस्नानादिप्रायश्चित्तं वा नानुतिष्ठति । न सर्वत्र सर्वो जन एवमिति चेन्माभूत् । नहि सर्वो वैद्यकार्थः, एवम्, अपि तु कश्चित्केनापि । एवन्तर्हि सौगताद्यागमार्थोऽपि कश्चिदहिंसादिः सर्वदर्शनान्तःपाति-

भिरनुष्ठीयत एव कैश्चिदिति सोऽपि महाजनपरिगृहीतः स्यात्। न, सन्देहात्। किमयमहिंसादिर्वैदिक एवार्थो बिडालव्रतन्यायेन श्रद्धापादनाय सौद्धोदनिप्रभृतिभिरुपनिबद्धः, आहो स्वयं दृष्ट एवेति। न तावत्स्वयं दृष्टः। श्रमणकाद्यागमसाधारणत्वात्। यस्त्वसाधारणो मण्डलीकरणादिः केशोल्लुञ्चनादिर्वा, नासौ सर्वैरनुष्ठीयते। वैदिकस्त्वसाधारण एव निषेकादिस्तथेति। अपि च वाचकापभ्रंशविभागोऽस्तु। न वा तद्व्यवहारस्तावत् सर्वैरेव तीर्थिकैरविगानेन स्वीकृतः। तथा शिक्षाज्योतिश्छन्दोनिगमनिरुक्ताद्यर्थश्च। तेषां वेदरक्षैव परमं प्रयोजनमिति।

स्यादेतत्। व्याकरणादीनि तावत्सर्वैरभ्युपगतार्थानि। वेदा अपि तैः पालनीया भवन्तु। त एवेति कुतः। संसारमोचकागमोऽपि तत्पालनीयः किन्न स्यादिति चेन्न। तत्कर्तृभिस्तथाऽनभ्युगमात्। अव्युत्पादनात्, असाधारणलिङ्गाभावात्। विरुद्धलिङ्गसद्भावाच्च। न हि वेदशब्दार्थाविव सुगताद्यागमासाधारणशब्दार्थावनुरुध्य तेषाम्प्रवृत्तिः, यत एवमुन्नीयेत। प्रत्युत विरोध एव। तैस्तदप्रामाण्यव्युत्पादनात्। तस्मात्सर्वाभ्युपेतव्यवहारव्याकरणादिपालनीयत्वमपि वेदानामेव नान्येषाम्। सर्वाभ्युपेतप्रामाण्यैरायुर्वेदादिभिश्चैषामर्थः स्वीकृत एव। प्रतिपदं तदीयशान्तिकपौष्टिकप्रायश्चित्तजपोजपदानहोमाद्युपदेशात्। न चैष भागस्तत्राप्रमाणमेव। तुल्ययोगक्षेमत्वात्। एतदेवासिद्धम्, प्रक्षेपस्यापि सम्भवादिति चेन्न। अध्येत्रध्यापयितृसम्प्रदायाविच्छेदात्। अन्यथाकरणे चास्य बहुभ्यः स्यान्निवारणमिति न्यायात्। तस्मादेवंरूपोऽपि महाजनपरिग्रहो वेदानामिति। सोऽयमीदृशो महाजनपरिग्रहोऽसर्वज्ञपूर्वकत्वेऽसम्भवन् सर्वज्ञपूर्वकत्वेन व्याप्यते। यथा हि पूर्व-

विरुद्धापूर्वव्याकरणादिवैद्यकादिषु विगानादपरिग्रहस्तथा तथा— विधे धर्मशास्त्रेऽपि व्यामोहाद्भवन्नपि कस्यचिदेव, न तु सर्वेषाम्। अथ पूर्वविरुद्धं चेत्तथापि पूर्वस्य पूर्ववदपरिग्रहे केनचित्परिग्रहे वा कथं तन्मूलस्यान्यस्य सर्वैः परिग्रहः। न च नासीदेव पूर्वं धर्मशास्त्रम्। मानान्तरस्यात्र वस्तुनि कुण्ठतयाऽनुष्ठानाभावप्रसंगात्। तथा च धर्माभावे तत्कार्यस्य सुखस्याप्यभावे रागानुत्पत्तौ लोकसमीहोच्छेदे लोकोच्छेदप्रसंगः। तस्मान्महाजनपरिगृहीतपूर्वपूर्वागमपूर्वकत्वात् प्रवाहनित्यत्वाद्वा प्रलयविच्छेदे सर्गादौ सर्वानुविधेयपुरुषधौरेयपूर्वकत्वाद्वा महाजनपरिग्रहो न तु पूर्वागमानपेक्षार्वाचीनपुरुषपशुपूर्वकत्वात्। पूर्वागमप्रामाण्याप्रामाण्ययोरुभयप्रापितस्य विप्रलम्भकत्वात्। प्रामाण्ये हितविरुद्धाभिधानम् विप्रलम्भ एव। अप्रामाण्येऽप्युपायमविदुषोऽननुष्ठाने तदाभासानुष्ठाने वाऽसर्वज्ञस्योपदेशो विप्रलम्भ एवेति। तत्र न प्रथमः। वेदपरम्परानुपलम्भात्। अर्वाचीनानां पाठपारतन्त्र्यमात्रेण प्रवाहोपपत्तौ तत्कल्पनायां प्रमाणाभावात्। नापि द्वितीयः। वेदह्रासदर्शनात्। यत इदानीमश्रूयमाणस्यापि वेदस्यार्थोऽनुष्ठीयते। निबध्यते च मन्वादिभिः। पुरुषाणामपचीयमानशक्तिकत्वाच्च। यथा ह्यश्वमेधराजसूयाद्यनुष्ठानशक्तेरपचयस्तथाध्ययनशक्तेरपि। न च पूर्वमपि नानुष्ठिता एव राजसूयादयः। तदर्थस्य वेदराशेर्वैयर्थ्यप्रसंगात्। न च नित्यानुमेयवेदसम्भवः। वर्णानां नित्यत्वेऽप्यानुपूर्व्याः पाठाश्रयत्वात्। न चानुपूर्वीशून्या वर्णाः पदं नाम। न चाकांक्षाद्युपेतपदकदम्बादन्यद्वाक्यं नामेति गुरुरपि लघुरेव। तस्मात्पुरुषाणामनुष्ठानशक्तिवत् अध्ययनशक्तिरपि युगक्रमेणापचीयते। ततो वेदानां शाखोच्छेदः। तदर्थानामनुष्ठानो-

च्छेदः । वर्णाश्रमाचारविप्लवश्चेति । अत एव भगवतो व्यासस्य पुरुषशक्त्यपचयमवेक्ष्य वचनानि "अल्पायुषोऽल्पसत्त्वाः" इत्यादीनि, वेदोच्छेदमवेक्ष्य 'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते' इत्यादीनि, अनुष्ठानोच्छेदमवेक्ष्य "दानमेकं कलौ युगे" इत्यादीनि, आचारविप्लवमवेक्ष्य "प्रजास्तत्र भविष्यन्ति शिश्नोदरपरायणाः" इत्यादीनि । तथा च श्रूयमाणा अपि वेदा उच्छेदमुपयास्यन्ति वेदत्वाद्वाक्यत्वाद्वा उच्छिन्नशाखावत् इति न्यायात् । यथा चैतत्तथा पर्वता अपि चूर्णा भविष्यन्ति पार्थिवत्वात् घटवत्, समुद्रा अपि शोषमेष्यन्ति जलाशयत्वात् स्थलीपल्वलवत्, सूर्योऽपि निर्वास्यति तैजसत्वात्प्रदीपवत्, ब्रह्मापि प्रैष्यति शरीरित्वादस्मदादिवत्, इत्यागमाविरोधेनानुमीयताम् । स्यादेतत् भविष्यन्नुच्छेदोऽनुमितिः । स तु भूतोऽपीति कुत इति चेत्, यत एवोच्छेदानन्तरं पुनः सर्गेण भाव्यम् । अन्यथा संसारिणां कृतहानप्रसंगात् । न हि विश्वनिर्माणमन्तरेण भोगज्ञानयोः सम्भवः । न च तेन विना कर्मप्रवाहसम्बोधः । ततो यथा भविष्यन् विश्वसर्ग उच्छेदपूर्वकस्तथाऽयमपीति । समयनियमस्तु प्राणिनां कर्मवैषम्येऽपि वर्षादिनियमवदुदयास्तनियमवद्वा द्रष्टव्यः । कर्मणामेवैवंस्वभावत्वात् । एतदर्थमेव हि पुराणेषु सृष्टिप्रलययोर्दिवसरात्रिव्यवहारः । तथापि सर्वप्राणिनाशयौगपद्ये किम्प्रमाणमिति चेत्, द्विखण्डभौमभुवनप्रासादभंगेऽपि निर्भया एव ग्रामटीहट्टकुटीविहारिणः शरीरिण इति महती प्रेक्षा । तस्मात् सर्गादिमहाजनमन्वादिपरिग्रहपूर्णकोऽयमव्यथावदनुवर्तते इति नानवसरदोषावकाशोऽपीति युक्तमुत्पश्यामः । तदेव कथं मन्वादिभिः परिगृह्यन्ते वेदा इति चेत्, आयुर्वेदवदाप्तोक्तत्वनिश्चयात् । स एव

कुत इति चेदध्यक्षतः। तेषामप्यतीन्द्रियार्थदर्शित्वात्। तादृशां तेषां तत्परिग्रहेण किंप्रयोजनमिति चेत्, अस्मद्व्यवहारेणास्मदपत्यादि व्युत्पद्यताम्। तथा च धर्मसम्प्रदायप्रवर्तनमिति। भूतदयास्वाधिकारसम्पादनञ्च। अथवा सर्गान्तरगृहीतव्याप्तिप्रादुर्भावे सुतप्रतिबुद्धवत् पितृत्वेनाविप्रलम्भकत्वम्। उच्चावचभूतनिर्माणदर्शनेन सार्वज्ञ्यमनुमायाप्तत्वनिश्चयस्तस्य तेषाम्। यद्वा भगवानेव सम्प्रदायप्रवर्तनव्यग्रःकायसहस्राणि व्युत्पाद्यव्युत्पादकभावव्यवस्थितानि निर्माय तदातनं महाजनं परिग्राहितवान् नटनोपाध्याय इव स्वयं नर्तित्वेति सर्वं सुस्थम्। पक्षत्रयेऽप्यत्र पुराणादिसंकथाप्यस्तीति।

स्यादेतत्, परमेश्वरप्रवर्तितोऽयमेव वेदसम्प्रदायः सर्गान्तरवेदापेक्ष एवेति सेश्वरमीमांसापक्षः कपिलपक्षो वा स्यादिति चेत्, किमर्थं पुनरियमपेक्षा पूर्ववेदे जगन्नाथस्य। न तावद्वेदार्थोपलम्भाय। नित्यसर्वज्ञत्वात्। नापि वचनार्थम्। स्वभावतः सर्वकर्तृकतयाऽऽदर्शानपेक्षणात्। नापि विरोधपरिहारार्थम्। प्रतिपाद्यानां तदनुसन्धानविधुरत्वात्। तथापि पूर्वसर्गान्तरवेदव्यवहारोऽपि परमेश्वरस्य गोचर इति चेत् कः सन्देहः। यदि चैतदेव वेदस्य प्रवाहनित्यत्वं न केवलमेतस्य, किन्तु घटादेरपीति न्याय एव दर्शनमन्यथा मीमांसेति क्व सेश्वरमीमांसेति। तस्मादुक्तरूपः परिग्रहो नान्यथा सम्भवतीति प्रतिबन्धसिद्धिः। तथा चाप्तोक्तत्वात्प्रामाण्यसिद्धिः। कथं पुनः सुगताद्यागमेषु नादरश्छान्दसानां वेदविद्वेषिदर्शनान्तःपातिपुरुषप्रणीतत्वादिति मा शंकिष्ठाः। जिनेन्द्रजगदिन्द्रप्रभृतिप्रणीतेष्वप्यादरात्। तत्कस्य हेतोः? महाजनपरिगृहीतपूर्वागमाविरुद्धतया तदनुसारित्वात्। कुतस्तर्हि, सिद्धप्रामाण्यवेद-

विरोधात् । कथन्तर्हि कतिपयैरपि तत्परिग्रहः । अलसभीरुभिर्दुःखमयजाड्यकर्मविद्वेषादुदुम्बरगतीयतन्तुवायत्वात् । न त्वेवं वेदे, कर्मण्येव निर्भरत्वात् । त्रैवर्णिकबहिष्कृतैरनधिकारिभिरनन्यगतिकत्वात् । कीर्तिप्रज्ञाकरवत् । न त्वेवं श्रुतौ । परैः पूज्यानामप्यत्राप्रवेशात् । इतः पतितानामपि परैरुपादानात् । भक्ष्यपेयाद्यवृत्तरुचिभिश्च रागात् सरभादिवत् । न त्वेवमाम्नाये । तद्विभागव्यवस्थापरत्वात् । कुतर्काभ्यासिभिश्च मोहात् । काणाचार्यादिवत् । न त्वेवं ब्रह्मणि, आबालभावं प्रवृत्तेः । अविवेकिभिश्च पाषंडिसंसर्गात् शौंडिकादिवत् । न त्वेवं प्रकृते । पित्रादिक्रमेण प्रवर्तनात् । योगाभ्यासाभिमानिभिश्चाव्यग्रताभिसन्धेः । सुभूत्यादिवत् । न त्वेवं प्रस्तुते । प्रथममस्य कर्मकाण्ड एव निर्भरत्वात् । नियोगादयोग्यैराजीवनात् । सामान्यश्रमणकवत् । न त्वेवं प्रक्रान्ते । आगन्तुकानामनधिकारात् कुहकवञ्चितैः समीचीनप्रत्ययात् । दीपकरसुषिरदर्शिबालिशवत् । न त्वेवम्प्रकृते । तदभावात् । किन्तु महाजनपरिग्रहात् वक्तृप्रामाण्यमनुमाय । आयुर्वेदे नैरुज्यकामवदिति । किंपुनरमीषां मूलम् । न ह्येतावन्तो ग्रन्थराशयः परविप्रलम्भनार्थं प्रणीयन्ते । न च विश्वमेव विप्रलभ्यमिति चेद्भवतु किंचिन्मूलम् । किमनेन चिन्तनेन । अतिनिर्बन्धे तु क्षणिकनैरात्म्यादिप्रतिपादकानां कुतर्काभ्यासः । प्रतिपादितञ्च तथा शून्यसाकारादिप्रतिपादकानान्तु दुरभ्यासः । योगशास्त्रेष्वभ्यसतः स्वरूपशून्यमिव भाव्यमेकमेवेति प्रतिपादनात् । चैत्यचीवरादिप्रतिपादकानान्तु स्वस्थितिमभिसन्धाय दर्शनान्तरस्थितिद्वेषः । स्वस्थितौ प्रमाणमनपेक्ष्य परस्थितौ विगानात् । ब्रह्मचर्यप्रतिपादकानान्तु वेदा एव । न्यायाविरुद्धं परतन्त्रोक्तमप्यानुकूल्यप्रसिद्धेर्गृह्यत इति विमर्षात् ।

मन्त्रकोषप्रतिपादकानान्तु प्रणवबीजजातयः सर्वसाधारण्यः अध्ये-यदेवतानामांकस्त्वधिकः। अध्यापरिगृहीतश्चाकारो देवतेति हस्त-समालोचः। सत्यतपःशालिनां वचनं मन्त्रो विषयवत्यां चिन्तायां चित्तस्थैर्यम्प्रयोजनम्। कथमन्यथा महर्षीणां शापानुग्रहक्षेमता। कथं वा चतुर्भुजाष्टभुजाद्यवस्थेति दुरुहादिति। एकविप्रलम्भनाथ वा केनचित् कियदेव प्रणीतं, तेनानुष्ठितम्, अपरैस्तदनुयायिभि-र्गृहीतमनुष्ठितं, व्याख्यातं, संवर्धितञ्चेति, किमनुपपन्नम्। तस्मा-द्विरुद्धागमव्युदासेन वेदा एवार्वाचीनपूर्वकत्वशंकाव्युदासेन परमे-श्वरप्रणीतत्वादेव भूतार्थभागस्याप्रामाण्यशंकाव्युदासेन प्रमाणमे-वेति नियमः। कथं चरम इति चेत्, महाजनपरिग्रहस्य तत्साध्यस्य वा सर्वज्ञपूर्वकत्वस्य पुरुषदोषाभावस्य वा प्रामाण्यहेतो भूतभा-व्यार्थभागयोः साधारणत्वात्। किन्तस्य फलमिति चेत्, स्वार्थप्रति-पादनम्। किं तेन प्रयोजनम्। यथायथमुपादानं हानं मोक्षः। तत्रा नर्थहेतूनां तत्त्वज्ञानाद्धानम्। अर्थहेतूनामुपादानम्. आत्मने मोक्षः इति,, इति।

एतेन—वेदान्तिनोऽपि व्याख्याताः। तैरपि हि मायाशरीर-त्वमीश्वरस्योरीक्रियत एव। यथाच मनुष्यकृतिसाध्येऽपि भगवतो नियामकतया जीवभावेन वा कर्तृत्वम्, तथा ब्रह्मसूत्रभाष्यादिषु विवेचितमिति न दोषः। वेदोऽपि ह्यग्न्यादिरिव व्यवस्थितरूप एव सर्वदा वर्तते। अत एव "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या-प्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्" इति वाक्यमुपपद्यते। यत्तु परिषन्निर्माणं धर्मशा-स्त्रेषु दृश्यते, तदिदं श्रुत्यर्थनिर्णयार्थमेव। इदमवश्यं प्रकृतप्रबन्ध-कारैरप्यूरीकर्तव्यम्—यद्यैर्मनुष्यैश्चोदनाः कल्पितास्तेषामेव सदस्य-

तथा न परिषद्घटनीयेति, अन्यथा ह्यीदानीन्तनानां पूर्वतनानां वा परिषदप्रयोजिका स्यात् । तथाचान्यनिर्मितचोदनातात्पर्यनिर्णयार्थमेवान्येषामपि सदस्यतया परिषद्यदि घटनीया, तर्हि कथमीश्वरनिर्मितत्वेऽपि परिषद्विधानं नोपपद्यत इति सर्व एव विजानन्तु। यथा चर्षीणां वेदनिर्मातृत्वं न संभवति, तथा पूर्वमेव विवेचितम् । अयं च विषयो वेदापौरुषेयत्वव्यवस्थापनावसरे कुमारिलपादादिभिरपि सम्यग्विवेचितः ।

वेदस्य पौरुषेयत्वनिरासः

एतेन—वाक्यत्वेन वेदानां पौरुषेयत्वमपेक्षितम्, कर्तुस्तु स्मरणं बहुकालान्तरितत्वान्न भवतीति सिद्धान्तोऽपि परास्तः। तदुक्तं शाबरभाष्ये—ननु चिरवृत्तत्वात्प्रत्यक्षस्याविषयो भवेदीदानीन्तनानाम्, न हि चिरवृत्तः सन्न स्मर्येत । न च हिमवदादिषु कूपारामादिवदस्मरणं भवितुमर्हति । पुरुषवियोगो हि तेषु भवति देशोत्सादेन वा कुलोत्सादेन वा । न च शब्दार्थव्यवहारवियोगः पुरुषाणामस्ति । स्यादेतत्—सम्बन्धमात्रव्यवहारिणो निष्प्रयोजनं कर्तृस्मरणमनाद्रियमाणा विस्मरेयुरिति, तन्न, यदि हि पुरुषः कृत्वा सम्बन्धं व्यवहारयेत्, व्यवहारकालेऽवश्यं स्मर्तव्यो भवति । सम्प्रतिपत्तौ हि कर्तृव्यवहर्त्रोरर्थस्सिध्यति, न विप्रतिपत्तौ । तेन वेदे व्यवहरद्भिरवश्यं स्मरणीयः सम्बन्धस्य कर्ता स्यात्, व्यवहारस्य च। न हि विस्मृते "वृद्धिरादैच्" इत्यस्य सूत्रस्य कर्तरि "वृद्धिर्यस्याचामादि" रित्यत्र किंचित्प्रतीयेत, तस्मात्कारणादवगच्छामो न कृत्वा सम्बन्धं व्यवहारयित्रा केनचित् वेदाः प्रणीता इति । यद्यपि विस्मरणमुपपद्येत, तथापि न प्रमाणमन्तरेण सम्बन्धारं प्रतिपद्येमहि। यथा विद्यमानस्याप्यनुपलम्भनं भवतीति नैतावता विनापि प्रमाणं शशविषाणं प्रति-

पद्येमहि। तस्मादपौरुषेयः सम्बन्ध इति"। इति। अनेन चेदं स्पष्टमवगम्यते—यद्वाक्यत्वमात्रेण न वेदस्य पौरुषेयत्वमापादयितुं शक्यते। तदुक्तं तन्त्रवार्तिके—"वेदे हि तावत्पदवाक्यसंघातात्मकत्वादिहेत्वाभासैः कृतकत्वभ्रान्तिर्भवति।

यावद्बहिरवस्थानात् वेदरूपं न दृश्यते।
ऋक्सामादिस्वरूपे तु दृष्टे भ्रान्तिर्निवर्तते॥
आदिमात्रमपि श्रुत्वा वेदानां पौरुषेयता।
न शक्याध्यवसातुं हि मनागपि सचेतनैः॥
दृष्टार्थव्यवहारेषु वाक्यैर्लोकानुसारिभिः।
पदैश्च तद्विधैरेव नराः काव्यानि कुर्वते॥
प्रपाठकचतुःषष्टिनियतस्वरकैः पदैः।
लोकेष्वप्यश्रुतप्रायैः ऋग्वेदं कः करिष्यति॥
अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्।
होतारं रत्नधातममित्येतन्नृवचः कथम्॥
किमालोच्य क्व वा दृष्ट्वा वाक्प्रतिच्छन्दमीदृशम्।
रचयेत्पुरुषो वाक्यं किं चोद्दिश्य प्रयोजनम्॥
अग्नेः पुरोहितत्वं च क्व दृष्टं येन कीर्त्यते।
ईडेशब्दप्रयोगश्च क्व दृष्टः स्तोत्रगोचरः॥
देवत्वं चास्य यज्ञस्य विहितं क्वोपलक्षितम्।
विधिनैव हि देवत्वं प्रतिकर्मावधार्यते॥
न जात्या देवतात्वं हि क्वचिदस्ति व्यवस्थितम्।
होतृत्वमपि यज्ञस्य देवताह्वानहेतुकम्॥
रत्नधायितमत्वं च तत्र वै ज्ञायते कथम्।
अविज्ञातगुणानां च कल्पने स्तवनं न तु॥

स्वतन्त्रो वेद एवैतत्केवलो वक्तुमर्हति ।
इषेत्वेत्ययमप्यर्थः पुरुषेणोच्यतां कथम् ॥
शाखाच्छेदोपयोगश्च पुम्भिरुत्प्रेक्ष्यतां कुतः ।
एवमूर्जेत्ययं मन्त्रः केन शाखानुमार्जने ॥
वक्तुं शक्यो नियोक्तुं वा बुद्धिपूर्वककारिणा ।
वायवः स्थेत्ययं मन्त्रो वत्सापाकरणं प्रति ॥
एकशो विनियोक्तव्य इति कः कथयिष्यति ॥

वायुशब्देन बहुवचनान्तेन मातुर्विनियोज्यमान एकैको वत्सोऽभिधीयत इति नैतत् बुद्धिपूर्वकारिणा चिन्तितुं शक्यम् ।

सामवेदे यदोग्नायीप्रभृतीनां प्रयुज्यते ।
रूपं तत्रापि पौंस्नत्वे नाभिप्रायोऽस्ति कश्चन ॥

को नाम बुद्धिपूर्वकारी पुरुषोऽर्थाभिधानपराणामक्षराणां लोकव्याकरणादिष्वनवगतपूर्वमग्न इत्यस्य पदस्याकारमोकारेण प्लुतेन विकुर्यात् ।

तथा वीतय इत्यस्मिन्नोकारस्यापि विक्रियाम् ।
तशब्दस्य च तोशब्दं येशब्दस्यायिरूपताम् ॥
को मूढो बुद्धिपूर्वो वा नियमात् कल्पयिष्यति ।
तेन वेदस्वतन्त्रत्वं रूपादेवावगम्यते ॥
किंचदेव तु तद्वाक्यं सदृशं लौकिकेन यत् ।
तत्रापि छान्दसी मुद्रा दृश्यते सूक्ष्मदर्शिभिः ॥

एवं च यदाऽध्येतारोऽध्यापयितारः पार्श्वस्था वा वेदवाक्यतदर्थरूपाण्यालोचयन्ति, तदा स्वसंवेद्यमेवापौरुषेयत्वमध्यवस्यन्ति" इति ।

[सनातनधर्मोद्धारोपष्टम्भः] अधिकमत्र निरूपणीयं सनातनधर्मोद्धारतोऽवगन्तव्यम् । तद्यथा—

"अथ सर्वमिदं वेदस्यापौरुषेयत्वे स्यात्, अपौरुषेयत्वं च वेदस्य प्रतिज्ञातमौत्पत्तिकसूत्रे। तच्च तदैव घटते, यदि वर्णात्मकस्य शब्दस्य नित्यत्वं स्यात्, तच्च न सम्भवति, तदनित्यत्ववादिभिस्तार्किकैर्निरस्तत्वात्।

किंच शब्दसामान्याद्वेदस्य जन्यतया पौरुषेयत्वेन भ्रमप्रमादादिपुरुषदूषणाक्रान्तस्य सुतरामप्रामाण्योपपत्तिः, अतस्तार्किकपक्षं पूर्वपक्षीकृत्याष्टादशसूत्रात्मकेनाधिकरणेन शब्दानां नित्यत्वं स्वयमेव सिद्धान्तितं भगवता जैमिनिना पूर्वमीमांसादर्शनेन। तच्च सरामेश्वरभट्टकृतवृत्तिकं यथा प्रथमाध्याये प्रथमपादे—

कर्मैके तत्र दर्शनात्। ६।

(१) पूर्वाधिकरणे शब्दार्थयोः सम्बन्धो नित्य इत्युक्तम्। तच्च शब्दनित्यत्वाधीनमिति तत्सिषाधयिषुः प्रथमं शब्दानित्यत्ववादिमतं पूर्वपक्षमुपपादयति। कर्मेति। कर्म—अनित्यं शब्दं वदन्ति, तत्र शब्दविषयकप्रयत्नदर्शनात्। यद्विषयः प्रयत्नः सोऽनित्य इति व्याप्तेरित्यर्थः।

अस्थानात्। ७।

(२) किंचास्थानादस्थिरत्वात् क्षणादूर्ध्वमनुपलब्धेरिति भावः॥ ७॥

करोतिशब्दात्॥ ८॥

(३) किंच करोतिशब्दात्, यथा घटं करोति, तथा शब्दं करोतीत्यनित्यत्वव्यवहारात्॥ ७॥

सत्त्वान्तरे च यौगपद्यात् ॥९॥

(४) इतोऽप्यनित्य इत्याह सत्त्वान्तर इति। देशान्तर इत्यपि पूरणीयम्। तथाच देशान्तरे अन्यदेशस्थे। सत्त्वान्तरे प्राण्यन्तरप्रत्यक्षे यौगपद्यमेककालिकत्वं दृष्टम्। अयं भावः। यथा लाघवान्नित्यत्वं तथा तेनैव हेतुना शब्दे एकत्वमपि सेत्स्यति। इत्थं

चैकस्य वस्तुनोऽप्रकृष्टपरिमाणस्य सन्निकृष्टविप्रकृष्टपुरुषप्रत्यक्षं भवति। इदमेकत्वे नित्यत्वेऽनुपपन्नमतोऽनित्यः शब्दो नाना चेति।६।

प्रकृतिविकृत्योश्च ॥ १० ॥

( ५ ) इतोऽपि तथेत्याह प्रकृतीति। दध्यत्रेति दधि अत्रेति प्रकृतिस्थितौ प्रकृतिभूतेकारस्थाने यकाररूपो विकारो भवति। यस्य वर्णस्य प्रकृतेर्विकारः सोऽनित्य इति व्याप्तिरिति भावः ।१०।

वृद्धिश्च कर्तृभूम्नाऽस्य ॥ ११ ॥

( ६ ) कर्तृभूम्ना कर्तृबाहुल्येनास्य शब्दस्य वृद्धिर्महत्त्वं दृश्यते। अतोऽप्यनित्यः। पुरुषप्रयत्नस्य शब्दव्यञ्जकत्वपक्षे व्यञ्जकसहस्रेणापि व्यङ्ग्यस्य वृद्धिर्न दृश्यते, यथा दीपसहस्रेणापि घटस्येति व्यञ्जकत्वपक्षोऽयुक्त इति भावः ॥ ११ ॥

समन्तु तत्र दर्शनम् ॥ १२ ॥

( १ ) एवं व्यञ्जकत्वे बहूनि दूषणान्युक्तानि क्रमेण परिहर्तुं प्रक्रमते सममिति। मतद्वय इति क्षणमिति च पदद्वयं पूरणीयम्। मतद्वये क्षणं क्षणमात्रं दर्शनं शब्दप्रत्यक्षं सममविवादम् ॥१२॥

सतः परमदर्शनं विषयानागमात् ॥ १३ ॥

( २ ) समत्वेऽपि कतमः पक्षो वरिष्ठ इति प्रश्ने व्यङ्ग्यत्वपक्षो युक्त इत्याह सत इति। सतः सर्वदा विद्यमानस्य परं पूर्वोत्तरकाले अदर्शनं प्रत्यक्षाभावः संस्कर्तुर्व्यञ्जकस्य विषयं शब्दं प्रत्यनागमात्। अयम्भावः। स एवायं गकार इति प्रत्यभिज्ञानात् लाघवाच्च शब्दो नित्यः। मूखोद्भूतवायुसंयोगविभागाः शब्दप्रत्यक्षप्रतिबन्धकीभूतं स्तिमितवायुं दूरीकुर्वन्तीति ततः प्रत्यक्षमित्यस्थानादित्यस्योत्तरम् ॥ १३ ॥

प्रयोगस्य परम् ॥ १४ ॥

( ३ ) करोतिशब्दादित्यस्योत्तरमाह—प्रेति । शब्दं करोतीत्यत्र करोतिपदं प्रयोगस्योच्चारणस्य परं तत्तात्पर्यकम् ॥ १४ ॥

आदित्यवद्यौगपद्यम् ॥ १५ ॥

( ४ ) सत्त्वान्तरे यौगपद्यादित्यस्योत्तरमाह—आदित्यवदिति । यथैकः सूर्यो नानादेशस्थैर्युगपद्वीक्ष्यते, तथाऽऽदित्यवन्महान् शब्दो न सूक्ष्म इति भावः ॥ १५ ॥

शब्दान्तरमविकारः ॥ १६ ॥

( ५ ) प्रकृतिविकृत्योश्चेत्यस्योत्तरमाह—शब्दान्तरमिति । इकारस्थाने यकारः शब्दान्तरमन्यः शब्दः, न इकारस्य विकारस्तृणानां कट इव, तथासति कटकर्त्रा नियमेन तृणसम्पादनवत् यकारम्प्रयुञ्जमानो नियमेनेकारमाददीतेति भावः ॥ १६ ॥

नादवृद्धिपरा ॥ १७ ॥

( ६ ) वृद्धिश्चेत्यस्योत्तरमाह—नादेति । परा अतिशयिता शब्दवृद्धिरिति भ्रमविषयो नादवृद्धिर्बहुभिर्भेरीमाघ्नद्भिर्वर्णात्मकशब्दमुच्चारयद्भिर्वा महान् शब्द इत्युपलभ्यते । तत्र परमते प्रतिपुरुषं शब्दावयवा उत्पन्नाः सन्तः ते महत्त्ववच्छब्दे महत्त्वं सम्पादयन्तीति वक्तुमशक्यम् , परमते शब्दस्य गुणत्वेन निरवयवत्वात्, अतोऽगत्या कर्णशष्कुलीमण्डलस्य सर्वां सरणिं व्याप्नुवद्भिः संयोगविभागैर्नैरन्तर्येणासकृत् ग्रहणात् महानिवावयवानिव प्रतीयते । संयोगविभागा नादपदवाच्यास्तेषामेव वृद्धिरिति भावः ॥ ७ ॥

नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥ १८ ॥

( १ ) एवम् परप्रतिपादितदूषणान्युद्धृत्य स्वमते साधकं वक्तुं प्रक्रमते । नित्य इति । शब्दो नित्यः स्यात् । दृश्यते व्यज्यतेऽने-

नेति दर्शनमुच्चारणम्, तस्य परार्थत्वादन्यस्यार्थस्य प्रतिपत्त्यर्थत्वात्। अनित्यत्वे श्रोतुरर्थप्रतिपत्तिपर्यन्तं न तिष्ठतीति प्रतिपत्तिर्न स्यात्। कारणाभावादिति भावः ॥ १८ ॥

सर्वत्र यौगपद्यात् ॥ १९ ॥

(२) किञ्च सर्वत्र गोशब्दमात्रेण यौगपद्यात्। अबाधितप्रत्यभिज्ञया युगपदुपपत्तेः। स एवायं गकार इति युगपदनेकेषां भवति। न ह्यनेके युगपद् भ्रान्ता भवन्निति भावः ॥ १९ ॥

संख्याऽभावात् ॥ २० ॥

(३) दशकृत्वो गोशब्दोच्चारे दशवारमुच्चारितो गोशब्द इत्येव वदति, न च दशगोशब्दा उच्चारिता इति। अतोऽपि शब्दो नित्य इत्याह—संख्येति। शब्दसंख्याभावात् स्पष्टम् ॥ २० ॥

अनपेक्षत्वात् ॥ २१ ॥

(४) अतोऽपि नित्य इत्याह—अनपेक्षत्वादिति। अनपेक्षत्वात् शब्दनाशकारणस्य पामरादिसाधारण्येन ज्ञानाभावात्। यथा घटपटादिदर्शनमत्र ऽसमवायिकारणादिनाशान्नाश इति निश्चिनोति, तथा पामराणां शब्दे नाशकारणनिश्चयाभावान्नित्य इति भावः ॥ २१ ॥

प्रख्याभावाच्च योग्यस्य ॥ २२ ॥

(५) ननु शब्दो वायुपरमाणुप्रकृतिकः, तदीयसंयोगैरुत्पन्नत्वात्। तथा च शिक्षा—वायुरापद्यते शब्दतामिति। वायुपरमाणुप्रकृतिकत्वादनित्य इत्याशङ्कामाह—प्रख्येति। योग्यस्य श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयस्य शब्दस्य प्रख्याऽभावात् वायुविकारस्य श्रोत्रेन्द्रियाग्राह्यत्वादिति भावः ॥ २२ ॥

लिङ्गदर्शनाच्च ॥ २३ ॥

( ६ ) लिङ्गेति । वाचा विरूपनित्ययेति मन्त्रे नित्यया वाचेति लिंगम् ॥ २३ ॥

ननु वर्णानां नित्यत्वान्मैवेमे पौरुषेया भूवन् । आनुपूर्वी च वार्णी मा पौरुषेयतां स्प्राक्षीत् । कुम्भकारादिपदे पदानामपि चानुपूर्वी मा पौरुषेयतामनुभूवन् । एवमप्यन्वयबोधौपयिकः पदानां समभिव्याहारः पुरुषतन्त्रतां मैव त्याक्षीत् । एवं च मा लौकिकानि वाक्यानि पौरुषेयतां त्यक्षुः । नहि लौकिकेषु वाक्येषु शाब्दबोधोपयोगिनी वर्णानां पदानां वाऽनुपूर्वी पुरुषेण स्वतन्त्रेण कर्तुमकर्तुमन्यथाकर्तुं वा शक्यते, तथा सति शाब्दस्यैवानुदयप्रसंगात् । न हि टघेत्युक्ते घटस्य कारकुम्भेत्युक्ते कुम्भकर्तुर्वा शाब्दं सम्भवति । वर्णा भवन्तु नित्या एव, समभिव्याहारस्तु पदानां शाब्दोपयोगी पुरुषतन्त्रः, राज्ञः पुरुष इति वाक्यादिव पुरुषो राज्ञ इति वाक्यादभिमतशाब्ददर्शनात् । यदि त्वसौ समभिव्याहारोऽपि पौरुषेयतां जह्यात्, तदा लौकिकेष्वपि वाक्येषु का नाम पौरुषेयता वर्णनपथमवतरेत् ? स चायं लौकिकेष्विव वैदिकेष्वपि वाक्येषु जागर्त्येव, शाब्दोदयस्योभयत्र समानत्वात् । तस्य च पौरुषेयत्वाव्यभिचारेण वेदस्यापि पौरुषेयत्वं दुष्परिहरमेव । अयमेव हि वाक्यत्वव्यवहारस्यासाधारणं निदानम् । श्रूयते च "प्रजापतिर्वेदानसृजत" "तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे । छन्दांꣳसि जज्ञिरे तस्माद्यजुस्तस्मादजायत" ( यजु० अ० ३१ मं० ७ ) "यज्ञो वै विष्णुः" ( श० प० कां० १ अ० १ ब्रा० १ कं० १५ ) "तेभ्यस्तप्तेभ्यस्त्रयो वेदा अजायन्ताग्नेरृग्वेदो वायोर्यजुर्वेदः सूर्यात्सामवेदः" ( श० कां० ११ अ० ५ ) इति । बहुशः स्मर्यते च, पुराणादिषु ब्रह्मणो वेदकर्तृत्वम् । तथा च पौरुषेया एव वेदा इति चेत्,—

अत्रास्मत्पितामहश्रीप्रयागदत्तशर्मणां श्लोकाः—

प्रथमोच्चारणात्कर्त्तोच्चारणं तत्र कारणम् ।
समभिव्याहृतौ नास्य प्राथम्यमुपयुज्यते ॥ १ ॥
उच्चारणान्तरापेक्षे सत्यप्युच्चारणे परम् ।
पूर्वत्वमुपयुज्येत न प्राथम्यमिति स्थितिः ॥ २ ॥
कर्तृस्मृत्यैव बाध्येयमुच्चारणपरम्परा ।
भारतादौ, न वेदे तु स्मृतेः कर्तुरभावतः ॥ ३ ॥
कर्ता चेत् स्यात्तदा तस्य कालमारभ्य तत्स्मृतेः ।
परम्पराऽद्य यावन्न छिद्येतान्यत्र सा यथा ॥४॥

अयमर्थः—उक्ते हि शाब्दोपयोगिनि समभिव्यवहारे केवलमुच्चारणमपेक्ष्यते, न तु तस्य मुख्यं प्राथम्यम् । प्राथम्यघटितत्त्वञ्च वाक्यानां कर्तृत्वं भारतादिषु प्रसिद्धम्, प्रथमोच्चारणकर्तर्येव कर्तृत्वव्यवहारात् । एवं चोक्तः समभिव्याहारः स्वकारणतयोच्चारणमेवाक्षेप्तुं क्षमते, न तु तस्य प्राथम्यमपि; अप्रयोजकत्वात् । येनापि शिष्याद्युच्चारणेन गुर्वाद्युच्चारणमपेक्ष्यते, तेनापि तस्य पूर्वत्वमात्रमपेक्ष्यते, न तु मुख्यम्प्राथम्यमिति, येनोच्चारणप्रयोजकतयाऽपि तादृशसमभिव्याहारे तादृशं प्राथम्यमुपयुज्येत । तथाच तादृशसभिव्याहारस्यानुपयोगिना मुख्यप्राथम्येन घटितं कर्तृत्वं कथं तत्रोपयुज्येत ? उच्चारणकारणोच्चारणानुसरणपरम्परा तु भारतादौ कर्तृस्मरणेनैव निवर्त्यते, वेदे त्वनादित्वादेव नासाववि-च्छिन्नापि दोषमावहति । वेदानां हि यदि कश्चित् कर्ता स्यात्, तदाऽवश्यमसौ वेदान् रचयन् तादात्विकैः पुरुषैः प्रत्यक्षेणानुभूयेत, तैश्चान्येभ्यः कथ्येत, तैश्चान्येभ्य इत्येवम्परम्परया नियतरूपमेव स्मृतिकर्तृमन्वादीनामिव तस्य कर्तुरध्येतृभ्यः स्मरण-

पारम्पर्यमद्य यावज्जगति जागर्यादेव, न तु तदस्ति। तस्मान्न कश्चिद्वेदस्य कर्तेति। किञ्च—

उच्चारणे सृजिः श्रौतो न निर्माणे कदाचन।
वेदांश्च प्रहिणोतीति मन्त्रश्रुत्यैकमत्यतः॥ ५॥
शरान् सृजन्नेवमादौ लोके चापाथको यथा।
क्वचित्प्रजापतिर्विष्णुः क्वचित्सूर्यादयः क्वचित्॥ ६॥
श्रुताः स्रष्टार इत्येतद्विरोधाभावसिद्धये।
जनिसृज्यादयः श्रौता नाद्योच्चारणवाचिनः॥७॥
गर्भेषूत्पन्नचैत्रादेः प्रादुर्भावे यथा जनिः।
तन्मूलानां स्मृतीनां च गतिरेषैव गम्यताम्॥८॥
मन्त्रे वाचा विरूपेति सम्प्रोक्तं नित्ययेति यत्।
लिङ्गं तदपि सन्देहसमूहान् संव्यपोहति॥ ९॥

अयमर्थः। प्रजापतिर्वेदानसृजतेत्युक्तश्रुतौ न सृजती रचनार्थः, किन्तूच्चारणमात्रार्थः। अन्यथा हि श्वेताश्वतराणां मन्त्रोपनिषदि षष्ठेऽध्याये—यो ब्रम्हाणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये॥१८॥ इति श्रुत्या सह दुष्परिहरो विरोध आपतेत्। अत्र हि 'उपप्राकाराग्रं प्रहिणु नयने' 'स बिन्दुरिन्दुः प्रहितः, इत्यादाविव प्रोपसृष्टस्य हिनोतेः प्रापणमर्थः। तच्च सिद्धस्यैवाजादेर्ग्रामादौ भवति। ब्रम्हणो वेदकर्तृत्वे-तु तद्विरोधः स्पष्ट एव। किञ्च ब्रम्हाणं विदधातीत्युक्त्वा वेदानित्यत्र विदधातिमप्रयुञ्जमानाऽसौ श्रुति ब्रम्हणः पौरुषेयत्वेऽपि वेदानां तद्वारयति। यदा च ब्रम्हणोऽपि विधायको न वेदानां विधायकः, किन्तु प्रहिणोत्येव तान्, तदा कुतो वक्तव्यं ब्रम्हा तद्विधातेति" इति तात्पर्यात्। एतच्च पाराशरमाधवीयेनाप्युपरिष्टात्

द्विवेद्धमिति न्यायेनोपपादयिष्यते। सृजेश्च नोत्पादनार्थत्वनियमः; "महेन्द्रचापप्रतिमेन धन्वना भृशायतेनाधिरथिः शरान् सृजन्" इत्यादिषु भारतादिप्रयोगेषु "सृजन्तमाजाविषुसंहतीर्वः सहेत कोऽज्वलितं गुरुं कः" इत्यादिषु च क्षेपार्थकताया दृष्टत्वात्। किञ्चोदाहृतासु तज्जातीयास्वन्यासु च श्रुतिषु वेदविषया ये सृज्यादयो दृश्यन्ते, तेषां निर्माणार्थकत्वे तत्र तत्र विष्णुप्रजापतिसूर्यादीनां निर्मातृताकथनात् प्रसज्यमानः श्रुतीनामन्योन्यविरोधो न शक्यो वारयितुम्। उच्चारणमात्रार्थकत्वे तु नासौ प्रसज्यते। दृश्यते च मातुरुदर एवोत्पन्नस्य चैत्रादेस्ततो निस्सरणमात्रेऽपि 'अद्य चैत्रो जातः, इत्यादिर्लोके जन्यादेः प्रयोगः, तथैवोक्तश्रुतिष्वप्यस्तु। ब्रह्मणो वेदसृष्टेर्बोधिकानां 'अनन्तरन्तु वक्त्रेभ्यो वेदास्तस्य विनिःसृताः, इत्यादिस्मृतीनान्तु प्रकृतश्रुतिमूलकत्वादेवोच्चारणमात्रे तात्पर्यम्, न त्वाद्योच्चारणे; 'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते' इति स्मृतौ तु "एषा अन्या विधीयते" इति विप्रतिषेधनिरासायान्यत्वविधानमुच्चारणभेदमात्रनिबन्धनमारोपितमेवेति न क्षतिः।

एवं "वेदान्तकृद्वेदविदेव चाहम्" इत्यत्रापि वेदानामन्तस्याप्रचारस्य कृत् छेत्ता सम्प्रदायप्रवर्तनादिति वेदान्तकृदित्येवार्थः। वेदानामन्तस्य सम्प्रदाय-ह्रासरूपलोपस्य कृत् कर्ता संहारकत्वादिति वा, अथवा वेदसम्प्रदायस्य लोपकत्वं प्रवर्तकत्वञ्चोभयमप्यर्थः, न तु वेदान्तानां कृत् कर्तेति; तथासति विध्यादिवेदभागानामपौरुषेयतयाऽर्धजरतीयत्वापत्तेः तथा च भारतादाविव वेदे न काचिदप्यनन्यथासिद्धा कर्तृस्मृतिरुदाहर्तुं शक्यते।

अन्यच्च "वाचा विरूपनित्यया" इत्युक्तमन्त्रगतेन नित्ययेति

लिङ्गेन सकल एव वेदे पौरुषेयत्वसन्देहसमूहोऽपोह्यत इति ।

भट्टपादैस्तु पूर्वोक्तः श्रुतिस्मृतिमूलक आक्षेपोऽन्यथैव परिहृतः । तथाहि—भारतेऽपि वेदवदपौरुषेयत्वं स्यात्, यदि तत्र कर्तृस्मृतिर्न स्यात्, अस्ति चासाविति पौरुषेयतां स्थापयन्त्या तया भारतस्या-पौरुषेतया बाध्यते, या तु वेदस्य कर्तृस्मृतिः पुराणादावुपलभ्यते, नासावनुभवमूला, किन्तु "प्रजापतिर्वेदानसृजत" इत्यर्थवादमूलैव । यदि हि वेदानां कर्ता तात्कालिकैः पुरुषैः प्रत्यक्षेणानुभूयेत, तदा तैरन्येभ्यस्तैश्चान्येभ्य उच्येतेति परम्परयाऽऽधुनिकाध्येतृभिरपि तस्य स्मरणं स्यात्, न तु तदस्तीत्यर्थवादादेव सामान्यतो दृष्ट्वा स्मृतिरियमाह । अर्थवादश्च 'स्तुतिपरा अर्थवादा न स्वार्थपराः' इत्यर्थवादाधिकरणसिद्धान्तानुसारान्न वेदस्य कर्तारं प्रमापयितु-मीष्टे, किमुत तन्मूला स्मृतिः, अतो भ्रान्तिमूलैव सा ।

अथ स्मृतेर्मूलान्तरमेव कल्पयित्वा तस्याः सम्यक्त्वमेव कुतो न स्वीक्रियत इति चेत्, न; परम्परया हि स्मरणाभावेन नानुभवमू-लता शक्या कल्पयितुम् । सम्भवति चार्थवादस्य मूलत्वम्, अतो न तस्मिन् सति मूलान्तरं कल्प्यम् । एवं तह्यन्यपरत्वेनार्थवादस्यापि मूलत्वासम्भवात् अमूलकत्वमेव तस्या इति चेत्, सत्यम्, तथाप्यन्य-परेभ्योऽपि वाक्येभ्योऽन्यत्वे भ्रान्तिदर्शनेन समूलकत्वाभावदशाया-ममूलकत्वकल्पनामपेक्ष्य भ्रान्तिमूलकत्वकल्पनमेव न्याय्यमिति ।

तथाच वाक्याधिकरणे श्लोकवार्तिके भट्टपादाः—

भारतेऽपि भवेदेवं कर्तृस्मृत्या तु बाध्यते ।
वेदेऽपि तत्स्मृतिर्या तु सार्थवादनिबन्धना ॥३६७॥
पारम्पर्येण कर्तारं नाध्येतारः स्मरन्ति हि ।
तेषामनेवमात्मत्वात् भ्रान्तिः सेति च वक्ष्यते ॥३६८॥

तेषु च म्रियमाणेषु न मूलान्तरकल्पना ।

तथा ह्यद्यतनस्यापि ते कुर्वन्तीदृशीं मतिम् ॥३६६॥ इति

ननु मा भूद् वेद एकपुरुषकर्तृकः, अनेककर्तृकस्तु स्यात्; अनेककर्तृकत्वञ्च द्वेधा । आद्यं सर्गादौ कठादिनामकैः रामकृष्णादिभिरिव परमेश्वरावतारविशेषैः स्वस्वनामाङ्कितशाखानाम्प्रणीतत्वम्, द्वितीयन्तु जीवविशेषैरेव कठादिभिर्ऋषिभिः स्वस्वनामाङ्कितशाखानाम्प्रणीतत्वमिति । तत्रादिमं कल्पं नैयायिका अवलम्बन्ते, द्वितीयन्तु बाह्याः, उभयथा च वेदस्यापौरुषेयता निराक्रियते । उपपत्तिश्चोभयत्र प्रायो निर्विशेषैवेत्यनुपदमेव स्फुटीभविष्यति । फलोपपत्त्योरैक्यानुरोधादेव च तार्किकान् बाह्यांश्चैककोटीकृत्यैकेनैव सूत्रेण कल्पद्वयं सञ्जग्राह भगवान्—जैमिनिः प्रथमाध्याये प्रथमपादे—

वेदांश्चैके सन्निकर्षं पुरुषाख्याः ॥ २७ ॥ इति ।

सन्निकर्षमिति परीप्सायां णमुल् । द्वितीयायां चेत्यत्र परीप्सायामित्यनुवृत्तेः । परीप्सा च त्वरा । आहुरिति शेषः । एवं च एके नैयायिकादयो वेदान् सन्निकर्षमाहुः त्वरया—आपातमात्रेण सन्निकृष्य—सामीप्येन आधुनिकत्वेन स्वीकृत्य आहुः पौरुषेयानाहुरिति यावत् । पौरुषेयतायामप्रामाण्यापत्तेर्दुर्वारतया तदनाकलनमापतः । वेदान् सन्निकर्षं सादीनाहुरित्यर्थे तु सन्निकर्षमित्येकवचनानुपपत्तिरतः सौत्रत्वेन परिहारे गौरवम् । पौरुषेयत्वे हेतुमाह—पुरुषाख्याः । चो हेतौ । यतः पुरुषाख्याः काठकं कौथुममिति पुरुषघटिता आख्या नामानीत्यर्थः । अत्रायमाशयः—समाख्यैव शाखानां पौरुषेयत्वे प्रमाणम् । न च सामान्यव्याप्तौ सत्यामेव विशेषविषये समाख्या व्याप्रियते, यथा परिक्रयणेनोपात्तानामृ-

त्विजां कर्मस्वनियमेन कर्तृत्वप्राप्तौ आध्वर्यवादिसमाख्यया नियमः क्रियते। न चेह वेदानां कर्तृसामान्यं कुतश्चित् प्राप्तम्, यतः काठकादिसमाख्यया कठादयो नियम्येरन्। किञ्च प्रवचनेनापि शक्योपपादनायाः समाख्याया न कठादीनां कर्तृत्वं प्रत्यसाधारणं गमनिकाबलमिति वाच्यम्; लौकिकवाक्यसाधर्म्यादेव वेदेऽपि कर्तृसामान्यस्य प्राप्त्या काठकादिसमाख्यानां नियामकत्वे बाधकाभावात्। अस्मरणेनानुपदमेव कर्ता निराकृत इति चेत्, न ह्यप्राप्तौ निराकरणम्; वैयर्थ्यात्। शशशृङ्गादेरपि निराकरणापत्तेश्च। अस्मरणरूपश्च बाधकोऽप्यसिद्ध एव; काठकादिसमाख्यानामेवाद्य यावदतीतकर्तृस्मरणपरम्पराप्रवर्तने सामर्थ्यात्। एवञ्च वचनान्तरसाधर्म्यात्कर्तृसामान्यप्राप्तिः, समाख्याभिश्च कर्तृविशेषस्मृतिप्रसोत्रीभिराध्वर्यवादिवत् विशेषनियम इति कुत्र कस्य बाधकस्यावसरः? किञ्च प्रवचनेनापि न समाख्यानामन्यथासिद्धिः शक्यशङ्का; शैष्योपाध्यायिकाघटकानां प्रवक्तृणामानन्त्येनैकस्यामपि शाखायां त्रिनिगमनाविरहादहमहमिकया समाख्यासहस्रापर्यवसानवैशसप्रसङ्गात्। न च येन या शाखा प्रकर्षेणाधीता, सा तत्समाख्येति वाच्यम्; आद्यत्वादन्यस्य वचनगतस्य प्रकर्षस्य दुर्वचत्वात्। न ह्युपाध्यायान्वयपाठितानुपूर्वीभिन्नानुपूर्वीरूपः प्रकर्षः प्रकृते वक्तुं शक्यः; तथा सत्युपाध्यायेभ्योऽपि प्रकर्षे प्रत्युतान्यथाकरणदोषप्रसङ्गात्; तत्पाठमात्रानुकरणे च प्रकर्षस्यैवासम्भवात्। यदि चोच्चारणे श्रवणमनोहरत्वं प्रकर्षः, तदाऽपीदृङ्महीयसि संसारे काले च कति तादृशाः प्रवक्तार इति पूर्वोक्तं समाख्यावैशसमेवावर्तते। अथ ब्राह्मणत्वावान्तरजातिभेदा एव कठत्वादयः, तद्वदध्येया तद्वदनुष्ठेया च शाखा तत्समाख्यया व्यपदिश्यत इति किमनुपपन्नमिति

त्वेन्न ; ब्राह्मणत्वस्याध्यायः कठत्वादिजातेः क्षत्रियादावभावेऽपि क्षत्रियादेस्तच्छाखाध्ययनादावधिकारदर्शनात् । न हि क्षत्रियादेरन्यो वेदोऽस्ति । भवतु वा क्षत्रियादिभिरधीयमानापि शाखा तेषामध्यापयितृत्वाभावात्काठकादिपदवाच्या, कठादेरध्यापयितृत्वात्, तथापि कठाः काठकमेवाधीयते, तदर्थमेव चानुतिष्ठन्तीति नियमोऽनुपपन्न एव; तेषु शाखान्तरसञ्चारस्यापि दर्शनात् । न च प्रागेवायं नियम आसीत्, इदानीन्तु कठत्वादिजातीनां काठकादिसमाख्यानाञ्च विप्लव इति वाच्यम् ; अद्यत्व इव तदात्वेऽपि तादृशजातिविप्लवप्रयुक्तसमाख्याविप्लवाभ्युपगमे बाधकाभावेन गतिविरहापत्तेरिति । तस्मादाद्यप्रवक्तृप्रवचननिमित्त एवायं समाख्याविशेषसम्बन्ध इति पौरुषेयीणां शाखानां पुरुषस्वभावभ्रान्त्यादिदोषैराक्रमणादप्रामाण्यमेवेति चेन्न ; प्रथमाध्याये प्रथमपादे—

उक्तन्तु शब्दपूर्वत्वम् ॥ २६ ॥ आख्या प्रवचनात् ॥३०॥

इति सूत्राभ्यां शब्दे पूर्वत्वम् नित्यत्वमुक्तं साधितम्प्राक्, शब्दस्य च नित्यत्वे सिद्धे वेदस्यापि नित्यत्वम् 'वाचा विरूपनित्यया' इत्यप्युक्तम् ॥२६॥ आख्या काठकादिसमाख्या प्रवचनादध्ययनात् कठेनाधीतं काठकमित्युपपन्ना ॥३०॥ इत्यर्थकाभ्यां मुनिना जैमिनिनैव दत्तोत्तरत्वात् । अयं हि तदभिप्रायः—कर्तृस्मृत्यभावस्तावत् आशितः पूर्व एव । वाक्ये च कर्त्रा न किमपि प्रयोजनमस्ति । असत्येव हि स्वतन्त्रे कर्तरि साम्प्रतमिव सर्वदापि परतन्त्रैरेवाध्येतृभिराजनस्येन वाक्योक्तिः सुतरां सम्भाविनी, अन्यथोपपन्नो चासौ कथङ्कारं कर्तृसामान्यं प्रापयितुम्प्रभवेत्, अप्राप्तौ च सामान्यस्य क्वासौ समाख्याऽधिष्ठायिनी विशेषनियामका वराकी । न च समाख्यैवानन्यथासिद्धा श्रुतेः पुंयोगे गर्भश्रुति-

रिव कुमार्याः स्वयमेव मानं किं न स्यादिति वाच्यम्; काठकशब्दे 'चरणाद्धर्माम्नाययोरिति वक्तव्यम्, इति 'तस्येदमिति, सम्बन्धिमात्रार्थे वृत्तिविधायिकायाः कात्यायनीयस्मृतेरिव कौथुमादिशब्देषु (कृते ग्रन्थे) इतिवत् "तेन प्रोक्तम्" "तदधीते तद्वेद" इत्यादीनामपि पारम्पर्यस्मरणानां जागरूकतया समाख्याया अन्यथासिध्यैव ग्रस्तत्वात्। किञ्च समाख्यया कल्पितेन पौरुषेयत्वाभिधेन वेदस्याप्रामाण्यमापादयतां मते न्यायत्रयबाधो दुर्वारः। दुर्बला हि समाख्या श्रुत्याद्यपेक्षया, अप्रधानञ्च वेदाङ्गम्, तदभिधानार्थत्वात्, अल्पीयसी च भूयसः शब्दराशेरपेक्षया। ततश्च नैतामाश्रित्य श्रुत्यात्मकस्य प्रधानस्य भूयसः शब्दराशेरप्रामाण्यमापादयितुं युक्तम्। न च समाख्यया पौरुषेयतैव मया साध्यते, नत्वप्रामाण्यमापाद्यत इति वाच्यम्; पौरुषेयतायां सत्यां प्रामाण्योपपादनस्य दुष्करतायाः पूर्वमेव निपुणतरमुपपादितत्वेन त्वद्वचनस्य "शिर एव मया छिद्यते, न तु जीवोऽपि व्यापाद्यते" इत्येतद्वचनसमानयोगक्षेमत्वात्। अथैवं समाख्यायाः का गतिरिति चेच्छ्रूयताम्, अश्वकर्णादिवत् रूढिरेवेयं निर्निमित्ता भवतु। स्वीकरिष्यते खल्वनुपदमेवोदाहरिष्यमाणेन "परन्तु श्रुतिसामान्यमात्रम्" इति सूत्रेण बबरादिशब्देषु रूढिः, तद्वदिहाप्यस्तु। यद्वा, अध्ययनस्यान्येनापि सहसाधारण्येऽपि कठेनैव विशेषितत्वात् समाख्यानिमित्तं वैरूपसामवत्। दशमे हि बाधलक्षणे षष्ठे पादे "उक्थ्यो वैरूपसामा एकविंशः षोडशी वैराजसामा" इति श्रुतिं विषयीकृत्य सर्वेषां प्राकृतसाम्नां निवृत्तिमाशङ्क्य 'वैरूपसामा क्रतुसंयोगात् त्रिवृदेकसामा स्यात्, इति पञ्चदशसूत्रेण पृष्ठ्यस्तुतावेव रथन्तरादिमात्रं निवर्त्यते, न सर्वाणि सामानि, सत्तामात्रेणैव वैरूपादेः क्रतुविशेषणत्वोपपत्ते-

रिति सिद्धान्तितं जैमिनिना । तथैव प्रकृतेऽपि कठादेरितरव्याव-र्तकत्वासम्भवेऽपि सत्तामात्रेणाध्ययनविशेषणता निराबाधैव । अथवा प्रवक्तृत्वं यद्यग्नीषोमोभयपर्याप्तदेवतात्ववद् बहुषु पुरुषेषु व्यासज्यवृत्ति स्यात्, तदा सापेक्षत्वेन सामर्थ्याभावादग्नीषोमीयं हविराग्नेयशब्देनेव कठतदन्यप्रवक्तृका शाखा काठकशब्देन न व्यपदिश्येतापि, तत्तु न तथा, किंतु प्रत्येकपर्याप्तमेव पुत्रत्ववत् । अतो यथा डित्थडवित्थयोरपि माता डित्थमातेत्युच्यते, तथा बहुभिरपि प्रोच्यमाना शाखा शक्यत एव काठकशब्देन व्यपदेष्टुम् । न च को ब्रूते काठकशब्देनासौ मा व्यपदेशीति, अपि तु प्रवक्तृत्वस्याविशेषात्कठवदेव पुरुषान्तरेणापि किं न व्यपदिश्यत इत्येवेति वाच्यम्; समाख्याया व्यपदेशो हि यदि सम्मार्जनादिवत्प्रवक्तृसंस्कारार्थः स्यात्, तदा प्रतिसंस्कारमावर्त्येत । न चासौ तथा, किन्तु शाखाविशेषणार्थ एव, तद्विशेषणं च प्रवक्तृणामेकेनापि सुसम्पादमिति किमर्थं पुरुषान्तरमादरणीयम्? यथा एकेनैव यजमानेन सत्रे यूपसम्मानं तद्वत् । न चैकेनापि व्यपदेशे किमिति सा शाखा नियमतः कठेनैव व्यपदिश्यते, न कदाचिदपि पुरुषान्तरेणेति वाच्यम्; यदि हि सा समाख्याऽस्मदायत्ता स्यात्, तदा वयमवश्यमेव पर्य्यनुयोज्या भवेम, अस्माकन्तु विद्यमानाया तस्या निमित्तनिरूपणमात्रे एवाऽधिकार इति नास्मासु पर्य्यनुयोगावसरः । दृश्यन्ते च साधारणस्याप्येकेन व्यपदेशाः, यथाऽनेकर्षिसेवितेषु तीर्थेषु मार्कण्डेयतीर्थमगस्त्यतीर्थमित्यादयः । प्रवचनमप्यध्ययनमात्रमिति न पूर्वपक्षोक्तप्रकर्षनिर्वचनकुचोद्यावकाशः । किञ्चासौ समाख्याऽपि नित्या, पौरुषेयी वा? नित्या चेन्नैव पुरुषनिमित्ता भवितुमर्हति । पौरुषेयी तु तत्प्रणेतृत्वे प्रमाणाभावात् स्वयमेवा-

सत्या सती कथं त्वदभिमतां पौरुषेयतां साधयितुमलम्भवेत्? यद्वा नेयमादिमत्पुरुषनिमित्ता समाख्या, किन्तु नित्यैव। ब्राह्मणत्वावान्तरजातिः कठत्वं नाम। तज्जातीयैरधीयमानेयं शाखा च यद्यप्यन्यैरपि ब्राह्मणक्षत्रियादिभिरधीयते, तथापि डित्थमाता कुमारतीर्थमित्यादिवत्कठत्वनिमित्तया शाखान्तरेभ्यो व्यावृत्तया नित्ययैव समाख्ययाऽभिधीयते। तस्मान्न समाख्यया शाखासु पौरुषेयत्वस्य तन्मूलकस्याप्रामाण्यस्य चापादनं कथमपि शक्यमिति। तथा चात्रैव सूत्रे ३० वार्तिकम्—

स्मृतिप्रयोजनाभावात्कर्तृमात्रेऽनपेक्षिते।
सामान्यसिद्ध्यपेक्षत्वान्न सामाख्या निश्चामिका॥ ३॥
अन्यथाऽप्युपपन्नत्वादियं प्रवचनादिना।
न शक्ता कर्तृमूलाय प्रोक्ते च स्मरणं स्थितम्॥ ४॥
श्रुत्यादेर्दुर्बला चासौ न शक्ता तानि बाधितुम्।
अङ्ग भूयांसमेकेयं शब्दराशिं न बाधते॥ ५॥
कामं वा निर्निमित्तेयं शाखामेकां वदिष्यति।
श्रुतिसामान्यमात्रं हि नात्र दण्डेन वार्यते॥ ६॥
सति साधारणत्वे वा सम्भवेन विशेषणम्।
यथा वैरूपसामेति सत्तयैव प्रतीयते॥ ७॥
अव्यासङ्गि च सर्वेषु प्रवक्तृत्वं कठादिषु।
तेनैकव्यपदेश्यत्वं लक्ष्यते डित्थमातृवत्॥ ८॥
अन्यैस्तुल्येऽपि सम्बन्धे यत्तैर्न व्यपदिश्यते।
न ह्येष कर्तृसंस्कारः पारार्थ्ये चैक इष्यते॥ ९॥
विद्यमाननिमित्तं च कथ्यते नासतः क्रिया।
साधारणं च तीर्थादि केनचिद्व्यपदिश्यते॥ १०॥

यदि चापौरुषेय्येषा नानित्यप्रतिपादिनी ।
पौरुषेय्यास्तु सत्यत्वं कथमध्यवसीयते ॥ ११ ॥
नित्यमेव निमित्तं वा कठत्वं जातिरस्ति नः ।
काठकादिप्रवृत्त्यर्थं व्यावृत्तं चरणान्तरात् ॥ १२ ॥ इति ।

तार्किकास्तु—जगत्कर्तृत्वेन भगवन्तं संसाध्य वेदेऽपि तमेव निमित्तत्वेन प्रतिपद्यन्ति, शब्दं चानित्यं प्रतिजानते । ते कर्त्रस्मरणं बाधकं न पश्यन्ति । किञ्च यथा नित्यानां गगनादीनामकर्तृत्वेन तेषां मते न भगवतो जगत्कर्तृत्वमुपहन्यते, तथैवास्माकमपि वेदाकर्तृत्वेन । नित्यत्वं च शब्दस्याधस्तादुपपादितमेवेति न तेषां मतं रोचयामहे ।

नन्वौत्पत्तिकसूत्रे व्यक्तिरूपपदार्थस्यानित्यत्वेन प्राप्तं वेदस्यानित्यत्वं जातेः पदार्थतामुपपाद्य परिहृतम्, तदनर्थकम्; (बबरः प्रावाहणिरकामयत) (कुसुरुविन्द औद्दालकिरकामयत) इत्यादिवेदवाक्यानां प्रावाहण्याद्युत्पत्तेः प्रागसत्त्वनिश्चयेन सादितया पौरुषेयत्वापत्तिर्तादवस्थ्यात् । न हि येषां चरितं येषु ग्रन्थेषूपनिबध्यते, तेषां जन्मतः प्रागपि ते ग्रन्था आसन्निति सम्भावयितुमपि शक्यते । तथा च भगवान् जैमिनिः—प्रथमाध्याये प्रथमपादे—

अनित्यदर्शनाच्च ॥२८॥ इति ।

अनित्यानां जननमरणवतां पुरुषाणां प्रावहण्यादीनां दर्शनाच्च प्रतिपादनदर्शनात् अपि एके वेदान् सन्निकर्षमाहुरित्यर्थः । वार्तिकञ्च—अनपेक्षत्वसूत्रे या रूपात् कृतकतोदिता ।

वेदे सा दृश्यते स्पष्टा कृतकार्थाभिधायिनी ॥२॥ इति ।

किञ्च वेदेषु "वनस्पतयः सत्रमासत" "गावो वा सत्रमासत इत्यादिदर्शनादुन्मत्तवाक्यत्वमेव तेषाम् । द्रागेव तु निरपेक्षं प्रामा-

ण्यमितिचेन्न। तत्रैव—परन्तु श्रुतिसामान्यमात्रम् ॥३१॥

इति सूत्रेणैव प्रथमाक्षेपस्य समाधानात्। अस्यार्थस्तु—यद्यपि बर्बरः प्रावाहणिरित्यस्ति, परन्तु श्रुतिः प्रावाहण्यादिपदम्, सामान्यमात्रं कालजातिविशेषाद्यविशेषितस्योपदेशसौकर्याय देवदत्तयज्ञदत्तादिवत्कल्पितपुरुषसामान्यस्यैवाभिधायकम्, न तु कालविशेषजातिविशेषाद्यवच्छिन्नस्याभिधायकमिति।

युक्तं चैतत्। यदि हि प्रावाहण्यादिशब्दैः पुरुषविशेषा उच्येरन्, तदा तेषामुत्पत्त्यादिकमपि क्वचिद्विशिष्य वर्ण्येत, न तु तथा वर्णितं क्वचिदपि वेदे। आख्यायिकासु च कल्पितैरेव नामभिर्व्यपदेशो बहुशो दृश्यते लोके, तथैव वेदेऽपि, किंच एतावता महता प्रबन्धेन वेदस्य नित्यत्वे करतलामलकवत् प्रतिपादिते लौकिकीष्वप्याख्यायिकासु यानि नामानि नानित्यान् पुरुषविशेषान्विशिष्य नियमेनोपस्थापयन्ति, वेदे तानि तानुपस्थापयेयुरिति संभावयितुमपि न शक्यमितरत्रासूयादिभ्यः।

तथा चात्र सूत्रे वार्तिकम्—

अनित्यार्थाभिधायित्वं स्वयमेवैष मुञ्चति।
नित्यानित्यविकल्पेन वेदस्तादर्थ्यवर्जनात् ॥ १२ ॥
नित्यस्य नित्य एवार्थः कृतकस्याप्रमाणता ॥ इति।

एवं वैदिकलुङादीनां कालसामान्यार्थमपि वक्ष्यते। एवं द्वितीयोऽप्याक्षेपो जैमिनिनैव परिहृतः। तथा च सूत्रं तत्रैव—

कृते वा विनियोगः स्यात् कर्मणः सम्बन्धात्। ३२ इति।

कर्मणः कर्मप्रतिपादकवाक्यस्य सम्बन्धात् परस्परसाकाङ्क्षपदघटितत्वात् वनस्पतय इत्यादीनामपि कृते प्रकृते कर्मणि स्तुतिद्वारा विनियोग इत्यर्थः। अयं भावः-नहि वनस्पतय इत्यादिवाक्यानि

कथंचिदप्यनन्वितार्थकानि; क्रियाकारकसम्बन्धस्य तेषु स्पष्टत्वात्, नापि बाधितार्थकत्वेन दुष्टानि; एतादृशेषु लौकिकेष्वपि वाक्येषु तादृशबाधस्यादूषणत्वात्, प्रत्युत भूषणत्वाच्च। लोके हीदृशे विषये उपपादकस्य वाक्यार्थस्य बाधेनैवोन्नीतेन स्तुतौ निन्दायां वा तात्पर्येण प्रकृतो वाक्यार्थः स्तुत्या निन्दया वा दृढतरनिश्चयविषयत्वेनोपपाद्यते। ईदृश्येव च विषये कैमुत्यन्यायमुदाहरन्ति लौकिकाः, यथा 'मद्गुरूणां पादाङ्गुष्ठोऽपीदृशीः शङ्का असकृत्समाधित, किमुत गुरवः" "ईदृशीमाशङ्कां सुरगुरुरपि न प्रतिविधातुमीष्टे, किमुत त्वम्" "मम माता वन्ध्या योऽहं न जातु भगवन्तमसेविषि" इत्यादौ। अत्र हि पूर्ववाक्यस्य वाच्यार्थबाधोऽपि मुख्यतात्पर्यार्थाबाधाददोषः। एवमेव वेदेऽपि वनस्पतय इत्यादि वाक्यं न स्वात्मार्थपर्य्यवसिततात्पर्य्यम्, येन तद्बाधो दूषणमावोढुं शक्नुयात्, किन्तु वनस्पत्यादयो जडा अपि सत्रमनुतस्थुः, किमुत विद्वांसः सत्रमनुतिष्ठेयुरित्यत्र संशय इति रीत्या प्रकृतस्य सत्रस्य स्तुतावेव तस्य तात्पर्य्यम्। अस्मिँश्च तात्पर्य्यार्थे स्तुतिरूपे किं नाम बाधसाध्वसम्? एवमेव निन्दावाक्येषु "अपशवो वा अन्ये गोअश्वेभ्यः" इत्यादिष्वपि बोध्यमिति। अत एव वेदविषये माधवपाराशरे आचारकाण्डे—

यदर्थं सृष्टिसंहारौ संक्षिप्योक्तौ, तत् प्रवाहनित्यत्वमिदानीमाह पराशरः-

न कश्चिद्वेदकर्ता च वेदं स्मृत्वा चतुर्मुखः।
तथैव धर्मान् स्मरति मनुः कल्पान्तरेऽन्तरे॥ २१॥ इति

स्मृतिनिर्णेतृणां मन्वादीनां स्मृतिकर्तृत्वदर्शनात् तथैव श्रुतिनिर्णेतृणामपि वेदकर्तृत्वमाशङ्क्य निराचष्टे न कश्चित् इति। न तावत् व्यासो वेदकर्ता, तस्य विभागमात्रकारित्वात् नापि चतु-

मुखः, ईश्वरेण चतुर्मुखाय वेदप्रदानात्, नापि जगदीश्वरः, तस्य सिद्धवेदाभिव्यञ्जकत्वात् ।

तदुक्तं मत्स्यपुराणे—

अस्य वेदस्य सर्वज्ञः कल्पादौ परमेश्वरः ।
व्यञ्जकः केवलं विप्रा नैव कर्ता न संशयः ॥
ब्रह्माणं मुनयः पूर्वं सृष्ट्वा तस्मै महेश्वरः ।
दत्तवानखिलान् वेदान् विप्रा आत्मनि संचितान् ॥
ब्रह्मणा चोदितो विष्णुर्व्यासरूपी द्विजोत्तमाः ।
हिताय सर्वभूतानां वेदभेदान् करोति सः ॥ इति ।

कठादीनां तु तत्कर्तृत्वं दूरापास्तम् । उपपत्तयस्तु वेदापौरुषेयत्वाधिकरणे द्रष्टव्याः । ननु शास्त्रयोनित्वाधिकरणे ब्रह्मणः सर्वज्ञत्वसर्वशक्तित्वदार्ढ्याय वेदकर्तृत्वं व्यासेन सूत्रितम्, तेनैव देवताधिकरणे वेदनित्यत्वमपि ( अत एव च नित्यत्वम् ) ( शारी० १ अ० ३ पाद २९ सू० ) इति सूत्रेण प्रदर्शितम्, एवं तर्हि विरोधः परिहर्तव्यः, उच्यते—वर्णानां पदार्थतत्सम्बन्धानां वाक्यानां चानित्यत्वं वैशेषिकनैयायिकादयो वर्णयन्ति, तान् प्रति मीमांसकाः प्रथमपादे कालाकाशादीनामिव वर्णानां नित्यत्वं वर्णयामासुः । "व्यवहारे भट्टनयः" इत्यभ्युपगमं सूचयितुं देवताऽधिकरणे तदेव व्यावहारिकं नित्यत्वं सूत्रितम् । । अतः कालिदासादिग्रन्थेष्विव वेदेष्वर्थावबोधपूर्विकायाः पदविशेषावापोद्वापाभ्यां प्रवृत्ताया वाक्यरचनाया अभावादपौरुषेयत्वं युक्तम् । ब्रह्मविवर्तत्वं वियदादेरिव वेदस्याप्यस्तीति मत्वा शास्त्रयोनित्वाधिकरणे वेदकर्तृत्वं ब्रह्मणो दर्शितम्, अत एव भट्टपादाः सत्यपि पुरुषसम्बन्धे स्वातन्त्र्यं निवारयामासुः—

"यत्नतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता" इति।

तस्मात् "स्वतन्त्रः कर्ता" ( पा. १ अ. ४ पाद. ५४ सूत्र. ) इत्यनेन लक्षणेन लक्षितः कर्ता न कोऽपि वेदस्यास्ति। चकारः तुशब्दार्थे वर्तमानो वैलक्षण्यमाह। सन्ति हि बहवश्चतुर्मुखमनुप्रभृतयः स्मृतिकर्त्तारः, वेदकर्ता न कोऽपीति वैलक्षण्यम्। ( वेदं स्मृत्वा ) इत्यत्र वाक्ये अनुषङ्गन्यायेन द्वितीयार्द्धगतं पदत्रयमन्वेतव्यम्। अनुषङ्गन्यायश्च द्वितीयाध्यायप्रथमपादे वर्णितः।

तथाहि—ज्योतिष्टोमप्रक्रियायामुपसदामुपहोमेषु त्रयो मन्त्राः श्रूयन्ते "या तेऽग्ने रयाशया रजाशया हराशया तनूर्वर्षिष्ठा गह्वरेष्ठा उग्रं वचो अपावधीम् त्वेषं वचो अपावधीम् स्वाहा" इति। तत्र रयाशया, रजाशया, हराशया, इति पदभेदान्मन्त्रभेदः, तत्र प्रथममन्त्रस्य तनूरित्यादिवाक्यशेषापेक्षास्ति, चरममन्त्रः 'या तेऽग्ने' इत्यादौ वाक्यमपेक्षते, मध्यमन्त्रस्त्वाद्यन्तावपेक्षते। तत्रैवं संशयः किमपेक्षितार्थपरिपूरणाय लौकिकः कियानपि पदसंदर्भोऽध्याहारणीयः, किं वा श्रूयमाणं पदजातमनुषञ्जनीयम्—इति। वाक्यादेः प्रथममन्त्रेणैव सम्बन्धात् वाक्यशेषस्य चरममन्त्रेणैव सम्बन्धात् लौकिकाध्याहार इति पूर्वपक्षः। वैदिकाकाङ्क्षायाः सति संभवे वैदिकशब्दैरेव पूरणीयत्वात् अन्यमन्त्रसंबद्धानामपि पदानां बुद्धिस्थत्वेनाध्याहार्येभ्यः पदेभ्यः प्रत्यासन्नत्वाच्चानुषङ्ग एव कर्तव्यो नाध्याहार इति सिद्धान्तः।

एवंच सति प्रकृतेऽपि 'कल्पान्तरे धर्मान् स्मरति' इति पदत्रयं पूर्वार्द्धेऽनुषञ्जनीयम्। चतुर्मुखस्तस्मिंस्तस्मिन्महाकल्पे परमेश्वरेण दत्तं वेदं स्मृत्वा तत्र प्रकीर्णान् वर्णाश्रमधर्मान् सङ्कलय्य स्मृतिग्रन्थस्वरूपेणोपनिबध्नाति। तथाच पितामहवचनानि तत्र

तत्र निबन्धनकारैरुदाह्रियन्ते। चतुर्मुखस्य स्मृतिशास्त्रकर्तृत्वं मनुनाऽप्युक्तम्—

इदं शास्त्रं तु कृत्वाऽसौ मामेव स्वयमादितः।
विधिवद् ग्राहयामास मरीच्यादीनहं मुनीन्॥ इति।

यथा चतुर्मुखः, तथैव च स्वायम्भुवो मनुः तस्मिन्मन्वान्तरकल्पे वेदोक्तधर्मान् ग्रथ्नाति। मनुग्रहणेन अत्रियाज्ञवल्क्यविष्णवादय उपलक्ष्यन्ते, तदेवं प्रतिमहाकल्पं तेन तेन चतुर्मुखेन प्रत्यवान्तरकल्पं च तैस्तैर्मन्वादिभिः स्मृतिप्रणयनात् धर्मादेः प्रवाहनित्यत्वं सिद्धम्। एतदेवाभिप्रेत्याश्वमेधिके पर्वणि पठ्यते—

युगेष्वावर्तमानेषु धर्मोऽप्यावर्तते पुनः।
धर्मेष्वावर्त्तमानेषु लोकोऽप्यावर्तते पुनः॥ इति॥

एवं वेदस्य नित्यत्वमुत्तरमीमांसायां भगवता बादरायणेनापि प्रतिपादितम्।

यत्तु संमतितर्कटीकायां तत्त्वबोधविधायिन्यां अभयदेवसूरिणा जैनेन—शब्दसमुत्थस्य तु अभिधेयविषयज्ञानस्य यदि प्रामाण्यमभ्युपगम्यते, तदाऽपौरुषेयत्वस्यासंभवाद् गुणवत्पुरुषप्रणीतस्तदुत्पादकः शब्दोऽभ्युपगन्तव्यः। अथ तत्प्रणीतत्वं नाभ्युपगम्यते, तदा तत्समुत्थज्ञानस्य प्रामाण्यमपि न स्यादित्यभिप्रायवानाचार्यः प्राह—"जिनानाम् रागद्वेषमोहलक्षणान् शत्रून् जितवन्त इति जिनास्तेषाम्, "शासनम्" तदभ्युपगन्तव्यमिति प्रसङ्गसाधनम्, इत्युपक्रम्योक्तम्—"अथापि स्यात्, यदि प्रामाण्यापवादकदोषाभावो गुणनिमित्त एव भवेत्, तदा स्यादेतत्प्रसङ्गसाधनम्, यावताऽपौरुषेयत्वेनापि तस्य संभवात् कथं प्रसङ्गसाधनस्यावकाशः?

असदेतत्, अपौरुषेयत्वस्यासिद्धत्वात्। तथाहि—किमपौरुषेयत्वं

शासनस्य प्रसज्यप्रतिषेधरूपमभ्युपगम्यते, उत पर्युदासरूपम् ? तत्र यदि प्रसज्यप्रतिषेधरूपम्, तदा किं सदुपलम्भकप्रमाणग्राह्यम्, उत अभावप्रमाणवेद्यम् ? यदि सदुपलम्भकप्रमाणग्राह्यम्, तदयुक्तम्; सदुपलम्भकप्रमाणविषयस्याभावत्वानुपपत्तेः, अभावत्वे वा न तद्विषयत्वम्; तस्य तद्विषयत्वविरोधात्, अनभ्युपगमाच्च। अभावप्रमाणग्राह्यत्वाभ्युपगमे च वक्तव्यम्—किमभावप्रमाणं ज्ञानविनिर्मुक्तात्मलक्षणम्, उत अन्यज्ञानस्वरूपम् ? प्रथमपक्षेपि किं सर्वथा ज्ञानविनिर्मुक्तात्मस्वरूपम्, आहोस्वित् निषेध्यविषयप्रमाणपञ्चकविनिर्मुक्तात्मलक्षणमिति ? प्रथमपक्षे नाभावपरिच्छेदकत्वम्, परिच्छेद्यस्य ज्ञानधर्मत्वात्, सर्वथा ज्ञानविनिर्मुक्तात्मनि च तदभावात्। निषेध्यविषयप्रमाणपञ्चकविनिर्मुक्तात्मनोपि नाभावव्यवस्थापकत्वम्, आगमान्तरेऽपि तस्य सद्भावेन व्यभिचारात्। तदन्यज्ञानमपि यदि तदन्यसत्ताविषयं स्यात्, नाभावप्रमाणं स्यात्, तस्य सद्विषयत्वविरोधात्, पौरुषेयत्वादन्यस्तदभावः तद्विषयज्ञानम्, तदन्यज्ञानमभावप्रमाणमिति चेत्, अत्रापि वक्तव्यम्, किमस्योत्थापकम् ? प्रमाणपञ्चकाभावश्चेत्, नन्वत्रापि वक्तव्यम्, किमात्मसंबन्धी, सर्वसम्बन्धी वा प्रमाणपञ्चकाभावस्तदुत्थापकः ? न सर्वसंबन्धी, तस्यासिद्धत्वात्। नात्मसंबन्धी, तस्य आगमान्तरेऽपि सद्भावेन व्यभिचारात्, आगमान्तरे परेण पुरुषसद्भावाभ्युपगमात्, प्रमाणपञ्चकाभावो नाभावप्रमाणसमुत्थापक इति चेत्, न, पराभ्युपगमे भवतोऽप्रमाणत्वात्, प्रमाणत्वे वा वेदेऽपि नाभावप्रमाणप्रवृत्तिः; परेण तत्रापि कर्तृपुरुषसद्भावाभ्युपगमात्, प्रवृत्तौ चागमान्तरेऽपि स्यात्। नच वेदे पुरुषाभ्युपगमः परस्य मिथ्या, अन्यत्रापि तन्मिथ्यात्वप्रसक्तेः। किं स प्रमाणपञ्चकाभावः किं ज्ञातोऽभावप्रमाणजनकः, उताज्ञातः ?

यदि ज्ञातः, तदा न तस्य प्रमाणपञ्चकाभावाज्ज्ञप्तिः, अनवस्था-प्रसङ्गात्। नापि प्रमेयाभावात्, इतरेतराश्रयदोषात्। अथाज्ञातस्त-ज्जनकः, न; समयानभिज्ञस्यापि तज्जनकत्वप्रसङ्गात्। नचाज्ञातः प्रमाणपञ्चकाभावोऽभावज्ञानजनकः; कृतयत्नस्यैव प्रमाणपञ्चका-भावोऽभावज्ञापक इत्यभिधानात्। नच इन्द्रियादेरिवाज्ञातस्यापि प्रमाणपञ्चकाभावस्याभावज्ञानजनकत्वम्; अभावस्य सर्वशक्तिरहि-तस्य जनकत्वविरोधात्, अविरोधे च भावेऽपि अभाव इति नाम कृतं स्यात्। न तुच्छात्तदभावज्ञानम्, किन्तु प्रमाणपञ्चकरहिता-त्मन इति चेत्; न, आगमान्तरेऽपि तथाभूतस्यात्मनः संभवात् अभावज्ञानोत्पत्तिः स्यात्। प्रमेयाभावोऽपि तद्धेतुः, तदभावान्ना-गमान्तरेऽभावज्ञानमिति चेत्, न; अभावाभावः प्रमेयसद्भावः, तस्य प्रमाणान्तरेणानिश्चये कथमभावाभावप्रतिपत्तिः? अभाव-ज्ञानाभावात् तत्प्रतिपत्तिर्न सदुपलम्भकप्रमाणसद्भावात् इति चेत्, न, अभावज्ञानस्य प्रमेयाभावकार्यत्वात् तदभावान्नाभावाभावाव-गतिः, कार्याभावस्य कारणाभावव्यभिचारात्, अप्रतिबद्धसामर्थ्य-स्याभावप्रतीतावपि नेष्टसिद्धिः, क्वचित्प्रदेशे घटाभावप्रतिपत्तिस्तु न घटाभावज्ञानात्, किन्त्वेकज्ञानसंसर्गिपदार्थान्तरोपलम्भात्। नच पुरुषाभावाभावप्रतिपत्तावयं न्यायः, तदेकज्ञानसंसर्गिणः क-स्यचिदप्यभावात्, न पुरुष एव तदेकज्ञानसंसर्गी, पुरुषभावाभाव-योर्विरोधेनैकज्ञानसंसर्गित्वासंभवात्, संभवेऽपि न पुरुषोपलम्भभात्, तद् प्रवर्तते इति। किंच कस्याभावज्ञानाभावात् प्रमेयाभावाभावः, वादिनः, प्रतिवादिनः, सर्वस्य वा? यदि वादिनोऽभावज्ञानाभावा-न्नागमान्तरे प्रमेयाभावः, वेदेऽपि मा भूत्, तत्रापि प्रतिवादिनोऽ-भावज्ञानाभावस्याविशेषात्। अथागमान्तरे वादिप्रतिवादिनोरुभ-

योरपि अभावज्ञानाभावान्न प्रमेयाभावः, वेदे तु प्रतिवादिनोऽभावज्ञानाभावेऽपि वादिनोऽभावज्ञानसद्भावात्, न, वादिनो यदभावज्ञानं तत्सांकेतिकं नाभावबलोत्पन्नम्, आगमान्तरे प्रतिवादिनोऽप्रामाण्याभावज्ञानवत्। नच सांकेतिकादभावज्ञानादभावसिद्धिः; अन्यथाऽऽगमान्तरेऽपि ततोऽप्रामाण्याभावसिद्धिप्रसङ्गः। तन्नागमान्तरे वादिनोऽभावज्ञानात् गतिः। नापि प्रतिवादिनोऽभावज्ञानाभावात्तत्र तद्गतिः, वेदेऽपि तत्प्रसङ्गात्। अत एव न सर्वस्याभावज्ञानाभावात्। असिद्धश्च सर्वस्याभावज्ञानाभावः। तन्नात्मा प्रमाणपञ्चकविनिर्मुक्तोऽभावज्ञानजनकः। अथ वेदानादिसत्त्वमभावज्ञानोत्थापकम्, अत्रापि वक्तव्यम्—ज्ञातमज्ञातं वा तत्तदुत्थापकम्? न ज्ञातम्, तज्ज्ञानासंभवात्, प्रत्यक्षादेस्तज्ज्ञापकत्वेनाप्रवृत्तेः। प्रवृत्तौ वा तत एव पुरुषाभावसिद्धेरभावप्रमाणवैयर्थ्यम्, अनादिसत्त्वसिद्धेः पुरुषाभावज्ञाननान्तरीयकत्वात्। नाप्यज्ञातं तत्तदुत्थापकम्; अगृहीतसमयस्यापि तत्र तदुत्पत्तिप्रसङ्गात्, केनचित्प्रत्यासत्तिविप्रकर्षाभावात्। तन्नानादिसत्त्वमपि तदुत्थापकमिति नाभावप्रमाणम्। नचाभावप्रमाणस्य प्रामाण्यम्, प्राक्प्रतिषिद्धत्वात्, प्रतिषत्स्यमानत्वाच्च।

अथ पर्युदासरूपमपौरुषेयत्वम्, किं तत्? न पौरुषेयत्वादन्यतः सत्त्वम्, तस्यास्माभिरपि अभ्युपगमात्। नानादिसत्त्वम्; तद्ग्राहकप्रमाणाभावात्। तथाहि—न तावत् तद्ग्राहकं प्रत्यक्षम्, अक्षानुसारितया तथा व्यपदेशात्, अक्षाणां चानादिकालसंगाभावेन तत्संबद्धतत्सत्त्वेनाप्यसंबन्धात्। न तत्पूर्वकप्रत्यक्षस्य तथा प्रवृत्तिः प्रवृत्तौ वा तद्वदनागतकालसंबद्धधर्मस्वरूपग्राहकत्वेनापि प्रवृत्तेः, न सर्वज्ञनिषेधः। तथा "सत्संप्रयोगे पुरुषस्य इन्द्रियाणां बुद्धिजन्म

तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्” इति सूत्रम् ।

भविष्यति न दृष्टं च, प्रत्यक्षस्य मनागपि ।

सामर्थ्यम्” इति वार्तिकं व्याहतं स्यादिति न प्रत्यक्षात् तत्सिद्धिः । नाप्यनुमानात्, तस्याभावात् । अथ—

अतीतानागतौ कालौ वेदकालविवर्जितौ ।

कालत्वात्, तद्यथा कालो वर्तमानः समीक्ष्यते” ॥ १ ॥

इत्यतोऽनुमानात्तत्सिद्धिः, न; अस्य हेतोरागमान्तरेऽपि समानत्वात् । किंच किं यथाभूतो वेदकरणासमर्थपुरुषयुक्त इदानीं तत्कर्तृपुरुषरहितः काल उपलब्धः, अतीतोऽनागतो वा तथाभूतः कालत्वात् साध्यते, उत अन्यथाभूतः । तथाभूतश्चेत्, तदा सिद्धसाध्यता । अथान्यथाभूतः, तदा संनिवेशादिवदप्रयोजको हेतुः । तथाहि यथाभूतानामभिनवकूपप्रासादादीनां संनिवेशादि बुद्धिमत्कारणपूर्वकत्वेन व्याप्तमुपलब्धम्; तथाभूतानामेव जीर्णकूपप्रासादादीनां तद्बुद्धिमत्कारणकत्वप्रयोजकम्, नान्यथाभूतानाम् । यदि पुनरन्यथाभूतस्याप्यतीतानागतस्य कालस्य तद्रहितत्वं साधयेत् कालत्वम्, तदा अन्यथाभूतानामपि भूधरादीनां संनिवेशादि बुद्धिमत्कारणपूर्वकत्वं साधयेत्; न तस्य सर्वजगज्ज्ञातुः कर्तुश्चेश्वरस्य सिद्धेश्चान्यथाभूतकालभावसिद्धिरिति अपौरुषेयत्वसाधनं च वेदानामनवसरम् । अथ तथाभूतस्यैवातीतानागतस्य वा कालस्य तद्रहितत्वं साध्यते, नच सिद्धसाध्यता, अन्यथाभूतस्य कालस्याभावात्, न; अन्यथाभूतः कालो नास्तीति कुतः प्रमाणादवगतम्? यद्यन्यतः, तत एवापौरुषेयत्वसिद्धेः किमनेन? अतोऽनुमानाच्चेत्, न, अन्यथाभूतकालाभावात्, अतोऽनुमानात्तद्रहितत्वसिद्धिस्तत्सिद्धेस्तत्सिद्धिरितीतरेतराश्रयदोषप्रसङ्गात् । तदेवमन्यथाभू-

तकालस्याभावासिद्धेस्तथाभूतस्य तद्रक्षितत्वसाधने सिद्धसाधनमिति। नापि शब्दात् तत्सिद्धिः, इतरेतराश्रयदोषप्रसङ्गात्। तदेवमन्यथा कथं वेदवचनमस्ति। नापि विधिवाक्यादपरस्य भवद्भिः प्रामाण्यमभ्युपगम्यते, अभ्युपगमे वा पौरुषेयत्वमेव स्यात्। तथाहि—तत्प्रतिपादकानि वेदवचांसि श्रूयन्ते। "हिरण्यगर्भः समवर्तताग्रे" 'तस्यैव चैतानि निःश्वसितानि' "याज्ञवल्क्य इति होवाच' इत्यादीनि। तन्न शब्दादपि तत्सिद्धिः। नाप्युपमानात् सिद्धिः। यदि हि चोदनासदृशं वाक्यमपौरुषेयत्वेन किञ्चित्सिद्धं स्यात्, तदा तत्सादृश्योपमानेन वेदस्यापौरुषेयत्वमुपमानात् सिद्धं स्यात्। न च तत् सिद्धमिति उपमानादपि न तत्सिद्धिः। नाप्यर्थापत्तेः, अपौरुषेयत्वव्यतिरेकेणानुपपद्यमानस्य सिद्धवेदे कस्यचिद्धर्मस्याभावात्। नाप्रामाण्याभावलक्षणो धर्मोऽनुपपद्यमानो वेदस्यापौरुषेयत्वं कल्पयति। आगमान्तरेऽपि तस्य धर्मस्य भावादपौरुषेयत्वं स्यात्। नचासौ तत्र मिथ्या, वेदेऽपि तन्मिथ्यात्वप्रसङ्गात्। अथागमान्तरे पुरुषस्य कर्तुरभ्युपगमात् पुरुषाणां च सर्वेषामपि आगमादिषु रक्तत्वात्; तद्दोषजातस्याप्रामाण्यस्य तत्र संभवात् नाप्रामाण्याभावलक्षणो धर्मस्तत्र सत्यः, वेदे त्वप्रामाण्यजनकदोषास्पदस्य पुरुषस्य कर्तुरभावादप्रामाण्याभावलक्षणो धर्मः सत्यः। कुतः पुनस्तत्र पुरुषाभावो निश्चितः? अन्यतः प्रमाणादिति चेत्, तदेवोच्यताम्; किमर्थापत्त्या। अर्थापत्तितश्चेत् न, इतरेतराश्रयदोषप्रसङ्गात्। तथाहि—अर्थापत्तितः पुरुषाभावसिद्धावप्रामाण्याभावसिद्धिरेतत्सिद्धौ चार्थापत्तितः पुरुषाभावसिद्धिरितीतरेतराश्रयत्वम्, चक्रकचोद्यं चापि। तथाहि—यद्यप्रामाण्याभावलक्षणो धर्मोऽनुपपद्यमानो वेदेऽपौरुषेयत्वं कल्पयति, आगमान्तरेऽप्यसौ धर्मस्तत्किं

न कल्पयति। तत्र पुरुषदोषसंभवाद्सौ धर्मो मिथ्या, तेन तन्न कल्पयति ? वेदे कुतः पुरुषाभावः। अर्थापत्तेश्चेत्, एतदागमान्तरे समानमित्यादि तदेवावर्तते इति चक्रकानुपरमः। नाप्यतीन्द्रियार्थप्रतिपादनलक्षणो धर्मोऽनुपपद्यमानो वेदे पुरुषाभावं कल्पयति; आगमान्तरेऽपि समानत्वात्। नचाप्रामाण्याभावे पुरुषाभावः सिध्यति, कार्याभावस्य कारणाभावं प्रति व्यभिचारित्वेनान्यथानुपपन्नत्वासंभवात्। अप्रतिबद्धासमर्थपुरुषाभावसिद्धावपि न सर्वथा पुरुषाभावसिद्धिः, पुरुषमात्रस्यानिराकरणादिष्टासिद्धिश्च, अप्रामाण्यकारणस्य तत्कर्तृत्वेनास्माकमप्यनिष्टत्वात्। नापि प्रामाण्यधर्मोऽन्यथानुपपद्यमानो वेदे पुरुषाभावं साधयति, आगमान्तरेऽपि तुल्यत्वात्—इति।

अत्रोच्यते—सर्वमेवैतत् पराभिप्रायापरिज्ञानकौशलम्। तथाहि—अपौरुषेयत्वं हि स्वसजातीयोच्चारणसापेक्षोच्चारणसामान्यकत्वम्। उच्चारणानामन्योन्यसाजात्यं च एकानुपूर्वीकवर्णसमुदायव्यञ्जकत्वेन।

एवंविधमपौरुषेयत्वं च वेदे प्रत्यक्षगम्यमेव। अस्य ह्यध्ययनाध्यापनपरम्पराया अनादेर्घटकानि सकलान्येवोच्चारणानि तदा तदा तदातनैः स्वस्वसजातीयपूर्वपूर्वोच्चारणसापेक्षाण्येवानुभूयन्ते साम्प्रतिकमिव साम्प्रतिकैः, नच कस्याञ्चिदपि वेदोच्चारणव्यक्तौ प्रधानं प्राथम्यं केनचिदनन्यथासिद्धेन प्रमाणेन प्रतिपादयितुं शक्यते, तत्प्रतिपादकप्रमाणत्वेन परोपन्यस्तानां वाक्यत्वादिहेतूनां वेदवाक्यानां चान्यथासिद्धेरस्मिन्नेव प्रकरणे स्पष्टतरमुपपादितचरत्वात्। उक्तप्रधानप्राथम्यासिद्धौ च न वेदस्य क्वचिदपि तादृशोच्चारणे स्वसजातीयोच्चारणसापेक्षत्वं शक्यते

बाधितुम्। प्रथम एव हि भारतादीनां व्यासादिकर्तृकोच्चारणे स्वसजातीयोच्चारणसापेक्षत्वं नास्ति। अत एव च न तेषु कोऽप्यपौरुषेयत्वमभ्युपगच्छति। अनन्यथासिद्धानि हि कर्तृस्मृतिवाक्यानि तत्र जाग्रति, यानि करोतिनिर्मातिरचयतिप्रभृतिभी रचनावाचिभिर्घटितानि, कर्तृस्मरणपरम्पराश्च पूर्वोक्तास्तादृश्योऽध्यापकाध्येतृपरम्परासु। इदं चापौरुषेयत्वं वेदानामीश्वरकर्तृकत्वेऽपि नानुपपन्नम्। तत्तन्महाकल्पादिसृष्टौ तत्तत्पूर्वमहाकल्पादिसृष्टिकालिकस्वकीयवेदोच्चारणानुसारेणैव भगवता वेदस्योच्चारितत्वात्। परकीयसजातीयोच्चारणसापेक्षत्ववद्धि स्वकीयपूर्वपूर्वसजातीयोच्चारणसापेक्षत्वमपि तादृशोच्चारणसापेक्षत्वमेव। उक्तापौरुषेयत्वशरीरे परकीयत्वस्याप्रवेशादेव च भगवत्कर्तृकत्वेऽपि न वेदस्यापौरुषेयत्वव्याघातः। भगवतश्चैवंभूते वेदकर्तृत्वेऽपि न भारतादिरचनासु व्यासादीनामिव तस्य वेदोच्चारणे स्वातन्त्र्यम्, स्वकीयसजातीयपूर्वोच्चारणपारतन्त्र्यात्। इदमेव च वेदापौरुषेयत्वं भट्टपादश्रीकुमारिलस्वामिनां संमतम्; "सर्वतः प्रतिषेध्या नः पुरुषाणां स्वतन्त्रता" इति स्पष्टमेव तेनोक्तत्वात्। प्रपञ्चितं चैतत् अत्रैव प्रकरणे पूर्वोद्धृतेन माधवाचार्यविहितेन पराशरस्मृतिव्याख्यानेन। एवं च न भगवत्कर्तृकस्यापि कस्यचिद् वेदोच्चारणस्य मुख्यं प्राथम्यम्, येनोक्तमपौरुषेयत्वं वेदादपेयात्। अस्य चापौरुषेयत्वस्य भावरूपत्वान्नात्र जैनोक्तानां प्रसज्यप्रतिषेधपर्युदासविकल्पादिकुचोद्यानां कथञ्चिदप्यवकाशलेशः। जैनेन हि श्रीभट्टपादानामुक्तं भावमाकलयितुमशक्नुवता शुष्कशाब्दिकेनेवापौरुषेयत्वपदस्यावयवार्थमात्रमाश्रित्यापौरुषेयत्वस्याभावरूपतां प्रतिसंदधता वृथैव तादृशकुचोद्यप्रपञ्च उदञ्चितः। तस्मात्

प्रकाशे घूकस्य तमोभ्रम इव तस्य भाव एवायमभावभ्रमः । किंच अपौरुषेयत्वस्य भ्रमादत्यन्ताभावरूपत्वमाश्रित्यापि "किमस्योत्थापकम्" इत्यादि "अन्यत्रापि तन्मिथ्यात्वप्रसक्तेः" इत्यन्तं यदुक्तम्, तदपि स्वाभ्यूहितमात्रस्य दूषणत्वादुपेक्ष्यमेव । न हि वेदतदन्यागमयोर्वादिप्रतिवादिगतौ पुरुषसद्भावानभ्युपगमाभ्युपगमौ विनिगमकतया कश्चिदुपन्यस्यति, यम्प्रति तथा प्रत्यवस्थीयते, अपि तूच्चारणपरम्परायां आगमान्तरे द्रढीयस्याः कर्तृस्मृत्या बाधात् पौरुषेयत्वम्, वेदे तु अनन्यथासिद्धाया उक्तपारतन्त्र्यशून्यस्य कर्तुः स्मृतेरभावात् अबाधिता सोच्चारणपरम्परैवानादिः पौरुषेयत्वं वेदस्य व्यासेधन्ती तदभावं गमयति । वेदविषये कर्तृस्मरणसमर्पकत्वेन परोपन्यस्तानि वाक्यानि त्वत्रैव प्रकरणे पूर्वोक्तया रीत्याऽन्यथोपपादितत्वान्न क्षमन्ते तामुच्चारणपरम्परां कामपि कल्पामाश्रित्याक्षेप्तुमित्येव वैदिकैरुच्यते । तत्र कथंतरामुक्तानभ्युपगममूलकोक्तदूषणावतारसंभवः ? अन्यथा जिनशासनानामपि पराभ्युपगतं पौरुषेयत्वं भज्येत, प्रमाणाभावात् । नह्यतिप्राक्तनतत्तज्जिनजनकर्तृका तत्तच्छासनवाक्यस्य रचना तदतिपाश्चात्यैरभयदेवादिभिः साक्षादन्वभावि, नवा वाक्यत्वादिहेतुनाऽनुमातुं शक्यते, रचनापदार्थघटकमुच्चारणगतं मुख्यप्राथम्यं प्रति वाक्यत्वादेरप्रयोजकतायाः पूर्वमुपपादितत्वात्, किन्तु जिनशासनतत्तद्ग्रन्थघटकमन्यग्रन्थस्थं वा तत्तज्जिनकर्तृकतत्तच्छासनकर्मकरचनाया अनन्यथासिद्धं स्मारकं तत्तद्ग्रन्थगतवाक्यान्तराविरुद्धं च वाक्यमेव पौरुषेयत्वगमकम् । एवं च पूर्वोक्तरीत्या वेदे तादृशवाक्याभावात्पौरुषेयत्वाभावसिद्धिः केन वारयितुं शक्येत ? एतेन "किंच प्रमाणपञ्चकाभावः किं ज्ञात इत्यादिकं सिद्धसाधनमिती"

त्यन्तमपास्तम्; वैदिकानभिप्रेतयुक्तिदूषणत्वात्। यदपि वेदस्य पौरुषेयत्वे "हिरण्यगर्भ" इत्यादिवेदवाक्यत्रयं स्वतन्त्रकर्तृस्मरणसमर्पकतयोपन्यस्तम्, तदपि हेयमेव; "हिरण्यगर्भ" इत्यादेर्वाक्यस्य क्षुद्रोपद्रवविद्रावणे वक्ष्यमाणेनार्थेन प्रकृतेऽनुपयोगात्, निःश्वसितवाक्यस्य प्रत्युतापौरुषेयत्वसाधकतायाः पूर्वमेवोक्तत्वात्, याज्ञवल्क्यइतीत्येवमादिवाक्यानां तात्पर्यस्यात्रैव पूर्वमुक्तत्वात्, अग्रेऽप्याम्रेडयिष्यमाणत्वाच्च। यदपि नापि विधिवाक्यादपरस्य भवद्भिः प्रामाण्यमभ्युपगम्यत इति; तदप्यज्ञानात्। तथाचार्थवादप्रामाण्यप्रकरणे वक्ष्यते। किंच 'वाचा विरूपनित्यये' ति पूर्वोदाहृते मन्त्रवर्णे कथं न दृष्टिरदायि? अत्र हि वेदवाचो नित्यत्वमपौरुषेयत्वपर्यवसन्नं साक्षादेवोच्यते। नचागमान्तरेष्वपि तदपौरुषेयतानिर्देशकं किञ्चिद् वाक्यमुपलभ्यते। एवं च स्पष्टमेव नित्यत्वप्रतिपादकस्यास्यानुसारात् सर्वेषामेव पौरुषेयतासूचकत्वेन परोपन्यस्तानां वेदवाक्यानां पूर्वोक्तरीत्या मत्प्रतिपादितार्थ एव रमणीय इति नागमान्तरेषु वेदसाम्यम्। "नाप्युपमानादि" त्यादि "चक्रकानुपरम" इत्यन्तं स्वारोप्यदूषणत्वादुपेक्ष्यम्। यत्तु "नाप्यतीन्द्रियार्थेत्यादि" "न सर्वथा पुरुषाभावसिद्धिः" इत्यन्तम्, तदपि न विचारसहम्। तथाहि—किं तदागमान्तरं यत्रातीन्द्रियार्थप्रतिपादनस्य सामान्यमभिधीयते; मनुचरकादिसंहितादिकं वा बुद्धजिनाद्यागमो वा? नाद्यः, तस्यातीन्द्रियार्थांशे वेदमूलकतयैव प्रामाण्याभ्युपगमेन तत्रातीन्द्रियार्थप्रतिपादनस्य वेदातीन्द्रियार्थप्रतिपादनान्तर्गततया वैदिकत्वात्। न द्वितीयः, बुद्धजिनादीनामतीन्द्रियार्थदर्शित्वे मानाभावेन तत्रत्यस्य तत्प्रतिपादनस्याप्रामाणिकतया धर्मलक्षणसूत्रे प्रत्यक्षसूत्रे च वार्तिक एव प्रपञ्चितत्वात्। अप्रामाण्यनिश्चयानास्क-

न्दितं हि तादृशार्थप्रतिपादनमपौरुषेयत्वसाधकतयाऽभिप्रेयते, तच्च न बुद्धाद्यागमेषु समानम्। वैदिकस्य तादृशार्थप्रतिपादनस्याबाधश्चोपरिष्टादुपपादयिष्यते। विस्तरस्तु श्रीचित्सुखाचार्यकृतायां तत्त्वप्रदीपिकायामाद्यपरिच्छेदस्यान्ते द्रष्टव्य इत्यलमतिविस्तरेण॥

यदपि चार्वाकाः—

त्रयो वेदस्य कर्तारो धूर्तभण्डनिशाचराः।
जर्भरी तुर्फरीत्यादि पण्डितानां वचः स्मृतम्॥
अश्वस्यात्र हि शिश्नं तु पत्नीग्राह्यं प्रकीर्तितम्।
भण्डैस्तद्वत् परं चैव ग्राह्यजातं प्रकीर्तितम्।
मांसानां खादनं तद्वन्निशाचरसमीरितम्॥ इति वदन्ति, तदपि बाललीलाकल्पम्, प्रत्यक्षैकप्रमाणाभ्युपगन्तॄणां तेषां मते साक्ष्यस्य पद्यद्वयस्याप्रमाणत्वात्, अस्य प्रामाण्याभ्युपगमे तत्सिद्धान्तस्यैव भङ्गप्रसङ्गात्, एकस्य विजिगीषोर्वाक्ये तत्प्रतिकूलस्यान्यस्य विजिगीषोरप्रत्ययेन तं प्रति तस्य शब्दविधया प्रमाणयितुमशक्यत्वाच्च। किंच उक्तविधेषु वेदभागेषु धूर्तादिरचितत्वस्य चार्वाकेण प्रत्यक्षसिद्धत्वमवश्यं वाच्यम्, अन्यथा तस्याप्रामाणिकत्वप्रसङ्गात्। तच्च नैव संभवति, तथासति कस्को वेदभागः किंकिंनामभिधूर्तभण्डनिशाचरैः कस्मिन् कस्मिन् वर्षे मासे पक्षे तिथौ च कुत्र कुत्र देशे रच्यमानः किंकिंनामभिर्लोकैः साक्षात्कृतः? त्वया चाधुनिकेन चिरतरातिक्रान्तानां स स वेदरचनासाक्षात्कारः कथंकारं निर्णीतः? इत्याद्यनुयोगे चार्वाकस्य मूकत्वापत्तेः। वेदस्य तद्भागेषु धूर्तादितत्तद्रचितत्वस्य सम्भावनामात्रं तु प्रमाणविरहादत्यन्तमकिञ्चित्करमेव। अपिच जर्भर्यादिशब्दानामर्था मन्त्रभागप्रामाण्यनिरूपणावसरे निपुणतरमुपवर्णयिष्यन्त इति क्व धूर्ततावार्तापि, प्रत्युत तदर्थाज्ञानं चार्वाक-

स्यैव दूषणमतिजागरूकम्। किंच न ह्यश्वमेधादिकर्मीदृशं कर्म, यदकरणे प्रत्यवायः स्यात्, अग्निहोत्रादिवत्, अपितु काम्यमेव, तत्रैव चाश्वाद्युपयोग उक्तो वेदे; नतु नित्येऽपि यज्ञे। काम्ये च कर्मणि न कंचन वेदः साग्रहं प्रवर्तयति, किंतु यस्तत्फलं कामयेत, यस्मै च तत्फलकामुकाय तत्कर्म रोचेत, स तत्र प्रवर्तेतेत्येवाभिप्रैति। तथाच तत्र चार्वाका मा प्रवर्तिषतेत्येतावता न वेदस्य किंचिदपचीयते, अतिक्रान्तेऽनादौ समये तत्कर्तृसहस्रसद्भावात्। अपिच यानि फलान्युद्दिश्य वेदे यज्ञा विधीयन्ते, तान्युद्दिश्योपासना अपि तत्र विधीयन्ते—यथा 'उषा वा अश्वस्य मेध्यस्य शिरः' इत्यादि। उपासनासु तु नास्त्येवाश्लीलत्वाद्यारोपसम्भवोऽपि। सर्वेषां च चित्तं ग्रहीतव्यमित्यभिप्रेत्यैव चैकस्मै फलायानेकविधोपायोपदेश इति कुतो दोषशङ्कावकाशः? चार्वाकमते च पूर्वैरास्तिकैः पण्डितप्रवरैरनेकानि दुरुद्धराणि दूषणान्युपवर्ण्य तत्तद्ग्रन्थेषु तिलशः शकलितं तन्मतम्। वेदविषयाणि तद्वाक्यानि कतिपयानि त्विह दिक्प्रदर्शनन्यायेन खण्डितानीत्यलमेतावतेति ध्येयम्।

माहम्मदादिग्रन्थानामपौरुषेयत्वनिरासः

एतेन—यत् माहम्मदादिग्रन्थानामपीश्वराज्ञात्वादपौरुषेयत्वापत्तिरिति वर्णितम्, तदपि व्याख्यातम्। माहम्मदादिग्रन्थानामपि हि प्राथमिकमेवोच्चारणमिति पूर्वोक्तप्रकारेण पौरुषेयत्वम्। अन्यथा हि माहम्मदतः पूर्वमपि तेषां ग्रन्थानां सत्त्वे कथं वा माहम्मदस्यैव प्रवर्तकत्वमिति सिद्धान्त उपपद्यते। एतदेवाभिप्रेत्योक्तं सांख्यतत्त्वकौमुद्यादिषु:—आप्तग्रहणेन चायुक्ताः शाक्यभिक्षुकनिर्ग्रन्थकसंसारमोचकादीनामागमाभासा निरस्ता भवन्ति। अयुक्तत्वं चैतेषां विगानात्, छिन्नमूलत्वात्, प्रमाणविरुद्धार्थाभिधानात्, कैश्चदेव च म्लेच्छादिभिः

पुरुषापसदैः पशुप्रायैः परिग्रहात् बोद्धव्यमिति। सर्वथा तु वेदवाक्यापौरुषेयत्वे न कोऽपि विरोध इति मनुष्यबुद्धिकल्पितत्वं धर्मचोदनाविशेषाणामनुपपन्नमेवेति धर्माधर्मयोः न देशकालपरिस्थितिमूलकत्वम्। यत्तु ब्रह्मादीनामपि मनुष्यत्वमेवेत्यादि विवेचितम्, तदिदं बहुप्रमाणविरुद्धम्। व्यक्तञ्चैतन्मैत्रायण्युपनिषदादिषु। चोदनानां सर्वासामितिहासमूलकत्वं जैमिनेरप्यभिमतमिति कल्पनं तु शाबरादिसिद्धान्तविरुद्धमित्यत्र न विशयलेशोऽपि। यत एते प्रबन्धकारा अपि शबरस्वामिनां भाष्यस्य प्रमादमूलकत्वमेव स्थापयन्ति।

[शाबरभाष्यमण्डनं प्रकृतप्रबन्धसमालोचनञ्च]

इदमेवात्रास्माकं वक्तव्यम्—जैमिनिसूत्रव्याख्याने न शबरस्वामिनां प्रमादः, किन्तु प्रकृतप्रबन्धकाराणामेवेति। तत्र 'अथातो धर्मजिज्ञासा' इति सूत्रस्य शाबरं व्याख्यानं 'अध्ययनानन्तरं समावर्तनमकृत्वा धर्मविचारः कर्तव्यः, इति प्रतिज्ञापरमेव विवक्षितम्। प्रतिज्ञापरेऽप्यत्र धर्मपदेन तत्साधनादीनामपि विवक्षेत्येतावदेव 'कान्यस्य साधनानि, इत्यादि विवेचितमिति नात्राध्याहारलेशोऽपि, येन 'नाध्याहारादिभिरेषामर्थः परिकल्पनीयः' इति स्ववाक्यविरोधः स्यादिति न दोषः। एतेन—परस्परविरोधेनाप्रमाणमिदं शाबरं व्याख्यानमिति ग्रन्थः—परास्तः। वस्तुतस्तु नात्राध्याहारादिलेशः। अत्र ह्यथशब्देनापि तदानन्तर्यमेव विवक्षणीयम्, यस्य जिज्ञासाहेतुत्वम्, न हि जैमिनिकालादीनां विचारनिमित्तम्। जिज्ञासाशब्देन हि विचारणीयस्य धर्मस्य संशयितत्वं गम्यते। नहि लौकिकैः प्रत्यक्षानुभूयमाने च पदार्थे धर्मपदाभिधेये संशयः संभवति। अतश्च वेदाध्ययनानन्तर्यमेव विवक्षणीयम्। तस्य हि तदर्थविचारोपयोगित्वं वर्तत-

एव । एतेन—अतःशब्दावृत्तिरपि—परास्ता; वेदाध्ययनस्य विचारहेतुत्वमर्थसिद्धं यत् तस्यैवानुवादात् । एतेन—चोदनापदमपि—व्याख्यातम्, वेदाध्ययनानन्तर्ये विवक्षिते वेदस्यैव चोदनापदेन ग्रहणौचित्यात् । नहि किमपि लौकिकवाक्यं पूर्वमुपस्थितं वर्तते । यत्तु—मनुष्यबुद्धिविरचितं धर्मवाक्यम्, तद्धि किमपि न प्रसिद्धं शशशृङ्गायमाणत्वादिति पूर्वमेव विवेचितम् । एतेन—"चोदनालक्षणोऽर्थो धर्मः" इति सूत्रविवरणमपि—व्याख्यातम् । अत्र हि चोदनापदेन वेदवाक्यस्यैव ग्रहणेऽपि हि न 'वेदांश्चैके' इत्यादिसूत्रवैयर्थम्, विषयभेदात् । न हि 'वेदांश्चैके' इत्यत्रापि वेदस्य प्रामाण्यं साध्यते; प्रामाण्यस्य स्वतस्त्वेनासाध्यत्वात्, किन्तु परतः शङ्क्यमानस्याप्रामाण्यस्य परिहार इति न कोऽपि दोषः । अन्यथा लौकिकचोदनाया एव ग्रहणे तस्याः पौरुषेयत्वस्य सर्वसम्मतत्वात् भवतामेव मते तदधिकरणविरोधः पूर्वपक्षायोगश्च स्यात् । एतेन—चोदनाद्वयस्यापि ग्रहणमिति शङ्कापि—परास्ता । नहि लौकिकचोदनागम्य एकोऽपि धर्मोऽत्र विचारितः । अग्निहोत्रादिवाक्यानि तत्तादृशादृष्टार्थकर्मभेदः, अपूर्वसाधनादिकं सर्वं जैमिनेर्विफलमेव स्यात् । एतेन—धर्मव्याख्यापरत्वमस्य सूत्रस्येति सिद्धान्तोऽपि—व्याख्यातः । धर्मव्याख्या हि प्रमाणव्याख्यया स्वरूपव्याख्यया च भवति । उभयञ्चात्र बोध्यत इत्येव खलु शबरस्वामिनामप्याशयः । अत्र च सम्भवन् वाक्यभेदोऽपि सोढव्य एवेति भाष्य एव व्यक्तम् । तद्यथा—नन्वशक्तमिदं सूत्रमिमावर्थावभिवदितुम् 'चोदनालक्षणो धर्मो नेन्द्रियलक्षणः, अर्थश्च धर्मो नानर्थ इति । एकं हीदं वाक्यम्, तदेवं भिद्येत, उच्यते—यत्र वाक्यादर्थोऽवगम्यते, तत्रैवम् ।

तत्तु वैदिकेषु न सूत्रेषु। अन्यतोऽवगतेऽर्थे सूत्रमेवमर्थमिदमित्यवगम्यते। तेन चैकदेशः सूत्र्यत इति सूत्रम्। तत्र भिन्नयोरेव वाक्ययोरिमावेकदेशावित्यवगन्तव्यमिति। अत्र हि सूत्रे न चोदनाया निःश्रेयसस्य च साध्यसाधनभावगम्यः सम्बन्धो बोध्यत इति शबरस्वामिनो व्याचक्षते। इदं खलु शबरस्वामिनां मतमत्र, यन्निःश्रेयससाधनत्वेन वेदेन बोध्यते, स धर्म इति; यन्निश्रेयससाधनम्, तद्वेदैकगम्यमिति च। तथाच नात्र कोऽप्यपसिद्धान्तः। वस्तुतस्तु लौकिकचोदनाया धर्मविषयिण्या अप्रसिद्धाया ग्रहणात् भवतामेवापसिद्धान्तः समापद्यते। न हि चोदनापदेन लौकिकचोदनाया एव ग्रहणमित्यत्र प्रमाणमस्ति; अन्यथा भवतामप्यत्र चोदनायाः कथं न ग्रहणमिति भवन्त एव विवेचयन्तु। "सत्सम्प्रयोगे" इत्यादिसूत्रव्याख्याने शब्दयोजनपरिवर्तनमेव प्रकृतग्रन्थकारेण सम्पादितम्, न त्वर्थभेदः कोऽपि तत्र दृश्यते। तत्र शब्दपरिवर्तनमपि निष्प्रयोजनमेव। न हि शाबरे योजने कोऽपि दोषो वर्तते प्रदर्शितो वा। एतेन—विद्यमानोपलम्भनत्वादिति पदमपि—व्याख्यातम्। इदं ह्येवं शबरस्वामिनां व्याख्यानम्—सतश्चैतदुपलम्भनम्, नासत इति। तथाच वर्तमानोपलम्भनत्वादित्येवात्र विवरणं शबरस्वामिसम्मतमिति कथं वा भाविनि विषये न प्रत्यक्षप्रामाण्यमिति सिद्धान्तो शबरस्वामिमतेऽपि न सिध्यतीति व्यर्थमत्र लाभार्थकविदिधातोर्ग्रहणम्। भवन्मते हि विद्यमानपदं कर्मणि प्रयोगेण निर्वहणीयम्, शाबरमते तु कर्तरि प्रयोगेण। प्रचुरश्च प्रयोगो वर्तमानार्थ एव वर्तते, न लभ्यमानार्थ इति व्यर्थेयं क्लिष्टकल्पना। सर्वथा तु नात्रापि फलभेदः। एतेन-औत्पत्तिकसूत्रमपि—व्याख्यातम्। अत्र हि चोदनैव धर्मे प्रमाण-

मिति यद्व्यवस्थापितम्, न तत्र शबरसिद्धान्ताद्विशेषः। शब्दार्थसम्बन्ध एव स्थायी न शब्द इति सिद्धान्तस्तु तत्सिद्धान्तविरुद्ध इति सर्वविदितमिदम्। अत्र शब्दनित्यत्वेऽप्येतत्सूत्रतात्पर्यकल्पनं ह्यवश्यमेव। अन्यथा हि शब्दस्तत्सम्बन्ध उभयमपि एकस्मिन्नेव समये कर्तुं कथं शक्यम्? तथाच "कर्मैके तत्र दर्शना" दित्यादि सूत्राणां शब्दनित्यत्वशङ्कातत्समाधानादिपरतयैव योजनं युक्तम्, न तु शब्दार्थसम्बन्धानित्यत्वादिशङ्कापरतया। न हि "सत्त्वान्तरे च यौगपद्यम्", "प्रकृतिविकृत्योश्च" वृद्धिश्च कर्तृभूम्नास्य" "प्रयोगस्य परम्" "आदित्यवद्यौगपद्यम्" "वर्णान्तरमविकारः" "नादवृद्धिपरा" इत्यादिसूत्राणां शब्दार्थसम्बन्धविषयत्वं भवति। न हि प्रकृतिविकृतिभावादिकं नादवृध्यादिकं वर्णान्तरत्वादिकं वा सम्बन्धे भवति। अतः "कर्मैके तत्रे"ति पूर्वपक्षसूत्रस्य "नित्यस्तु स्याद्दर्शनस्य परार्थत्वादि"ति सूत्रस्य च शब्दविषयत्वमेवोरीकर्तव्यम्; अन्यथा औत्पत्तिकसूत्र एव संबन्धनित्यत्वस्य सिद्धत्वात् नित्यस्तु स्यादित्यष्टादशं सूत्रं व्यर्थं स्यात्; शाबरमतेतु औत्पत्तिकसूत्रे संबन्धनित्यत्वस्यैव स्पष्टमुपवर्णनात्, आर्थिकत्वाच्च शब्दार्थनित्यत्वस्य, "कर्मैके तत्र दर्शना" दित्यादीनां स्पष्टं शब्दनित्यत्वसमर्थनपराणां न वैयर्थ्यम्। एतेन—उपदेशरूपशब्द एव धर्मे प्रमाणम्, यतो हि प्रत्यक्षादिप्रमाणागोचराणां पदार्थानां ज्ञानं शब्दादेव जायते, इति शाबरसिद्धान्तानुवादोऽपि—परास्तः। अत्र हि शबरस्वामिना प्रत्यक्षादिभिरनवगम्यमानस्याग्निहोत्रादिलक्षणस्य ज्ञायमानस्य प्रमापकं प्रत्यक्षाद्यनपेक्षं शब्दप्रमाणमित्येव बोध्यते। अत एव—पौरुषेये हि शब्दे यः प्रत्ययस्तस्य मिथ्याभाव आशङ्क्य तेत्युत्तरग्रन्थ उपपद्यते। नह्यत्र शबरस्वामिना

प्रत्यक्षादिभिरनवगम्यमानं सर्वं शब्देन निर्णीयते इति मन्यते, येनापसिद्धान्तः कोऽपि तत्र गम्येत । प्रत्यक्षाद्यनपेक्षशब्दप्रमाणसाधनार्थमेव खलु जैमिनेरपि महानयं प्रयासः ; अन्यथा वेदस्यापि पौरुषेयत्वमेव यदि जैमिनिसम्मतम्, तर्हि लोकत एवाप्तवाक्यप्रामाण्यस्य निर्णीतत्वात् व्यर्थोऽयमायास इति सर्वविदितमिदम् । एतेन षष्ठसूत्रमारभ्य पञ्चविंशतिसूत्रपर्यन्तं जैमिन्यभिमतार्थप्रतिपादकं व्याख्यानं युक्तमिति ग्रन्थोऽपि—व्याख्यातः तथैव शबरस्वामिनापि व्याख्यानस्य सम्पादनात् । यावता च शब्दनित्यत्व एव पूर्वोक्तप्रकारेण सूत्राणां तात्पर्यमूरीकर्तव्यम्, तावतेदमपि सिद्धं भवति—यत् "लोके सन्नियमात्प्रयोगसंनिकर्षः स्यादि" ति सूत्रस्यापि शबरस्वाम्यभिमतमेव विवरणं युक्तं न प्रकृतप्रबन्धकाराभिमतम् । इदं हि सूत्रं प्रकृतप्रबन्धकारैः पुरुषार्थप्रतिपादकशब्दस्यैव चोदनात्वे निरूपितेऽपि प्रमाणभूतानां शब्दानां मर्यादा अवश्यमेव कर्त्तव्येत्येतदर्थं प्रवृत्तमित्यवतार्य सत्पुरुषैर्येषां प्रामाण्यं व्यवस्थापितम्, तेषामेव प्रामाण्यमिति प्रमाणशब्दमर्यादानिरूपणपरतया व्याख्यातम् । तत्र चोदनासूत्रे प्रथमतश्चोदनामर्यादाकरणमप्रसक्तम्, प्रतिज्ञासूत्रेण धर्मस्यैव प्रस्तुतत्वात् इत्येको दोषः । द्वितीयस्तु चोदनास्वरूप एको धर्मोऽपरो निःश्रेयसस्वरूप इति धर्मपदस्यावृत्तिप्रसङ्गेन स्पष्टमेव गम्यते । भवतु वा कथमपि तत्र व्यवस्था, प्रकृते तद्भूतानामिति सूत्रेऽर्थस्य तन्निमित्तत्वादित्यर्थस्य प्रमानिमित्तत्वं यद्वर्णितम्, तदिदं लोकेऽपि दृश्यत इत्येतन्निरूपणं खल्वपेक्षितम्, न तु प्रमाणशब्दमर्यादासम्पादनम् । अर्थशब्देन हि चोदनामर्यादाकरणेन चोदनाया औत्पत्तिकसूत्रेण प्रामाण्यव्यवस्थापने च पुरुषार्थप्रतिपादकानां

वाक्यानामेव प्रामाण्यमिति सिद्ध्या जगति विद्यमानानां सर्वेषां वाक्यानां प्रामाण्यमप्रसक्तमेवेति प्रकृतप्रबन्धकारमते "नान्तरिक्षेऽग्निश्चेतव्य" इतिवदप्रसक्तप्रतिषेधापत्तिः। एतेनासन्नियमपदार्थोऽपि व्याख्यातः। अयं हि शब्दः शबरस्वामिना प्रकृतसूत्रे "प्रयोगशास्त्रमिति चेन्नासन्नियमात्" इत्यत्र च सन्निबन्धनपरतया व्याख्यातः। इयान् विशेषः—यत् प्रकृतसूत्रे सन्नियमशब्देन सम्यङ्निबद्ध्यमानत्वं अर्थमुपलभ्य रचितत्वमितरत्र स्वरादिरहिततया पठ्यमानत्वमिति। प्रकृतप्रबन्धकारैस्तु सतां संग्रहणं सन्नियमशब्दार्थतया विवक्षितम्। अत्रार्थस्य प्रमाणनिमित्तत्वं पूर्वसूत्रे यद्वर्णितम्, तदुपपादनार्थमर्थमुपलभ्य रचितत्वमिति विवरणमेव प्रकृतोपयुक्तम्, न तु सतां संग्रहाभावः, अकारणत्वाच्च। इतरसूत्रे तु प्रकृतप्रबन्धकाराभिमतार्थोऽपि यद्यपि न विरुद्धः; तथापि स एवार्थस्तत्र विवक्षणीय इत्यत्र न किमपि प्रमाणम्। प्रयोगशास्त्राणां वेदत्वशङ्का हि स्वराद्यभावेनापि वारयितुं शक्यत एव। भवतु कथमपि तत्र व्यवस्था। प्रकृते लोकपदं हि लौकिकशब्दस्यैव सन्नियमत्वमवश्यं गमयति; अन्यथा हि तद्वैयर्थ्यमपरिहरणीयमेव। तथाच लोके सन्नियमप्रतिपादनेनालौकिकानामसन्नियमत्वमत्रावश्यं वर्णनीयम्। तत्र च प्रमाणशब्दमर्यादासम्पादनमाश्यकमेव स्यात्। वस्तुतस्तु—प्रकृते प्रकृतप्रबन्धकारैरपि सन्निकर्षशब्देनैव संग्रहो विवक्ष्यते, न सन्नियमशब्देन।

सूत्रे तु सन्नियमशब्देनैव संग्रहो विवक्ष्यत इति स्पष्टमिदमुक्तप्रबन्धपर्यालोचनशीलनाम्। तथाचैक एवार्थः सन्नियमशब्दस्योभयत्रापीति व्याहतमिदं वच इत्यत्र न विशयलेशोऽपीति शाबरं विवरणमेव वयं समुचितं पश्यामः, न प्रकृतप्रबन्धकाराणां

विवरणम्। नह्येतादृशं विवरणं सप्रयोजनमपि। अनेन हि विवरणेन प्रमाणमर्यादाकरणमेव प्रयोजनमभिकाङ्क्ष्यते, न च विनाप्यनेन विवरणेन तदसिद्धिर्भवति। चोदनामर्यादाकरणे तत्प्रामाण्यव्यवस्थापने च कृते हि कथं वा प्रमाणशब्दामर्यादा स्यात्। एतेन—यदि नाम न स्युः प्रमाणवाक्यानि परिगणितानि, व्यवहारीतिर्विकला स्यादिति शङ्कापि—परास्ता ; न हि लौकिकव्यवहारनिर्वाहकप्रमाणपरिगणनमत्र क्रियते इति वक्तुं योग्यम्, अप्रस्तुतत्वात्; अलौकिकव्यवहारे तु प्रमाणान्तरापेक्षैव नास्तीति प्रकृतप्रबन्धकारैरपि निरूपितमिति न तद्वैकल्यशङ्काया अप्यवसरः। वस्तुतस्तु "न शास्त्रपरिमाणत्वात्" इति सूत्रे स्पष्टमेव शास्त्राणां प्रमाणशब्दानां परिगणनाद्व्यर्थमिदं सूत्रमापद्यते। परमार्थतस्तु—नानेनापि विवरणेन शास्त्रपरिगणनमत्र सिद्धं भवति। सतां संग्रहादित्येव खलु विवक्षितमत्र सन्नियमशब्देन। कानि च प्रमाणानि सद्भिः संगृहीतानि? कानि च नेति तु नात्र सूत्रावयवतो लभ्यते। लभ्यतां वा कथंचन भवदभिमतार्थसिद्धिरपि, एवमप्यत्र सन्नियमशब्देन सतां संग्रहादिति विवरणं सूत्रान्तरानुसारेण भवद्भिः कल्प्यमानं नोपपद्यते। न हि "प्रयोगशास्त्रमिति चेन्नासन्नियामा" दित्यत्र सद्भिरसंग्रहादिति विवरणं संभवति ; प्रयोगशास्त्राणामपि प्रमाणतया सद्भिः संग्रहात्। अत्र हि—"ततस्तेषान्तु ये शिष्टाः शिष्टाचारान् प्रचक्षते" इति शिष्टाचाराणामपि सन्नियमेन प्रामाण्यं यदि सम्मतम्; तर्हि प्रयोगशास्त्रप्रमाणता कथं न सिद्ध्येत्? एतेन—स्मृतिपादवैयर्थ्यमपि प्रकृतप्रबन्धकारमते—सूच्यते। न हि लोके सन्नियमादित्येतत्सूत्रेणैव प्रमाणानां सर्वेषां परिगणितत्वं व्यवहाररीतिलोपवारणार्थमूरीकर्तव्यमिति पक्षे स्मृतीनामप्रामाण्य-

शङ्कैवोदेति। 'श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः' इति हि स्मृत्यादीन्यपि प्रमाणतया परिगणितान्येव। एतेन—स्मृत्यधिकरणसूत्रविवरणान्यपि—परास्तानि। तत्र हि "शाबरमते धर्मस्य शब्दमूलत्वादि"ति पूर्वपक्षसूत्रम्, "अपि वा कर्तृसामान्या-दि"ति सिद्धान्तसूत्रम्; एतत्प्रबन्धकारमते तूभयमपि पूर्वपक्षसूत्रम्। तत्र प्रथमसूत्रेणाप्रामाण्ये द्वितीयसूत्रेण च प्रामाण्ये वर्णिते तयो-र्द्वयोरेव पूर्वोत्तरपक्षसूत्रत्वम्, मतान्तरे तु-सूत्रद्वयेनापि प्रामाण्य-मप्रामाण्यमुभयं पूर्वपक्षितमिति"विरोधे त्वि ति" सूत्रेऽपि विरोधेऽप्रा माण्यमिवाविरोधेऽपि प्रामाण्यमपि सूत्रणीयं स्यात्। शाबरमते तु—"अपि वे"ति सूत्रेण स्मृतिसामान्यस्य प्रामाण्ये साधिते "विरोधे त्वि"त्यधिकरणान्तरेण विरुद्धानामप्रामाण्ये च साधिते सर्वेष्टनिर्वाहो भवतीति न कोऽपि दोषः। उदाहरणविशेषविचारस्तु नास्माकमिदा-नीं कर्तव्यः, यतो भाट्टदीपिकादिषु सर्वत्र बहुशस्तद्विचारितम्। एतेन हेतुदर्शनाच्चेति सूत्रमपि—व्याख्यातम्। नहि वयमपि सहे-तुकस्य धर्मशास्त्रस्य प्रामाण्यमूरीकुर्मः। अत्र हि हेतुशब्देन परिस्थि-तिविशेषो लक्ष्यते। तथाच यत् समुद्रयाननिषेधे म्लेच्छदेशगमन-निषेधे वा धर्माचरणविघ्न एव कारणमिति समुद्रयाननिषेधवचनम-प्रमाणमित्यादिकं प्रकृतप्रबन्धे विवेचितम्, अत्रेदमेवास्माकं वक्त-व्यम्-यदि परिस्थितिविशेषानुसारिकारणविशेषानुसारिणां वचनानां धर्मज्ञप्रवर्तितानामप्रामाण्यम्, तर्हि भवतामिदानीन्तनावस्थाविशेष-मुपलक्ष्य धर्माधर्मपरिवर्तनकथायाः कथं प्रामाण्यं स्यात्? न ह्यस्म-दादिभिरिदानीन्तनावस्थाविशेषमुपलक्ष्य विरचितानां व्यवस्थानां परमहेतुकत्वम्, बौधायननिषेधमात्रस्य सहेतुकत्वमिति कल्पनं संभवतीति, वयस्पश्यामः—उक्तसूत्रस्वारस्यानुसारेणेदमवगम्यते,

यत् बहवः स्मृतयो याः प्रमाणमहेतुका वर्तन्ते इति स्मृतीनां प्रमाणभूतानां सर्वासां न तत्तद्देशकालपरिस्थितिविशेषो मूलम्, किन्तु स्वतन्त्रो वेद एवेति। एतेन—वेदा अपि कैश्चित्तत्तद्देशकालावस्थाविशेषानुसारेण विलिखितः शब्दराशिरेवेति प्रकृतप्रबन्धसिद्धान्तोऽपि परास्तः; हेतुदर्शनसूत्रेणाप्रामाण्यापत्तेः।

यथाच समुद्रयाननिषेधो न व्यामोहमूलकः, तथा समुद्रयानप्रकरणे विवेचयिष्यामः। न च समुद्रयाननिषेधः शास्त्रविरुद्धः, गौतमवसिष्ठादिभिस्तदुल्लेखो न कृत इत्येतावता कथं वा तस्यानभिमतत्वं कल्प्यते ? अविहितमप्रतिषिद्धमनुमतं भवतीति न्यायेन हि बौधायनसिद्धान्तो गौतमादीनामपि संमत एव। यत्किंचिद्धेतुकल्पनं हि सर्वगामि भवतीति वैदिकमन्वादिस्मृत्यप्रामाणतया नेदं सूत्रं योजनीयम्, किन्तु शाक्यादिस्मृत्यप्रामाण्यपरतयेति कुमारिलपादानां विवरणम्। अत्र यद्यपि भाष्यवार्तिकयोरुदाहरणविशेषे वैमत्यं वर्तते, तथापि न्यायस्वरूपविषये न वैमत्यम्। भाष्यकाराणामपि नोदाहरणविशेषे निर्भर इत्येव वार्तिककाराणामाशयः। एतेन—अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्" इति सूत्रमपि—"व्याख्यातम्। इदं हि सूत्रं पदार्थप्राबल्यपरतया शबरस्वामिना योजितम्, प्रकृतप्रबन्धकारैस्तु हेत्वदर्शने स्मृतीनां प्रामाण्यमिति। इदन्तु हेतुदर्शनेऽप्रामाण्यमिति वर्णनेनैव अर्थसिद्धमिति प्रकृतप्रबन्धकारमते एतत्सूत्रवैयर्थ्यमापद्येत। शाबरमते श्रुतिस्मृत्योरुभयोरपि यत्र प्रामाण्यम्, तत्र का व्यवस्थेत्येवं निरूपणपरत्वान्न वैयर्थ्यम्। एतेन-कारणाग्रहणे इति पदसार्थक्यमपि सूचितम्; स्मृतेरपि प्रामाण्यमत्र वर्तते, हेतुदर्शनाभावात्, विरोधेनाप्रामाण्यमपि न सम्भवति,

तेष्वदर्शनाद्विरोधस्येति सर्वमुपपन्नम्। अयं भावः—श्रुतिविरोधे स्मृतेरप्रामाण्यमिति यदुक्तम्, तदिदं श्रुतिस्मृतिप्रतिपाद्यपदार्थविषयम्, न तु तत्प्रतिपाद्यपदार्थधर्मविषयमिति सूचनार्थमिदमधिकरणमिति शबरस्वामिसंमता व्यवस्था। इयं च व्यवस्था पूर्वतनसूत्रैर्न लभ्यत इति नोक्तसूत्रवैयर्थ्यम्। एतेन—समा विप्रतिपत्तिः स्यादिति सूत्रमपि—व्याख्यातम्। अत्रापि हि शब्दप्रयोगरूपाचारस्य विरोधे व्यवस्थैव क्रियते, न पदार्थनिर्णयः। स तु केवलं प्रयोजनम्। तदुक्तं तन्त्रवार्तिके—

> एकशब्दमनेकार्थं शिष्टैराचर्यते यतः।
> विगानेन तदा तत्र कोऽर्थः स्यात्पारमार्थिकः॥ इति॥

शब्दार्थविषयप्रयोगशिष्टाचारविप्रतिपत्तौ सन्देह इति। एतेन—अत्र शबरस्तु शब्दार्थनिर्णायकत्वमेतेषां सूत्राणामभ्युपगम्य तथा व्याचष्टे, तदिदं पौर्वापर्यविरुद्धम्। नहि स्मृतिकल्पसूत्रयोः प्रामाण्यविचारेऽन्तरैव शब्दार्थनिर्णयार्थं प्रवृत्तः स्याज्जैमिनिरित्यादिशङ्का—परास्ता; पूर्वोक्तरीत्या संगतिसम्भवात्, आचारविरोधे व्यवस्थाया एव क्रियमाणत्वात्। स्मृतिप्रामाण्येनाचारप्रामाण्यमपि भाषितप्रायमिति तद्विरोधे व्यवस्थाविचारोऽपि युक्त एव। यत्तु "तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्," "शास्त्रस्था वा तन्निमित्तत्वादि"ति सूत्रयोः स्मृत्योर्विरोधे विकल्पः श्रुत्योर्विरोधे विकल्प इति च पूर्वपक्षपरतया विवरणं प्रकृतप्रबन्धे विवेचितम्, तदिदमपि नोपपन्नम्; तुल्यबलविरोधे विकल्पस्य बहुस्मृत्यादिसिद्धत्वेन पूर्वपक्षत्वायोगात्। न ह्यस्यां व्यवस्थायां कोऽप्यनाश्वासः। तुल्यबलत्वं ह्युभयोरपि शास्त्रयोर्विरुद्धविशेषविषयत्व एव भवति, न तु सामान्यविशेषविषयत्वे। तत्र हि "प्र-

कल्प्य चापवादविधिमुत्सर्गोऽभिनिवेशते,, इति न्यायेन सामान्य-शास्त्रस्य विशेषशास्त्रविषयातिरिक्तविषयत्वस्यैवोरीकरणात् न लोकयात्रायां व्यवहारवैषम्यं भविष्यति। एवं च—दायभागो ज्येष्ठस्यैवेत्येकस्य सर्वेषामित्यपरस्य सत्त्वेऽपि न दोषः। तथाच तुल्यबलविरोधे विकल्प इत्येव सिद्धान्तो युक्तः। एतदेवाभिप्रेत्योक्तं मनुना—

श्रुतिद्वैधन्तु यत्र स्यात्तत्र धर्मावुभौ स्मृतौ।
उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः॥
उदितेऽनुदिते चैव समयाध्युषिते तथा।
सर्वथा वर्तते यज्ञः इतीयं वैदिकी श्रुतिरिति॥

अत्र हि श्रुतिद्वैधशब्देन तद्विरोध एव विवक्ष्यते। अत एवातिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णातीत्यादौ विकल्पसिद्धान्त उपपद्यते। अयं भावः—श्रुत्योः स्मृत्योश्च विरोधो द्विविधो भवति; सामान्यविशेषविषयत्वसावकाशनिरवकाशत्वाभ्यामेकः, अपरः परस्परविरुद्धविषयत्वेन च। आद्ये न्यायानुसारेण व्यवस्था। तदुक्तं याज्ञवल्क्यस्मृतौ—स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः-इति। अत्र न्यायशब्देन मीमांसारूपः सन्न्याय एव विवक्ष्यते, न तु या कापि युक्तिरिति न दोषः। एतेन धर्मज्ञसमयोऽपि व्याख्यातः; एतादृशस्थल एव धर्मज्ञानां स्वातन्त्र्यात्। द्वितीये तु विकल्प एवेति सिद्धान्त इति प्रकृतसिद्धान्तस्यैव पूर्वपक्षत्वेन योजनं सर्वप्रामाणिकसिद्धान्तविरुद्धम्। एतेन "चोदितं तु प्रतीयेते"ति सूत्रमपि व्याख्यातं—भवति; तुल्यबलविरोधविषयत्वाभावादुक्तसूत्रस्य। उक्तं हि प्रकृतप्रबन्धेऽपि—"इदं चाधिकरणं विरुद्धवचनविषयमेव, न तु विरुद्धवदाभासमानविषयकमिति

ज्ञेयम्" इति। अतुल्यबलविरोधस्थले तु सामान्यविशेषन्यायादिना शिष्टाहतव्यवस्थैव स्वीकरणीयेत्यत्र नास्माकमपि विप्रतिपत्तिः। एतेन-"धर्मशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मृतः" इति नारदवचनमपि व्याख्यातम्। अत्र हि युक्तिपदेन मीमांसान्याय एव विवक्षित इति न किमप्यसौकर्यं भविष्यति। यद्यप्युदितानुदितहोमयोरपि विरोध एव वर्तते, तथापि फलैक्यात्स एव विरोधो द्वैधशब्देनोच्यते, यतस्तत्रानुष्ठेयो होम एक एव, कालभेदमात्रं तत्र विवक्षितम्, उभयोस्तु फलमेकमेव। यत्र विधिनिषेधावेकविषयौ, तत्र विधिप्रतिषेधयोः परस्परं यो विरोधः, स न द्वैधशब्देन व्यपदिश्यते, यतस्तत्र फलभेदः। यथा षोडशिग्रहणेन यददृष्टं न तदेवादृष्टं षोडशिग्रहणाभावेन, सर्वथातुल्यत्रापि विरोधो वर्तत एव। विरुद्धस्थले च विकल्पस्यैव शिष्टैरपि चोदनीयत्वात्, कथं "चोदितन्तु प्रतीयेतेत्य"नेन विकल्पनिराकरणम्? अङ्गीकृतं हि प्रकृतप्रबन्धकारैरपि—मीमांसान्यायानुसारेण व्यवस्थैव स्वीकरणीयेति। एकविषयविधिनिषेधस्थले च विकल्प एवेति दशमाध्याये विवेचितं जैमिनिनापि। अन्यथा "यजतिषु येयजामहं करोति नानुयाजेषु" इत्यत्रापि विकल्पनापत्त्या पर्युदासव्यवस्थापनमसंगतं स्यात्। तथा च व्यर्थमिदमधिकरणं भवन्मत इति शबरस्वामिनां विवरणमेव समुचितम्। तदिदं सिद्धम्—यत् श्रुतिर्मुख्यं प्रमाणम्। स्मृतिस्तत्पारतन्त्र्येण प्रमाणम्। तत्र स्मृत्योर्विरोधे श्रुत्योर्विरोधे वा मीमांसान्यायानुसारेण व्यवस्थैव स्वीकर्तव्या, नेतिहासाद्यनुसारेण। न च वेद इतिहासादिमूलकः, न वा केनचन पुरुषेण कल्पितः, अन्यथा श्रुतिस्मृत्यादिविभाग एव नोपपद्येतेति।

एतेन—आचारप्रामाण्यमपि व्याख्यातम्। अत्र सदाचारस्य स्मृतिमूलं प्रामाण्यमुत साक्षात् श्रुतिमूलमिति विषये यद्यपि भाष्यकारा उदासीना इव दृश्यन्ते; तथापि कुमारिलपादाः स्मृतिमूलमेवाचारप्रामाण्यमिति मन्यन्त एवेति न दोषः। अत एव स्मृतिविरुद्धत्वेन मातुलकन्यापरिणयनादिकं आचारमात्रसिद्धं सिद्धवक्कृत्याधर्म इति न्यायमालादौ विवेचितमुपपद्यते। एतेन—आचारात् श्रुतेरनुमानमिति सिद्धान्तः—परास्तः। अस्तु वा कथमपि तत्र व्यवस्था। सर्वथा तु श्रुतिविरोधे नाचारस्य प्रामाण्यमाचारस्य सर्वदेशावच्छेदेन धर्मव्यवस्थापकत्वमिति च सिद्धान्तः शबरस्वामिनामपि सम्मत एवेति न दोषः। अत्र "दर्शनाद्विनियोगः स्यादि"ति सूत्रं यत्र व्यवस्थादर्शनम्, तत्र न सर्वदेशीयत्वमित्याशयमिति शाबरं मतम्, प्रकृतप्रबन्धकारमतन्तु—यदि वेदे तस्याचारस्य दर्शनम्, तर्हि सर्वदेशीयत्वमिति। अत्र वेदे दृश्यमानस्य वैदिकत्वेनैव प्रामाण्यादाचारस्य सर्वदेशीयताव्यवस्थापकत्वं कुत्रापि प्रत्यक्षवेदाभावे न भवतीति फलतीति 'अपि वा सर्वधर्मः स्यात्' इति द्वितीयपक्षस्य न कुत्राप्यवसरः स्यात्। अतः शाबरं विवरणमेव युक्तम्। 'लिङ्गाभावाच्च नित्यस्य' आख्या हि देशसंयोगात्' इति सूत्रे तु लिङ्गविशेषेणाख्याविशेषेण चोदीच्यादिनियमनं न सम्भवतीति निरूपणपरे इति शबरस्वामिनः। प्रकृतप्रबन्धकारस्तु—यदि न दर्शनम्,तर्हि न सर्वदेशीयत्वमिति द्वितीयपक्षोक्तस्तया 'लिङ्गाभावाच्च नित्यस्येति सूत्रं व्याख्याय "आख्या हि देशसंयोगादि"ति, सूत्रं वेदे देशविशेषोपाधिनाऽऽश्रीयमाणस्य धर्मत्वं तद्देशीयत्वेन स्यात्, एवञ्च न देशान्तरे तस्य धर्मत्वमिति पूर्वपक्षपरतया व्याख्याय 'तुल्यन्तु कर्तृधर्मेणे'ति सूत्रं तदुत्तरपरतया व्याचष्टे।

अत्रायं मतद्वयस्यापि विवेकः—शबरस्वामिमते आचारस्य देशविशेषानुसारेण न व्यवस्थापकत्वम्, प्रकृतप्रबन्धकारमते तु देशविशेषावच्छेदेनैवाचारप्रामाण्यमिति। अत्र वयं पश्यामः—अनुपलभ्यमानप्रत्यक्षश्रुतिमूलानामाचाराणामेव प्रामाण्यविचारस्य प्रस्तुतत्वात् "दर्शनाद्विनियोगः स्यादि"ति सूत्रं यत्र दर्शनं तत्र विनियोगोऽधिकारिविशेषाङ्गाङ्गिभावो युक्त इत्येवंव्याख्यानमेव युक्तमिति। लिङ्गाभावाच्चेत्यादिसूत्राण्यप्यत एव व्याख्यातानि। यत्र यत्राचारस्तत्र तत्रैकरूपं लिङ्गं नाम सम्बन्धो वा न सम्भवतीत्येवमाशयेन "अपि वा सर्वधर्मः स्यादि"त्येतदर्थस्यैवाशङ्कासमाधानाभ्यां निरूपणस्य युक्तत्वात्। युक्तं चैतत्—यत्र प्रत्यक्षश्रुतिदर्शनम्, तत्र श्रौतत्वेनैव धर्मप्रामाण्यं सिद्धमिति नाचारप्रामाण्यस्योपयोगः, किन्तु यत्र न प्रत्यक्षवेददर्शनम्, तत्रैव। तत्र च व्यवस्थितं चिन्हं गोत्रादि यदि धर्मविशेषानुष्ठातृषु दृश्यते; तर्हि भवतु नाम तत्राधिकारिव्यवस्था; श्यामत्वोदीच्यत्वादिकन्तु न व्यवस्थापकमिति न दोष इति शाबरविवरणे हि सर्वेषां सूत्राणां सार्थक्यं भवति; प्रकृतप्रबन्धकारमते तु "दर्शनाद्विनियोगः स्यात्" "अपि वा सर्वधर्मः स्यादि"त्यादीनां सूत्राणां वैयर्थ्यम्; अनुमानव्यवस्थानादित्येकेनैव सूत्रेण गतार्थतेति सर्वमनवद्यम्। एवं चाचाराणां सर्वदेशावच्छेदेन व्यवस्थापकत्वमित्येव जैमिनिमतमिति सूत्रानुसारेणावश्यमूरीकर्तव्यम्। "तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते। तस्मिन् देशे य आचारः पारम्पर्यक्रमागतः। वर्णानां सान्तरालानां स सदाचार उच्यते" इति मनुवचनमपि नैतन्न्यायविरुद्धम्; ब्रह्मावर्तस्यैव धर्मभूमित्वेन तदन्तर्गतदेशविशेषावच्छेदेन धर्मव्यवस्थापकत्वाभावस्यैव मनुतात्पर्यविषयत्वात्। एतेन वसिष्ठादिवचनान्यपि

व्याख्यातानि। यत्तु बौधायनधर्मसूत्रे "पंचधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतः" इति देशविशेषेण धर्मव्यवस्थापनं कृतम्, तदिदं न सिद्धान्तदृष्ट्या, किन्तु पूर्वपक्षदृष्ट्यैव। अत एव "मिथ्यैतदिति गौतमः, उभयमेव तन्नाद्रियेतेत्युत्तरसूत्रमुपपद्यते। सर्वथा तु श्रुतिपरिवर्तने स्मृतिपरिवर्तने वा न कस्याप्यधिकारः। परिषदोऽप्युपयोगो यत्र श्रुत्योः स्मृत्योर्वा विरोधो भवति, तत्र सामान्यविशेषन्यायेन विकल्पन्यायेन वा व्यवस्थाकरण एव, न तु स्वतन्त्रं कस्या अपि व्यवस्थायाः परिकल्पन इति बहुशः पूर्वमुपपादितम्। एतेन पुराणमपि व्याख्यातम्; पुराणस्य हि कुमारिलपादा वर्णयन्ति नोपाख्याने तात्पर्यमिति, प्रकृतप्रबन्धकारास्तु प्राग्वृत्तकथन एव तात्पर्यमिति वदन्ति।

प्रथममतेऽपि पुराणानां स्तावकतयैव वेदोपबृंहणत्वम्। एवं चार्थवादे प्रमाणान्तरविरोधे यथा न स्वार्थे प्रामाण्यम्, तथा न पुराणेऽपि प्रामाण्यमित्यवश्यमूरीकर्तव्यम्; अन्यथा सोऽरोदीदिति कथानुसारेण अन्येनापि रोदितव्यमित्यपि कल्पनाप्रसङ्गः। व्यक्तं चैतदर्थवादाधिकरणे भाष्यादौ विवेचितम्। अयम्भावः—पुराणानां प्राग्वृत्तान्वाख्यानं विषयः स्तुतिर्विषय इति मतद्वयेऽपि वाच्यार्थविवक्षायां न विरोधः। स्तावकतापक्षेऽपि लक्ष्यार्थबोधात्पूर्वं शक्यार्थविवक्षा वर्तत एव। इयान् विशेषः—पक्षद्वयार्थे न तात्पर्यं स्तावकतामते, पूर्वत्र तु तत्र तात्पर्यमिति। अत्रेदमालोचनीयम्—यच्छक्यार्थतात्पर्यवर्णनस्य किम्प्रयोजनमिति? यदि रामेण पितृवाक्यपरिपालनं कृतमेवमस्माभिरपि तत्कर्तव्यमिति विध्युन्नयनं प्रयोजनतया मन्यते, तर्हीदमेव प्रष्टव्यम्—यद्रावणेन परदारा बलान्नीताः, अतोऽस्माभिरपि परदारा अपहर्तव्या इति विध्युन्न-

यनमपि कथन्न भवतीति। यदि निन्दितत्वान्न तत्र विध्युन्नयनम्, तर्हीदमेवायातं यत्प्रमाणान्तरानिषेधे पुराणस्यापि धर्मे प्रामाण्यम्, तच्च वैदिकविध्युन्नयनद्वारा नान्यथेति। तथा च प्रमाणान्तरविरोधः कुत्र वर्तते कुत्र च नेति बहुतरपर्यालोचनं विना तु अर्थवादोच्चारेण धर्माधर्मोन्नयनं न सम्भवतीति पुराणपर्यालोचनमात्रेण धर्माधर्मनिर्णयः कथमपि न सम्भवति। तदिदं प्रसिद्धम्—यानि पुनः पुराणे विधिरूपाणि वचनानि दृश्यन्ते, तेषां मन्वादिस्मृतिसमानयोगक्षेमप्रामाण्येऽपि कथांशानां तदपेक्षया निकृष्टमेव प्रामाण्यमर्थवादसमानयोगक्षेमतया। एवं च चातुर्वर्ण्यव्यवस्थादिकं स्मृतावुपलभ्यमानमन्यथाकर्तुं न पुराणस्य शक्तिरस्तीति सिद्धम्। एतेन—यदि वर्णोत्पत्तेरितिहासः पुराणानि च पर्यालोच्यन्ते, तर्हि लाक्षणिकार्थ एव श्रुतौ ग्राह्य इति प्रकृतप्रबन्धसिद्धान्तः—परास्तः। यथा च पुराणानामपि चातुर्वर्ण्यव्यवस्थायामेव परमं तात्पर्यम्, तथा चातुर्वर्ण्यं जातिकृतं न कर्मकृतमिति, साधकबाधकप्रमाणविचारपुरस्सरमनन्तरमुपपादयिष्यते। अर्थवादानां स्तावकत्वेनैवोपयोग इत्यत्र तत्पादगतसूत्रविवरणे च प्रकृतप्रबन्धकाराणां न शबरस्वामिमतनो वैमत्यं वर्तते। इयान् विशेषः—यच्छबरस्वामिनः सर्वत्र सूत्रे वैदिकमेवोदाहरणं प्रदर्शयन्ति, प्रकृतप्रबन्धकारास्तु स्मार्तवचनान्यपि कुत्रचन कुत्रचन प्रदर्शयन्तीति। सर्वथा तु जैमिनिसूत्रपर्यालोचनेऽपि न चोदनास्वरूपस्य पुरुषकृतत्वं सिद्ध्यति। शब्दनित्यत्वसाधनावसर एव शबरस्वामिनोऽयमर्थः सूचित एव। अत एव हि कर्तुरस्मरणम्। यथा च काठककालापादिसमाख्या न कर्तृस्मरणाभिप्राया, तथा भाष्य एव व्यक्तम्। अत्र च प्रकृतप्रबन्धकाराणामपि सम्मतिर्वर्तत इति वयमनुमिनुमः। यतो वेदांं

श्चैके इत्यादि सूत्राणां नान्यथा विवरणं तैरपि समादृतम्। एवं च आख्या प्रवचनादित्यादिसूत्रस्वारस्येन कठादीनामपि प्रवक्तृत्व एव निर्णीते कथमन्यस्य कर्तुः स्मरणेऽपि मनुष्यकृतत्वमेव चोदनानां जैमिनिसम्मतमिति प्रकृतप्रबन्धकारा मन्यन्त इति न वयं जानीमः। तदिदं सिद्धम्—यत् वेदोऽपौरुषेय एव, न तस्येतिहासमूलकत्वम्। धर्माधर्मविषये तस्यैव मुख्यं प्रामाण्यम्, स्मृत्यादीनां तदनुमानद्वारैव प्रामाण्यमिति च। व्यक्तश्च स्मृत्याचारादिप्रामाण्यप्रकारः सनातनधर्मोद्धारग्रन्थे सम्पादित इति तस्यैव संग्रहमत्र सम्पादयामः। तद्यथा—

तदेवम्—सुसज्जितस्य बहुदूरविद्रावितनिखिलबाह्यक्षुद्रोपद्रवकदम्बकस्य च वेददुर्गस्य जलधरा इव सप्त परिखा जाग्रति, तत्र सुरपितृभूसुरप्रभृतिभिर्महाशयहंसैरुपसेविताभिरर्थकामलक्षणैरानुषङ्गिकैः पद्मवृन्दैर्यत्रतत्रालङ्कृताभिरगाधाभिश्च धर्मप्राधान्यरूपाभिरद्भिः पूर्णास्तिस्रोऽन्तःपरिखाः स्मृतिः, सदाचारः, आत्मतुष्टिश्चेति। एवं सकललोकोपलालिताभिर्यत्र तत्र धर्मकमलषण्डमण्डिताभिरतलस्पर्शाभिरर्थकामप्राधान्यलक्षणाभिर्वार्भिः पूरिताश्चतस्रो बहिःपरिखाः—आयुर्वेदो धनुर्वेदो, गान्धर्ववेदः, अथर्ववेदश्चेति, यानुपवेदानाचक्षते। तत्र स्मृतिः वेदातिरिक्तदशविद्यारूपा। चतुर्दशविद्या हि प्रोक्ता आचाराध्याये याज्ञवल्क्येन—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥३॥ इति।

अस्यार्थः—पुराणम् ब्राह्मादि वक्ष्यमाणम्। न्यायः गौतमीयं काणादं कापिलं पातञ्जलमिति चतुर्विधं प्रमाणादिनिरूपणशास्त्रं गौतमादिप्रणीतम्। मीमांसा, जैमिनिप्रणीता कर्ममीमांसा,

शाण्डिल्यप्रणीता भक्तिमीमांसा, बादरायणप्रणीता ब्रह्ममीमांसा च। धर्मशास्त्रम्, ब्रह्ममन्वादिप्रणीतम्; इमान्येव चत्वार्युपाङ्गान्याचक्षते। अङ्गानि, शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। एतैरुपेताश्चत्वारो वेदाः। एतानि चतुर्दश, विद्यानां स्वर्गाद्यपवर्गसाधनकर्मब्रह्मज्ञानानां स्थानानि निमित्तानि, धर्मस्य च निमित्तानि; एतत्प्रमित एव धर्म इति, एतासामेव धर्मस्थानत्वमित्युक्तम्—इति। अत्र च न्यायमीमांसयोरेव षड्दर्शनान्तर्भाव इत्युक्तप्रायम्।

अङ्गिरसाऽपि—

स्वाभिप्रायकृतं कर्म यत्किञ्चित् ज्ञानवर्जितम्।
क्रीडाकर्मेव बालानां तत्सर्वं निष्प्रयोजनम् ॥इति।

अत्र च ज्ञानवर्जितम् शास्त्रीयज्ञानवर्जितमिति कल्पतरुः।

एवमर्थकामयोर्विषयेऽप्यायुर्वेदादीनां चतसृणामपि विद्यानामावश्यकत्वम्।

तदुक्तम्—

यत्त्वविज्ञानशास्त्रेण कदाचित्साधितं भवेत्।
नैव तद् बहु मन्तव्यं घुणोत्कीर्णमिवाक्षरम् ॥ इति।

स्मृतिशब्दस्योक्तदशविद्यावाचकत्वे प्रमाणं तु आचाराध्याये—

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
सम्यक् सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम् ॥ ७ ॥

इति याज्ञवल्क्यवचनमेव। (अस्यार्थस्तु वेददुर्गसज्जनस्यारम्भे पूर्वमुक्तः)। अत्र स्मृतिपदस्य ब्रह्ममन्वादिप्रणीतधर्मशास्त्रमात्रपरत्वे पुराणन्यायेत्यादिना पूर्वोक्तवाक्येन सह विरोधो दुष्परिहर एव स्यात्। तत्र चतुर्दशानामपि विद्यानां धर्मस्थानत्वस्यात्र च

श्रुतिः स्मृतिरिति पञ्चानामेव विद्यानां धर्ममूलत्वस्य प्रतिपादनात् एतादृशविरोधपरिहाराय चात्र स्मृतिपदेन दशानामपि विद्यानां ग्रहणस्यावश्याभ्युपेयत्वात् । अत एव व्याकरणस्मृतिरित्यादिको ग्रन्थकाराणां व्यवहारोऽपि सङ्गच्छते, सङ्गच्छते च स्मृतिप्रामाण्यनिरूपणप्रकरणे व्याकरणप्रामाण्यनिरूपणं जैमिनीयम् । एवं स्मृतिपदस्य विशेषतो ब्रह्ममन्वादिप्रणीतधर्मशास्त्रवाचकत्वमपि ।

तथाच अध्याये २ मनुः—

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥१०॥ इति ।

न चैकस्य शब्दस्य सामान्यविशेषोभयवाचकत्वमदृष्टचरम्, पञ्चपञ्चब्राह्मणवाचिनोरपि गौडद्राविडपदयोर्ब्राह्मणविशेषवाचकत्वदर्शनात् । ननु यदि चतुर्दशैव विद्यास्तर्हि कथम्—

विष्णुपुराणे—

अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव ताः ॥

इत्यष्टादश विद्या उक्ताः ? कथं चायुर्वेदादीनां चतसृणां विद्यानामपि न स्मृतित्वम् ? न हि ताः श्रुतय इति चेन्न, विद्यानामष्टादशत्वेऽपि स्वर्गापवर्गसाधनकर्मब्रह्मज्ञानैकस्थानभूतानां धर्मप्रधानानामेव विद्यानां याज्ञवल्क्येन महर्षिणा चतुर्दशतया परिगणनम्, विष्णुपुराणे तु दृष्टार्थप्रधानाश्चतस्र आयुर्वेदादिविद्या अपि संकलय्याष्टादशतया परिगणनमित्यविरोधात् । चतुर्दश हि विद्या अनुषङ्गेण तत्र तत्रार्थकामौ प्रतिपादयन्त्योऽपि प्राधान्येन धर्ममेव

प्रतिपादयन्ति, आयुर्वेदाद्यास्तु चतस्रोऽनुषङ्गतो धर्मं प्रतिपादयन्त्योऽपि प्राधान्यादर्थकामावेव प्रतिपादयन्तीति परस्परव्यावृत्तं स्वभावद्वयं सर्वबुधजनप्रसिद्धम्। अत एवोक्ते विष्णुपुराणे "विद्या ह्येताश्चतुर्दश" "विद्या ह्यष्टादशैव ताः" इति द्वैराश्येन परिगणनद्वयं विरुद्धसंख्याऽविरुद्धमपि स्वीकृतम्, अन्यथा तत्रैव मिथ्याविरोधस्य दुर्वारत्वात्। उक्ताविरोधपरिहारसरणिर्यथा विष्णुपुराणपद्ययोर्मिथो विरोधमुद्धरति, तथैव पुराणन्यायेत्यादियाज्ञवल्क्यवाक्यविरोधमपि। एतत्सूचनायैव च याज्ञवल्क्यवाक्येन धर्मस्य च स्थानानीत्युक्तम्, तस्य हि प्राधान्येन धर्मप्रतिपादकानीत्येवार्थः। स्मृतिपदेन क्वचिदप्यव्यवहृतत्वाच्चार्थकामप्रधानानां चरमाणां चतसृणाम्। न हि श्रुतिभिन्नत्वमात्रं स्मृतित्वे प्रयोजकम्, काव्यादीनामपि स्मृतित्वप्रसङ्गात्। अतो धर्मप्रधानेऽस्मिन्निबन्धे पूर्वोक्तदशविद्यात्मकस्मृतिप्रामाण्यमवसरसमर्पितमिदानीं निरूप्यते, तथाहि—

मी० अ० १ पा० ३ अधि० १॥ पूर्वपक्षे—

धर्मस्य शब्दमूलत्वात् अशब्दमनपेक्ष्यं स्यात् ॥सू० १॥ इति। अत्र वृत्तिः—उक्तदिशा विध्यर्थवादमन्त्राणां धर्मे प्रामाण्यं व्यवस्थाप्येदानीं स्मृतिशिष्टाचाराणां धर्मे प्रामाण्यं व्यवस्थापयन् पूर्वपक्षमाह— धर्मस्येति। धर्मस्य उक्तलक्षणलक्षितस्य शब्दः वेदः मूलं यस्य तत्त्वात् "अष्टकाः कर्त्तव्या" इति केवलपौरुषेयवाक्यप्रतिपाद्यम्— अशब्दम्—अवेदमूलं अनपेक्ष्यम् अनादरणीयं स्यात्—इति।

अत्र शाबरं भाष्यम्—एवं तावत्कृत्स्नस्य वेदस्य प्रामाण्यमुक्तम्, अथ इदानीं यत्र न वैदिकं शब्दमुपलभेमहि, अथ च स्मरन्ति, एवमयमर्थोऽनुष्ठातव्यः, एतस्मै च प्रयोजनाय इति किमसौ तथैव स्यान्न वा? इति।

यथा अष्टकाः कर्तव्याः, गुरुरनुगन्तव्यः, तडागः खनितव्यः, प्रपा प्रवर्त्तयितव्या, शिखाकर्म कर्तव्यमित्येवमादयः, तदुच्यते—धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात् इति। शब्दलक्षणो धर्मः इत्युक्तं चोदनालक्षणोऽर्थो धर्म इति, अतो निर्मूलत्वान्नापेक्षितव्यमिति। ननु ये विदुः इत्थं पदार्थः कर्तव्य इति, कथमिव ते वदिष्यन्ति, अकर्तव्य एवायमिति? स्मरणानुपपत्त्या, न हि अननुभूतोऽश्रुतो वाऽर्थः स्मर्यते। नच अस्यावैदिकस्यालौकिकस्य च स्मरणमुपपद्यते पूर्वविज्ञानकारणाभावादिति। या हि वन्ध्या स्मरेत्, इदं मे दौहित्रकृतमिति न मे दुहिताऽस्ति इति मत्वा, न जातुचिदसौ प्रतीयात्, सम्यगेतत् ज्ञानमिति। एवमपि यथैव पारम्पर्येणाविच्छेदात् अयं वेदः इति, प्रमाणमेषा स्मृतिः। एवम्—

पूर्वज्ञानाद्विना तस्याः प्रामाण्यं नावधार्यते॥

इयमपि प्रमाणं भविष्यति इति। नैतदेवम्, प्रत्यक्षेणोपलब्धत्वात् ग्रन्थस्य नानुपपन्नं पूर्वविज्ञानम्, अष्टकादिषु त्वनुपलब्धार्थेषु पूर्वविज्ञानकारणाभावात् व्यामोहस्मृतिरेव गम्यते।

तत् यथा, कश्चित् जात्यन्धो वदेत्, स्मराम्यहमस्य रूपविशेषस्य इति, कुतस्ते पूर्वविज्ञातम्? इति च पर्यनुयुक्तो जात्यन्धमेवापरं विनिर्दिशेत्। तस्य कुतः? जात्यन्धन्तरात्, एवं जात्यन्धपरम्परायामपि सत्यां नैव जातुचित्सम्प्रतीयुर्विद्वांसः सम्यग्दर्शनमेतदिति। अतो नादर्तव्यमेवंजातीयकमनपेक्ष्यं स्यादिति। अपि वा इति पक्षो व्यावर्त्यते। प्रमाणं स्मृतिः, विज्ञानं हि तत् किमिति अन्यथा भविष्यति? पूर्वविज्ञानस्य नास्ति कारणाभावादिति चेत्, अस्या एव स्मृतेर्दृढिम्नः कारणमनुमास्यामहे। तन्नु न अनुभवः, अनुपपत्त्या, न हि मनुष्या इहैव जन्मनि एवं जाती-

एकमर्थमनुभवितुं शक्नुवन्ति, जन्मजन्मानुभूतं च न स्मर्यते। ग्रन्थस्तु अनुमीयेत कर्तृसामान्यात्स्मृतिवैदिकपदार्थयोः। तेनोपपन्नो वेदसंयोगस्त्रैवर्णिकानाम्। ननु नोपलभन्ते एवंजातीयकं ग्रन्थम्, अनुपलभमाना अप्यनुमिमीरन्, विस्मरणमप्युपपद्यत इति, तदुत्पन्नत्वात् पूर्वविज्ञानस्य त्रैवर्णिकानां स्मरताम्, विस्मरणस्य च उपपन्नत्वात् ग्रन्थानुमानमुपपद्यते इति प्रमाणं स्मृतिः। अष्टकालिङ्गाश्च मन्त्रा वेदे दृश्यन्ते, 'यां जनाः प्रतिनन्दन्ति' इत्येवमादयः। तथा प्रत्युपस्थितनियमानामाचाराणां दृष्टार्थत्वादेव प्रामाण्यम्। गुरोरनुगमात् प्रीतो गुरुः अध्यापयिष्यति, ग्रन्थग्रन्थिभेदिनश्च न्यायान् परितुष्टो वक्ष्यति इति।

तथा च दर्शयति, तस्मात् श्रेयांसं पूर्वं यन्तं पापीयान् पश्चादन्वेति। प्रपास्तडागाश्च परोपकाराय, न धर्माय, इत्येतावावगम्यते। तथाच दर्शनम्, 'धन्वन्निव प्रपा असि' इति। तथा स्थलयोदकं परिगृह्णन्ति इति च। गोत्रचिह्नं शिखाकर्म। दर्शनञ्च, यत्र बाणाः सम्पतन्ति इति। तेन ये दृष्टार्थाः, ते तत एव प्रमाणम्, ये त्वदृष्टार्थाः, तेषु वैदिकशब्दानुमानमिति।

अत्र तन्त्रवार्तिकं यथा—

एवं तावद्विध्यर्थवादमन्त्रनामधेयात्मकस्य वेदस्य धर्मं प्रत्युपयोगः साधितः। इदानीं पौरुषेयीषु स्मर्यमाणार्थावधिषु मन्वादिप्रणीतनिबन्धनासु स्मृतिष्वनिबद्धेषु चाचारेषु चिन्ता। तत्र किञ्चिदुदाहृत्य विचारः कर्तव्य इत्यष्टकादिस्मरणानि मन्वादिस्थानि तद्ग्रन्थसमर्पितानि प्रमाणाप्रमाणविचारविषयत्वेनोदाह्रियन्ते। सन्देहहेतुश्चाभिधीयते॥

पारतन्त्र्यात्स्वतो नैषां प्रमाणत्वावधारणा।

अप्रामाण्यविकल्पस्तु द्रढिम्नैव विहन्यते ॥

मन्वादिवचनं स्मृत्यपेक्षम्, स्मृतिश्च मूलप्रमाणापेक्षिणीति न कस्यापि वेदवन्निरपेक्षप्रामाण्यनिश्चयः, यतस्तु वेदवादिनामेवा-विगानेनाविच्छिन्नपारम्पर्यपरिग्रहदार्ढ्यम्, अतो नाप्रामाण्याध्यव-सानमिति युक्तः सन्देहः। तत्र पूर्वपक्षवादी वदति—नैषां प्रामाण्य-मेवापेक्षितव्यमिति। कुतः?

पूर्वविज्ञानविषयं विज्ञानं स्मृतिरुच्यते।

सर्वस्मरणानि हि प्रत्यक्षाद्यवगतेऽर्थे तदानुरूप्येणोपजायमा-नान्यर्थं समर्थयन्ति। तदिहाष्टकादीनां स्वर्गादिसाध्यसाधन-भावं प्रत्यक्षादीनि तावन्न गृह्णन्तीति साधितम्। शब्दोऽपि यथा-ऽग्निहोत्रादिषु प्रत्यक्षेणोपलभ्यते, नैवमत्र।

प्रत्यक्षानुपलब्धे च शब्दे सद्भावकल्पना।

धर्मास्तित्वप्रमाणाद्धि विप्रकृष्टतरा भवेत्॥

शब्दस्य तावदेकमेव प्रत्यक्षं प्रमाणम्। स चेत्तेनान-वगम्यमानोऽप्यस्तीत्युच्यते; ततो वरं धर्मास्तित्वमेव निष्प्रमाणक-मभ्युपगन्तुमिति।

नचानुमानमप्यस्मिन्नष्टकाश्रुतिकल्पने।

न हि स्मृतिस्तया व्याप्ता दृष्टाऽन्यद्वाऽनुमापकम्॥

यथैव धर्मे सम्बन्धादर्शनान्न किञ्चिल्लिङ्गं क्रमते, तथाऽष्टका-दिश्रुतावपि।

न चागमेन तद्बोधो नित्येन कृतकेन वा।

विस्रम्भः कृतके नास्ति नित्यो नैवोपपद्यते॥

यद्यप्यैन्द्रियकत्वादष्टकादिश्रुतीनां पौरुषेयागमगम्यत्वं सम्भ-वति; तथापि विप्रलम्भभूयिष्ठत्वादश्रद्धेयवचनेषु पुरुषेष्वनध्यव-

सानम् । दृश्यन्ते ह्यनागमिकानप्यर्थानागमिकत्वाध्यारोपेण केचिद्यत्वेऽप्यभिदधानाः । तेन मन्त्रादिभिरपि किमष्टकाश्रुतीरुपलभ्य वेदमूलत्वं स्वनिबन्धनानां प्रतिज्ञातमुतानुपलभ्यैव श्रद्धेयवाक्यत्वार्थमिति दुष्टपुरुषाकुलितचेतसां भवति सन्देहः । तावता च प्रामाण्यविघातः । नित्यस्य वचनस्यादिमत्स्मरणमूलप्रतिपादने व्यापार एव नास्ति । नच मन्त्रलिङ्गानि स्वयं मूलत्वं प्रतिपद्यन्ते; विधिशून्यत्वात् । नच मूलान्तरं न्यायागतं सूचयन्ति, अन्यपरत्वात् । नच सर्वेषां स्मृतिप्रणयिनामविगानम्, येन पौरुषेयागमबलादुपलब्धपूर्वश्रुतिमूलत्वं स्यात् ।

नच विज्ञायते वाक्यं कीदृशं तैर्निरूपितम् ।
अर्थवादादिरूपाद्धि पश्यामो भ्राम्यतो बहून् ॥

यदि ह्येतदेकान्तेन गम्येत—यथा विधिवाक्यान्येव मन्त्रादिभिरुपलब्धानीति, ततः काऽपि कल्पना स्यात्, अद्यत्वेऽप्यन्यपरार्थवादादिवचनेभ्योऽपि भ्राम्यन्तः पुरुषा दृश्यन्ते । तेन तेष्वप्याशङ्का भवति । मृतसाक्षिकव्यवहारवच्च प्रलीनशाखामूलत्वकल्पनायां यः स्मै यद्रोचते, स तत्प्रमाणीकुर्यात्, तस्मान्नागमेनापि मूलोपलब्धिः ।

उपमानं त्वदृष्टेऽर्थे सदृशे चानिरूपिते ।
नैवेष्टमिति तेनापि न मूलश्रुतिसाधनम् ॥
अर्थापत्त्याऽपि यत्किंचिन्मूलमित्यवगम्यते ।
तच्चाप्रमाणपक्षेऽपि भ्रान्त्यादि न विरुध्यते ॥

यदि हि श्रुतिकल्पनेन विना स्मृतिर्नोपपद्यते, ततः सम्यङ्मूला स्यात् । सम्भवति तु स्वप्नमूलत्वेन, तेनानैकान्त्यादर्थापत्तेः सामान्यतो दृष्टस्य वा नावकाशः । तस्मादनुपलब्धिगोचरापन्नायां श्रुतौ सत्स्वपि मूलान्तरेष्वभिप्रेतमूलाभावान्निर्मूलत्वाभिधानम् । ननु ये

विदुरेवमितिकर्तव्यताक एवंफलकश्चासौ पदार्थः कर्तव्य इति । अथवा ये कर्तव्योऽसावितीत्थं विदुस्ते तथा विजानन्तस्तादृशाः कथमिवास्मान्विप्रलब्धुं न कर्तव्योऽसाविति वदेयुः । नन्वन्य एवं वदन्ति कर्तव्य इत्यन्ये न वा कर्तव्य इत्याहुः, कथमन्यत्वम्, यदा तेषामप्येवमयं स्मर्यत इति कथिते भवत्येवं प्रतिपत्तिः । अथवा ये मन्वादयो विदुरकर्तव्योऽयं पदार्थ इति, कथमिव ते विनाऽऽरावेन लोकं वञ्चयितुं वदिष्यन्ति कर्तव्य एवायमिति ? स्मरणानुपपत्त्येति । ये तावन्मन्वादिभ्योऽर्वाञ्चः पुरुषास्तेषां यज्ज्ञानं तत्तावदनवगतपूर्वार्थत्वान्न स्मृतिः । मन्वादीनामपि यदि प्रथमं किंचित्प्रमाणं सम्भाव्यते, ततः स्मरणं भवेन्नान्यथा । कस्मात्पुनः पुत्रं दुहितरं वाऽतिक्रम्य वन्ध्यादौहित्रोदाहरणं कृतम् ? स्थानतुल्यत्वात् । पुत्रादिस्थानीयं हि मन्वादेः पूर्वविज्ञानं दौहित्रस्थानीयं स्मरणम् । ततश्च यथा दुहितुरभावं परामृश्य दौहित्रस्मृतिं भ्रान्तिं मन्यते, तथा मन्वादिभिः प्रत्यक्षाद्यसम्भवपरामर्शादष्टकादिस्मरणं मिथ्येति मन्तव्यम् । यथैव पारम्पर्येणाविच्छेदादयं वेद इति वाक्यानुमानाभिप्रायेणोक्तम् । इतरस्त्वर्थस्यैवाविच्छेदस्मरणमयमाहेति मत्वा पुनर्निर्मूलत्वमाह—वेदः पुनः सविशेषः प्रत्यक्षगम्यस्तत्र घटादिवदेव पुरुषान्तरस्थमुपलभ्य स्मरन्ति, तैरपि स्मृतमुपलभ्यान्येऽपि स्मरन्तोऽन्येभ्यस्तथैव समर्पयन्तीत्यनादिता । सर्वस्य चात्मीयस्मरणात्पूर्वमुपलब्धिः सम्भवतीति न निर्मूलता । शब्दार्थसम्बन्धव्युत्पत्तिमात्रमेव चेह वृद्धव्यवहाराधीनम् । प्रागपि हि वेदशब्दादन्यवस्तुविलक्षणं वेदान्तराविलक्षणं वाऽध्येतृस्थमृग्वेदादिरूपं मन्त्रब्राह्मणादिरूपाणि चान्यविलक्षणान्युपलभ्यन्ते । सर्वेषां चानादयः संज्ञा इति तद्द्वारेणोत्तरकालमपि गम्यमानानां प्रत्यक्षत्वं साधि-

तम् । नन्वष्टकादिषु पुरुषान्तरस्थेष्वपि कुम्भकारक्रियादिष्विव क- श्चिद्विज्ञानमूलमस्ति, यदि हि कर्मस्वरूपमात्रं स्मर्येत, ततः पा- कादि तदिन्द्रियैरन्याननुतिष्ठतो दृष्ट्वा परे स्मरेयुः। यतस्त्विह स्व र्गादिसाध्यसाधनसम्बन्धः स्मर्यते, नासौ पुरुषान्तरेषूत्पद्यमानः कै- श्चिद् दृश्यत इत्यन्धपरम्परा, येनाप्रमाणता । सर्वस्यानादिव्यवहा- रोपन्यासेन वेदवत्प्रसिद्ध्यभिमानो भवति। अतोऽन्धपरम्परानिद- र्शनम् । वेदे हि प्रामाण्यस्यानादित्वमिहाप्रामाण्यस्य । कथम् ?

यो यो ग्रहीता जात्यन्धः स स्वयं नोपलब्धवान् ।
स्वातन्त्र्येणागृहीते च प्रामाण्यं नावतिष्ठते ॥

तादृशं चाष्टकादिस्मरणम् । न च चोदना मूलभूतोपलभ्यते। नचाननुभूतसम्बन्धोऽनुमातुं शक्यते । यदि त्र वेदादुपलभ्य स्मृतयः प्रवर्तिताः स्युः, ततोऽर्थस्मरणवत उपलभ्यायं मन्वादि- भिः प्रणीत इत्यपि पारम्पर्येण स्मर्येत । स्यादेतत्—अर्थस्मरणेन कृतार्थानां निष्प्रयोजनं मूलस्मरणमनादराद् भ्रष्टमिति, तदयु- क्तम्, न हि यत्कृतं प्रामाण्यं तदेव विस्मर्तुं युज्यते। अर्थस्मृतेः स्वतः प्रामाण्याभावात् । सर्वे पुरुषास्तावदेतज्जानन्ति, यथा वेद- मूलज्ञानाद्विना प्रामाण्यं न निश्चीयत इति ते कथमिव तत्राना- दरं कुर्युः ? अपि च—

येन यत्न न मन्वाद्यैरात्मवाक्यं प्रपाठितम् ।
कस्मात्तेनैव तन्मूला चोदना न समर्पिता ॥

यदि हि तैरप्यर्थमात्रमेवान्येभ्योऽधिगतं न वेदो दृष्ट इति, ततस्तत्पूर्वकेष्वप्ययमेव पर्यनुयोग इति निर्मूलसम्प्रदायत्वप्रसंगा- न्निर्मूलत्वान्न मुच्यते। यदि तु प्रलीनशाखामूलता कल्प्येत, ततः सर्वासां बुद्धादिस्मृतीनामपि तद्द्वारं प्रामाण्यं प्रसज्यते । यस्यैव

च यदभिप्रेतं स एव तत्प्रलीनशाखामस्तके निक्षिप्य प्रमाणीकुर्यात्। अथ विद्यमानशाखागता एवैतेऽर्थास्तथापि मन्वादय इव सर्वे पुरुषास्तत एवोपलप्स्यन्ते, युक्ततरा च स्वाध्यायाध्ययनविधेः साक्षाद्वेदादेव प्रतीतिरिति स्मृतिप्रणयनवैयर्थ्यं स्यात्। नचैतद्विज्ञाते—कीदृशाद्वाक्यादिदं मन्वादिभिः प्रतिपन्नं किं विधिपरादुतार्थवादरूपादिति। पश्य—

महताऽपि प्रयत्नेन तमिस्रायां परामृशन्।
कृष्णशुक्लविवेकं हि न कश्चिदधिगच्छति॥

न च मन्वादिवचनाद्वेदमूलत्वं निश्चिनुमः। ते हि निर्मूलमपि विप्रलम्भादिहेतोरुक्त्वा लोकं वञ्चयितुमेवं वदेयुः। तस्मादप्रमाणम्।

अत्र सिद्धान्तः—

अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात्॥ अ० १ पा० ३ सू० ॥ २ ॥ इति।

अत्र वृत्तिः। सिद्धान्तमाह—अपि वेति। दृढवैदिकस्मरणान्यथाऽनुपपत्तिरूपमनुमानं स्मृतिमूलभूतश्रुतिसत्त्वे स्यात्। तदित्थम्—स्मृतिः,स्वमूलभूतवेददर्शनवत्प्रणीता, वेदातिरिक्तगम्यो धर्मो न भवतीति निश्चयवता परेषां धर्मज्ञानार्थं प्रणीतत्वात्, कल्पसूत्रादिवत्। नन्विदं प्रतारकवाक्यमित्येव किं नोच्यत इत्यत आह—कर्तृसामान्यात् वैदिकानुष्ठानस्मृत्योरेककर्तृकत्वात्। न हि वैदिकं कर्म, धर्मबुद्ध्याऽनुतिष्ठन् प्रतारको भवेदिति भाव इति।

सर्वथा तावन्मन्वादिप्रणीताः सन्निबन्धनाः स्मृतयः शेषाणि च विद्यास्थानानि स्वार्थं प्रतिपादयन्त्युपलभ्यन्ते। मन्वादीनां चाप्रत्यक्षत्वात्तद्विज्ञानमूलमदृष्टं किञ्चिदवश्यं कल्पनीयम्। तत्र च-

भ्रान्तेरनुभवाद्वाऽपि पुंवाक्याद्विप्रलम्भनात् ।
दृष्टानुगुण्यसाध्यत्वाच्चोदनैव ज्यायसी ॥

सर्वत्रैव चादृष्टकल्पनायां तादृशं कल्पयितव्यम्, यद् दृष्टं न विरुणद्धि, न चाऽदृष्टान्तरमासञ्जयति, तत्र भ्रान्तौ तावत् सम्यङ्निबद्धशास्त्रदर्शनविरोधापत्तिः, सर्वलोकाभ्युपगतदृढप्रामाण्यबाधश्च, तदानीन्तनैश्च पुरुषैरपि भ्रान्तिर्मन्वादीनामनुवर्त्तिता, तत्परिहारोपन्यासश्च मन्वादीनामित्यनेकादृष्टकल्पना। अनुभवेऽपि स एव तावदनुभवः कल्पयितव्यः, पुनश्चेदानीन्तनसर्वपुरुषजातिविपरीतसामर्थ्यकल्पना मन्वादेः। तच्चैतत् सर्वज्ञवादे निराकृतम्। पुरुषवाक्यपरम्पराऽपि अन्धपरम्परया निराकृता। न हि निष्प्रतिष्ठप्रमाणात्मलाभो दृश्यते। तथा विप्रलम्भेऽपि तत्कल्पना, विप्रलिप्साप्रयोजनम्, लोकस्य च तत्र भ्रान्तिः, तस्याश्चेयन्तं कालमनुवृत्तिरित्यदृष्टाभ्युपगमः, उत्पन्नस्य च दृढस्य प्रत्ययस्य प्रामाण्यनिराकरणाद् दृष्टविरोधः, तस्मात् सर्वेभ्यश्चोदनाकल्पनैव ज्यायसी। तत्र हि तन्मात्रादृष्टाभ्युपगमः, शेषास्तु महाजनपरिग्रहादयः सर्वेऽनुविधीयन्ते। संभाव्यते च मन्वादीनां चोदनापूर्वविज्ञानकारणत्वेन। तदर्थमेवाह 'तेनोपपन्नो वेदसंयोगस्त्रैवर्णिकानामि'ति। यानि पुनरनुपपन्नवेदसम्भावनानां म्लेच्छादीनामतीन्द्रियार्थस्मरणानि, तेषां मूलकल्पनावेलायामेव चोदना सम्भावनापदं नारूढेति मिथ्यात्वहेतुमूलचतुष्टयपारिशेष्यादप्रमाणत्वम्। सम्भावितायां पुनश्चोदनायां कारणान्तरनिषेधे कृते निर्मूलत्वासम्भवात्परिशेषसिद्धं चोदनामूलत्वम्।

यत्तु किमर्थं चोदना नोपलभ्यन्त इति? तत्र केचिदाहुः—नित्यानुमेयास्ता न कदाचिदुच्चार्यन्ते, यथा लिङ्गादिकल्पिताः। कथम-

नुच्चारितानां मूलत्वोपपत्तिरिति चेत्, नैष दोषः, पाठाविच्छेदव-
त्पारम्पर्येण स्मरणात्तत्सिद्धेः । यथैव हि ग्रन्थः सम्प्रदायावि-
च्छिन्नोऽस्तित्वं भजते, तथैव प्रतिज्ञया नित्यानुमेयश्रुतिसम्प्रदाया-
विच्छेदसिद्धिः, इति — तन्न युक्तम्, अन्धपरम्परान्यायादेव । या हि
चोदना न कदाचिदुच्चार्यते, तस्याः सर्वपुरुषप्रत्यक्षादिप्रसराभावाद्
दुर्लभतरमस्तित्वम् । तथा च स्मृतेरपि सैव वन्ध्यादौहित्रतुल्यता ।
लिङ्गादीनां तु नित्यत्वान्नित्यमनुच्चारितश्रुत्यनुमानकारणत्वमवि-
रुद्धम्, तेन वरं प्रलीनश्रुत्यनुमानमेव । न च प्रलयो न सम्भाव्यते;
दृश्यते हि प्रमादालस्यादिभिः पुरुषक्षयाच्चाल्पविषयत्वम् ।

नचैवं सति यत्किञ्चित्प्रमाणमापत्स्यते, शिष्टैरेव परि-
कल्पितदृढस्मरणानुपपत्तिलभ्यत्वाच्छ्रुत्यनुमानस्य । यद्वा प्रलीनशा-
खागतश्रुतिमूलत्वमेवास्तु, कथमनुपलब्धिरिति चेत्, उच्यते ।

शाखानां विप्रकीर्णत्वात्पुरुषाणां प्रमादतः ।
नानाप्रकरणस्थत्वात् स्मृतेर्मूलं न दृश्यते ॥

यत्तु किमर्थं वेदवाक्यान्येव नोपसंगृहीतानीति, सम्प्रदायवि-
नाशभीतेः । विशिष्टानुपूर्व्या व्यवस्थितो हि स्वाध्यायोऽध्येतव्यः
श्रूयते । स्मार्त्ताश्चाचाराः केचित् कस्याञ्चिच्छाखायाम्, तत्रापि
तु केचित् पुरुषमेवाधिकृत्याम्नायन्ते, ये न क्रतुप्रकरणाम्नाताः
केनचिन्निमित्तेनोत्कृष्यमाणाः पुरुषधर्मतां भजन्ते, यथा मल-
वद्वाससा सह न संवदेत, 'तस्मान्न ब्राह्मणायावगुरेदि'त्येवमा-
दयः । तत्र यदि तान्येव वाक्यान्युद्धृत्याध्यापयेयुस्तत्र कर्मा-
न्यत्वात्स्वाध्यायविधिविरोधः स्यात् । अनेन च निर्देशेन अन्येऽप्य-
र्थवादोद्धारेण विधिमात्रमधीयीरन्, कर्मौपयिकमात्रं वा, तत्र वेदप्र-
लयः प्रसज्येत । नचावश्यं मन्वादयः सर्वशाखाऽध्यायिनः । ते हि

प्रयत्नेन शाखान्तराध्यायिभ्यः श्रुत्वाऽर्थमात्रं स्ववाक्यैरविस्मरणार्थं निबध्नीयुः। नच वाक्यविशेषो न ज्ञायते। यथैव हि स्मृतेर्दृढत्वात् भ्रान्तिमूलत्वं नास्त्येवमर्थवादमूलत्वमपि, शक्नुवन्ति हि ते विध्यर्थवादौ विवेक्तुम्। तत्र स्मृतेर्विध्यात्मकत्वात्प्रकृतितादात्म्यानुमानलब्धास्पदेऽर्थवादपूर्वकत्वं निष्प्रमाणकम्। अपि च 'वेदोऽखिलो धर्ममूलम्' 'स सर्वोऽभिहितो वेदः' इति च स्वयमेव स्मर्तृभिरात्मा बद्ध्वा समर्पितः। तच्चैतन्नियोगतस्तत्कालैः कर्तृभिर्बुद्धिकारित्वादुपलब्धम्। अतःसिद्धं वेदद्वारं प्रामाण्यम्। यस्तु कर्तृसामान्यात् स्वतन्त्रमेव प्रामाण्यं वेदमूलत्वं वाऽनुमानेन साधयति, तस्यार्थकामानुसारिभिर्दृष्टार्थैराचारैरनेकान्तः। श्रूयमाणश्रुत्यधीनप्रामाण्याप्तेश्च विरुद्धता। तस्मादर्थापत्तिरेवात्राव्यभिचारादुपचारात्पश्चान्मानादनुमानत्वेनोक्ता अस्या एव स्मृतेर्दृढिम्न इति। दृढत्वात्कारणानुमानमथवा दृढत्वस्य। न हि मनुष्या इहैवेति(?)निःशेषसंस्कारच्छिदा मरणेनान्तरितत्वात्कर्मफलसम्बन्धानुसन्धानासम्भवेनोच्यते। स्मृतिवैदिकपदार्थयोः कर्तृसामान्यादुपपन्नो वेदसंयोगश्च त्रैवर्णिकानामिति, चोदनामूलसम्भावनापदलाभार्थं विस्मरणमप्युपपद्यते इति। दृश्यते ह्यद्यत्वेऽप्यर्थस्मरणं ग्रन्थनाशश्च। यदा तु शाखान्तरेषु विद्यन्त एव ताः श्रुतयस्तदापि कस्यां शाखायां काः पठ्यन्त इति अस्यांशस्य विस्मरणम्। वैदिकत्वमात्रं तु प्रामाण्यसिद्धये परिपालयन्ति। तद्विशेषज्ञानं पुनरनौपयिकत्वादनादृतंढगृमेव। तथा प्रत्युपस्थापितनियमानामिति आगतमागतं निमित्तं प्रति ये नियम्यते वृद्धवयःप्रत्युत्थानादयस्तेषां दृष्टार्थत्वादेव प्रामाण्यमिति। एतदयुक्तम्। कुतः?

धर्मं प्रति यतोऽत्रेदं प्रामाण्यं प्रस्तुतं स्मृतेः।

तस्माद्दृष्टयोदिवत्तेषामुपन्यासो न युज्यते ॥

न हि यावत्किञ्चिदाचरणम्, तस्य सर्वस्य मूलमिह प्रमाणीक्रियते ; धर्मजिज्ञासाऽधिकारात् । यदि च गुर्वनुगमनादीनां केवलं दृष्टार्थत्वमेव स्यात्, तत कृष्यादिवद्धर्मं प्रत्यप्रामाण्यमेवेति नोपन्यसितव्याः । स्यादेतत्-अप्रमाणत्वेनैषामुपन्यास इति; न; तथासति हेतुदर्शनाच्चेत्यत्रोदाहर्त्तव्या भवेयुः। तस्माच्छ्रेयांसमिति च दर्शनं निष्फलम् । न च नियोगतः शास्त्रादृते प्राप्तिः । शक्यते ह्युपायान्तरेणापि सामदानादिना गुरुरध्यापनादीनि कारयितुम् । तत्रास्ति नियमादिविधेरवकाशः । सर्वत्र च यथाकथञ्चिल्लोकपङ्क्तिसहायोपादानात्मरक्षणप्रीत्युत्पादादिका दृष्टार्थता भाष्यकारोक्ता शक्या वक्तुम् । नचावघातादीनां वृष्टिकामयागादीनां च दृष्टार्थानामवैदिकत्वम् । तस्मात् सत्यपि दृष्टार्थत्वे सम्भाव्यते वेदमूलत्वम् ; नियमादृष्टसिद्धेरनन्यप्रमाणकत्वात् । अतश्च गुर्वनुगमनादेर्नैमित्तिकत्वादक्रियायां प्रत्यवायः, करणे च न भवति । दृष्टं च प्रीतो गुरुरध्यापयिष्यतीत्येवमादि निष्पद्यते । नियमाच्चाविघ्नसमाप्त्यर्थोऽपूर्वसिद्धिः । एवं चाचारद्र गृह्यमाणेषु तथा स्यादित्यत्र सकृदसकृद्वाऽनुष्ठानमिति विचारो युक्तः । इतरथा तु दृष्टार्थत्ववशेनैवोदकपानादिवदवधारणं स्यात् । यत्तु भाष्यकारेण दृष्टार्थत्वादेव प्रामाण्यमित्युक्तम्, तत्पूर्वपक्षवाद्यतिशयार्थम् । एतदुक्तं भवति—यास्तावद्दृष्टार्थाः स्मृतयस्ताः कथञ्चिदप्रमाणीकुर्याद्भवान्, इमाः पुनर्गुर्वनुगमनादिविषयाः कथमिवाप्रमाणं भविष्यन्तीति । सभाप्रपादीनां यद्यपि विशेषश्रुतिर्नैव कल्प्यते, तथापि परोपकारश्रुत्यैव समस्तानामुपादानात्प्रामाण्यम् । तस्माच्छ्रेयांसमित्यश्वे गर्दभेनानुगन्तव्ये सिद्धवच्छ्रेयसामूनैरनुगमनं दर्शयति । यथा धन्वनि

नार्थं तदनुसारिकाल्पनिकविध्यन्तरमूलतोच्यते, यथा 'प्र ते यन्ति' इत्यग्न्यभिधानपरे मन्त्रे 'धन्वन्निव प्रपा असी' त्येतद् दृष्टान्तपदं लोकप्रसिद्ध्यानुपपद्यमानं स्वसिद्ध्यर्थं विध्यन्तरं प्रपा कर्तव्येति कल्पयति, तथार्थवादेऽप्यश्वानुगतौ रासभस्य "तस्माच्छ्रेयांसं यन्तं पापीयान् पश्चादन्वेती" ति हेत्वभिधानात् तत्सिद्ध्यै श्रेयाननुगन्तव्य इत्याद्यनुमितविध्यर्थमूलतोच्यते। तदप्यसारम्; भ्रान्तिजनितोऽपि व्यवहारः पदार्थालम्बनहेतुतां प्रतिपद्यते। भ्रान्तिः किमिति चेद्, अस्मादेव वाक्यार्थविपर्ययात्। सत्यतया वा सालम्बनत्वे को विरोधः। विज्ञानघन इत्यादेरपि सत्यता वचनीया। ततश्च नैरात्म्यापत्तेश्चोदनाव्यवहारो दुःश्लिष्टः स्यात्। तथास्त्विति चेत्, कः खल्वकल्पनयैवोपपद्यमानप्रामाण्यं वेदं कल्पनामारोप्याप्रमाणीकुर्यात्। यथा च कुदृष्टीनां भ्रान्तिजनितानामेव प्रतिषेध्यत्वेन पदार्थालम्बनत्वं, तथैतेषामपीत्यदोषः। कल्पनायामपि फलवत्प्रयोगवचनान्तर्गतेस्तादर्थ्यादपुरुषार्थत्वेन स्मृत्यविषयताप्रसङ्गः। नाम्नां तु गुणफलान्वयमात्रोपयोगित्वाद् दूरापेतं मूलत्वम्।

एतेनोत्सन्नशाखामूलत्वं व्याख्यातम्। उत्सन्ना अपि ह्येवंरूपा एवेति। किञ्च, उत्सादोऽपि प्रमाणशून्यः कल्पनीयः स्यात्। नहि शाखोत्सादः सम्भवति। एवंरूपशाखान्तरानुपलब्धेः। चतुर्णामपि वेदानां काश्चिच्छाखाः पठ्यन्ते। न चैकस्यामपि स्मृत्यभिहितधर्मसादृश्योपलब्धिरस्ति। न चात्यन्तविलक्षणत्वेन शाखान्तरत्वोपपत्तिः। न हि मैत्रायणी शाखा काठकस्यात्यन्तविलक्षणा। शाखैकदेशमूलत्वे वा महत्यदृष्टकल्पना स्यात्। उत्सन्नवेदमूलत्वं तु वेदचतुष्टयप्रसिद्धेर्नातीव पेशलम्। प्राक् चोत्सादात् स्मृत्यभावप्र-

सङ्गः। उत्सादाशङ्कया वा स्मरणेऽग्निहोत्रादीनामपि स्मार्तत्वं स्यात्। अतोऽयमसारः पक्षः। ये तु वेदवत् स्मृतीनामपि नित्यतया प्रामाण्यं मन्यन्ते प्रवचननिमित्ता मन्वादिसमाख्येति वदन्तः, ते खलु मौनभाजो दुर्निवाराः। अबाधकत्वेऽपि हि पुरुषाप्रणीतेर्वेदः प्रमाणम्। सर्वलोकबाह्या चात्र तदप्रणीतिः। दुर्निवारं चासदागमनात् ताद्रूप्यमेवं सति स्यात्। तथास्त्विति चेत्; अलं स्मृतिशास्त्रेण। इदानीमदृष्टमात्रेणोपरतकर्तृकाणां कूपारामादीनामपि तदकर्तृकत्वप्रसङ्गः। मन्वादीनां च "स सर्वोऽभिहितो वेदे" इत्याद्यभिधानं मृषेत्यापाद्येत। तद्यशःप्रोत्सारणेन वा कथञ्चित् क्लिष्टकल्पनयार्थवादत्वं योजनीयम्। कठादिचरणानि च तां तां शाखां बिभ्रति। न च मानवादिचरणोपलब्धिरस्ति। न च छान्दोग्यब्राह्मणवत् त एव शाखिनो धारका इति शक्यं वक्तुम्। अन्यतमवेदशाखान्तर्गतत्वात्। यदपि शाखिनां धारणमुपलभ्यते, तदपि स्मृतित्वेनावेदतया, अङ्गवत्। अत्राध्ययनानादरश्चैवमुपपद्यते। ताश्च स्मृतयो नित्या इति वाच्यम्। यदि तावत् कतिपयमन्वादिप्रणीता एवेत्युच्येत, नारदादेरप्रामाण्यप्रसङ्गः। तथास्त्विति चेद्, विशेषहेतुर्वाच्यः। इदानीं प्रणीतबौधायनादिस्मृतेश्च मन्वादिवदादरो न स्यात्। यत्त्वप्रयत्नपूर्वकं सर्वा ब्रह्मणो मुखान्निस्सृता इति, तच्छाक्यमुनिदेशनेवातिस्थूलम्। अपिच नित्यत्वे स्मृतीनामध्ययनविध्यभावात् सम्प्रदायविच्छित्तिः स्यात्। नन्वस्ति—

"विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः"

इति। न तेनाखिलस्मृत्यध्ययनविधानम्, इदमिति च प्रकृतपरत्वात्। प्रकृते च विरोधादसमर्थत्वम्। यदि चाध्येतव्यमित्यस्य विधेरर्थावगम्यतोच्येत; तदानुपनीतस्य शूद्रसमत्वाद् वेदार्थत्वेन चो-

पनीतस्य तदध्ययनात् सन्ध्योपासनादिकतिपयार्थशिक्षणवचनाच्च स्मृत्यनध्ययनम्। अधीतवेदस्य च गुरुकुलनिवर्तनमित्यादि प्रपञ्चनीयम्। पाठमात्रपर्यवसायित्वे त्वस्याप्यदृष्टार्थत्वात् स्मृतिसंप्रदायो दुर्घटः स्यात्। वेदमूलत्वे तु स्वाध्यायाध्ययनविधिविजृम्भणात् कथञ्चिदुपपद्येतापि। तदेव दुरुपपादमित्युक्तं पुरस्तात्। नैवं त्रुटितविकल्पजालेन परावृत्तिचतुरप्रज्ञासहाया गृह्यन्ते। को वा वेदमूलतया स्मृतीनां प्रामाण्यं ब्रूयात्। संप्रदायाविच्छेदाद् वेदवद् स्मृतयोऽपि स्वतन्त्रा यतः। न च पूर्वाभिहितदोषप्रपञ्चनम्; ग्रन्थनित्यत्वानभ्युगमात्। ग्रन्थेन च नातीव प्रयोजनम्, स्मार्तक्रियानुष्ठानरहितकालाभावात्। यथैव हि कृष्यादयो विशिष्टफलोपायान्वितत्वेन लोकत उपलभ्यन्ते, तथाष्टकादयोऽपि। यतः इयांस्तु विशेषः—सन्निकृष्टफलाः कृष्यादयः। अनियतफलाश्चाष्टकादयः। न चैतावता लौकिकत्वं शक्यं वक्तुम्। अस्मादेव विवेकावधारणात् प्रमाणान्तरतः। स विवेको भ्रान्त्यापीति चेत्; न; प्रमाणान्तरस्य निराकृतत्वाद् दृढत्वावगतेश्चाभ्रान्तिः। भ्रान्तिकल्पने चावेद एव वेदतया गृहीत इत्यप्याशङ्क्येत। यथैव वेदोऽयमिति बुद्धिर्लौकिकत्वेऽपि वाचकत्वस्मरणान्न भ्रान्तिरित्युच्यते; तथाष्टकाद्युपायफले स्वरूपनियमोऽपीत्यवगन्तव्यम्। न च परोक्षत्वात् फलसाधनशक्तेरलौकिकत्वाभिधानम्, शब्दशक्तिवत्। प्रतिपत्त्यन्यथानुपपत्त्या सेति चेत्। तदत्रापि समानं दृढत्वात् प्रत्ययस्य। यथैव हि शब्दाः प्रत्यायकत्वेन शक्तिकल्पनानिमित्तम्, तथा निरूढप्रतिपत्तिहेतवोऽर्था अपीत्यदोषः। कस्य वात्र परोक्षता। अष्टकादयस्तावत् पुरुषान्तरैरनुष्ठीयमानाः प्रत्यक्षत्वेनाशेषाङ्गा उपलभ्यन्ते। तत्र च वेदशब्दवदष्टकादिशब्दव्युत्पत्तिः। विशिष्टकार्यं निमित्तं च

तदनुष्ठानमिति स्वरूपवदनुष्ठातृभ्य एवावगम्यते। तत्प्रसिद्ध्य-नुपपत्तिर्कल्पते च संबन्धिनि बोधकशक्तिवत् प्रवृत्तेरव्याघातः। तस्मात् स्वातन्त्र्यं स्मृतीनामित्युक्तम्। तथा चाह—

"अग्रन्थकोनामर्थानां चकारोपनिबन्धनम्"

इति। आम्नायश्च—'यद्युक्तो भूरि' त्याद्युपक्रम्य 'यजुष्टस्सामत' इत्युक्त्वा 'यद्यविज्ञातमि'त्याह स्मार्तं चाविज्ञातमिति संप्रदायः। तच्च वेदमूलत्वे सत्यनुपपन्नम्। सर्वथाऽविज्ञानासम्भवात्। न हि विद्यमानमूलं निरूप्यमाणोऽविज्ञातमिति शक्यं वक्तुम्। पुरुषान्तरापेक्षया त्वविज्ञानेऽतिप्रसंगः। स्वातन्त्र्यपक्षे त्वविरोधः। साहसिक! मैवम्। राजन्वान् जनपदः। न खलु सद्भिः परिगृहीता नार्यः स्वतन्त्रा भवन्ति। हि लौकिकमनुष्ठानं प्रमाणरहितं स्मृत्यर्थसतत्त्वायालं भवितुमर्हति। मा भूच्चैत्यवन्दनादिक्रियास्वपि तथात्वम्। अवेदविदां तदनुष्ठानाद् वैषम्यमिति चेत्; किं वा स्वातन्त्र्यवादिनां वेदविद्भिः प्रयोजनम्। न खलु वेदो वेदवित्परिग्रहात् प्रमाणम्। नापि लोकनिबन्धनाः कृष्यादयो वेदविदपेक्षाः। सान्दृष्टिकफलास्त इति चेत्; अन्यथा वा कथं लोकनिबन्धनत्वम्। न ह्यसान्दृष्टिकमर्थमागमानपेक्षो लोकः प्रतिपत्तुं क्षमः। अथ वाचकशब्दवल्लोकव्यवहाराधीनतोच्येत, तदसत्। तत्रार्थप्रत्ययानुपपत्तिः कल्पनामूलम्। इह तु किं नोपपद्यते। व्यवहारस्य चैत्यवन्दनादिष्वपि दर्शनात्। न चाभियुक्तमन्त्रादिस्मरणाद् विशेषोपपत्तिः। व्यवहारमूलत्वेऽसदागमैरविशेषात्। ननु च वेदस्तावत् प्रमाणमित्युक्तम्। तद्विहितदर्शपूर्णमासाद्यनुष्ठातारश्च धर्मं प्रत्यभियुक्ताः। ते चाष्टकादीनामनुष्ठातारः। तेनेतरव्यवहाराद् वैषम्यम्। मैवम्; विपर्ययेण सुतरामस्योपपत्तेः। वेदविदां हि तेनैव

निराकाङ्क्षत्वान्न व्यावहारिकधर्मादरः। परित्यक्तवेदमूलव्यवहाराणां त्वनन्यगतिकत्वाद् व्यवहारे सुलग्नता। अस्तु, तेषामपि कार्यतेति चेत्, सुश्लिष्टमेवं सति प्रामाण्यम्।

एवं तर्हि चोदनार्थानुष्ठातृव्यवहारसामान्यादेव तत्प्रवृत्तिसमर्थं कारणमनुमीयताम्। ननु तदेव नास्तीत्युक्तम्। अत एवानुमीयते। किमसदप्यनुमीयते? नह्यनुमापकलिङ्गसंभवे सत्यसदिति शक्यं वक्तुम्। किं पुनस्तल्लिङ्गम्? त्रैवर्णिकानामसान्दृष्टिको व्यवहारश्चोदनामूलो दृष्टः। तथाविधश्चायम्। तस्मादत्राप्यस्ति चोदना मूलभूतेति। नापि तद्वदुपलब्धिप्रसङ्ग इत्येवं विशेषणविरुद्धत्वम्; अदर्शनस्याबाधकत्वात्। इतरव्यवहारे तु व्याप्त्यभावाद् वैषम्यम्। किमनुपलभ्यमानैव चोदना व्यवहारं प्रवर्तयति? किमनयानुपयुज्यमानविचारणया, सर्वथा प्रवर्तयति। न चानुपलब्धिः सामान्यतो विशेषतश्चानुमानात्। नियतकारणानि हि कार्याणि तथैव स्वकारणान्यप्यवगमयन्ति। एवंच विध्यर्थानुष्ठानमुपपद्यते। स्वातन्त्र्ये तु क्रियानुष्ठानम्। तत्र च फलाभावप्रसङ्गोऽनन्तरोत्पादनानन्वयफलानाम्। न च संस्कारोत्पत्तिद्वारेण कालान्तरे फलोत्पादकत्वमिति शक्यं वक्तुम्। लौकिकाभिधानव्याघातात्। कल्पनाहेत्वभावाच्च। अतोऽयमेव पक्षः श्रेयान्। दर्शनानि चात्राप्युपपद्यन्त एव।

नायं पक्षो निर्वहणीयः। न खलु प्रमेयगम्यानि प्रमाणानि भवन्ति। अनुष्ठानानुपपत्त्या हि कारणं कल्पयतः कुतोऽनुष्ठानम्। न हि प्राक् कारणकल्पनातोऽनुष्ठानसिद्धिः। तत्सिद्धौ मुधा कारणकल्पना। अथोच्येत पुरुषान्तरस्थमनुष्ठानं दृष्ट्वा तदनुपपत्त्या कारणमनुमाय ततोऽनुष्ठानप्रवृत्तेरदोष इति। तदयुक्तम्। नहि

पुरुषान्तरानुष्ठानानुपपत्तिः, तस्य सिद्धत्वात्। यदप्यनुमानमुक्तं कर्तृसामान्यादिति, तत्रापि हेतोरप्रयोजकत्वम्। नहि दर्शपूर्णमासादीनां त्रैवर्णिकानुष्ठानाद् धर्म्यत्वम्, अपि तु वेदविहितत्वात्। न चैषां तदस्ति। अथासान्दृष्टिकं तदनुष्ठानं धर्म इति; तदपि व्यभिचारि। अवैदिकत्वेऽपि त्रिगुणाधर्मानुष्ठानदर्शनात्। भ्रान्तेरेतदिति चेत्; एवं सत्यत्रापि भ्रान्त्युपप्लवाद् व्यभिचारः। अथाबाधाभावादभ्रान्तिरित्युच्येत, तदप्यसिद्धम्; वेदविरुद्धे हि स्मृत्यर्थेऽबाधादर्शनात्। अथ यत्र तदभावस्तत् प्रमाणमित्युच्येत, तदपि दुरधिगमम्। सर्वं चावेदविहितं तद्विरुद्धमेवानुष्ठानमसान्दृष्टिकम्। अतोऽयमप्यसारः पक्षः। "स सर्वोऽभिहितो वेदे" इत्याद्यसंबद्धं स्यात्। प्रमाणरहितकारणकल्पनायां त्वन्धपरम्परा। तथा योक्ते तु दर्शनानामात्मलाभः। "वचनानि त्वपूर्वत्वाद्" इत्यस्याप्ययमविषयः। अनया दिशा परिचोदनीयं प्रपञ्चनीयम्। सर्वथा तु स्मृतीनामप्रामाण्यं मूलकारणानुपलब्धौ स्मृतित्वाद् वन्ध्यादौहित्रस्मरणवत्।

अत्राभिधीयते—नैवं स्वोत्प्रेक्षितविकल्पजालैः स्मृतीनामप्रामाण्यारोपणं युक्तम्। स्वयं हि मन्वादिभिरुक्तं "स सर्वोऽभिहितो वेदे" "वेदो धर्ममूलम्" "आम्नायप्रामाण्यादाचारः" "द्वितीयस्तदनुव्याख्या स्मार्तः" वेदः स्मृतिः सदाचारः" इत्यादि। न चैवंरूपाभ्युपगमातिक्रमेण मूलान्तरान्वेषणं युक्तम्। युक्तश्चायमभ्युपगमोऽस्मिन्नर्थे प्रमाणान्तराभावात्, चोदनालक्षण एव धर्म इति नियमो यतः। न च भ्रान्त्यादिकल्पनोपपत्तिः, वेदवित्परिग्रहविरोधात्। नाप्यन्यमूलत्वे तत्परिग्रहोपपत्तिः, चैत्यवन्दनादिवत्। भ्रान्त्यादिकल्पने वा वेदेऽप्यवेदताप्रसङ्गः। न चासंभाव्यं वेदमू-

लत्वं, "वेदविदो हि मन्वादयः" इति स्मरणात्। न चैतद् भ्रान्तेः, स्मर्तृत्वस्मरणवत्। अतः सूक्तं वेदमूलत्वम्। आह च—

"भ्रान्तेरनुभवाच्चापि पुंवाक्याद् विप्रलम्भनात्।
दृष्टानुगुणसाध्यत्वाच्चोदनैव लघीयसी॥"

इति। ननु तदेव वेदमूलत्वं दुरुपपादमित्युक्तम्। उक्ता हि सर्वथा वेदस्य मूलत्वानुपपत्तिः। न तत् सम्यगुक्तम्, प्रमाणतो हि मूलत्वोपपत्तेः। उपलभ्यते हि स्मृतीनां तन्मूलत्वम्। विध्यर्थान्यथानुपपत्तिलभ्यत्वात्। तथाहि 'स्वाध्यायोऽध्येय' इत्युक्ते विद्यां चाध्यापयेदिति द्वयस्यानुपपत्त्याऽन्यो विधिस्तत्र प्रकल्प्यते। विद्यामध्यापयेदिति हि विधिरात्मोपपादनायाध्ययनं प्रयुङ्क्ते। अध्ययनविधिरपि तत्प्रयुक्त्यैवोपपन्नानुष्ठानोऽधिकारान्तरकल्पनामन्तरेणौदासीन्यं प्रतिपद्यते। न चाध्यापयिताध्येतारमनुपनीयाध्यापयितुं क्षमः। तत्र विधिद्वयोपपत्त्यर्थं विध्यन्तरानुमित्या ब्राह्मणादीनुपनयीतेति। एवं वेदार्थावगत्युत्तरकालं विधिद्वये चरितार्थे सत्यनन्तरं प्रजोत्पादनविध्यपेक्षायां पत्न्यभावे तदनुपपत्तेः कामैकसाधनत्वाच्च "लक्षण्यां स्त्रियमुद्वहेदि" ति विध्यन्तरोत्थानम्। अग्निहोत्राद्यनुष्ठानस्य च पत्न्यपेक्षत्वात् तत्सन्निधानाच्च तया सह यजेतेत्यनतिक्रमणविध्युदयः। तथा "ऋतावुपेयाद्" इत्यादि। तत्र तत्र प्रधानोपपादका विधयः साधिकारा अनयैव दिशा कल्पनीयाः। तथाङ्गसंबन्धः प्रत्यक्षैरानुमानिकैश्च श्रुत्यादिभिरध्यवसेयः। निपुणतस्तु ग्रन्थव्याख्यायामेव प्रदर्शयिष्यामः। न चैवं सति दुःश्लिष्टता स्मृतिप्रामाण्यस्य। नन्वेवं सत्यर्थगम्या स्मार्ता विधयः प्रसज्यन्ते। तद्यथा—जुहुयात् सर्पिषेत्युक्ते स्रुवेणावद्यतीति च आज्यं स्रुवेण गृह्णीयादिति विध्यन्तरोदयः। यथा हि

चतुरवत्तविशिष्टः सर्पिषा होमोऽवदानसमर्थद्रव्यविशेषापेक्षः स्रुवाद्याकांक्षति, तथा 'स्रुवेणावद्यती'ति स्रुवविधिः स्वशक्त्यनुसाराद् द्रवद्रव्यविषयतयोपप्लवमानस्तद्विशेषाभिमुखतां चालोच्य विध्यन्तरमाविर्भावयति स्रुवेणाज्यं गृह्णीयादिति। एवञ्जातीयकाः सर्वे विधयः स्मार्ताः प्रसज्येरन्। मैवम्; एषां विनियोगमात्रावसायित्वात्। यो ह्युत्पादकः पदार्थस्यानुष्ठापको वा स्यात्, स एवोपदेशकारणम्। न तूत्पन्नैदमर्थ्यमात्रनियामकोऽपीत्यविरोधः। एवं तर्हि स्मृतिविनियुक्तानामप्यस्मार्तत्वप्रसङ्गः? न; स्मृतेः पदार्थोत्पादकत्वेन वैषम्यात्। का वार्ताष्टकादिषु। न तदभावे कस्यचिद् विधेरनुपपत्तिः। स्वाध्यायाध्ययनविधेर्मन्त्राणां चोपपन्नत्वात्। उच्यते; अत्राप्यष्टकादिसमाख्यातमन्त्रवान् स्वाध्यायाध्ययनविधिनोपपद्यते। नहि जपयज्ञाद्यन्वये सति समाख्यानोपपत्तिः। न च स्पष्टतरविनियोगोपलब्धिः, यद्बलेनाख्याया बाधः। शक्यते च मन्त्रैर्द्रव्यदेवतासंयोगोऽधिकारहेतुत्वं च प्रतिपादयितुम्। तद्युक्ताध्ययनविध्यनुपपत्तितश्च कार्यतावगमः। अङ्गान्वयप्रकारस्तूक्त एव। नन्वेवं समाख्यानाभेदादशेषैर्मन्त्रैरेकमेवाष्टकाकर्मानुमीयेत? मैवम्; सामर्थ्यभेदात्, स्वशक्त्या हि मन्त्राः कर्म प्रतिपादयन्ति। न चैककर्मप्रतिपादनशक्तिरस्ति। अतः सिद्धोऽष्टकादिकर्मणां भेदः। न चैवं सत्यशेषशाखाधिगताष्टकाद्यनुष्ठानमेकस्यैव स्यात्। न खल्वेकशाखाधिगतक्रियानुष्ठाने तदकरणनिमित्तप्रत्यवायो न परिहृतः स्यात्, पठ्यमानत्वे हि कर्मणां भिन्नानां समाननाम्नामप्येकक्रियायामकृती स्यात्, कर्तव्यतावगतेः समानत्वात्, प्रयोजनैक्यानवगमाच्च। अनुमेयत्वे तदनुपपन्नम्, अष्टकाद्यभिन्नकालसंबन्धिनस्तदनुसारेण प्रयोजनस्याभेदात्। अवगतका-

त्वादिसंबन्धाविरोधेन हि प्रयोजनं कल्पनीयम्। तच्चानेककर्मानुष्ठानेऽनुपपन्नम्। न ह्येकस्मिन् कालेऽनेककर्मानुष्ठानोपपत्तिः। न चानुमेयत्वे पूर्वाह्णादिकालस्याङ्गत्वकृतः कश्चिद् विशेषोऽस्ति, पाठ्यमानवत्। किञ्च पाठ्यमानं कर्मास्मानं कारयितुमक्रियायां प्रत्यवायं कल्पयति। काल्पनिकं पुनः पठ्यमानान्यथानुपपत्त्या कल्प्येत। तच्च कल्प्यकर्माननुष्ठाननिमित्तदोषकल्पनामन्तरेणैवोपपन्नमिति न कल्पनावसरोऽस्ति। अथ क्लृप्तकर्मानुष्ठानावगमानुपपत्त्या कल्प्येत, तदैवंरूपा कल्पना स्याद्—यो ह्यस्मिन् कालेऽष्टकाख्यं कर्म न कुर्यात्, स प्रत्यवेयादिति। एवं सति तदाख्यैककर्मकरणेऽपि कृती स्यात्। न चैकैकत्र कल्पनाहेतुसद्भावादनेककल्पनाप्रसंग इति शक्यं वक्तुम्; तस्यैककल्पनायामप्यविरोधात्। अथागृह्यमाणविशेषत्वादनेककल्पनमित्युच्यते; तदेकशाखापठ्यमानविषयत्वादेकैकशाखाधिगतत्वेऽनुपपन्नम्। नहि भिन्नशाखाधिगतत्वेऽप्यगृह्यमाणविशेषतास्ति। पठ्यमानेऽप्येतत् समानमिति चेत्, न; तस्य स्वमहिम्नैवानुष्ठापकत्वात्। इह तु स्वरूपस्यान्यतोऽधिगतेर्वैयर्थ्यम्। किञ्च, अनुष्ठानोपपत्त्यर्था कल्पना। न चैककर्तृविषयतया सर्वकर्मानुष्ठानाभ्युपगमे तदुपपत्तिः। नहि स्वहेतुविरोधिन्यः कल्पनाः संभवन्ति। प्रत्यक्षाध्ययने त्वप्राधान्यात् कालस्य प्रसक्तावपि विरोधः परिह्रियेत, न त्वनुमेयत्वेऽपि। अतः सूक्तमेककरणेऽपि कृती स्यादिति। विरोधादर्शनात्तु चतस्रोऽष्टकाः क्रियन्ते इत्यनवद्यम्। एवं च सामान्यतः कार्यावगमः। क्वचिच्च प्रत्यक्षतोऽपि पठ्यमानत्वेन सामान्यतः कार्यावगतौ मन्त्रार्थवादा विशेषसमर्पका भवन्ति। तान्यपि स्मृतिमूलानि। यथा—"एतद्‌ खलु तद्‌ तपः; यदहिंसा यद्दमो यद्दानं यदतिथिसपर्या। अथ परमं तपो

भूतानां यदनुजिघृक्षा तस्मादेवंवित् सर्वेषां भूतानामद्धैवोपकुर्यात्" इति ब्राह्मणम्। अद्धोपकारश्च दृष्टकारणरहित उपकारः। तदपेक्षितप्रकारविशेषो मन्त्रार्थवादैरन्यपरैरपि प्रतिपाद्यमानो नापेक्षः। यथा—"स्थलयोदकं परिगृह्णन्ती"ति तटाकादिकरणम्। 'धन्वन्निवे'ति च प्रपाकरणम्। यत्तु फलवत्प्रयोगान्तर्गतेः कल्प्यमानस्यापि तादर्थ्यमिति, तल्लिङ्गेन प्रकरणस्य बाध्यमानत्वादचोद्यम्। यमनियमास्तु प्रायशः प्रत्यक्षमूला एव। यत्र पुनः प्रत्यक्षं तदनुपपत्तौ कृतं वा न सामान्यकरणमस्ति, तत्राप्यन्यपरत्वान्मृषार्थत्वेन चोपपन्नत्वान्न मन्त्रार्थवादाः स्वान्वितपदार्थसत्यताभाजो भवन्ति। तेनासदागमवैषम्यम्। स्मृतयोऽपि च तद्रूपा एव बाध्यन्ते। न चैतावता समूलत्वेऽपि तन्मिथ्यात्वकल्पनेत्यलं प्रसङ्गेन। सर्वथा वेदमूलत्वं स्मृतीनामुपपन्नम्। शक्यते चैवं सति स्मृतीनामविज्ञातत्वं वक्तुम्, काल्पनिकत्वात्। कल्पनानिमित्तमेवर्ग्वेदादयः, न व्यपदेशकारणम्। तथा च मनुः "स सर्वोऽभिहितो वेदे" इत्याद्यभिधानमन्त्रं ब्रुवन् कल्प्यत्वाद् विधेर्वेदव्यपदेशो नास्तीति दर्शयति, आपस्तम्बश्च "ब्राह्मणोक्ता विधयस्तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते" इति वदंस्तेषां मूलसत्यताम्। उत्सन्ना इव प्रयोगादनुमीयन्त इत्यर्थः। स्मार्तव्यपदेशानादिता चैवमुपपद्यत इत्येषा दिक्। विरोध चैवं बाध उपपन्नतरो भवति। अन्यथा तु विरोधे विकल्पः स्यात्। न च भवत्विति शक्यं वक्तुं, शिष्टानभ्युपगमात्। ननु विपरीतः शिष्टाभ्युपगमः। न खलु स्मृतिविरुद्धं श्रुत्युक्तमप्याद्रियमाणा दृश्यन्ते। तथाहि—

गोवधं नानुमन्यन्ते श्रुत्युक्तमपि तद्विदः।
तस्योपपातकश्रैष्ठ्यं स्मृतौ यस्मादुदाहृतम्॥

करणं च श्रुतेर्ज्ञातं ज्योतिष्टोमादिकर्मणाम् ।
स्तेयाद्यर्थार्जनेनापि न तत् स्मृतिविरोधतः ॥
मैवं न खलु शिष्टानां क्वचित् स्मृतिविरोधतः ।
श्रुत्युक्तार्थाननुष्ठानं दृढमलीयसामपि ॥
नहि च्छागवधं तज्ज्ञा न कुर्वन्ति निवारिनम् ।
अवारितः स चेत् स्मृत्या गोवधोऽपि हि तत्समः ॥
स्मार्ता हि विधयः सर्वे श्रुत्युक्तव्यतिरेकिणः ।
तेन स्मृतिविरुद्धत्वं नाननुष्ठानकारणम् ॥
स्मार्तोऽपि गोवधोऽस्त्यर्घ्यमर्हयेत् प्रथमं गवा ।
नित्यानि चाष्टकादीनि हेतुस्तदकृतौ च यः ॥
वेदमूलबलं वापि श्रानिर्वा वैदिके च सः ।
न तु स्मृतिबलाच्छिष्टा न कुर्युः कर्म वैदिकम् ॥
अर्धास्तमित आदित्ये प्रारभ्यार्त्तविभावनात् ।
जपः स्मृत्युदितस्त्यक्तो विरोधादग्निहोत्रिभिः ॥
अनुष्ठानाननुष्ठाने कारणं न बलाबले ।
मा भूद् धर्मः खरारूढवस्त्रसञ्छादनाद्यपि ॥
वेदमेव त्वदृष्टार्थे प्रमाणं मन्यते मनुः ।
प्रमाणं परमं धर्मे श्रुतिरित्यादिभाषणात् ॥
मन्यन्ते चातिदौर्बल्यं स्मर्तारः श्रुतितः स्मृतेः ।
धर्ममूलतया वेदं वदन्तस्तद्विदामिति ॥
तेन वेदविरुद्धायाः स्मृतेर्बाध इति स्थितिः ।
श्रूयमाणविरुद्धत्वात् कल्पनानुपपत्तितः ॥
प्रत्यक्षोऽप्युपकारादिर्विधिः सामान्यगोचरः ।
यायादालोच्य दौर्बल्यं विशेषविषयां स्मृतिम् ॥

विध्यर्थानन्यथाभावक्लृप्तैः प्रायो विधायकैः ।
दृशिभिर्बहुधा भिन्नैः स्मृतयः संप्रवर्तिताः ॥

प्रत्यक्षतः कल्पनया च सम्यक् सिद्धस्य सामान्यविधायकस्य ।
मन्त्रार्थवादैर्विधिभिश्च कुर्याद् दृश्यानुमेयैः परिपूरणानि ॥
इत्थं च गाढं नृकृतत्वपङ्कं विधूय धर्माख्यहिरण्यमाला ।
आम्नायसूर्यांशुविकासितानि बिभर्ति विध्यर्थसरोरुहाणि ॥

एवं प्रामाण्यमालोच्य वेदमूलतया स्मृतेः ।
ते सर्वार्थेष्वमीमांस्ये इत्याह भगवान् मनुः ॥ ७ ॥

नन्वेवं सति "धर्ममूलमिदं स्मृतमि"ति वचनादर्थादेर्मूलं न प्राप्नोति ? मैवम्; धर्मपदस्य प्रदर्शनार्थत्वात् । अथापि धर्ममात्र एव धर्मपदं स्यात्; तथाप्यर्थकामौ तावच्छास्त्रनियतौ धर्म्यावेव । अपवर्गस्यान्यत्वमिति चेत्; तदप्यसत्—

इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।
अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥ ८ ॥

इज्येति यागादीनां वैदिकानामुपलक्षणम् । आचार इति स्मार्तानां सोपनिबन्धानामनुपनिबद्धानां च । दम इन्द्रियसंयमः । अहिंसा यज्ञाद्याततायिव्यतिरेकेण । दानं प्रसिद्धम् । स्वाध्यायो ब्रह्मयज्ञः । एषां कर्मणां धर्म्यत्वं यद्यपि प्रसिद्धं, तथाप्यल्पधर्मोऽयं, धारणाल्पत्वेन योगस्यापौष्कल्यात् । अयमेव परमो धर्मः यद्योगेनात्मदर्शनम् । मनोवृत्तिसन्निरोधो योगः । तेन यदाऽस्यैनात्मदर्शनं तदेवात्यन्तिकधारणत्वेन परमो धर्मः । तस्मात् सिद्धमर्थादीनां शास्त्रावसेयत्वम् । कस्मात् पुनः श्रुतिस्मृत्यन्तर्गतत्वेऽपि दमादीनां पृथगुपन्यासः । स्मार्तत्वप्रदर्शनार्थः । आचारः स्मार्तानां ग्राहकः, तानि पुनर्दमादीन्यपि । अत एव ब्रह्मयज्ञोऽप्यत्रैवोदा-

हृतः। प्रत्यक्षश्रुतिपाठेऽपि स्मार्तत्वाद् गाथादिलक्षणः शूद्रस्यापि कथं स्यादिति। सर्वाधिकारार्थं वा दमादीनां पृथग् विधानम्। आचारशब्देन त्वष्टकादीनां त्रैवर्णिकार्थानां ग्रहणम्। तथा चाहुः

"अहिंसा सत्यमक्रोधः शौचमिन्द्रियनिग्रहः।
एष साधारणो धर्मश्चातुर्वर्ण्ये प्रकीर्तितः॥"

इति। सत्यमिति चात्र व्याहृत्युपलक्षितो ब्रह्मयज्ञः परिगृह्यते; सत्यवचनस्येन्द्रियनिग्रहादेव लब्धत्वात्। तथा च ब्रह्मयस्यैतत्— "पञ्चयज्ञात् न हापयेदि" ति। अथवा इज्येति संस्कारोपलक्षणम्। आचार इत्यात्मगुणानाम्। दमादयस्तूदाहरणार्थाः। समानमन्यत्। अपवर्गनिरूपणार्थश्चायं श्लोकः। तदेतदृचाप्युक्तं— 'तमेवं विदित्वा मृत्युमत्येती" ति। स्मृतिश्चात्मज्ञानं प्रकृत्याह—

तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः"

इति। सर्वं चैतत् श्रुतिस्मृत्यवसेयमिति तयोः सूक्तं धर्ममूलत्वम्।

ननु च श्रुतिस्मृत्योरबोधकत्वेपि पुरुषसामर्थ्यापेक्षया प्रतिभानतोऽर्थनियमः। तथा खल्वेकस्मादेव वाक्यादन्यथा चान्यथा च प्रतिपत्ता दृश्यन्ते। कथं चैवं सति धर्मनिर्णयः? तदुक्तं—"धर्मस्य तत्त्वं निहितं गुहायामि" ति। सत्यमेवं यदि निर्णयोपायो न स्यात्। अस्ति ह्युपायः—

चत्वारो वेदधर्मज्ञाः पर्षत् त्रैविद्यमेव वा।
सा ब्रूते यं स धर्मः स्यादेको वाध्यात्मवित्तमः॥

चत्वार इति नियमः पञ्चादिव्यावृत्त्यर्थः, महासमवाये निश्चयक्लेशात्। वेदविदो धर्मशास्त्रविदश्च वेदधर्मज्ञाः। पारार्थ्याच्च ज्ञानस्य न तन्मात्रावसायिनः, किं तर्हि, ज्ञानिनोऽनुष्ठातारश्च ते सविवेकाः परिषत्। त्रैविद्यं वा। त्रयी विद्या ऋग्यजुस्सामलक्षणा

यस्मिन्, तत् त्रैविद्यम्। त्रय ऋग्यजुःसामपारगा इत्यर्थः। पुरुषसंख्यानियमाच्चाथर्ववेदाध्ययनमविरुद्धम्। अस्मिंश्च पक्षे ये प्रतिवाक्यं श्रुतिस्मृत्योर्मूलमूलिभावं जानन्ति, ते गृह्यन्ते। एवकारस्त्वप्यर्थः। स च संभावनायाम्। वा शब्दोऽभ्यर्हितत्वेन विकल्पद्योतनार्थः। त्रयोऽपि यदि भवन्ति, द्वौ वा यदि स्याताम्, एकोऽपि वाध्यात्मवित्तमः। स हि सम्यग् वेत्तानन्यथावक्ता च। तथा चोक्तम्

"एकोऽपि वेदविद् धर्मं यं व्यवस्येद् द्विजोत्तमः।"

इति। आत्मयाजिनोऽपि गृहस्था ब्रह्मविदो नैष्ठिकाश्च ब्रह्मचारिणो वनस्थाश्च। तदर्थमध्यात्मवित्तम इत्युक्तं यत्याश्रमाभिप्रायम्। नन्वेतदयुक्तं, स खलु हिंसानुग्रहयोरनारम्भीति। को वा तमारम्भिणमाह। अभिगम्य तु संशये पृष्टः सोऽपि ब्रूयादित्युक्तमस्माभिः। तथा च व्यासः—

"सर्वभूतगणाद्रोही चरेदव्याहरन्नपि।

पृष्टोऽन्यैः साधुभिर्ब्रूयात् पृच्छेदन्यांश्च संशये॥"

इति। यत्तु 'प्रागुत्तमात् त्रय आश्रमिण' इति, वैखानसाभिप्रायं तद् भिक्षोः समवायप्रतिषेधाद् दशावरादिविषयं द्रष्टव्यम्। तत्रापि तु यदि कश्चित् स्वनियमातिलङ्घनेन समवेयात्, ततः परिषत् सगुणैव। तथा चाङ्गिराः—

"ब्रह्मचार्याश्रमादूर्ध्वं त्रय आश्रमिणः स्मृताः"

इत्याह। वाशब्दद्वयाच्च द्वौ वेत्युक्तम्। पूर्वापेक्षया च तौ प्रकृष्टगुणौ द्रष्टव्यौ। तथा चाहुः—

"चत्वारस्तु त्रयो द्वौ वा यद्वैकः स्यादनिन्दितः।

यतिनामग्र्यविद्यानमेकोऽपि पारिषद्भवेद्॥"

इति। सा परिषदन्योन्यं विमृश्य सम्यगवधार्य यद् ब्रूते,

स धर्मः स्यात्। स निर्विचिकित्स्यो धर्म इत्यवगन्तव्यम्। तथा च गौतमः—"यच्चात्मवन्तो वृद्धाः सम्यग्विनीता दम्भलोभमोह-वियुक्ता वेदविद आचक्षते, तत् समाचरेद्" इति। शङ्खोऽप्याह—"श्रुतिविरोधे त्रैविद्यसमवायेषु निर्णयः" इति, "यथावलेपं शास्त्रत-स्तेऽनुब्रूयुरि" ति च। यत्तु पञ्चावरा दशावरा वा परिषद् धर्मप्रव-क्तृभिरुक्ता, सा महापातकादिप्रायश्चित्तविषया द्रष्टव्या। शुध्य-शुध्योस्तत्र प्रकाश्यत्वात्। या त्वेकविंशत्या शतेनाङ्गिरसाभि-हिता, सा किल भूयांसो ब्राह्मणाः, ते यत् ब्रूयुस्तत् तथैव भवतीति श्रद्धामात्रेणेति मन्तव्या, गायत्रीमात्रसारैश्चीर्णव्रतैरपि धर्मस्य निर्णेतुमशक्यत्वात्। पूर्वोक्तपरिषत्प्रशंसार्थं वा, अविदुषां निन्दा-र्थम्। तथा चोक्तं—"नेतरे तु सहस्रशः" इति। गुणवद्विषयत्वे वा कार्यगौरवज्ञापनार्थम्। यत्तु—

"राज्ञां (तु) सैव द्विगुणा वैश्यानां त्रिगुणा स्मृता"

इति। तत् क्षत्रियवैश्ययोः प्रायश्चित्तदाने यत्नातिरेकार्थम्। आपद्विषयं वा। प्रायश्चित्तस्य वावश्यकार्यताज्ञापनार्थम्। परि-षदि वाचावेदननियमार्थं वा। यत्तु क्षत्रियादिप्रायश्चित्तदाने पुरो-हिताद्यधिकारः, अन्येषां च प्रायश्चित्तमिति, तत् प्रायश्चित्तप्रकरणे वक्ष्यामः। सर्वथा परिषदि धर्मनिर्णयः। अल्पापि च प्रकृष्टगुणा परिषत् प्रशस्तेत्याचार्याभिप्रायः। न्यायमूलत्वात् परिषन्निर्णयार्थ-स्मृतेरनेकार्थत्वमविरुद्धम्। अनयैव दिशा विवेकः कार्यः॥ इति।

यत्तु—ब्राह्मणभागस्य न वेदत्वं प्रामाण्यं वेत्यार्यसमाजीयानां मतम्, तत्र सुनृतवादिन्यां विद्यावाचस्पत्यप्पाशर्ममहोदया एवं वर्णयन्ति। तद्यथा—

अत्रैवं केचित् प्रत्यवतिष्ठन्ते—ननु भोः नखल्वेताः श्रुतयो ब्राह्मण-

वचनानि ह्येतानि, येषु विस्पष्टतया प्रतिपाद्यते ब्राह्मणादीनामुत्पत्तिरिति। तदेतन्न समञ्जसम्। पौरुषस्य सूक्तस्य 'स मुखतस्त्रिवृतं निरमिमीत' प्रभृतीनां च संहितावाक्यानां ब्राह्मणत्वानुपपत्तेः। सन्तु वा ब्राह्मणवचनान्येतानि, तथापि नहि तावता चातुर्वर्ण्यव्यवस्थायाः श्रुतिप्रतिपादितत्वमपाकर्तुं शक्यम्। श्रुतित्वाद्ब्राह्मणभागस्य। भगवान् हि वेदो भागद्वये विभक्तः। मन्त्रभागो ब्राह्मणभागश्चेति। अत एवोक्तं भगवता कात्यायनेन—मन्त्रब्राह्मणयोर्वेदनामधेयमिति। यथा मन्त्राणामेवं ब्राह्मणानामपि वेद इति संज्ञेति सूत्रस्यास्यार्थः। यत्त्वत्राहुः—कात्यायनभिन्नैर्मुनिभिर्वेदस्य मन्त्रब्राह्मणात्मकत्वं न प्रदर्शितम्। ततश्च नहि केवलस्य कात्यायनस्योक्तिः प्रमाणीकर्तुं शक्यते। तन्न मनोरमम्; भगवतः कात्यायनस्य मुनित्वेन तद्वचनस्य प्रामाण्ये बाधाभावात्। सत्यप्येवं यद्याग्रह एव, तदा गृहाण भगवत आपस्तम्बस्य द्वितीयाध्यायगतं सूत्रं मन्त्रब्राह्मणयोर्वेदनामधेयमिति।

संदृश्यते चान्यत्रापि मुनिवचनेषु मन्त्रभागस्येव ब्राह्मणभागस्यापि वेदपदेन व्यपदेशः। तथा हि भगवान् जैमिनिर्वेदं लक्षयन्मन्त्रभागस्येव ब्राह्मणभागस्यापि लक्षणं सूत्रयामास द्वितीयेऽध्याये 'तच्चोदकेषु मन्त्राख्या' 'शेषे ब्राह्मणशब्दः' इति। तस्य अनुष्ठानोपयुक्तार्थस्य ये चोदका अभिधायकाः स्मारका इति यावत् तेषु मन्त्राख्या मन्त्रसंज्ञा। यानि च ततो विभिन्नानि, तेषु ब्राह्मणशब्द इति। एवं मन्त्रब्राह्मणयोर्लक्षणमभिधाय ततः परमेव ऋगादिलक्षणमाचष्टे भगवाञ्जैमिनिः 'तेषामृग्यत्रार्थवशेन पादव्यवस्था, 'गीतिषु सामाख्या, 'शेषे यजुःशब्दः, इति। यदि मन्त्रभाग एव वेद इत्यभिप्रैष्यद्भगवाञ्जैमिनिः, तदा तच्चोदकेषु मन्त्रा-

ख्येति सूत्रान्तरमेव ऋगादिलक्षणमुपन्यमन्स्यत्। वेदविशेषा हि ऋगादयः। लक्षणीयानां च वेदानां सह विभेदैर्लक्षणमनभिधाय मध्य एव तद्विभिन्नानां ब्राह्मणानां लक्षणमुपनिबन्धनीयमिति नैतन्न्याय्यम्। नह्येवं परित्यक्तक्रमं सूत्रयन्ति सूत्रकृतः क्वापि। ततश्चावश्यमभ्युपेतव्यं 'मन्त्रभागस्येव ब्राह्मणभागस्यापि अभिमन्यत एव वेदत्वं भगवता जैमिनिनेति। एवं च कात्यायनविभिन्ना मुनयो न ब्राह्मणानि वेद इत्याचक्षत इति वचनमप्रमाणिकमेव।

स्वीकुर्वते च समस्वरमेव भूयांस एव मुनयो ब्राह्मणानां वेदत्वं। तथाहि वैशेषिकदर्शने भगवान् कणादः—'बुद्धिपूर्वा वाक्यकृतिर्वेद' इति सूत्रयित्वा वेदवाक्यरचनाया बुद्धिपूर्वकत्वं विवृणोति 'ब्राह्मणे संज्ञाकर्मसिद्धिलिङ्गम्' इति। ब्राह्मणे ब्राह्मणाख्ये वेदभागे संज्ञाकरणसिद्धिर्वेदवचनानां बुद्धिपूर्वकृतत्वमभिव्यञ्जयति। संदृश्यन्ते हि ब्राह्मणेषु वाक्यानि 'उद्भिदा यजेत' 'विश्वजिता यजेत' इत्यादीनि। तत्र 'उद्भित्' विश्वजित्' इत्यादयः संज्ञा यागविशेषाणाम्। संज्ञाश्च न हि केषामपि सहजा भवन्ति। व्यवहारार्थं हि व्यवहारकामुकैरेता बुद्ध्या विधायन्ते यथा रामः कृष्णो गोविन्द इत्याद्याः। ततश्च सिद्धं बुद्धिपूर्वा वाक्यरचना वेदगतेति। एतच्च भगवतः कणादस्य वचनं ब्राह्मणानां वेदत्वमन्तरा न शक्यमुपपादयितुम्। न हि वेदवाक्यानां बुद्धिपूर्वकत्वं प्रतिपादयितुकामः कश्चिदप्यनुन्मत्तस्तद्विभिन्नानां वाक्यानां बुद्धिपूर्वकत्वप्रतिपादने प्रवर्तेत। तत एव च ब्रूमः सम्मतमेव मुनेर्भगवतः कणादस्य ब्राह्मणानां वेदत्वमिति।

भगवता गौतमेनापि न्यायदर्शने शब्दस्य प्रामाण्यमुपपादयता

'वाक्यविभागस्य चार्थग्रहणात्'। २।१।६० इति सूत्रे यथा लोकेऽर्थग्रहणेन वाक्यानि प्रामाण्यमृच्छन्त्येवं वेदवाक्यान्यपि प्रमाणमित्यभिधाय वेदान्तःपातित्वाद्ब्राह्मणभागस्य त्रैविध्यं प्रदर्शितम्। 'विध्यर्थवादानुवादवचनविनियोगात्, ३-१-६१ इति। व्याख्यातं च सूत्रमिदं भगवता वात्स्यायनेन 'त्रिधा खलु ब्राह्मणवाक्यानि विनियुक्तानि विधिवचनान्यर्थवादवचनान्यनुवचनानीति' इति। एवं च भगवता गौतमेनापि स्वीकृतमेव मन्त्रभागस्येव ब्राह्मणभागस्यापि प्रामाण्यमिति निःसंदेहमिदम्।

भगवता व्यासेनापि वेदान्तदर्शने श्रुतिपदेन ब्राह्मणवचनानि गृह्यन्ते 'सूचकश्च हि श्रुतेराचक्षते तद्विदः' ३-८-४ इत्यादिषु। एवंविधेषु हि सूत्रेषु श्रुतिपदेनोपनिषद्वचनानि गृह्यन्ते। उपनिषदश्च ब्राह्मणान्येव। ततश्च सिद्धं ब्राह्मणानां वेदत्वमिति।

प्रयुज्यते च श्रुतिपदमुपनिषत्सु सर्वज्ञानमयेन भगवता मनुनापि षष्ठेऽध्याये 'एताश्चान्याश्च सेवेत दीक्षाविप्रो वने वसन्। विविधाश्चोपनिषदीरात्मसंसिद्धये श्रुतीः, इति। श्रुतिपदं च वेदापरपर्यायमिति 'श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रन्तु वै स्मृतिः, इति स एवाह।

तदेवं मन्त्रब्राह्मणयोर्वेदनामधेयमिति भगवता कात्यायनेनेवापरापरैरप्यनेकैर्मुनिभिर्मन्त्रभागस्येव ब्राह्मणभागस्यापि वेदत्वोक्तेर्दुर्निवारमेतत्प्रामाण्यमिति द्रष्टव्यम्।

यत्तूच्यते ऋषिप्रणीतत्वान्न ब्राह्मणभागः प्रमाणमिति, तन्न मनोरमम्; ब्राह्मणभागस्य ऋषिप्रणीतत्वे प्रमाणाभावात्। प्रत्युतानादित्वमेव मन्त्राणामिव ब्राह्मणादीनामभिधीयते मुनिभिः। यथाह न्यायभाष्ये वात्स्यायनः 'य एव मन्त्रभागस्य द्रष्टारः प्रवक्तारश्च

ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति। अत्र मन्त्राणामिव ब्राह्मणानामपि मुनिदृष्टत्वमभिधीयते। ततश्च न हि ऋषिप्रणीतत्वमेतेषामिति।

अपरमपि यदुच्यते पुराणानि खलु ब्राह्मणवाक्यानीति नैतानि वेदत्वमर्हन्तीति। तन्न; कस्यचिद् ब्राह्मणभागस्य पुराणेतिहासादित्वेऽपि वेदत्वं न शक्यते विनिहन्तुम्। न हि ब्राह्मणस्य विष्णुशर्मत्वेऽपि ब्राह्मणत्वं विहन्यते, नापि पृथिव्याः पृथिवीत्वं द्रव्यत्वं पदार्थत्वं च परस्परं विरुणद्धि। न खलु व्याप्यव्यापकयोर्धर्मयोर्विरोधः कोऽपि संदृष्टो, येनैतौ नैकत्रावतिष्ठेयाताम्। अतश्च सत्यपि ब्राह्मणस्य पुराणत्वे न वेदत्वाभावस्तत एव नाप्रामाण्यलेशोऽपीति।

वस्तुतस्तु न ब्राह्मणानि पुराणानि, नापि वेतिहासा इति। तथाहि श्रूयते 'इतिहासपुराणं पञ्चमो वेदानां वेदः, इति। तथा च यथा 'भारतं पञ्चमो वेद, इत्यादिषु भारतस्य पञ्चमवेदत्वमभिधीयमानं तस्य तद्विभिन्नत्वमभिधत्ते, एवं प्रकृतेऽपि 'इतिहासपुराणं पञ्चमो वेदानां वेद, इति वचनं वेदविभिन्नत्वमेव पुराणानामभिद्योतयति। ब्राह्मणानि पुनर्वेदा एवेति स्फुटीकृतमेवैतत्प्राक्। ततश्च नास्ति ब्राह्मणानां पुराणादित्वमिति। अत एव च शतपथश्रुतिः संगच्छते। यथा "एवमिमे सर्वे वेदा विनिर्मिताः सकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्काः सेतिहासाः सान्वाख्यानाः सपुराणाः सस्वराः ससंस्काराः" इत्यादि। अत्र च विस्पष्टतयैव प्रतिपादितं पुराणानां ब्राह्मणभिन्नत्वम्। तत एव विभिन्नान्येव ब्राह्मणतः पुराणानीति।

यत्तु ब्राह्मणपरिव्राजकन्यायेन पुराणादीनां वेदतः पार्थक्येनो-

क्षेखः । वदन्ति हि ब्राह्मणा आहूयतां परिव्राजकोऽप्याहूयतामिति । न च परिव्राजको नामाब्राह्मणो भवति । ततश्च ब्राह्मणा आहूयतामित्यनेनैवाभीष्टसंसिद्धौ पुनः परिव्राजकाह्वानादेशो वृथैवेति । तथापि भवत्येवैवं प्रयोगः । ततश्च तत्र ब्राह्मणपदं परिव्राजकभिन्नब्राह्मणपरमित्यभ्युपगम्यते । एवमिहापि पुराणब्राह्मणयोरविशेषेऽपि ब्राह्मणपदं पुराणभिन्नब्राह्मणपरं स्यादिति न कश्चिद्विरोध इति। तन्न पेशलम्, इतिहासपुराणानां वेदत्वे 'इतिहासपुराणं पञ्चमो वेदानां वेद' इति वचनानुपपत्तेः । यदि हि वेदा एव स्युरितिहासपुराणानि, तदा कथं नामामीषां पञ्चमवेदत्वमभिधीयमानमुपपद्येत । नहि वर्णचतुष्टयान्तःपातिनि ब्राह्मणे ब्राह्मणो नामायं पञ्चमो वर्ण इति कश्चिदपि ब्रूयात् । ततश्च 'दारिद्र्यं हि नाम षष्ठं महापातकम्' इत्यत्र पातकगतायाः षष्ठत्वसंख्यायाः पातकेतरेण दारिद्र्येणेव 'इतिहासपुराणं पञ्चमो वेदानां वेद' इत्यत्रापि वेदगतपञ्चत्वसंख्याया वेदविभिन्नेनेतिहासपुराणेन पूरणमिति द्रष्टव्यम् । एवं च न ब्राह्मणानि पुराणानीतिहासा वेति संसिद्धम् । नहि पुरातनमर्थमुपवर्णयतीत्येतावतैव कस्यापि पुराणत्वमितिहासत्वं वाऽभ्युपगन्तुं शक्यम् । एवं हि यथा 'हरिश्चन्द्रो ह वै ऐक्ष्वाको राजा बभूव, इत्यादीनां ब्राह्मणवचनानामेवं "हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम" इत्यादीनामपि मन्त्राणां पुराणत्वमितिहासत्वमपि वा दुर्वारं स्यात् । ततश्च पुराणार्थप्रतिपादनमात्रं न पुराणत्वनियामकमिति स्पष्टम् ।

यत्तूच्यते-वेदव्याख्यानानि ब्राह्मणानि न वेदा इति । तदपि न विचारसहम् । यदि हि न मन्त्रव्याख्यानानां वेदत्वं, तदा म-

न्त्राणामपि केषाञ्चिदवैदिकत्वापत्तिः। भवन्ति हि मन्त्रा अपि मन्त्राणां व्याख्यानानीति। यथा "प्रजापते न त्वदेतान्यन्यो विश्वारूपाणि परिता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्" इति याजुषो मन्त्रः। एतत्समानार्थक एव च मन्त्र ऋग्वेदे श्रूयते "प्रजापते न त्वदेतान्यन्यो विश्वाजातानि परिता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्" इति। अत्र चादिमे मन्त्रे विद्यमानस्य विश्वारूपाणीत्यस्य व्याख्यानमन्तिमे मन्त्रे विश्वाजातानीति। न पुनरेतावता मन्त्रस्यास्य वेदत्वं निराकर्तुं शक्यत इति। न चापि व्याख्यानान्येव निखिलान्यपि ब्राह्मणवचनानि 'अग्निहोत्रं जुहुयात्स्वर्गकामः' ज्योतिष्टोमेन स्वर्गकामो यजेत' 'विश्वजिता यजेत' अहरहः सन्ध्यामुपासीत, इत्यादीनां विधिवचनानां व्याख्यानत्वानुपपत्तेः। ततश्च नास्ति वेदविभिन्नत्वं ब्राह्मणवचनानामिति।

तदेवं कात्यायनविभिन्नैरपि मुनिभिर्वेदत्वेन स्वीक्रियमाणत्वादितिहासपुराणव्याख्यानादित्वाभावादृषिभिः प्रणीतत्वाभावादपौरुषेयत्वाच्च वेदत्वम्, अत एव च परमं प्रामाण्यं ब्राह्मणवचनानामिति कृतं पल्लवितेन॥

अत्र प्रसंगे आर्यसमाजीयानां मतानुवादपूर्वकं सनातनधर्मोद्धारे ब्राह्मणभागस्यापि वेदत्वं यत्स्थापितम्; तस्यापि संग्रहमत्र प्रेक्षकाणां सौकर्यार्थं सम्पादयामः। तद्यथा—

यत्तु वेदभाष्याभासभूमिकायामुपक्रमे—

अथ कोऽयं वेदो नाम? मन्त्रभागसंहितेत्याह। 'मन्त्रब्राह्मणयोर्वेदनामधेयमि'ति कात्यायनोक्तेर्ब्राह्मणभागस्यापि वेदसञ्ज्ञा कुतो न स्वीक्रियत इति? मैवं वाच्यम्। न ब्राह्मणानां वेदसञ्ज्ञा,

भवितुमर्हति। कुतः ? पुराणेतिहाससञ्ज्ञकत्वात्, वेदव्याख्यानात्, ऋषिभिरुक्तत्वात्, अनीश्वरोक्तत्वात्, कात्यायनभिन्नैर्ऋषिभिर्वेद-सञ्ज्ञायामस्वीकृतत्वात्, मनुष्यबुद्धिरचितत्वाच्चेति। यथा ब्राह्मणग्रन्थेषु मनुष्याणां नामलेखपूर्वका लौकिका इतिहासाः सन्ति, नचैवं मन्त्रभागे। किञ्च भोः! त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्। यद्देवेषु त्र्यायुषं तन्नो अस्तु त्र्यायुषम् ॥ १ ॥ यजु० अ० ३ मं० ६२ इत्यादीनि वचनान्यृषीणां नामाङ्कितानि यजुर्वेदादिष्वपि दृश्यन्ते। अनेनेतिहासादिविषये मन्त्रब्राह्मणयोस्तुल्यतापि दृश्यते। एवंच ब्राह्मणानामपि वेदसञ्ज्ञा कुतो न मन्यते? मैवं भ्रमि। नैवात्र जमदग्निकश्यपौ देहधारिणौ मनुष्यस्य नाम्ना स्तः। अत्र प्रमाणम्। चक्षुर्वै जमदग्निर्ऋषिर्यदेनेन जगत्पश्यत्यथो मनुते तस्माच्चक्षुर्जमदग्निर्ऋषिः। श० कां० ८ अ० १। कश्यपो वै कूर्मः प्राणो वै कूर्मः। श०कां०७ अ०५। अनेन प्राणस्य कूर्मः कश्यपश्च सञ्ज्ञाऽस्ति। शरीरस्य नाभौ तस्य कूर्माकारावस्थितेः। अनेन मन्त्रेणेश्वर एव प्रार्थ्यते। तद्यथा—हे जगदीश! भवत्कृपया नोऽस्माकं जमदग्निसञ्ज्ञकस्य चक्षुषः कश्यपाख्यस्य प्राणस्य च त्र्यायुषं त्रिगुणमर्थात् त्रीणि शतानि वर्षाणि यावत्तावदायुरस्तु। चक्षुरित्युपलक्षणमिन्द्रियाणां प्राणो मनआदीनां च (यद्देवेषु त्र्यायुषम्) अत्र प्रमाणम्—विद्वांसो हि देवाः। श० कां० ३ अ० ७। अनेन विदुषां देवसञ्ज्ञाऽस्ति। देवेषु विद्वत्सु यद्विद्याप्रभावयुक्तं त्रिगुणमायुर्भवति (तन्नो अस्तु त्र्यायुषम्) तत्सेन्द्रियाणां समनस्कानां नोऽस्माकं पूर्वोक्तं सुखयुक्तं त्रिगुणमायुरस्तु भवेत्। येन सुखयुक्ता वयं तावदायुर्भुञ्जीमहि। अनेनान्यदप्युपदिश्यते। ब्रह्मचर्यादिसुनियमैर्मनुष्यैरेत-

त्रिगुणमायुः कर्त्तुं शक्यमस्तीति गम्यते। अतोऽर्थाभिधायकै-र्जमदग्न्यादिभिः शब्दैरर्थमात्रं वेदेषु प्रकाश्यम्, अतो नात्र मन्त्र-भागे इतिहासलेशोऽप्यस्तीत्यवगन्तव्यम्। अतो यच्च सायनाचा-र्यादिभिर्वेदप्रकाशादिषु यत्र कुत्रे तिहासवर्णनं कृतम्, तद्भ्रममूलम-स्तीति मन्तव्यम्। तथा ब्राह्मणग्रन्थानामेव पुराणेतिहासादि-नामास्ति, न ब्रह्मवैवर्त्त श्रीमद्भागवतादीनां चेति निश्चीयते। किं च भोः ब्रह्मयज्ञविधाने यत्र क्वचिद् ब्राह्मणसूत्रग्रन्थेषु यद् ब्राह्मणा-नीतिहासान्पुराणानि कल्पान् गाथा नाराशंसीरित्यादीनि वचनानि दृश्यन्ते। एषां मूलमथर्ववेदेऽप्यस्ति, "स बृहतीं दिशमनुव्यचलत्; तमितिहासश्च पुराणं च गाथाश्च नाराशंसीश्चानुव्यचलत्। इतिहा-सस्य च वै स पुराणस्य च गाथानां च नाराशंसीनां च प्रियं धाम भवति य एवं वेद॥ १॥ अथर्व० कां १५ प्रपा० ३०। अनु० १ मं० ४। अतो ब्राह्मणग्रन्थेभ्यो भिन्ना भागवतादयो ग्रन्था इति-हासादिसञ्ज्ञया कुतो न गृह्यन्ते? मैवं वाचि। एतैः प्रमाणैर्ब्रा-ह्मणग्रन्थानामेव ग्रहणं जायते, न तु श्रीमद्भागवतादीनामिति। कुतः? ब्राह्मणग्रन्थेष्वितिहासादीनामन्तर्भावात्। तत्र देवासुराः संयत्ता आसन्नित्यादय इतिहासा ग्राह्याः। सदेव सोम्येदमग्र आ-सीदेकमेवाद्वितीयम्। छान्दोग्योपनिष० प्रपा० ६। "आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किंचन मिषत्" इत्यैतरेयारण्यको-पनि० अ० १ खं० १॥ आपोह वा इदमग्रेसलिलमेवास। श० कां० ११ अ० १। इदं वा अग्रे नैव किंचिदासीत्, इत्या-दीनि जगतः पूर्वावस्थाकथनपूर्वकाणि वचनानि ब्राह्मणान्तर्गता-न्येव पुराणानि ग्राह्याणि। कल्पा मन्त्रार्थसामर्थ्यप्रकाशकाः। त-द्यथा—इषेत्वोर्जेत्वेति वृष्ट्यै तदाह। यदाहेहेषेत्वेत्यूर्जेत्वेति यो वृ-

ष्टादूर्ध्व सो जायते तस्मै तदाह । सविता वै देवानां प्रसविता सवितृप्रसूताः । श० कां १ अ० ७ इत्यादयो ग्राह्याः । गाथा याज्ञवल्क्यजनकसंवादो यथा शतपथब्राह्मणे गार्गिमैत्रेय्यादीनां परस्परं प्रश्नोत्तरकथनयुक्ताः सन्तीति । नाराशंस्यश्च । अत्राहुर्यास्काचार्याः—नराशंसो यज्ञ इति कथक्यो नरा अस्मिन्नासीनाः शंसन्त्यग्निरिति शाकपूणिर्नरैःप्रशस्यो भवति । नि० अ० ८ खं०६ ॥ नृणां यत्र प्रशंसा नृभिर्यत्र प्रशस्यते ता ब्राह्मणनिरुक्ताद्यन्तर्गताः कथा नाराशंस्यो ग्राह्या नातोऽन्यो इति । किंच तेषु तेषु वचनेष्वपीदमेव विज्ञायते यद् यस्माद्ब्राह्मणानीतिसञ्ज्ञिपदमितिहासादिस्तेषां सञ्ज्ञेति । तद्यथा— ब्राह्मणान्येवेतिहासान् जानीयात् पुराणानि कल्पान् गाथा नाराशंसीश्चेति ॥

अन्यदप्यत्र प्रमाणमस्ति न्यायदर्शनभाष्ये । वाक्यविभागस्य चार्थग्रहणात् । १ अ० २ आ० २ सू० ६० । अस्योपरि वात्स्यायनभाष्यम्—प्रमाणं शब्दो यथा लोके विभागश्च ब्राह्मणवाक्यानां त्रिविधः । अयमभिप्रायः । ब्राह्मणग्रन्थशब्दा लौकिका एव न वैदिका इति । तेषां त्रिविधो विभागो लक्ष्यते । सू० विध्यर्थवादानुवादवचनविनियोगात् ॥ २ ॥ अ० २ आ० २ सू० ६१ ॥ अस्योपरि० वा० भा०—त्रिधा खलु ब्राह्मणवाक्यानि विनियुक्तानि विधिवचनान्यर्थवादवचनान्यनुवादवचनानीति । तत्र सू०-विधिर्विधायकः ॥ ३ ॥ अ० २ आ० २ सू० ६२ । अस्योपरि० वा० भा०— यद्वाक्यं विधायकं चोदकं स विधिः । विधिस्तु नियोगोऽनुज्ञा वा यथा अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादि । ब्राह्मणवाक्यानामिति-शेषः । सू० स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥ ४ ॥ अ० २ आ २ सू० ६३ ॥ अस्योपरि वा० भा०—विधेः फलवादलक्षणा

या प्रशंसा सा स्तुतिः। सम्प्रत्ययार्थं स्तूयमानं श्रद्दधीतेति प्रवर्तिका च फलश्रवणात्प्रवर्त्तते 'सर्वजिता वै देवाः सर्वमजयन्सर्वस्याप्त्यै सर्वस्य जित्यै सर्वस्यैतेनाप्नोति सर्वं जयती' त्येवमादि। अनिष्टफलवादो निन्दा वर्जनार्थं निन्दितं न समाचरेदिति। स एष वा प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाऽन्येन यजते गर्ते पतत्ययमेतज्जीर्यते वा' इत्येवमादि। अन्यकर्त्तृकस्य व्याहतस्य विधेर्वादः परकृतिः। 'हुत्वा वपामेवाग्रेऽभिघारयन्ति। अग्नेः पृषदाज्यं तदुह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्ति। अग्नेः प्राणाः पृषदाज्यं स्तोममित्येवमभिदधती' त्येवमादि। ऐतिह्यसमाचरितो विधिः पुराकल्प इति। 'तस्माद्वा एतेन ब्राह्मणा बहिः पवमानं सामस्तोममस्तौषन् योनेर्यज्ञं प्रतनवामहा' इत्येवमादि। कथं परकृतिपुराकल्पौ अर्थवादा इति। स्तुतिनिन्दावाक्येनाभिसम्बन्धाद्विध्याश्रयस्य कस्य कस्यचिदर्थस्य द्योतनादर्थवाद इति।

सू० विधिविहितस्यानुवचनमनुवादः ॥ ५॥ अ० २ आ० २ सू० ६४॥ अस्योपरि वा० भा०—विध्यनुवचनं चानुवादो विहितानुवचनं च पूर्वशब्दानुवादोऽपरोऽर्थानुवादः। सू० न चतुष्ट्वमैतिह्यार्थापत्तिसंभवाभावप्रामाण्यात् ॥ ६ ॥ अ० २ आ० सू० १॥ अस्योपरि वा० भा०—न चत्वार्य्येव प्रमाणानि, किन्तर्हि ऐतिह्यमर्थापत्तिः संभवोऽभाव इत्येतान्यपि प्रमाणानि। इति होचुरित्यनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्य्यमैतिह्यम्। अनेन प्रमाणेनापीतिहासादिनामभिर्ब्राह्मणान्येव गृह्यन्ते नान्यदिति। अन्यच्च। ब्राह्मणानि वेदव्याख्यानान्येव सन्ति, नैव वेदाख्यानीति। कुतः। इषेत्वोर्जेत्वेति श० कां० १ अ० ७॥ इत्यादीनि मन्त्रप्रतीकानि धृत्वा ब्राह्मणेषु वेदानां व्याख्यानकरणात् ॥ अन्यच्च महाभा-

ष्येऽपि—केषां शब्दानाम्? लौकिकानां वैदिकानां च। तत्र लौकिकास्तावत्। गौरश्वःपुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इति। वैदिकाः खल्वपि शन्नो देवीरभीष्टये। इषेत्वोर्जेत्वा। अग्निमीले पुरोहितम्। अग्न आयाहि वीतय इति। यदि ब्राह्मणग्रन्थानामपि वेदसञ्ज्ञाभीष्टाभूत्तर्हि तेषामप्युदाहरणमदात्॥ अत एव महाभाष्यकारेण मन्त्रभागस्यैव वेदसञ्ज्ञां मत्वा प्रथममन्त्रप्रतीकानि वैदिकेषु शब्देषूदाहृतानि। किन्तु यानि गौरश्वइत्यादीनि लौकिकोदाहरणानि दत्तानि तानि ब्राह्मणादिग्रन्थेष्वेव घटन्ते। कुतः। तेष्वीदृशशब्दपाठव्यवहारदर्शनात्। द्वितीया ब्राह्मणे॥ १॥ अ० २ पा० ३ सू० ६०। चतुर्थ्यर्थे बहुलं छन्दसि २। अ० २ पा० ३ सू० ६२। पुराणप्रोक्तेषु ब्राह्मणकल्पेषु॥ ३॥ अ० ४ पा० ३ सू० १०५। इत्यष्टाध्याय्यां सूत्राणि। अत्रापि पाणिन्याचार्यैर्वेदब्राह्मणयोर्भेदेनैव प्रतिपादितम्। तद्यथा—पुराणैः प्राचीनैर्ब्रह्मादिभिः प्रोक्ता ब्राह्मणकल्पग्रन्था वेदव्याख्यानाः सन्ति। अत एवैतेषां पुराणेतिहाससञ्ज्ञा कृतास्ति। यद्यत्र छन्दोब्राह्मणयोर्वेदसञ्ज्ञाऽभीष्टाभवेत्तर्हि चतुर्थ्यर्थे बहुलं छन्दसीत्यत्र छन्दोग्रहणं व्यर्थं स्यात्। कुतः द्वितीया ब्राह्मणेति ब्राह्मणशब्दस्य प्रकृतत्वात्। अतो विज्ञायते न ब्राह्मणग्रन्थानां वेदसञ्ज्ञास्तीति। अतः किं सिद्धम्। ब्रह्मेति ब्राह्मणानां नामास्ति। अत्र प्रमाणम्—ब्रह्म वै ब्राह्मणः क्षत्रꣳराजन्यः। श० कां० १३ अ० १॥ समानार्थावेतौ ब्रह्मन् शब्दो ब्राह्मणशब्दश्च। इति व्याकरणमहाभाष्ये अ० १ पा० १ आ० १। चतुर्वेदविद्भिर्ब्रह्मभिर्ब्राह्मणैर्महर्षिभिः प्रोक्तानि यानि वेदव्याख्यानानि तानि ब्राह्मणानि। अन्यच्च। कात्यायनेनापि ब्राह्मणा वेदेन सहचरितत्वात्सहचारोपाधिमत्त्वाद्ब्राह्मणानां वेदसञ्ज्ञा संमतेति

विज्ञायते। एवमपि न सम्यगस्ति। कुतः? एवंभवितुमर्हतीति। इत्यादि बहुभिः प्रमाणैर्मन्त्राणामेव वेदसञ्ज्ञा, न ब्राह्मणग्रन्थानामिति सिद्धम्॥ किंच भोः! ब्राह्मणग्रन्थानामपि वेदवत्प्रामाण्यं कर्तव्यमाहोस्विन्नेति? अत्र ब्रूमः—नैतेषां वेदवत् प्रामाण्यं कर्त्तुं योग्यमस्ति। कुतः? ईश्वरोक्ताभावात्तदनुकूलतयैव प्रमाणार्हत्वाच्चेति। परन्तु सन्ति तानि परतः प्रमाणयोग्यान्येवेति इत्युक्तम्। तदपरे न क्षमन्ते—

तथाच 'महामोहविद्रावणे प्रथमः प्रबोधः—

यत्तु—कोऽयं वेदो नाम? मन्त्रभाग (१) संहितेत्याह। किंच "मन्त्रब्राह्मणयोर्वेदनामधेय" मिति कात्यायनोक्ते ब्राह्मणभागस्यापि वेदसञ्ज्ञा कुतो न स्वीक्रियत इति। मैवं वाच्यम्। न ब्राह्मणानां वेदसञ्ज्ञा भवितुमर्हति; कुतः? पुराणेतिहाससञ्ज्ञकत्वात् १ वेदव्याख्यानात् २ ऋषिभिरुक्तत्वात् ३ अनीश्वरोक्तत्वात् ४ कात्यायनभिन्नैः ऋषिभिर्वेदसञ्ज्ञायामस्वीकृतत्वात् ५ मनुष्यबुद्धिरचितत्वाच्च ६ इति दयानन्दसरस्वती स्वीयऋग्वेदादिप्रस्तावे वदति, तदत्यन्तं स्थवीयः;

ब्राह्मणानां वेदसञ्ज्ञकत्वाभावे हेतुत्वेनोपन्यस्तस्य पुराणेतिहासञ्ज्ञकत्वस्य ब्राह्मणानां वेदसञ्ज्ञकत्वाभावेऽहेतुत्वात्। नह्येकस्य वस्तुनो नानानामधेयकत्वमदृष्टचरम्। एकैव हि कम्बुग्रीवादिमती व्यक्तिर्घटः कलशो द्रव्यमित्येवं व्यवह्रियते इत्यस्मिन् प्रामाणिकानामनुभव इतीतिहासादिसञ्ज्ञकत्वेन वेदसञ्ज्ञकत्वाभावसाधनमाशामोदकायितम्। यदिच पुराणेतिहाससञ्ज्ञकत्वस्य वेदसञ्ज्ञकत्वस्य च पारस्परिकविरोधमुत्प्रेक्ष्य ब्राह्मणानां वेदसञ्ज्ञकत्वाभावे पुराणेतिहाससञ्ज्ञकत्वं हेतूकरोति, तदा व्याचष्टां कत्तानयोः

सञ्ज्ञयोर्विरोधो निरीक्षितो भवता ? यदि चेतिहाससञ्ज्ञकेषु भारतादिषु पुराणसञ्ज्ञकेषु पाद्मादिषु च वेदव्यवहारविरहात् पुराणेतिहाससञ्ज्ञकत्वं भवति वेदसञ्ज्ञकत्वविरोधीति ब्रूषे, तर्हि पाद्मभारतादीनाम्पुराणेतिहाससञ्ज्ञकत्वममन्वानो भवान् कथमिदमुद्भावयितुं पारयेत्। अथाचक्षीत—पुराणेतिहाससञ्ज्ञकानामैतरेयादिब्राह्मणानां न वेदसञ्ज्ञकत्वमिति तत्रैवोपलब्धो विरोध इति; तदप्यपेशलम्; ब्राह्मणानां वेदसञ्ज्ञकत्वाभावं सिषाधयिषुर्भवान् कथमिव तेषामसिद्धं पुराणेतिहाससञ्ज्ञकत्वं हेतुत्वेनोपन्यस्येत्। यदिच पुरातनार्थप्रतिपादकत्वादैतिहासिकार्थप्रतिपादकत्वाच्च सिद्धमेव ब्राह्मणानां पुराणेतिहाससञ्ज्ञकत्वमित्येवं ब्रूयात्, तदा एतादृशपुराणेतिहाससञ्ज्ञकत्वं न वेदसञ्ज्ञकत्वासमानाधिकरणमिति नैतस्य ब्राह्मणानां वेदसञ्ज्ञाविरहसाधकत्वसंभवः, तत्र तस्यौदासीन्यात्, न हि पुरातनार्थप्रतिपादकत्वमात्रं वेदसञ्ज्ञामपाकर्त्तुमर्हति, वेदानां त्रैकालिकार्थप्रतिपादकत्वस्य (१) सर्वास्तिकतन्त्रसिद्धत्वात्। किंच त्रैकालिकमर्थमभिदधतो वेदाः पुरातनार्थमपि प्रतिपादयन्तीति तेषु निरुक्तयौगिकपुराणेतिहासत्वसत्त्वेन निरुक्तोऽयं हेतुर्वेदानामपि अवेदत्वं साधयेत्, तस्मादयं पुराणेतिहाससञ्ज्ञकत्वादितिहेत्वाभासः। किंच ब्राह्मणव्यतिरिक्तपुराणेतिहासग्रन्थसद्भावं वात्स्यायनो महर्षि गौतमीयेषु सूत्रेषु भाष्यमाभाषमाणोऽभ्युपागमत्। तथाहि—४ अध्याये १ आह्निके। ६२ 'समारोपणादात्मन्यप्रतिषेधः' इति सूत्रे भाष्ये—

"प्राजापत्यामिष्टिं निरूप्य तस्यां सार्ववेदसं हुत्वाऽऽत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेदिति श्रूयते। तेन विजानीमः प्रजावित्तलोकैषणायाश्च व्युत्थाय भिक्षाचर्यं चरन्तीति, एषणाभ्यश्च

व्युत्थितस्य पात्रचयान्तानि कर्माणि नोपपद्यन्ते इति नाविशेषेण कर्तुः प्रयोजकत्वं भवतीति, चातुराश्रम्यविधानाच्चेतिहासपुराणधर्मशास्त्रेष्वैकाश्रम्यानुपपत्तिः। तदप्रमाणमिति चेन्न; प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते 'ते वा खल्वेते अथर्वाङ्गिरस एतदितिहासपुराणस्य प्रामाण्यमभ्यवदन्,' इतिहासपुराणं पञ्चमं वेदानां वेद इति' तस्मादयुक्तमेतदप्रामाण्यमिति, अप्रामाण्ये च धर्मशास्त्रस्य प्राणभृतां व्यवहारलोपाल्लोकोच्छेदप्रसङ्गः द्रष्टृप्रवक्तृसामान्याच्चाप्रामाण्यानुपपत्तिः, य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च, ते खल्वितिहासपुराणस्य धर्मशास्त्रस्य चेति विषयव्यवस्थानाच्च यथाविषयं प्रामाण्यम्। अन्यो मन्त्रब्राह्मणस्य विषयोऽन्यश्चेतिहासपुराणधर्मशास्त्राणामिति यज्ञो मन्त्रब्राह्मणस्य लोकवृत्तमितिहासपुराणस्य, लोकव्यवहारव्यवस्थापनं धर्मशास्त्रस्य विषयः। तत्रैकेन न सर्वं व्यवस्थाप्यते इति यथाविषयमेतानि प्रमाणानि इन्द्रियादिवदिति'' इत्यभिदधे वात्स्यायनः। स्पष्टमिदमेतेन यद् ब्राह्मणभागव्यतिरिक्तः कश्चित् पुराणेतिहाससञ्ज्ञको लोकवृत्तरूपासाधारणविषयप्रतिपादको वाक्यकलापो यज्ञरूपप्रतिनियतासाधारणविषयप्रतिपादकान्मन्त्रब्राह्मणभागात्पृथगवस्थितो यस्य प्रामाण्यबीजं मन्त्रब्राह्मणद्रष्टृप्रवक्तृद्रष्टृप्रवक्तृकत्व (१) रूपं साधारणमिति। यदि ब्राह्मणानामितिहासपुराणपदार्थतां ऋषिरन्वमंस्यत, तदा कथमिव पुराणानां प्रामाण्यं व्यवतिष्ठापयिषुर्महर्षिस्तदप्रमाणमित्याशङ्कमानः "प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते" इति पूर्वोक्तं विपुलं व्यधास्यत् प्रायसिष्यच्च। ब्राह्मणानां पुराणपदार्थत्वे तथाभिधानमसङ्गतं स्यात्। नहि स्वमेव स्वप्रामाण्यसाधकमिति कश्चिदप्यनुन्मत्त उत्प्रेक्षेतापि।

तस्माद् "ब्राह्मणानि न वेदाः पुराणेतिहाससञ्ज्ञकत्वात्" इत्यनादिपापवासनादूषिताशेषशेमुषीकस्य प्रतारकस्याभिधानं पूतिकूष्माण्डायितम्।

"वेदव्याख्यानादि" त्यपरो महाप्रलापो भिक्षोः।

अत्र, ब्राह्मणानि न वेदाः, वेदव्याख्यानरूपत्वादिति न्यायाकारः। अयं च हेतुरनैकान्तिकः। वेदव्याख्यानं नाम वेदपदव्यपदेश्यवाक्यकलापस्य पदान्तरेणार्थकथनम्। तच्चेदं "प्रजापते न त्वदेतान्यन्यो विश्वारूपाणि परिता बभूव। यत्कामास्ते जुहुम स्तन्नो अस्तु वयꣳ स्याम पतयो रयीणा" मिति याजुषो मन्त्रः अ० २३ मं० ६५।

प्रजापते न त्वदेतान्यन्यो विश्वाजातानि परिता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳस्याम पतयो रयीणा,, मित्यृचः।

"नवो नवो भवषि जायमानोऽह्नाङ्केतुरुषसामेष्यग्रम्। भागन्देवेभ्यो विदधास्यायन्प्रचन्द्रस्तिरते दीर्घमायु,, रित्याथर्वणः।

"नवो नवो भवति जायमानोऽह्नाङ्केतुरुषसामेत्यग्रम्। भागन्देवेभ्यो विदधात्यायान्प्रचन्द्रमास्तिरते दीर्घमायु,, रित्यृचः।

एष्वाद्ययोर्मन्त्रयोर्विश्वारूपाणीतिपदघटितादाद्यमन्त्राद्विश्वाजातानीतिपदघटितस्य द्वितीयमन्त्रस्य, चरमयोश्च भवसि जायमान इति उषसामेत्यग्रमिति विदधात्यायन्निति च विलक्षणपदघटितादाद्यमन्त्राच्चतुर्थस्य मन्त्रस्य, भवति जायमान इति उषसामेष्यग्रमिति विदधास्यायन्निति च विलक्षणपदघटितत्वेन भिन्नतया वेदपदानाम्पदान्तरेणार्थकथनरूपस्य वेदव्याख्यानत्वस्य दुरपह्नवतया तदन्तर्भावेणैवानैकान्तिकम्। अत्र च 'वेदव्याख्यानरूपत्वात्' इति हेतुस्सो ( १ ) पाधिकोऽपि। तथाहि—यत्र यत्र वेदत्वा-

भावो महाभारतादौ, तत्र तत् स्मर्यमाणकर्तृकत्वमिति साध्यव्या-पकत्वम् । वेदव्याख्यानरूपत्वन्तु पूर्वोक्तेष्वमीषु मन्त्रेष्वपि तत् च न स्मर्यमाणकर्तृकत्वमिति साधनाव्यापकत्वम् । तस्मात्स्मर्य-माणकर्तृकत्वं भवत्युपाधिः । नचास्तूपाधिरिति शङ्क्यम् ; स्मर्य-माणकर्तृकत्वरूपोपाध्यभावेन पक्षत्वेनाभिमतेषु ब्राह्मणेषु वेदत्व-रूपस्य साध्याभावस्यानुमानेन "ब्राम्हणानि न वेदा,, इत्यनुमितेः प्रतिरोधात् , इत्युपरम्यते न्यायप्रयोगानभिज्ञस्य पदवाक्यपरिपा-ट्यनभिज्ञस्याधिकखण्डनात् ।

"ऋषिभिरुक्तत्वादि" ति कपटभिक्षोस्तृतीयो महामोहः ।

अत्र ब्राह्मणानि न वेदा ऋषिभिरुक्तत्वादिति न्यायाकारः । अत्रायमसाधको हेतुः, ऋष्युक्तत्वस्य ऋगादिसाधारणत्वात् । ऋ-चोऽध्यपाठिषुरेवर्षयः, न तावता तेषां वेदत्वव्याहतिः । यदि ऋष्यु-क्तत्वपदेन ऋषिप्रणीतत्वमभिप्रैषि, तदा ब्राह्मणान्यपि न ऋषि-प्रणीतानीति 'ऋषिप्रणीतत्वात् इति स्वरूपासिद्धो हेतुः । यदि च भारद्वाजाङ्गिरोवशिष्ठपुलहयाज्ञवल्क्यजनकादिसंवाददर्शनादृषि-प्रणीतत्वभ्रान्तिस्ते ब्राह्मणग्रन्थेषु, तदाऽनवगतवेदतत्त्वमर्मोऽनभिलक्षि-तवेदसम्प्रदायोऽकृतगुरुकुलवासोऽनासादितब्रह्मसम्पत्तिर्भवानित्ये-वास्माकं निश्चयः, यतो वेदानामिदमेव वेदत्वं यद् इमेऽतीता-नागतवर्तमानसन्निकृष्टविप्रकृष्टसर्ववस्तुसाधारण्येन सर्वं विदन्ति वेदयन्ति च सर्वपुरुषान् । अतएव "लौकिकानामर्थपूर्वकत्वा" दित्याह स्म कात्यायनः प्रातिशाख्ये, लौकिकानां "गामभ्याज शुक्लां दण्डेने" त्यादिवाक्यानां प्रयोगोऽर्थपूर्वकः, प्रयोक्तारो हि तं तं प्रतिपिपादयिषितमर्थमुपलभमाना अनुसन्दधतो वा प्रयुञ्जते लौकिकानि वाक्यानि, वैदिकानां नित्यानां वाक्यानां नार्थपूर्वकः

प्रयोगो घटते, वैदिकवाक्यार्थानां सृष्टिप्रलयादीनामनित्यत्वात्। ततश्च वस्तुसद्भावनैरपेक्ष्येण लोकवृत्तमवगमयन्तो वेदा यदि याज्ञवल्क्यजनकादिसंवादमभिदध्युस्ततस्ते का क्षतिः, इतरथा तु "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्" इत्यादिसंहिताभागस्याप्यवेदत्वापत्तिः। यथा हि जनकादिसंवादस्य ब्राह्मणेषु दर्शनाज्जनकादिकालानन्तरकालवृत्त्युत्युत्पत्तिकत्वं ब्राह्मणेषूत्प्रेक्षसे, तथा सूर्याचन्द्रमसाविति श्रुतेरपि सूर्याचन्द्रमसोः सृष्ट्यभिधायकत्वेन तदुत्पत्तिकालानन्तरकालोत्पत्तिकत्वेनानित्यत्वं स्यादिति वृद्धिमिच्छतस्ते मूलहानिरिति महदनिष्टमेतत्प्रसज्येत। तस्मात्सूर्याचन्द्रमसोः सृष्ट्यभिधायकोऽपि वेदो न तदुत्पत्तिकालानन्तरकालोत्पत्तिको वेदवाक्यानामर्थपूर्वकत्वविरहादित्यनायत्याऽभिदधानो भवानकस्मादकस्मादेव ब्राह्मणेषु सन्नह्यति। ततश्च भारद्वाजाङ्गिरोनामदर्शनमात्रं नावेदत्वसाधकमिति शम्।

"अनीश्वरोक्तत्वादि" ति चतुर्थी महामूर्छा।

अत्रानीश्वरोक्तत्वमीश्वरभिन्नोक्तत्वम्, तच्च ऋष्युक्तत्वसाधारणमिति पूर्वोक्तहेतोरनतिशयात्पुनरुक्तत्वरूपनिग्रहस्थानापन्नो भवान् इत्युपरम्यतेऽस्माभिः शम्।

"कात्यायनभिन्नैर्ऋषिभिर्वेदसञ्ज्ञायामस्वीकृतत्वात्"।

इति तु देवानांप्रियस्य साहसोक्तिः। "मन्त्रब्राह्मणयोर्वेदनामधेय" मित्यापस्तम्बेन यज्ञपरिभाषासूत्रेषु ब्राह्मणानां वेदत्वस्य सुस्पष्टमुक्तत्वात्। किंच सर्ववैदिकशिरोधार्य्ये पूर्वमीमांसादर्शने द्वितीयेऽध्याये प्रथमपादे द्वात्रिंशत्तमे सूत्रे मन्त्रं लिलक्षयिषुराचार्यः प्राह स्म "तच्चोदकेषु मन्त्राख्या" 'शेषे ब्राह्मणशब्द' इति च। अत्र हि 'शेषे ब्राह्मणशब्द' इति द्वितीयसूत्रोक्त्या शेषे

मन्त्रभागादवशिष्टे वेदैकदेशे ब्राह्मणशब्द इत्यर्थाद्वेदस्य मन्त्रब्राह्मणात्मकप्रभेदद्वयवत्त्वसिद्धिः। यद्याचार्यो वेदैकभागत्वं नावागमिष्यत्कथमसौ व्यधास्यत 'शेषे ब्राह्मणशब्द' इति, नहि महाभारतस्य रामायणं शेष इत्यनुन्मत्त आचक्षीत। तदवश्यं शेषशब्दमहिम्नाऽऽचार्यस्य ब्राह्मणे वेदभागत्वमभिमतमित्यवगम्यते। अत एव ब्राह्मणनिर्वचनाधिकरणे,'अथ किं लक्षणं ब्राह्मणम्?मन्त्राश्च ब्राह्मणं च वेदः, तत्र मन्त्रलक्षण उक्ते परिशेषसिद्धत्वाद्ब्राह्मणलक्षणमवचनीयम्। मन्त्रलक्षणवचनेनैव सिद्धं यस्यैतल्लक्षणं न संभवति तद्ब्राह्मणम्, इति परिशेषसिद्धं ब्राह्मणम्," इति व्याचख्युराचार्याः शबरस्वामिनः। अत एव भगवान् जैमिनिर्निरुक्तसूत्रद्वयेन मन्त्रब्राह्मणात्मकं कृत्स्नं वेदं लक्षयित्वा तदेकदेशभूता ऋचः, "तेषामृग्यत्रार्थवशेन पादव्यवस्था" इति सूत्रेण पञ्चत्रिंशत्तमेन ऋचः "गीतिषु सामाख्या" इति षट्त्रिंशत्तमेन सामानि "शेषे यजुः शब्दः" इति सप्तत्रिंशत्तमेन यजूंषि लक्षयामास, ततश्च यजुषोऽप्येकदेशं "निगदो वा चतुर्थं स्याद्धर्मविशेषात्" इत्यष्टत्रिंशत्तमेन यजुर्विशेषं निगदमलक्षयत्। यद्ययमाचार्यो ब्राह्मणानां वेदपदार्थतां नाभिमन्येत; ततः 'तच्चोदकेषु मन्त्राख्या' इत्येतन्मन्त्रलक्षणानन्तरमेव ऋगादींल्लक्षयेत्। लक्षयति चायम्मन्त्रान्तरं "शेषे ब्राह्मणशब्द' इति ब्राह्मणमेव, ततोऽस्यावश्यमेव ब्राह्मणानां वेदपदार्थत्वमभिमतमिति प्रेक्षावता जैमिनेरभिप्रायो वक्तव्यः। न केवलम्महर्षिणा जैमिनिनैव ब्राह्मणानां वेदत्वमुच्यते। परन्तु धर्माधर्मयोः 'स्वर्गकामो यजेत' 'न कलञ्जं भक्षये' दित्यादिविधिनिषेधकल्पनीयतया आवश्यकं तत् विधिनिषेधवाक्ययोः

प्रामाण्यम्, तत्प्रामाण्यं च वक्तुर्यथार्थवाक्यार्थज्ञानलक्षणगुणपूर्वकमेव वक्तव्यम्। तार्किकैः स्वतःप्रामाण्यस्यानङ्गीकारात्।

अतः प्रथमं प्रामाण्यप्रयोजकगुणसाधनमुपक्रममाणः कणादाचार्यः प्राह स्म षष्ठाध्यायादावेव "बुद्धिपूर्वा वाक्यकृतिर्वेदे" इति। अस्यायमर्थः—वाक्यकृतिर्वाक्यरचना बुद्धिपूर्वा नाम वक्तृयथार्थवाक्यार्थज्ञानपूर्वा, वाक्यरचनात्वात् काञ्च्यां त्रिभुवनतिलको भूपतिरित्यस्मदीयवाक्यरचनावत्। ततश्चेह वक्तृयथार्थवाक्यार्थज्ञानपूर्वकत्वरूपसाध्यसिद्धिः स्वान्यथानुपपत्त्या वक्तुर्यथार्थज्ञानमनुमापयति। नचास्मदादिज्ञानपूर्वकत्वेनान्यथासिद्धिः शङ्क्या, 'स्वर्गकामो यजेत, इत्यादाविष्टसाधनतायोः कार्यतायाश्चास्मदादिबुद्ध्यगोचरत्वेन स्वतन्त्रपुरुषप्रवर्तकत्वस्य सिद्धेः। स चायं स्वतन्त्रो वेदपुरुष इति संहितासु भ्रमप्रमादादिदोषशून्यस्वतन्त्रपुरुषप्रणीतत्वसिद्धिः॥

इदानीं प्रकारान्तरेण वेदवाक्यानां बुद्धिपूर्वकत्वमाचष्टे। "ब्राह्मणे सञ्ज्ञाकर्मसिद्धिर्लिङ्गम्" ब्राह्मणे वेदभागे सञ्ज्ञाकर्म नामकरणं तद्व्युत्पादकस्य बुद्धिमाक्षिपति,यथा लोके चैत्रमैत्रादिनामकरणम्। अस्ति च नामकरणं ब्राह्मणे"उद्भिदा यजेत""बलभिदा यजेत" "अभिजिता यजेत" "विश्वजिता यजेत" इति। अत्र हि उद्भिदादिनामानि स्वतन्त्रस्य कस्यचित् व्यवहर्तु बुद्धिमाक्षिपन्ति। अलौकिकानामर्थानामस्मदादिबुद्ध्यगोचरतयाऽस्मदादिबाधादपरमनुमापयन्ति। स चायमपरोऽनुमित्सितो वेदपुरुषो भगवानीश्वर इति। "बुद्धिपूर्वो ददाति"इति तृतीयं काणादं सूत्रम्। अस्यार्थः—स्वर्गकामो गां दद्या' दित्यादौ यद्दानप्रतिपादनं तदिदं बोधयितुर्दानधर्मिकेष्टसाधनताज्ञानजन्यम्। तच्चेष्टसाध-

नतादृशं निष्कर्म्मप्रवृत्तिजनकं नार्वाग्दृशामस्मदादीनामपरोक्षा-त्मकमिति तादृशज्ञानाश्रयस्तत्रापि सिध्यति। 'तथा प्रतिग्रह' इति चतुर्थपादमर्षसूत्रस्याप्येवमेवार्थोऽवगन्तव्यः। नचेह बुद्धिपूर्वा वा-क्यकृतिर्वेद" इति प्रथमे वेदपदेन, द्वितीयसूत्रे च ब्राह्मणपदेन निर्देशात्कथमनयोर्ब्राह्मणस्य वेदपदार्थत्वसाधकत्वमिति शङ्क्यम्। अत्र हि षष्ठेऽध्याये संसारमूलकारणभूतौ धर्माधर्मौ परीक्षिष्य-माणौ तौ च वेदैकवेद्यौ। वेदवाक्यानां च कणादमते आप्तोक्त-त्वेन प्रामाण्यम्, आप्तश्च यथार्थप्रकृतवाक्यार्थज्ञानाश्रयोऽतः प्रकृ-तवाक्यार्थविषयकयथार्थज्ञानात्मकं वेदप्रामाण्योपोद्बलकमेव प्रकृते सिषाधयिषितम्। तच्च मन्त्रब्राह्मणात्मककृत्स्नवेदसाधारणमिति प्रथमसूत्रेण तत्साधयित्वा द्वितीयेन सूत्रेण सञ्ज्ञाबहुले ब्राह्मण-भागे सञ्ज्ञाकर्मणापि तत्साधितमिति वेदैकदेशे ब्राह्मणे सञ्ज्ञाकर-णात्मकवेदप्रामाण्यप्रयोजकवक्तृयथार्थवाक्यार्थज्ञानात्मकगुणपूर्वक-त्वप्रदिदर्शयिषया प्रवर्त्तमानेन सूत्रकृता स्फुटं ब्राह्मणे वेदत्वबो-धनात्। न हि भारते पुरुषार्थचतुष्टयं न्यरूपीत्यभिधाय मोक्षधर्मे मोक्षो निरूपित इत्यभिधाने मोक्षधर्मो महाभारतप्रकरणतां ज-हातीति, वक्ता च तस्य तदङ्गतां नाभिप्रैतीति कश्चिद्वक्तुमुत्सहे-दपि प्रेक्षावान्। नह्यास्तिकैर्वेदमपहायापरस्य दृष्टानुमितश्रुत्यमूल-कशब्दस्य धर्माधर्मयोः प्रामाण्यमङ्गीक्रियते, यस्य प्रामाण्यप्र-त्याशया ब्राह्मणानां सञ्ज्ञाकरणात्मकलिङ्गेन वक्तृयथार्थवाक्यार्थज्ञा-नात्मकगुणसाधनायायमुद्यमो महर्षेर्वक्तव्यः स्यात्। तस्मात्का-त्यायनभिन्नैर्ऋषिभिर्वेदसञ्ज्ञायामस्वीकृतत्वादितिप्रलपन्सतां शो-चनीयो राज्ञां दण्डनीयो लोकानां चोपहसनीय एव। किंच "का-त्यायनभिन्नैर्ऋषिभिर्वेदसञ्ज्ञायामनुक्तत्वा" दिति वदताऽस्मो-

प्रमा० (१२७) अपि वा परिसङ्ख्या स्यादनवदानीयशब्दत्वात् । १० ॥ ७ ॥ सू० ७ ॥

प्रमा० (१२८) विकृतौ प्राकृतस्य विधेर्ग्रहणात्पुनः श्रुतिरनर्थिका स्यात् । १० । ७ । सू० २४ ।

प्रमा० (१२९) श्रुत्यानेर्थक्यमिति चेत् ॥ १० ॥ ७ ॥ सू० ५६ ॥

प्रमा० (१३०) यावत्श्रुतीति चेत् ॥ १० ॥ ७ ॥ ६२ ॥

प्रमा० (१३१) न प्रकृतावशब्दत्वात् ॥ १० ॥ ७ ॥ सू० ६३ ॥

प्रमा० (१३२) यथाश्रुतीति चेत् ॥ १० ॥ ७ ॥ सू० ७२ ॥

प्रमा० (१३३) न तुल्यहेतुत्वादुभयं शब्दलक्षणम् । १० । ८ सू० ३ ।

प्रमा० (१३४) न शब्दपूर्वत्वात् ॥ १० ॥ ८ ॥ सू० १३ ॥

प्रमा० (१३५) अक्रतुयुक्तानां वा धर्मः स्यात् क्रतोः प्रत्यक्षशिष्टत्वात् ॥ १० ॥ ८ ॥ सू० ॥ १३ ॥

अत्र प्रत्यक्षशिष्टत्वादित्यस्य विवरणं पूर्ववद् बोध्यम् ।

प्रमा० (१३६) तत्संस्कारश्रुतेश्च ॥ १० ॥ ८ ॥ सू० २० ॥

प्रमा० (१३७) उपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रुतित्वाद्यथाकामी प्रतीयेत ॥ १० ॥ ८ ॥ सू० ४७ ॥

प्रमा० (१३८) एकशब्द्यादिति चेत् ॥ ११ ॥ १ ॥ सू० १४ ॥

प्रमा० (१३९) विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवत्श्रुतभूताभिसंयोगादर्थेन युगपत्प्राप्तेर्यथाक्रमं विनीतवत्तस्मात्सवप्रयोगे प्रवृत्तिः स्यात् ॥ १० ॥ १ सू० १६ ॥

प्रमा० (१४०) धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् ॥ ११ ॥ १ ॥ सू० २८ ॥

प्रमा० (१४१) तुल्यानां तु यौगपद्यमेकशब्दोपदेशात्स्याद्विशेषाग्रहणात् । ११ । १ सू० ५४ ।

प्रमा० (१४२) विधेस्त्वितरार्थत्वात्सकृदिज्याश्रुतिव्यतिक्रमः स्यात् ॥११॥१॥ सू० ६२॥

प्रमा० (१४३) एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात् ॥ ११॥२॥ सू० १॥

प्रमा० (१४४) आम्नायवचनं तद्वत् ॥ ११॥२॥ सू० ४१॥

प्रमा० (१४५) पर्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः श्रुतिसंङ्कल्पादारण्यवत्, तस्माद् ब्रह्मसाम्यचोदनापृथक्त्वं स्यात् ॥ ११॥२॥ सू० ४६॥

प्रमा० (१४६) न श्रुतिविप्रतिषेधात् ॥ ११॥३॥ सू० ५१॥

प्रमा० (१४७) भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे स्यात्तेषां प्रधान-शब्दत्वात् ॥ ११॥४॥ सू० २२॥

प्रमा० (१४८) अपि वा प्रतिपत्तित्वात्तन्त्रं स्यात्स्वत्वस्याश्रुतिभूतत्वात् ॥ ११॥४ सू० ३३॥

प्रमा० (१४९) तन्त्रिसमवाये चोदनातःसमानानामैकतन्त्र्यमतुल्येषु तु भेदो विधिक्रमतादर्थ्यात्तादर्थ्ये श्रुतिकालनिर्देशात् ॥ १२॥१ सू० १॥

प्रमा० (१५०) निर्देशाद्वा वैदिकानां स्यात् ॥ १२॥२॥सू० ३०॥

प्रमा० (१५१) निशि यज्ञे प्रकृतस्याप्रवृत्तिः स्यात्प्रत्यक्षशिष्टत्वात् ॥ १२॥२॥ सू० १४॥ अत्र प्रत्यक्षशिष्टत्वविवरणं पूर्ववत् ।

प्रमा० (१५२) सङ्ख्यासु तु विकल्पः स्याच्छ्रुतिविप्रतिषेधात् ॥ १२॥४॥ सू० ६॥

प्रमा० (१५३) आम्नायवचनाच्च ॥ १२॥४॥ सू० ३०॥ इति ॥

प्रमा० (१५४) किं च पूर्वमीमांसादर्शने 'अथातो धर्मजि-

ज्ञासा' इत्यारभ्य 'अन्वाहार्य्ये च दर्शनात्' इत्यन्ते जैमिनीये द्वादशस्वध्यायेषु षष्टिः पादाः त्रयोदशाधिकानि नवशतान्यधिकरणानि। तानि च प्रायो ब्राह्मणवाक्यविषयकाण्येव,अल्पीयांसि च मन्त्रवाक्यविषयकाणि। नहि विहितकर्मानुवादकानां मन्त्रवाक्यानामर्थेषु सन्देहस्य प्राय उत्थानावसरो, येन तन्निराकरणाय तेष्वपि विचारावसरः प्रायिकः स्यात्; मन्त्रानुस्मरणीयार्थविधायकब्राह्मणवाक्यार्थविचारजन्यनिर्णयेनैव मन्त्रार्थेषु सन्देहस्य प्रायोऽनुत्थानात्। मीमांसा च वेदवाक्यार्थविचार एव। एवं च ब्राह्मणभागस्य वेदत्वाभावे तद्वाक्येषु कस्यापि पूर्वमीमांसाधिकरणस्य विषयत्वं न स्यात्। न हि पौरुषेयमन्वादिस्मृतिवाक्यार्थोऽपि मीमांसादर्शने विचारितो न वा तद्विचारायैतद्दर्शनमिति प्रायः शतशोऽधिकरणानि पूर्वोत्तरमीमांसयोर्ब्राह्मणभागस्य वेदत्वे प्रमाणेभ्यः पूर्वोक्तेभ्यो वक्ष्यमाणेभ्यश्चान्यानि प्रमाणानि। विस्तरभयादेव तु नेह तेषां प्रातिस्विकोल्लेखः क्रियते। नच मीमांसादर्शनसूत्राणां प्रामाण्ये भूमिकाधारी विप्रतिपत्तुं शक्नोति, भाष्याभासभूमिकायाम् 'वेदविषयविचारविषय' इत्युपक्रमे मीमांसादर्शनसूत्रयोः 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात् ( अ०४ पा० ३ सू० पा० ३ सू० १ ) द्रव्याणान्तु क्रियार्थानां संस्कारः क्रतुधर्मः स्यात् ( अ० ४ पा० ३ सू० ८ ) इत्यनयोः स्वयमेव प्रमाणतया तेनोपन्यस्तत्वात्। एवमनेकत्र भाष्याभासभूमिकायामेव तेन पूर्वमीमांसादर्शनसूत्राणि प्रमाणतयोपन्यस्तानीति कृतं तदुपन्यासविस्तरेण। एवमुत्तरमीमांसादर्शनेऽपि बोध्यम्। उक्तयोश्च मीमांसयोर्ब्राह्मणवाक्यावलम्बिनां सर्वेषामधिकरणानां वर्णकानां च प्रत्येकमिहोद्धरणे च कियदूनं दर्शनद्वयमेवोद्धृतं स्यादिति ग्रन्थमहागौरवं

स्यादिति सम्भवतः सार्द्धान्यष्टौ शतानि। तान्यधिकरणानि ब्राह्मणभागस्य वेदत्वे प्रमाणानीत्युक्त्वैव विरम्यते।

तदेवम् प्रबोधोक्तान्यष्टादश। अत्र परिगणितानि चतुःपञ्चाशं शतम्, प्रमाणस्थेषु त्रिषु वाक्येषु चरमे द्वे—अन्तिमाङ्कसूचितानि सार्धान्यष्टौ शतानि इति ब्राह्मणभागस्य वेदत्वे चतुर्विंशं सहस्रं प्रमाणानि।

ब्राह्मणभागस्य वेदत्वे सिद्धे 'सर्वेषां मन्त्राणां साक्षादेवेश्वरस्तुतिपरत्वम्'। 'भागवतादिपुराणानां न च प्रामाण्यम्,। 'यज्ञाश्च होमविशेषरूपा एव, नतु ब्राह्मणभागोक्तप्रकाराः' 'धर्मोऽपि सत्यादिसामान्यधर्मभिन्नो वर्णाश्रमादिविशेषानुबन्धी प्रायो न प्रामाणिकः' इत्यादीनि क्रियालाघवप्रदर्शनमूलकपरमालसलोकप्रोचनामात्रैकफलानि सर्वानर्थसमर्थानि भूमिकाविधायिनः स्वैरविहारस्थानानि श्रुतिस्मृतीतिहासपुराणसदाचारैः पञ्चाग्निभिः प्रमाणतर्कगर्भतोत्पर्यज्वालाजालजटिलैः प्रज्वलय्य भस्मभूयमनुभावितानि विभावनीयानि। ग्रन्थतो वेदानामियत्ता च भूमिकाविधायिमतेन सप्ताष्टमन्त्रसंहितामात्रविश्रान्ता वेददुर्गसज्जनस्यान्ते वेदस्य ग्रन्थतो महत्त्वोपपादनेन भस्मसाद्भूतेति तु तत्रैवावलोकनीयम्।

तस्मात्—

समुन्नमन्मानसहस्रमेया करस्फुरत्कङ्कणकान्तिकल्पा।
मिथ्या कथं ब्राह्मणवेदतेयं स्यात्स्वामिदुष्कल्पनजल्पनाभ्याम्॥ १॥

तदिदं सिद्धम्—यत् ब्राह्मणभागस्यापि वेदत्वमिति। यत्र मन्त्रव्याख्यानं ब्राह्मणेन क्रियते, तत्र मन्त्रार्थो ब्राह्मणानुसार्येव ग्रहीतव्यः, नत्वापातप्रतिपन्नार्थ इति यास्कादिभिर्वृत्रादिशब्दानामनेका-

र्थप्रतिपादनेपि यथाविनियोगमेव मन्त्रार्थविवरणं युक्तमिति च। एतेन—कुत्र कुत्रचन सायणभाष्यादौ निरुक्तादिविरोधोऽपि परिहृतो भवति। नह्यग्निशब्दस्य इन्द्रोपस्थानाङ्गमन्त्रषट्कस्याग्निप्रकाशकत्वमिति युक्तम्, अग्निशब्देनेन्द्रस्तुतेरसंभवात्, किंतु गौण्या लक्षणया वेन्द्रवाचकत्वमेव युक्तम्। व्यक्तं चैतन्मीमांसाग्रन्थेषु सर्वत्र। असति विनियोगे तु न गौणार्थस्वीकरणं वयमप्यूरीकुर्महे। व्यवस्थापितं मीमांसातृतीयाध्याये मन्त्राणां न गौणार्थे विनियोग इति। एवं सति हीदानीन्तनैर्मन्त्राणां सायणादिभाष्यविरुद्धं विवरणमनवलम्बमेव क्रियते।

एतेन—त्रैवर्णिकमात्राधिकारिकत्वमपि वेदाध्ययनस्य—व्याख्यातम्। अष्टवर्षं ब्राह्मणमुपनयीतेत्यादौ तु ब्राह्मणादेरेवोपनेयत्वं वेदाधिकारिता च गम्यते। तदिदं सिद्धम्—न युक्तिगम्यत्वं धर्माधर्मयोः, किन्तु चोदनामात्रगम्यत्वम्। चोदनापदवाच्यश्च वेदोऽनादिः, नाधुनातनानां कल्पनानुसारेण तस्य सादित्वादिकम्। तदर्थोपबृंहणार्थमितिहासपुराणयोः प्रवृत्तिः। स्मृत्यादयोपि तदर्थसंग्रहपरा एव। ततः स्मृतीनां श्रुतिमूलत्वेन, आचाराणां स्मृतिमूलत्वेन प्रामाण्यम्। निबन्धग्रन्थास्तु धर्मज्ञसमयपदवाच्याः सन्न्यायानुगृहीता एव प्रमाणम्, नेतरे इति। अत्र च युक्तित एव धर्मस्य तर्कागम्यत्वादिकं यथा विचारत्रय्यां वैदिकपद्धतौ निरूपितं केवलं तत्संग्रहेण प्रकृतं विषयं समापयामः। अत्रास्मत्सविधे समागतानां सर्वेषां प्रबन्धानां समालोचनमनेनैव समालोचनेन गतप्रायम्। तत्र चिन्तामणिराववैद्यमहोदयानां मतं धर्मस्य तर्कागम्यत्वमित्यत्रैव वर्तते, एवमन्येषामपि बहूनाम्।

अत्र ससन्तोषमिदं निवेदयामः—यत् चिन्तामणिराववैद्यम-

होदयाः इदानीमस्माभिः साकं समालोचनानन्तरं धर्मतत्त्वनिर्णये ऐतिहासिकपद्धतिर्न युक्ता, किन्तु मीमांसकसरणिरेव स्वीकरणीयेति सिद्धान्तमेव स्वीकुर्वन्तीति। तेषामस्माकं च सम्मता विषयास्त्विम एव।

(१) धर्मनिर्णयः शास्त्रवचनैरेव कर्त्तव्यः।

(२) शास्त्रं च श्रुतिः स्मृतिः पुराणं सदाचारश्च।

(३) श्रुतिस्तु मन्त्रब्राह्मणादिसमुदायः सर्वोऽपि प्रमाणम्, नतु आर्यसमाजीयादीनामिव मन्त्रमात्रं प्रमाणम्।

(४) स्मृतिश्च श्रौतधर्मगृह्यसूत्राणि, षडङ्गानि, तत्र स्मृतयः अष्टादशस्मृतयः, उपस्मृतिविषये तु निबन्धकारोदाहृतान्येव वचनानि प्रमाणानि।

(५) निबन्धाश्च शाबरभाष्यमारभ्य धर्मसिन्धुपर्यन्तम्। तैरुद्धृतान्येवोपपुराणादिवचनानि प्रमाणतया स्वीकर्त्तव्यानि।

(६) स्मृतीनां पुराणानां च नूतने विरचने कालाद्यनुसारेण परिषदोऽप्यनधिकारः, किमुत राजकीयसभ्यानाम्। अत्र वैद्यमहोदयानामपरं मतमिदमेव—यत् पुराणस्मृत्योर्विरोधे पुराणस्य दौर्बल्यमिति। अत्र पुराणपदेनोपाख्यानमात्रस्य तद्गतस्य ग्रहणे नास्माकमपि मतभेदः, तद्गतविधिभागविवक्षणे तु तेषामपि स्मृतित्वेनैव प्रामाण्यमिति तत्र विकल्प एवेत्यस्माकं मतमिति विशेषः। यत्तु कुमारिलपादैः पुराणानामपि स्मृतित्वेनैव प्रामाण्यमिति व्यवस्थापितम्, तदप्येतदभिप्रायमेव। सर्वथा तु केवलतर्कगम्यत्वं वैद्यमहोदयानामपि न संमतमिति महदिदमानन्दकारणम्।

[ उक्तार्थं विचारत्रय्युपष्टम्भः । ]

विचारत्रयीदर्शनानन्तरं तु नूतनं समालोचनं किमपि न कर्तव्यं भविष्यतीति तस्या एव वैदिकपद्धतितः कांश्चन अंशानत्र संगृह्य प्रकाशयामः। तद्यथा—

तर्केणाप्युपगच्छन्ति पशवः। शास्त्रेणाप्युपगच्छन्ति मनुष्याः। तत्र तर्को व्यामोह इत्येके शास्त्रनिष्ठाः। शास्त्रं व्यामोह इत्यपरे तर्कनिष्ठाः। शास्त्रं स्वतःप्रमाणं, सत्यनुकूलतर्के बलवदिति शास्त्रनिष्ठानां मतम्। तर्कः स्वतः प्रमाणम्, सत्यनुकूले शास्त्रे बलवानिति तर्कनिष्ठानां मतम्। सानुकूलतर्कं शास्त्रं बलवत् सानुकूलशास्त्रस्तर्को बलवानिति मतद्वयेऽपि बलवत्त्वहेतुरन्यतरयोः शेषशेषिभाव उभयोः संमतः। तत्र कः पक्षः श्रेयानिति संशये तर्कस्य प्रमाणान्तरसापेक्षत्वनिश्चयादन्याधीनं प्रामाण्यम्। शास्त्रस्य बलार्थं तर्कसापेक्षत्वेपि न प्रामाण्यार्थम्; अशास्त्रत्वापत्तेः। यतः प्रतिपुरुषं तर्का भिद्यन्ते, न शास्त्रम्; अन्यथा शास्त्रतर्कयोरेकत्वापत्तेः सर्वं वादग्रस्तं सर्वं निर्विवादमिति शिक्षामार्गोच्छेदप्रसङ्गः, सर्वेषामविशेषात्। कः पुरुषार्थस्तर्कपरायणस्य। शास्त्रपरायणस्य फलं तु यथाधिकारं मार्गारोहो यथाशास्त्रं फलावाप्तिश्च। तर्हि किं शास्त्रम्, तर्हि कस्तर्कः? शास्त्रं नाम शास्तुर्वचनं सानुग्रहम्। कः शास्ता। यः सृजति यत्, स तच्छास्त्यनुगृह्णाति च। कः सृजति? यो वक्त्यहं सृजामीति। को वक्ति? ईश्वरः। कुत्र वक्ति? शास्त्रे। तर्हि कुत्रेश्वरः? कुत्र नास्ति? न कुत्रचित्। इदं कस्मात्? अनुपलब्धेः। नेदं युक्तम्, तवासर्वज्ञत्वात्। सर्वज्ञस्येदं वचनं न कुत्रचिदिति। यदि त्वद्वृते प्रदेशे न स्यात्तह्यन्यत्र स्यात्। तर्हि शशशृङ्गमपि स्यात्कुत्रचित्। न स्यात् तद्ग्राहकप्रमाणानुपलब्धेः। यतः प्रमाणानि षडेव। नन्वेकमेव प्रत्यक्षं प्रमाणम्।

न तथा, एकमेव प्रमाणमिति वचनस्यापि तव प्रामाण्याङ्गीकारात्, तर्कप्रामाण्याङ्गीकाराच्च। तर्हि किमीशं प्रमाणम्? शास्त्रमिति ब्रूमः। तदेव तु मृग्यते चेत्, तदुपलभ्यते भरतखण्डे। किं तत्, वेदः सः। स न मन्यते इति चेत्, किं बालोसि। यन्मृग्यते, तदुपलभ्यते, परन्तु मन्यते इति बालवचनम्।

ननु यथात्र वेदस्तथान्यत्रापि खण्डे शास्त्रमुपलभ्यते। यद्युपलभ्यते, तत्त्वया मन्यते न वा? मन्यते चेत्तर्कदौर्बल्यम्। न चेद्बालत्वम्। तदेव मन्यते चेत्तत्रैव प्रतिपादित ईश्वरस्तव संमतश्च, तस्यैवेदं वचनं वेशो नामेति। तर्हि म्लेच्छशास्त्राणामपि प्रामाण्यापत्तिः इति चेच्छास्त्रत्वे प्रामाण्यं केन वार्येत? तर्हि म्लेच्छतन्त्रस्य शास्त्रत्वापत्तिः। कथं तत्? ईश्वरोक्तत्वाविशेषात्। अस्तु शास्त्रत्वम्, का हानिः? वैदिकम्लेच्छयोः समत्वापत्तिः, न; विषमत्वं च। शास्त्राधिकारिषु वैषम्यनियमात्। यतोऽधिकारिभेदाद्भिन्नं शास्त्रम्। यतो नैकस्मिन्कर्मणि ज्ञाने वा सर्वेप्यधिकारिणो दृश्यन्ते, मानुषेषु पशुषु वान्यत्र वा। तस्माद्यत्र शास्त्रच्युतानामधिकारस्तन्न शास्त्रम्। किमु वक्तव्यम् बलात्कारेण छद्मना वान्यशास्त्रनिष्ठां प्रच्याव्यान्यशास्त्रे प्रवेशनं यत्र प्रतिपादितं तन्न शास्त्रमिति। वेदस्तु न तथा। यतोऽनधिकारिकर्णगोचरोपि न कदाचिद्भवितुमर्हति। कुतस्तत्र बलात्कारश्छद्म वा। तस्माद्वेद एव शास्त्रम्, तदविरोधीनि महर्षिप्रणीतान्यपि शास्त्राणि। यो हि वेदः श्रोतृवक्त्रोर्धर्मं प्रशास्ति तदतिक्रमे वक्तुर्जिह्वाच्छेदः श्रोतुः त्रपुजतुरसाभ्यां कर्णपूरणम्। तस्मादत्र पैशुन्यापराधो निर्णीयते। तस्मात्सकलजनासाधारणत्वात् वस्तुनिर्णायकत्वाद्यथाधिकारं मार्गप्रवर्तकत्वादीशमूलत्वादतिगम्भीरत्वात्संप्रदायानारूढदुर्ज्ञेयत्वात्सकलतैर्थिकानां स्वस्वतन्त्र-

प्रामाण्ये दृष्टान्तीकरणाद्वेद एव शास्त्रमिति सिद्धम् । वदतु भवांस्तर्कम् । तर्को नाम संभावना, सकलसिद्धः । किमसौ प्रमाणम् , यदि प्रमाणान्तरसंवादः,तर्हि यत्संवादमभिलषसि तदेव प्रमाणम्, न तर्कः । आबाधमिति चेत्, बाधः सुस्थः । यतो बाधोऽपि तर्क्येत भयापगमस्य प्रमाणान्तरसाध्यत्वात् । तस्मात्तर्कः शेषः, शेषि शास्त्रमिति सिद्धम् । शास्त्रं स्वतःप्रमाणं, तन्मूलस्तर्कोऽपि शास्त्रम्, शास्त्रानुग्रहात् । तर्कः स्वतो न प्रमाणम्, तन्मूलं शास्त्रमपि तर्कः; प्रमाणान्तरसापेक्षत्वात् इति शास्त्रतर्कयोर्निष्कर्षः ।

ननु अस्त्वयं निष्कर्षस्तव गेहे, परंतु शास्त्रप्रणेतारमीशं न पश्याम इति चेत्, युक्तं तत् । यथा लोकसंस्काराभावे लौकिकं न पश्यति, तथा शास्त्रसंस्काराभावे शास्त्रीयम् । शास्त्रसंस्कारवन्तः पश्यन्ति शास्त्रीयं निर्विवादम् , यथाऽञ्जनसंस्कृतचक्षुषो भूगतनिधिम् । ईशो जीवो जगत् धर्मस्तत्त्वमिति पञ्च विषया यत्र निर्णीयन्ते तच्छास्त्रम् । अत्रैवान्येषामन्तर्भावः । ननु शास्त्रं भरतखण्डे एव दृश्यते, नान्यत्रेति चेदिदमेव निदर्शनं भरतखण्डो विवेकभूयिष्ठ इति । यतो विवेकिषु शास्त्रम्, तैरेव पाल्यते यतः । अविवेकिभिस्तर्कः पाल्यते, स्वमनोरथानुरूपत्वसंभवात् । उपन्यस्ताः पञ्च शास्त्रैकविषया यथेच्छमूह्यन्ते त्यज्यन्ते च तार्किकैस्ततो मतभेदः । तन्निरासोपायस्तु मिथो व्याहतिरित्यनवद्यम् । ननु नाद्रियते शास्त्रमिति चेत्, किं सर्वज्ञो भूत्वा वदस्यसर्वज्ञो वा । तव सर्वज्ञता तु तव यत्नैरेव निर्णेया; अनवस्थितप्रज्ञत्वात् । असर्वज्ञश्चेच्छास्त्रं नाद्रियत इति विषमम्, तस्य बालादिषु प्रसिद्धत्वात् । यतः शास्त्रं नाम शास्तुर्वचनम्, तन्न मन्ये इति वदन् कुत्र दृष्टः ? यत्र देशे यस्मिन्वचने शास्त्रत्वग्रहस्तद्देशीयानां तद्वचने श्रद्धा दृष्ट-

चरा बालान्विहाय। तस्मात्तत्रैकस्य वचनमसमञ्जसम्। ननु मादृशाः शास्त्रानादरशरणा बहवः संमतिं यच्छन्ति तस्मादिदमपि पक्षान्तरं शास्त्रानादरणं नाम, किं बहुसंमत्या पक्षान्तरम्? यतोऽन्धानां शतमप्येक एवान्धः, प्रमाणविरहसाम्यात्। तस्माद्यः प्रमाणमवलम्ब्य गच्छति, सोऽनन्ध इति सांप्रतम्। स्वयमसर्वज्ञानां शास्त्रत्यागिनां न पक्षान्तरं भवितुमर्हति, असर्वज्ञत्वप्रतिबन्धादिति मन्तव्यं बुद्धिमता। इदमेव तु जीवस्य जीवत्वं यदसर्वज्ञत्वम्। अतः सर्वज्ञमपेक्षन्ते सर्वे जीवा यथार्थप्रतिपत्तये ज्ञानवृद्धये च सर्वज्ञत्वात्तम्। सर्वज्ञः परमेश्वरः शास्ति, तस्येदं शासनं वेदो नामाकृत्रिमं वचनमनुसंधानपूर्वत्वाभावात्; वक्तुः सर्वज्ञत्वात्। अत एव पाणिनिः कृत्रिमं वचनमनुशास्ति साध्विदमसाध्विदमिति, वेदस्त्वकृत्रिमं वचनम् ततः सर्वं साध्विति "छन्दसि दृष्टानुविधिः" इति सूत्रितवान्। तस्मादकृत्रिमस्य सर्वज्ञस्याकृत्रिमं वचनमल्पज्ञैः कृत्रिमात्माभिमानिभिरवश्यं मन्तव्यं मानुषत्वात्। यतो वचनरहस्यवेत्तारो मानुषा एव दृश्यन्ते नेतरे। तर्हि किम्? अस्माभिः सर्वैर्यथाशास्त्रमेव वर्तितव्यं निःसंशयम्। ज्ञातव्यं च। तर्हि यथाशास्त्रवर्तने दुःखापत्तिरिति चेत्, न किंचिद्दुःखम्। इदं तु तारतम्यं लोकसिद्धम्, अशास्त्रजनबाहुल्ये सशास्त्राणां दुःखम्, सशास्त्रजनबाहुल्येऽशास्त्राणां दुःखमिति। परन्तु प्राप्त मानुषत्वादिहेतुना सशास्त्रत्वमेव सुखहेतुरिति, प्रमाणत्वाच्छास्त्रस्य। यथा प्रमाणीभूतचक्षुर्हीना न सुखपात्रम्, तथा शास्त्रहीना अपीति युक्ततरम्। ननु विपरीतं दृश्यते सशास्त्रा दुःखिनः, अशास्त्रा सुखिन इति, सत्यं विपरीतम्, विचाराभावात्। प्रवृत्तिरेव कथयति सुखं दुःखं च। किं दुःखी प्रवर्ततेऽन्यो वा। सुखं नाम तृप्तिः, सा च भोगात्पशौ, ज्ञानान्मानवे। ज्ञानं

च शास्त्रे । तस्मान्न पूर्वपक्षः समञ्जसः । किं ज्ञानं सुखं प्रतिबध्नाति ? कः सुखपात्रं प्रमाणहीनः ? यत आरण्यकाः पशवोऽपि प्रमाणाधीनसुखाः । अत एव पशुष्वपि प्रमाणवैगुण्ये दुःखिनः, साम्ये समं सुखम् । मानुषे तु यानि पशुसाधारणानि, तानि शास्त्रं चेत्यधिकं सुखम् । यतः शास्ति शास्त्रज्ञः शिक्षयते च पशुः ।

ननु युक्तमेतद्यच्छास्त्रज्ञैरशास्त्रज्ञः शिक्ष्यत इति, परन्तु शास्त्रमेव तु दुर्लभम् । वेदे शतायुर्लिख्यते, सहस्रं लक्षं चिरमित्यायुः पुराणेषु । तत्र शतमेव दुर्लभं कुतः सहस्रादीति चेत्, साधारणं शतं न्यूनमधिकं वा सनिमित्तमिति ब्रूमः । यथा फलानां प्रायो नियतायुषां लवणादियोगे चिरमभिघातेऽल्पं दृष्टमायुः, तथा प्राणापानादियोगे चिरं तदभिघातेऽल्पमिति वेदे शतशब्दोऽनन्तपरो व्याख्यातो वैदिकैर्वेदपरिनिष्ठितैः । तथा सूर्याचन्द्रमसाभ्यां रात्र्यहःकालनिर्णयः, तदधीनमायुर्ब्रह्माण्डाभिमानिनः, तथो प्राणापानाभ्यां रात्र्यहःकालनिर्णयः, प्राणिनां तदधीनमायुस्तदुभयापगमे आयुरपगमः, आयुषस्तद्रूपत्वात् । तज्जमिति पक्षे निमित्तापाये नैमित्तिकस्याप्यपाय इति प्रसिद्धेः । अस्तु प्रासङ्गिकम्, उपपत्तिचिन्तायां शास्त्रप्रामाण्यव्याहतं न तर्कप्रामाण्यमिति सिद्धम् ।

आस्तामेषा कथा, यत इदं भारतखण्डं शास्त्रं प्रमाणं प्रमाणमित्याक्रोशनादेवेदृशदशामापन्नम्, अनेनैव शास्त्रेण भारतखण्डं दुःखोदधौ पातितम्, पुनस्तदेव प्रमाणीकर्तुमुद्यतोऽसि । यं वेदं भवान् ईशवाणीं वर्णयते, तत्कस्यचित्कवेः काव्यं मन्ये निश्चिततरमिति चेत्; नायं निश्चयः श्रेयान्, यतस्तत्र न किञ्चित् कविलिङ्गं लभ्यते । लभ्यते तु परमात्मलिङ्गं स्थले स्थले । तं कथं त्यजसि, कथमन्यं कल्पयसि कविम् ? नायं विचारः, किन्तु विरोधः । यथा

कयापि रीत्या वेदेऽश्रद्धामुत्पादयामीति तव मनोरथः; यतः साङ्ग-समेनत्। किमीश्वर एव वक्ता? सत्यं शतशारम्। तर्हि तमुपल-ब्धुमिच्छामि। कुत्रास्ति सः? शास्त्र इत्युक्तं प्राक्। तर्हि सा वार्तैव। युक्तमुच्यतेऽज्ञातत्वात्। यतो वेद ईशं प्रदर्शयति, न वार्तामात्रं करोति इति वेदस्य मुख्यो व्यापारः। तत्प्रतिपादनायैव शास्त्राणि षट् प्रवृत्तानि। तर्ह्यशुद्धबहुलोपि वेदः शास्त्रमिति मन्तव्यः? मन्तव्यो निःसंशयम्। अशुद्धबहुलं मा वद। शुद्धाशुद्धविचारः कुत्र योग्य इति विचारय। किं लताकृमिता सहज-सिद्धोपि निन्दास्पदम्? तस्मात् कृत्रिमे शुद्धाशुद्धविचारः। अकृत्रिमे सर्वमनिन्द्यमिति न्यायः। तर्हि किं वक्ति वेदमीश्वरः? कुतो न वक्ति? अमुखत्वादिति चेत्; किं त्वादृशं मन्यसे परमेश्वरम्? यतो मिथोविलक्षणानामनन्तानां निर्माता सर्वेभ्यो विलक्षणः पर्य-वस्यति विचारे। किं न कुर्यात् परमेश्वरः। तर्हि कुतो न दृश्यते। सर्वविलक्षणत्वादिति ब्रूमः। कोऽपि पश्यति? पश्यन्ति बहवः। सत्यां सामग्र्यां फलावाप्त्यवश्यम्भावनियमात्। सति सति प्रमाणेऽधिकारिणि प्रमातरि च कुतः प्रमेयं न प्रकाशेत? तस्मात् तवापराधोऽयं यच्छास्त्रं त्यजसि, ईश्वरः कुत्रेति भ्रमसि पृच्छसि च।

ननु स्वयमुत्पद्यते जगत्, तस्मात् वृथेश्वराभिमान इति चेत्, बहु सम्भिन्नम्। स्वोत्पत्तौ स्वयं स्वतन्त्रमुच्यते, तदा स्वोत्पत्तिसमये स्वयमस्ति न वेति स्वयमेव विचारय। अविद्यमानस्य स्वातन्त्र्यं युक्तमुत विद्यमानस्य। सृष्टेः प्राग्विद्यमानं न किंचिदासीत्तस्त-दुत्पादकं कंचनाङ्गीकुरु। तर्ह्यङ्गीकरोमि परमाणून् नित्यान्निरव-यवान्, ततः सृष्टिरुत्पद्यते, ते च कालाधीनतया कदाचिन्मिथो मिलन्ति, कदाचिद्विगलन्ति, ततः सृष्ट्याद्युपपत्तिः इति चेत्,

काले स्वातन्त्र्यमङ्गीकुर्वता ईशोऽङ्गीकृत एव। यतः स्वातन्त्र्यमेव प्रथममीशलक्षणं, न तत्सर्वज्ञं समर्थं विनाऽन्यत्र संभवति। यो हि जानाति, स ज्ञापयतीति नियमाद्वक्तर्यपि, ततस्तस्यैव वचनं वेदो नामेति प्रमाणमूर्धन्यम्।

ननु मम तु मतम्—भूगोलानि खगोलानि च निर्माय कन्दुकानीव प्रक्षिप्तानि येन मानेन यथा वेगेन यादृक्सङ्कल्पेन, तानि तथैव भ्रमन्ति; परमेश्वरेच्छाया अव्याहतत्वात्, स्वतन्त्रस्य यथेच्छत्वात्। तत्र भूगोलादीनि भ्रमन्ति, सूर्यगोलः स्थिरः स्थविष्ठत्वात्। अन्यच्च प्रथमं भूगोले तृणादिसंभवः, ततः कृमिदंशाद्याः, ततः पक्षिसर्पादयोऽण्डजाः, ततो मृगादिश्वापदान्ताः, ततःपशवः, ततो मर्कटाः, ते च बहुविधा बहुदेशवासिनः, ततो मानुषाः, ततः क्रमेण ज्ञानवृद्धिः, पूर्वपूर्वतरे मूर्खाः, उत्तरोत्तरं प्रज्ञावृद्धिस्तथैव प्राप्तक्रमादिति। किंच नाद्यापि शास्त्रं सिद्धम्, यतः प्रज्ञा विवृधिषुरद्यापि। यदा चरमपरिणामारूढा भवेत्, तदा शास्त्रं सेत्स्यति, तदा प्रमाणमपि शास्त्रं सेत्स्यति, तदा तदुक्तं सर्वमङ्गीकरिष्यामः, तावत्पर्यन्तं शतवारं जातमपि न श्रूयते शास्त्रम्। यतः पूर्वपूर्वमज्ञानमुत्तरोत्तरं ज्ञानमिति नियमः। यथा बाला जाता अज्ञानघना उत्तरोत्तरं प्रवृद्धज्ञानास्तथैवेदं ब्रह्माण्डं प्रागज्ञानघनमुत्तरोत्तरं प्रवृद्धज्ञानम्। पिण्डेन ब्रह्माण्डपरीक्षणात् स्थालीपुलाकवत्। अत एव यथोत्तरं मुनीनां प्रामाण्यमिति पाणिनिः, अत उत्तरेषामस्माकं प्रामाण्यं पूर्वपूर्वेषां पुराणादिवेदपर्यन्तकर्तॄणामप्रामाण्यं क्रमप्राप्तत्वादिति। इदं विशदं तव मतं श्रुत्वा तृप्तोऽस्मि, धन्योसि धन्योसि? प्रथमं तावदिदं विचार्यम्, किमियं तव मतिः पूर्वजसम्मतोतोत्तरजसम्मता? न तावत् पूर्वजसम्मता, तेषां मूर्खत्वेनेदृशसिद्धान्ताज्ञानात्। न तावदुत्त-

रजसम्मता, तव तस्मात् पूर्वत्वेन स्वयमेव मूर्खत्वाङ्गीकारात्। अहमेतद्विचारयामि यः स्वयं मूर्खत्वमङ्गीकृत्य सर्वान्मूर्खान् वदति, तेन सह कथाप्रसंगे किं वक्तव्यमिति। अयं त्ववकाशो यः स्वसम्मतोऽन्यसम्मतश्च मूर्ख इति स मूर्ख एवेति वक्तुम्, संशयाभावात् अभयाच्च। पूर्वेषामुत्तरेषां वा शिक्षणीयत्वासम्भवेन तव मतं त्वदर्थमेव। पूर्वे तु गतास्तव हस्तादग्रिमास्तु शिष्या वर्तमानाद् गुरोरधिकप्रज्ञा इति गुरोरेव सम्मतम्, तस्मादिदं तव मतं कस्मै बुद्धिमते रोचेत। यतस्त्वमेव शिक्षयसि "हे वत्साः, शिक्षकाद्वयं बुद्धिविभवाधिका" इति।

ननु शिक्षितं ज्ञानमनुवर्तनेऽधिकं कालेन दीयते, तदुभयं मिलित्वा भूयिष्ठमुत्तरोत्तरं ज्ञानमिति चेत्, यद्यदाधिकं कालदत्तं ज्ञानं तत्किं शिक्षितज्ञानानुरूपमुताननुरूपम्? आद्ये शिक्षितज्ञानानुसारिणां नाधिकप्रज्ञता। द्वितीये शिक्षितज्ञानविरोधिज्ञानसम्पन्नेषु शिक्षावैयर्थ्यम्; शिक्षयितुः स्वरूपहानिः फलम्। किंच शिक्षितज्ञानानुसारित्वे परम्पराप्राप्ताशिक्षैव शास्त्रमुच्यते, यतोऽनादिपुरुषात्प्रभृति शिक्षा वक्तव्यैव, ततः प्रथमशिक्षाप्रवर्तकः परमेश्वर एव; अन्यस्यासम्भवादिति तव सर्वः सिद्धान्तो हस्ताद् गलितः। तस्मादङ्गीकुरु वेदं परमेश्वरस्य सर्वज्ञस्य स्वतन्त्रस्य सर्वशिक्षाप्रवर्तकस्य वाचमनादिम्। किं बहुना?—उत्तरात्पूर्वपूर्वस्तु समीचीन इति प्रथा। गुणाधिकपरीक्षायैव बलं यच्छति सादरम्॥ १॥

ननु पाणिन्यादिमहर्षिसम्मतमुत्तरोत्तरज्ञानभूयस्त्वम्, ततः पुराणीं वाणीं न मन्यन्ते नवीनाः प्रज्ञाधिकाः। वन्हिशकटो वर्तमाननिवेदकतन्त्री पुस्तकमुद्रणयन्त्रमन्तरिक्षगमनं महतोऽप्युत्तोलनमित्यादीनि बहून्यदृष्टपूर्वाणि कर्माणि नवीनैरेव दर्शितानि। यदि पु-

रातना ज्ञानाधिकाः, कुतो न प्रदर्शितानि ? तस्मादुत्तरोत्तरं ज्ञानवृद्धिः। सत्यमेतत्। परन्तु प्रमादः, यतो वन्हिशकट्यां प्रतिवर्ष सहस्रान्ता म्रियन्ते जना इत्येका बुद्धिः। किं प्रमादः ? तन्त्र्यां जगत्पैशुन्यं द्वितीया बुद्धिः। मुद्रणयन्त्रेऽपि स एव दोषस्तृतीया बुद्धिः, यत्र महतामपि गुह्यमापणे। अन्तरिक्षगमने पारतन्त्र्यं गन्तुः प्राणभयं चतुर्थी बुद्धिः। एवमादिप्रमादा यदि बुद्धौ गण्यन्ते, किं गणको बुद्धिमान् किं गणनीयो बुद्धिमानिति स्वयं विचारणीयम्। किं प्राचीनैर्महत्कर्म न कृतम् ? किमनया बुद्ध्या प्राचीनान् स्थापयस्यज्ञा इति। शृणु तेषां कर्माणि—विमानम्, स्वतन्त्रयानम्, चिरजीवितोपायः, अस्त्रयुद्धम्,: घटिकायामश्वेन शतयोजनयानम्, असाध्यप्रासादरचना, समुद्रसेतुः, अमायिकमानुषैः सह मायिकैः राक्षसादिभिर्युद्धम्, तत्र जयो मनुष्याणाम्, एवमादीनि महान्ति दुःसाध्यान्यप्रमाणानि अप्रमादीनि।

ननु श्रोतव्यानि तानि, न मन्तव्यानि, कथमपि दृष्टव्यगोचराणि कथं मान्यानि ? विचारय। शृणु ! श्रोतव्यमवश्यं नवीनेन प्राचीनचरितम्। अयमेवाष्टादशपुराणानां सिद्धान्तः। पुराणं श्रुत्वाऽग्रे गन्तव्यमिति। यदि न श्रूयते, तवैव पितामहादयस्त्वया न मन्यन्त इति सिद्धम्। किमिदानीं दृश्यन्ते ? कथं तत्र सम्भवः ? न चायमाकस्मिकः, किन्तु बीजपूर्वः। यद्यङ्गीकरोषि पूर्वजान्निन्दितुं स्तोतुं वा, तर्हि तत्कर्माण्यप्यङ्गीकुरु। यदि नाङ्गीकरोषि, तर्हि निन्दानवकाशः ; निन्दास्तुत्योरङ्गीकारमूलत्वात्। अङ्गीकारो द्विविधः सप्रमाणः स्वतन्त्रश्चेति। आद्यः प्रौढेषु। द्वितीयो बालेषु बालिशेषु वा ; तस्य सर्वतोमुखत्वात्। असुखत्वप्रसङ्गः। सप्रमाणाङ्गीकारस्य सन्मुखत्वादङ्गीकारो युक्तः। तत्र पूर्वजाङ्गीका-

रेऽर्थापत्तीतिहासौ प्रमाणद्वयम्। येनाङ्गीकरोषि, तेनैव सिद्धयन्ति तत्कर्माणि। पूर्वपूर्वेषां बलाधिक्यं प्रत्यक्षं निर्विवादम्। बलं च बहुविधं सम्मतमेव सर्वेषाम्। प्रतिशतकं कियदधिकं कियन्न्यूनं परीक्षस्व! तेन ते समाधानं भविष्यति। इतिहासस्तु स्पष्टमुपपादयति प्राचां कर्माणि, तर्केणापि च सिद्धयन्ति, बलाधिक्यमूलत्वात् कर्मणाम्।

ननु बलाधिक्येन पशुमूलत्वं कल्प्यत इति चेत्, कल्पनामूलं वद! उक्तं बलाधिक्यमिति, नोपपन्नम्। यत्र बलाधिक्यम्, तत्र पशुत्वमिति नियमाभावात्। उत्तरेभ्यः पूर्वस्य बलाधिकस्य पशुत्वापत्तेः। ननु पूर्वस्य पशुत्वं मतमेव ममेति चेत्, अङ्गीकृतं पशुत्वं स्वस्य त्वया। अत एव प्रमाणमुत्सृज्य तर्कयसि। तस्मान्नोचितं पशुमूलसृष्टिकथनम्। यतः स्वमूलं मलिनं मन्वानो मलिनः पर्यवस्यति, ततो न विचाराधिकारः, ततः पशुत्वे पर्यवस्यति। इदं तु न मानुषाणामभीष्टम्, अभीष्टं तु वर्तमानादधिकम्। तन्न दृश्यते केनचित्, यतो भूतभविष्ययोराच्छादनं वर्तमानेऽतस्तद्दर्शनसाधनं शास्त्रमेव। अन्यथान्ध्यनिवृत्तिः कथमपि न स्यात्। ननु स्यात् स्वयत्नेन इति चेत्, ब्रूहि किमन्धशतेनापि प्रयत्नसहस्रैरेकोपि सचक्षुः कर्तुं शक्येत? तस्माच्छास्त्रमुत्सृज्य तर्कः साहस इत्यनवद्यम्। तथा लोकानुग्रहाय पञ्च विषयाः प्रदर्शितास्तथा शास्त्रमपि प्रदर्शितमीशत्वज्ञापनाय कथं सुखिनो भवेयुः, कथं मां विन्देयुरित्यभिप्रायवता जगन्नाथेन। तस्मात्तत्प्रदर्शितं दृष्टं दृश्यमानं शास्त्रमङ्गीकर्तव्यं सतां बुद्धौ। ब्रूहि किं शास्त्रं त्यजसि किं पशुत्वम्? त्वं यथेच्छसि तथा कुरु, परन्तु

व्यासेन यल्लिखितं तत्तु स्पष्टं दृश्यते "कलेः पञ्चसहस्रान्ते त्वादृशा भविष्यन्ति" इति पुराणेषु स्पष्टम्।

ननु शास्त्रं न मन्यते मयेति चेत्, किं त्वं नाधिकारी? अनधिकारिणो बाला वदन्ति न मन्यामहे शास्त्रमिति, अत एव ताड्यन्ते गेहे गेहे पितृभिः। नीत्यर्थमिति चेत्, सापि शास्त्रसिद्धा, अन्यथा मतिभेदान्मतभेदापत्त्या मिथोविरोधापत्तेः? दृश्यते मतभेद इति चेत्, स किं सिद्धान्त उत पूर्वपक्षः? आद्येऽस्मन्मतं प्रमाणसिद्धम्, ततः सिद्धान्तः त्वन्मतवत्। द्वितीये सर्वमतानां पूर्वपक्षत्वेन स्वतःसिद्धशास्त्रापेक्षा सुदुस्त्यजा। ननु शास्त्राण्यनन्तानि कर्तृभेदान्मिथोविरुद्धानि च, ततो न प्रमाणमिति चेत्, अत एव त्वदुक्तमप्रमाणम्। ननु त्वदुक्तमपि तथेति चेत्, नैतन्मदुक्तम्, किन्तु स्वतःप्रमाणमीशादाविर्भूतम्। नन्वीशादाविर्भूतमित्यत्र न प्रमाणमिति चेत्, जगदेव तदाविर्भूतं प्रमाणम्। यथेशाज्जगत्तथा शास्त्रमिति॥ नन्वन्यनिर्मितत्वसंशयान्न प्रमाणीभवति शास्त्रमिति चेत्, किमयं तवापराध उत शास्त्रापराधः। संशयिना सुपक्वमन्नं त्यज्यते, तथेदं शास्त्रं त्वयेति। शास्त्रसंशययोस्त्यागप्रसङ्गे संशयस्त्याज्यः, शास्त्रस्याप्तवाक्यत्वात्। नेशादन्यः कश्चनाप्तः सम्भवति, निश्चिताज्ञत्वात्। यथा तव वचनं भूच्छायया चन्द्रग्रहणमिति। नेदं प्रमाणम्, पूर्णग्रहणसमयेऽपि पूर्णचन्द्रमण्डलस्य दर्शनादस्ति तेजः तिरोहितेपि चन्द्रे इति वक्तुं शक्यत्वात्, छायायास्तेजः साम्मुख्याभावनिश्चयान्न भूच्छायाच्छादनं चन्द्रस्येति वक्तुं सुशकम्। ननु गणितादायाति तथेति चेत्, राहुवादिनः किं सुप्ताः, तदीयगणितेन राहुरपि सिद्ध्यति, उपपद्यते च कज्जललिप्तदर्पणवत्। यतो रक्तिमविशिष्टं मण्डलं चन्द्रस्य सूर्यस्य वा दृश्यते,

प्रकाशस्तु निरुध्यते, यथा द्वितीयाप्रभृतिपञ्चम्यन्तं शुक्लपक्षे स-म्पूर्णं दृश्यते चन्द्रमण्डलं निरुद्धतेजस्कम्, कश्चिद् भागः स्फुटतेजा इति विशेषः। प्रतिमासं येनाच्छाद्यते, स एव राहुरिति चेत्, न; तस्याष्टादशमासे राश्यन्तरगामिनो विधुसाहचर्यासम्भवात्। तर्हि प्रतिमासं केनाच्छाद्यते चन्द्र इति चेत्, न केनचित्। कलास्तूप-चीयन्ते चीयन्ते च, ताश्च परतः स्वतश्चेति मतभेदः। तत्र स्वत इति पक्षः श्रेयान्; पृथिव्याद्यन्तरितत्वकल्पनाक्लेशाभावात्। ननु सूर्यश्चन्द्रे प्रकाशमाधत्ते इति कथायाः का गतिरिति चेत्, दीपा-दिवत्तदुपपत्तेः, यथास्तं यन्नादित्यो दीपे तेज आदधाति, तथा चन्द्र इति वक्तुं सुशकत्वात्। दीपचन्द्रयोरादित्यसान्निध्ये तिरोधानप्र-सिद्धेः रवास्तकाले चन्द्रदीपयोः स्वाधिकारं वस्तुप्रकाशनरूपं द-दातीत्युक्तिर्ज्यायसी; रविसान्निध्येऽपि दीपचन्द्रयोर्यथाकथंचित्तेजो-दर्शननिश्चयात्। अत एव सुधाकरः कलानिधिरित्यादिनामानि सङ्गच्छन्ते। ननु सूर्यचन्द्रपृथिव्यादीनां कः आश्रयः। स्रष्टुः सङ्क-ल्प इत्यबाधितम्; शक्नोतीश्वरः स्वसङ्कल्पे स्थापयितुम्, देशका-योस्तस्यैव स्रष्टव्यत्वात्। स्वयमुत्पत्तिवादिनां दुःशकमुत्तरम्, उत्पन्नस्याश्रयमन्तरोत्पद्यमानस्याश्रयान्तरकल्पना दुर्घटा। यतो लोकप्रसिद्धमृद्घटादिदृष्टान्तत्यागो दुःशकः; सहस्रयत्नान्तरक-ल्पनापेक्षयेशसङ्कल्पाङ्गीकारे लाघवात्। ननु गोलानि निर्मायान्यो-न्यग्रथितानि संचारोणि च? प्रदर्शयामि तथैवेदं जगन्मिथोग्रथितं भ्रमति संचरतीति मन्तव्यम्। त्वयेति चेत्, कुलालोऽपि वदति मत्स्र-ष्टघटवदिति, तन्तुवायोऽपि वदति मत्स्रष्टपटवदिति; किं तदपि प्रमाणम्? तस्मात्—'बुद्धिमानपि सिद्धान्तं मार्गमाणो न पण्डि-तः। यतस्तन्मार्गणं तस्य मौर्ख्यं कथयति स्फुटम्॥ १॥ परम्प-

रालब्ध्रशिक्षो दक्षो वस्तुविनिर्णये । भिक्षुः कृष्णो वदत्येवं, वेदमार्गं पुरातनम् ॥ २ ॥"

ननु वर्षसहस्रत्रयात् प्राङ्नासीद्वेदः, ततः केनचिन्निर्मित इति चेत्, कथमेतत् ? भाषातारतम्यतर्कादिति चेत्, भाषाभिज्ञः पाणिनिरत्र प्रमाणम्, तस्योक्तिरनादिरिति । तथा मनुरपि—'अनादिनिधना दिव्या वागुत्सृष्टा स्वयम्भुवा' इति ब्रवीति त्वत्तः पुरातनतमः। वेदेष्वनुपलभ्यतेऽनादिरनादेराविर्भूत इति । तस्मात्प्रमाणसरणिविरुद्धास्तर्का हेया इत्येव युक्तम् । वैदिकशिखामणेर्व्यासस्यायं सिद्धान्तः—'सर्वेषामेव वर्षाणां मेरुरुत्तरतः स्थितः' इति । तस्मादनुचितो व्यामोहव्यापारः, यतः स्वयमेव सिद्धान्तं मृगयसे, तथापि सिद्धान्तारूढं मोहयसि, तेनेदमेव सिध्यति—स्वयं नष्टः परान्नाशयतीति । किंच त्वन्मते घटिकायां बहुशतयोजनानि गच्छन्त्यां पृथिव्यामारूढैः कियान्वाताघातोऽनुभाव्यः । घटिकायां दशयोजनगतिमत्यां वह्निशकट्यामारूढैर्वा कियानिति निर्णेयमवश्यम् । यतः शकट्यां चलन्त्यां तदाघातः स्थिरायां तदभावः । सदा चलन्त्यामपि मह्यां कदाचित्तदभावः । अस्मन्मते उर्ध्वमूर्ध्वं वाताधिक्याद्युक्तं सूर्यादिभ्रमणम्; नियतवातमाश्रित्य यत्र गतिस्तत्र वाताघात इति नियमात् । किंच चलतो भुवो वाताघातः प्रसिद्धतमः, भुवि तु सर्वतः कदाचित् कुतश्चिदिति कथमिदमकाण्डताण्डवम्, तथा युक्तिं प्रदर्शय येन प्रामाणिको गणयसे । प्रत्यक्षमनुमानं च शब्दो यत्र प्रमाणकम् । तत्र कस्ते विवादः स्याच्चलः सूर्यः स्थिरा मही ॥१॥' अस्तु स्थिरा पृथ्वी, सूर्यस्तु कियान् ? दृश्यते यावान् न तावान् यावांस्तर्क्यते ; महत्तेजसि दूरत्वस्याप्रयोजकत्वात् सामीप्यस्य विरोधित्वान्न स्फुटम् प्रत्यक्षम् , प्रत्युत दूरत्वमनुकूलं तेज

स्तारतस्यानुरूपम्, काचस्य दर्शनसाधनत्वेऽपि प्रमाणान्तरसंवाद एव प्रामाण्यम्; अन्यथा सर्वकाचानां निर्दोषत्वापत्तेः, प्रमाणकोटौ न निवेशस्तस्य, काकतालीयवत्। अतेजसि वा प्रामाण्यम्। वस्तुतस्तु प्रकृतिस्थस्य चक्षुष एव प्रामाण्यम्। तस्य प्रकृतिस्थापनं काचस्य गुणः, अन्यो दोषः तद्गुणनिर्णये प्रमाणाभावात्, स्रष्टर्यप्रकाशकत्वस्य नाप्रह्लाच्च। अतो यावान् शास्त्रे तावान्। तर्हि यावान् दृश्यते, तावानिति गतम्, शास्त्रे तस्य लोकत्वाभिधानादिति चेत्, किं न सम्भवति यावान् दृश्यते तावति? अप्रदेशे स्थितमिदं विश्वम्, किं तावति प्रदेशे लोकोपि न तिष्ठेत्? किं द्वादशाङ्गुलो लोकः? किं न लोकः? किं तर्हि? तत्। द्वादशाङ्गुलत्वं कथं निश्चितम्? कथं न द्वादशाङ्गुलो लोकः। कः शपथः?—द्वादशाङ्गुलस्य लोकत्वं नास्तीति? कथं तत्र जनवसतिः? यथा मूलतत्त्वे निरवयवे विश्ववसतिः। केन निर्णीतं द्वादशाङ्गुलत्वम्, यत्र गन्तुं बिभेति चक्षुः। तर्हि कियान्? दृश्यते यावान्। ननु नेमौ यावत्तावच्छब्दौ निर्णायकौ? निर्णायकौ। यावानिति शास्त्रदृष्टस्तावानिति निःशेष इत्यर्थः। यावान्प्रतिपाद्यते तावान्निःशेषो दृश्यते। स लोको भवितुमर्हति, अप्रतिबन्धनात्, नास्य पृष्ठभागो दृश्यते त्वया मया वा; तस्मात् लोकत्वे को विवादः?

ननु शास्त्रे यावती श्रूयते, तावती न दृश्यते भूमिः, ततो न प्रमाणपथमारोहति शास्त्रमिति चेत्, किं त्वत्प्रत्यक्षाधीनं शास्त्रप्रामाण्यमुत स्रष्टुः प्रत्यक्षाधीनम्। आद्ये तव सर्वज्ञतापत्तिः, तत्र न किंचित् प्रमाणम्, द्वितीये त्विष्टमेव सर्वेषाम्। ननु यदि तावती, तर्हि तावत्त्वत्प्रत्यक्षे कः प्रतिबन्धः? न कश्चित्प्रतिबन्धः। तर्हि कुतो न दृश्यते? सामग्र्यभावादिति ब्रूमः। का सामग्री? इन्द्रियशक्तिः

ननु सन्ति ममेन्द्रियाणि शक्तानि ? सन्तु शक्तानि, तथापि तरतमभावो दुष्परिहरः । किं चटका गृध्रसाम्यमासादयन्ति यत्नशतेनापि ? तर्हि शास्त्रदृष्टप्रमाणादल्पा कुतः प्रतीयते ? न केनापीदानीन्तनेन तावती दृश्यते, ततः खपुष्पमपि बाबावाक्यप्रमाणसरण्या प्रामाणिकम् । वत्स, चिरं जीव, दृष्टं ते बुद्धिवैभवम् ।

ननु चक्षुष्मतां दृष्ट्यनुसारित्वे कोऽपराधः ? तदर्थत्वाच्चक्षुषः । सत्यं तादर्थ्यं चक्षुषः । परन्तु यावत् दृष्टं तावदेवेति तु न वक्तव्यम्, किन्तु तावत् दृष्टमिति वक्तव्यम् ? अन्यथा चटकगरुडयोर्मतभेदप्रसङ्गः । तर्ह्यनयोः कः प्रामाणिकः ? अस्तु प्रामाणिककथा, प्राप्तं तु गरुडशिष्यत्वं चटकस्य । प्रामाणिकस्तु स एव, यस्य शास्त्रमनुकूलम् ; यतो नाधिकज्ञता प्रामाण्यहेतुः, किन्तु शास्त्रज्ञता । यतः परमेश्वरो यस्मै यावन्तं भोगं दित्सति, तावन्तं प्रपञ्चं तस्मै प्रदर्शयति; फलदातृत्वादित्यमोघं वचः । ब्रह्माण्डमुदुम्बरफलायते, तदपि ब्रह्माण्डायते भगवन्मायायाम् । तर्हि तदपि दिदृक्षामि ! तर्हि यतस्व, कथं यते ? तथा यतस्व, यथा प्रदर्शयिता तुष्टिमापद्येत ।

ननु कथं पूर्वेषां निरालम्बो विचारः ? न निरालम्बः, किन्तु भूयानालम्ब इतिहासो नाम । स च लोकप्रवाहे प्रमाणमूर्धन्यः, यतः,इति ह आसेति तद्व्युत्पत्तिः । ततः इतिह नासेति वक्तुं दुःशकम्; अर्वाचीनानां वर्तमानप्रत्यक्षस्य परोक्षातीतकथाबाधकत्वायोगात् । समानाधिकरणयोर्हि बाध्यबाधकता । आस्तां प्रसक्तानुप्रसक्तम्, प्रकृतं तु सति गुणविवेकेऽन्यत्रापि ब्राह्मणादयो वर्णा उत्तिष्ठेरन्निति पूर्वपक्षस्योत्तरम् । तदिदम्—यत्र भूयान्वर्णविवेकस्तत्रैव कालमहिम्ना विलोपप्रसङ्गः । कथमन्यत्र तत्सम्भव इति चिन्त्यम्, आकस्मिकस्य स्थायित्वायोगात् । यथाकथंचित् सम्भ-

वेपि न ब्राह्मणत्वादिजातयः सिद्ध्यन्ति ; गुणानां जात्युपाधीनां न जातित्वम् ; गुणानां परिणामित्वाज्जातीनां नित्यत्वात् । ननु द्वे एव जाती स्त्रीत्वं पुंस्त्वं चेति, कथम् ? आकारभेदात् । तर्हि बह्वयो जातय उररीकृताः ; डित्थत्वाद्याकारभेदजाग्रतेः । यद्युपाधिभेदो जातिभेदहेतुस्तर्हि स्वभावभेदोऽपि जातिभेदहेतुरिति वचनमप्रतिबद्धम् । नन्वङ्गीक्रियन्ते जातयः, फलानि तु न दृश्यन्ते, मा दृश्यन्तां फलानि, जातयस्त्वङ्गीकार्या एवाम्रत्वादिवत् । यतस्तेषामाम्रादीनां पूर्णं रूपं फलकाले, तदभावेपीतरत्र काले आम्रत्वादि ; तथा ज्ञानपराक्रमनीतिनैपुण्यसेवाकौशलरूपफलादर्शनेऽपि ब्राह्मणत्वादयोऽवगन्तव्याः; कालान्तरे फलसम्भवात् । जातिव्यञ्जकोपाध्युपलम्भो यावद्यथाकथंचिदपि । व्यञ्जकोपाधीनां कालतन्त्रत्वेन बलाबलं कादाचित्कम् । यदा तु न किंचिदभिव्यञ्जकम्, तदा नाङ्गीकार्या जातयः । तथाच न कामचारिता ब्राह्मणादिषु, ते पश्यन्ति यथाशास्त्रं प्रपञ्चकम् ।

ननु न द्रष्टुमर्हति यथाशास्त्रं प्रपञ्चम्, यतः शास्त्रेऽग्नेर्जलमुच्यते, भवति च वायोः । कथम् ? आक्सिजनहैड्रोजननामभ्यां वायुभ्यां संगताभ्यां जनयिष्यते जलम्, विभक्ताभ्यां ताभ्यामपन्हूयते च; तस्माद्वायुजन्यत्वप्रत्यक्षेणाग्निजन्यत्वकथा बाध्यते । युक्तमुपन्यस्तं पराक्रमिणा महोद्यमेन । परमेतदप्रामाणिकम् । यथा मया हरितालनीलसंयोगेन हरितवर्णो निर्मीयते, तथैवासौ वर्णः सर्ववृक्षेष्विति किं वक्तुं युक्तम् ? तस्मात्स्रष्ट्रा यथा सृष्टं तथोक्तं शास्त्रेऽग्नेर्जलमिति ? तर्हीदं कथम् वायुद्वयं विभज्यते, न दृश्यते जलम्, सङ्गमय्यते, दृश्यते पुनस्तत्,—इति चेत्, इदमेव जीवस्वातन्त्र्यम् । एतदेवाभिमानहेतुः । तस्य सशास्त्रत्वे

सशास्त्रं फलम् । अन्यथात्वे अन्यथा तत् । अत एव 'इदं कुरु इदं मा कुरु' इति मनुष्यान्प्रति धर्मः, शास्त्रं च 'इदं जानीहीदं मा जानीहि' इति । प्रत्यक्षं त्रिविधम्, ऐशमार्षं मानुषमिति । ऐशं वैदिकम्, आर्षं स्मृत्यादि पुराणान्तम्, मानुषं द्विविधं सशास्त्रमशास्त्रं चेति । प्रथमं पारंपरीकम्, द्वितीयं स्वाभाविकम्, तदपोहः श्रेयसे प्रेयसे चेति तात्पर्याच्छास्त्रप्रामाण्योपपत्तिः । तदा प्राप्तः साधारणासाधारणप्रमाणशरणप्रसङ्गेऽसाधारणप्रमाणं शरणमिति न्यायः । तर्कास्तु पशुसाधारणाः । शास्त्रं मनुष्याणामसाधारणम् । तदाश्रयणमधिकारिणां श्रेयस्करम् । तस्मान्न शास्त्रं व्यामोह इति सिद्धम्, येनाखण्डं सौभाग्यं राज्ञः प्रजानां च ॥

अत्रेदमाकूतम् । यथा वदति, तथा भवति, परंतु वक्ता दुर्लभः, ततो वेदः प्रमाणम् । यथा भवति, तथा लिखति, परन्तु लेखिता दुर्लभः, ततः स्मृतिः प्रमाणम् । यथैव दृश्यते, तथैव नास्ति, यथैव पश्यति, तथैव नास्ति, ततः शब्दः प्रमाणम् । तदनुकूलस्तर्कः । यतो यथा दृश्यते, तथैव दृश्यं दुर्लभम्, ततो न स्वदृष्टिः प्रमाणम्, ततो मनुष्याणां शास्त्राधिकारो यथास्वम् । दृष्टीनां साम्ये व्यवहारा अप्रतिबद्धाः । तत्साम्यं च न प्रमाणम्, सङ्गात्, व्याहतिदर्शनात् । तस्मात्सर्वज्ञदृष्टिः प्रमाणम् । ततोऽनादिर्वेदश्च प्रमाणमधिकारिशरण्यः । 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' इति सकलवेदानां प्रमाणानां चार्थमाह—भगवान्पार्थसारथिः । प्रतिमन्त्रं प्रत्यक्षरं च प्रामाण्यमप्याह पूर्णं वेदस्य—'यावानर्थ उदपाने सर्वतः संप्लुतोदके । तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः' इति पार्थमग्रे कृत्वा करुणाकरः । 'ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् । छन्दांसि यस्य

पर्णानि यस्तं वेद स वेदवित् ।' इति वेदसंमतं प्रपञ्चस्वरूपमभ्याह । तत्र मूलजिज्ञासव ऊर्ध्वगतयः, शाखाजिज्ञासकोऽधोगतयः, इति निर्णीतम् । शाखास्थस्य मूलजिज्ञासा शास्त्रादामूलपरंपराप्राप्तादिति शास्त्रदृष्टिः प्रामाणिकी, ततः संयमिशब्दार्थः प्रामाणिकः, सर्वभूतानां शास्त्रदृष्टिरहितानां निशाऽज्ञानाच्छादनं यत्र वस्तुनि तत्र तेषां निशायां सत्यामपि जागर्ति प्रमाणप्रापितं जानाति, न जानाति च प्रमाणास्पृष्टं वेद्यवर्गमिति । तस्मात्प्रमाणानुसारिदर्शनं स्वप्नोऽनन्त इति तात्पर्यं भगवतः । किञ्च स्वाभिप्रेतं सकलशास्त्रार्थमेकीकृत्याह— 'नासतो विद्यते भावो नाभावो विद्यते सतः । उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥' इति दृष्टिगोचरस्यापि प्रमाणाप्रापितस्य भावः सत्ता नास्ति, प्रमाणप्रापितस्य दृष्ट्यगोचरस्यापि विद्यमानतैवेति । तस्माच्छास्त्रदृष्टिरेव प्रामाणिकी ॥

अथ वेदेऽधिकारः केषाम् ? द्विजानामबाधितः । कस्मादेवम् ? यो हि यत्र दीक्षितः, स तत्राधिकारीत्यनवद्यं लोके वेदे च । तत्र तिस्रो जातयो वेदसंस्कृता वेददीक्षिताः, तस्मात्तासां वेदे स्वत्वलाभः । या जातयो न संस्कृतास्तासां न वेददीक्षा, नातो वेदाधिकारः । तस्मात्परम्पराप्राप्तोपनयनानां पैतृकधने वेदेऽधिकारो निर्बाधः । अन्यदीक्षासु न पितृवंश्यत्वनियमः, यथेच्छं प्रवेष्टुं शक्यत्वात् । नात्र यथेच्छं प्रवेशः कस्यापि, उपनयननिबन्धस्य पितृपरम्परानियतत्वात् । भवितुमर्हत्यन्यदीक्षया दीक्षितः कोऽपि पितृपरम्पराबाह्यया ? तस्मात्परम्पराप्राप्तोपनयनवतामेवाधिकारो वेदाध्ययने । तस्मादनुपनयनपरम्पराणां च्युतदीक्षापरम्पराणां वा न प्रसज्यते स्वत्वं वेदे । यत उपनयनं पितृपरम्परानिबन्धमि-

बद्धम्, तस्मादनुमीयतेऽनादिपरम्पराप्राप्तमुपनयनं वेदाधिकारश्च । अनुपनीतपरम्पराणां कथं वेदानधिकारः ? यत उपनयनं न प्राप्नोति ततो न वेदाधिकारम् । इयं पूर्वजानां च्युतिः, संस्कारानङ्गीकारस्त्यागो वा ? त्यक्तं न लभ्यते केनचित् । कथं याच्यते ? कथं दीयते ? शक्ये वस्तुन्युभयसंभवः । किं पितृपरम्परानितयमुपनयनं दातुमर्हति ग्रहीतुं वा ? कीदृशो निर्बन्ध उपनयने ? पितैवोपनयेत्पुत्रमिति लक्षणः । किं स छेत्तुं शक्यते केनचित् ? यदि शक्येत । कया युक्त्या ? किमुपनेतव्यपितरि समारोप्यते उपनीतत्वं उपनीतपुत्रत्वं वा ? न तथा तर्हि यः कश्चिद्यं कंचनोपनयेत् । कथमेतन् ? किं सोऽर्हत्युपनेतुम् ? किं स वटुरर्हत्युपनयनम् । किमन्यधनस्यान्य एव दाता, अन्य एव पात्रम् ? इति न संभवति यथेष्टमुपनयनम् । ततो न यथेष्टं वेदाधिकारः, केषांचित्स्वत्वेन निर्बद्धत्वादस्य । यत्र स्वत्वमापादयितुं शक्यते, तत्रैव दानप्रतिग्रहक्रयविक्रयादिव्यवहारः । तस्माद्यत्रोपनयनासंभवस्तत्र वेदाधिकाराभाव इति सिद्ध्यति ।

ननु कस्मात्कालादुपनयनारम्भः ? कस्मात्कालाद्वेदारम्भः ? किमनया वार्तया काकदन्तपरीक्षासमया—कदा वा भवतु वेदारम्भः ? कदा वा भवतूपनयनारम्भः । किं तेन ? निर्बन्धस्तु श्रूयते शास्त्रे दृश्यते लोके । ननु नायं समञ्जसः ? कः समञ्जसः ? अयं समञ्जसो निर्बन्धो यदीशप्रणीतो यदि काव्यं यद्यनाद्यिर्यदि प्रलापो वेदः, सर्वेष्वपि पक्षेषु व्यक्ताक्षरस्य वाक्यमर्यादाभिज्ञवेद्यस्य मनुष्यमात्राधिकारित्वमिति । युक्तमुक्तमेतत् । तवैव वाक्यान्न सर्वाधिकारः । वाक्यमर्यादाभिज्ञं विना को जानीत वाक्यावलिम् ? परंतु साऽभिज्ञता दुर्घटा । इदं वाक्यं पितैवोपनये-

त्पुत्रमिति, तस्य मर्यादाऽनुपनीतपुत्रो नोपनेतव्यः। उपनीतपुत्र-स्तूपनेतव्य इति; तस्यैव गर्भाधानादिसंस्कारसंभवात्। ननु कस्ये-दम्? अस्तु कस्यापि महर्षेः, ईदृशप्रसंगे नियामकम्। आसीदेवं प्रसङ्गः शौनकसमये। येन व्यज्यते वेदस्य वैदिकसंस्कारस्य चा-नादित्वं महर्षिवाक्येन। वेत्सि च त्वं यदि वाक्यमर्यादाभिज्ञः। तयोरनादित्वाभावे कथं ब्रूयात्पितैवोपनयेत्पुत्रमिति।

ननु संसारे वेदप्रवृत्तिकाले केन क उपनीतः? येनोपनीतः स चानुपनीतस्तस्मादनुपनीतोऽनुपनीतमुपनिनायेति निर्विवादम्। त-स्मादनुपनीतः कोऽपि कंचनोपनयेदिति चेत्, नैवम्। यो ह्युपनेता स किं वेदविदाहोस्विदवेदवित्? यदि वेदवित्, तह्युपनीतोऽपीति। यदि न वेदवित्, तर्हि नोपनेता, किंतूपनेतव्यः। यो हि गर्भाधाना-दिसंस्कारकृत्स एवोपनेता, यस्य ते संस्काराः स एवोपनेतव्य इति शास्त्रतात्पर्यम्। संस्कुर्यात्कथं संस्कारापेक्षः? तर्हि कथमुपनयन-परम्पराप्रवृत्तिरिति चेत्, अनादिरियं परम्परेति समञ्जसम्।

नन्वस्य श्वेतवराहकल्पस्यैकं परार्धं गतमिति श्रूयते ज्योति-र्विदां संप्रदायेषु केषुचित्, यदि कल्पारम्भस्तर्हि कस्माच्चित्का-लादुपनयनारम्भः, ततः प्राप्तमनुपनीतकृतमुपनयनमनुपनीतस्य; तस्मात्पितैवोपनयेत्पुत्रमिति नियमो व्यभिचरित इति चेत्, वक्त-व्यं सावधानम्—किं वेदविदोपनीतो बालः प्राथमिक उतान्येन? अ-न्येन तु न संभवति, वेदविदेति वक्तव्यम्। प्राप्ते च तथा प्रथम-बालस्य पिताऽनादिः प्रथमबालपितृत्वादेव। उपनयनं चाष्टमे वर्षे विहितम्। तस्य वयोमानासंभवादुपनेतुरभावादध्येतव्यज्ञानस्य स्वतःसिद्धत्वान्नोपनयनापेक्षा। तमुपनयेत्, योऽध्ययनेऽधिकारी। न प्रथमपुरुषः सर्वज्ञः सर्वज्ञानप्रवर्तकोऽध्ययनाधिकारी, किंत्वध्यापना-

धिकारी । स प्रथमं बालमुपनीतवान् । ततःप्रभृति प्रवृत्तमुपनयनम्, तेन सह पितैवोपनयेदिति न सर्वाधिकारिको वेदः ।

ननु वेदोत्पत्तिकालो वर्षसहस्रत्रयात्मको व्यतीयायेति श्रूयते कुत्रचिदिति चेत्, श्रूयतामल्पस्ततोऽपि कालः, तथापि द्विजत्वनिबन्धवद्धो नान्येनासादितुं शक्यः, नापि कश्चिदादायादाय दातुं शक्तः, उक्तप्रतिबन्धबद्धत्वात् त्रयाणाम् । अस्त्वेतत् । इदमत्र पृच्छयते, यत्तु वर्षसहस्रत्रयं व्यतीयाय वेदस्येति, कथमेतत्? लेख उपलभ्यतेऽनादिरिति, त्वं वदसि सादिरिति, किमत्र प्रमाणम् । उचितं तु लेखः प्रमाणमतीतकालिके वस्तुनि । यतो वर्तमानप्रत्यक्षं नातीतकालिके प्रमाणम् । अतो लेखः प्रवृत्तः, तस्माद्वर्तमानजनानामतीते वस्तुनि लेखानुसारित्वमेव शरणम्, यतो वर्तमानानां भूतभविष्यान्धता नियता । अवश्यं तूभयज्ञानम् । भूतं भविष्यं चाजानन् स्खलति वार्तमानिकः । प्राप्ते वार्तमानिकानां लेखप्रामाण्ये लेख उपलभ्यतेऽनाद्यनन्तो वेद इति । ननु तथा कोऽपि लिखेदिति चेत्, तदेवोक्तं कस्यचिल्लेखो दृश्यत इति । तर्हि स कथं मन्तव्यः; प्रामाण्यसंशयादिति चेत्, असौ संशयः—किं लेखसामान्ये उत लेखविशेषे? उभयथापि तवालेखत्वप्रसङ्गः । यदि तव लेखः प्रमाणम्, तर्हि वेदोऽनादिरिति लेखोऽपि । ननु काव्यादिवदाधुनिको वाक्यत्वादिति चेत्, ईदृशानुमानेन पुरातनत्वे हस्तादुपगते सर्वं त्वत्समवयस्कं जन्यत्वादित्यनुमानं प्रमाणीकरोषीति प्राप्तम् । किमिदमनुमानं त्वदुपन्यस्तं वा तव संमतम्? किं तथानुभूयेत? तस्मात्किंचित्पुरातनं ततोऽपि किंचित्ततोऽपि किंचित् । तस्मादबाधितो लेखो वेदः पुरातनतम इति । ततस्तदध्ययनं चोपनयनं च पुरातनतमम्, ततः परम्पराप्राप्तोपनयनवतां दायः, नेतराधिकारिकी

वेद इति सिद्धम्। प्रलयाङ्गीकारपक्षे हिरण्यगर्भादुपनयनारम्भः प्रतिकल्पम्। तदनङ्गीकारे न प्रश्नोत्तरे। "धाता यथापूर्वमकल्पयत्" इति शास्त्रमीशस्य स्थितप्रज्ञतां कथयदेव वेदमार्गो न व्युच्छिन्न इति कथयति।

ननु नायं वेदोऽनादिस्तत्र नवीनत्वोपलम्भादिति चेत्, उपपाद्यतां नवीनत्वं कथं तदिति? ननु तत्र केचन मन्त्राः प्रकरणं वा नवीनेष्वेव पदार्थेषु सम्यक् संगच्छन्ते, न पुरातनेषु, यथा जनकादिकथाः, क्वचित्कालकथाश्च नव्यास्तत्रेति चेत्, अस्त्वर्थनव्यत्वम्, किं तेन वेदो नव्यः? तद्वक्तुः परमेश्वरस्य सर्वज्ञत्वाद्वक्तव्यस्य सर्वविषयत्वादीशज्ञानरूपत्वाच्च नानादित्वप्रतिबन्धकं नव्यार्थसंगमनं वेदानाम्। ननु सर्वज्ञवचनस्य नव्यार्थसंगतिरस्तु, तथापि ऋग्यजुःसामाथर्वाणि मन्त्रब्राह्मणसूत्राणि च क्रमनिबद्धानि कथमनादित्वं निर्वोढुं शक्तानि इति चेत्, अयं निर्बन्धः किं श्रोतुरर्थेऽथवा वक्तुरर्थे? वक्त्रा चतुर्मुखेन युगपदेव वेदचतुष्टयं प्रोक्तम्, ततो न वेदेषु पूर्वापरीभावः। ननु मन्त्रब्राह्मणकल्पेषु पूर्वापरीभावो दृश्यते, प्रथमं मन्त्राः, ततो ब्राह्मणं विनियोगबोधकम्, ततः सूत्रमितिकर्तव्यताबोधकम्; तस्मात्क्रमेण कृता एते ग्रन्था इति चेत्, युक्तमुच्यते स्वमत्यनुसारेण। यदुच्यते कृता ग्रन्था इति तद्वक्तव्यमुक्ता ग्रन्था इति; तेन ज्ञातः स्याद्वैदिकानामभिप्रायः। ब्रह्मवादिनो वैदिका इत्थं वदन्ति—व्याकृतमेतज्जगदासीदव्याकृतात्मकम्, यत्र सर्वाणि नामानि रूपाणि शास्त्राणि शास्यानि शास्तारो ज्ञानानि च समरसतामापन्नानीव बीजेऽङ्कुर इवाविभागलभ्यस्वस्वरूपाणि बभूवुः। तदाप्यासीदेव कश्चिच्चेतनस्तद्विवेचयिता सकलकर्मफलदाता भावाभावोभयकालतुष्टः स्रष्टा। तस्येक्षणे प्रथमसं-

कल्पानुरोधेन शब्दादयः पञ्च विषया भोक्त्रर्थाः,ततस्तद्ग्रहणसाधनानीन्द्रियाणि, तत्र भोक्त्रभिमानः, ततो भावनादार्ढ्यम्, ततः स्थूलारम्भः, तत्र व्यवहारप्रवृत्तिः, तत्र प्रथमश्चतुर्मुखो बालः। स चोपनीतः सूक्ष्माभिमानिना, ज्ञानक्रमस्योत्तरनिम्नत्वात्। सोपि मूलपुरुषेण। स चानुपनीतः स्वतःसिद्धज्ञानैश्वर्यः प्रतिपत्तव्यो मूलपुरुषत्वात्। तस्येयं प्रतिपत्तिः पञ्चवक्त्रत्वं त्रिनेत्रत्वं चेत्यादिः। वक्त्रप्रतिपत्त्या सर्वोत्तृत्वप्रतिपत्तिः,नेत्रप्रतिपत्त्या सर्वज्ञत्वप्रतिपत्तिः। यश्च द्वितीयः पुरुषः सहस्रशीर्षादिः सर्वज्ञः सर्वभोक्तृत्वादिगुणो मूलपुरुषात् त्रिनेत्राल्लब्धज्ञानो, यश्च तृतीयश्चतुर्मुखो बालोऽस्मिन् ब्रह्माण्डे स चोपनीतः सहस्रशीर्ष्णा वैधदीक्षया। स प्रोवाच चतुर्भिर्मुखैश्चतुरो वेदान्युगपदेवेति न पौर्वापर्यं वेदेषु। वर्तते च पौर्वापर्यं प्रतिमुखं मन्त्राद्युच्चारक्रमे युगपदेकमुखेनानेकवर्णोच्चारणमशक्यम्, तस्मान्न वेदेषु पौर्वापर्यक्रमः। तत्तन्मुखोच्चार्यनिरूपितपौर्वापर्यं तत्तन्मुखोच्चारितेष्वेव न मुखान्तरोच्चारितनिमित्तम्। सत्यपि कालक्रमे मन्त्रेषु न वेदेष्विति समानवयस्काः सर्वे वेदा अनादय इति। मन्त्रब्राह्मणसूत्राणां पौर्वापर्यं नानादित्वप्रतिबन्धकम्। तत्र वंशस्मरणं पारम्पर्यमवश्यमिति वेदाभिप्रायः। अत एव संगृहीतेष्वपि वेदेषु वेदबाह्यैर्न वेदैः संगृहीतास्ते। प्रत्यक्षे को विवादः। वेदानामनादित्वद्योतनाय चतुर्वक्त्रप्रतिपत्तिः प्रथमशाले। ततः प्रभृति पितैवोपनयेत्पुत्रमिति नियमोऽपि। कथमपि द्विजधनं वेदो नेतराधिकारमर्हति। प्रशस्ततम एष न्यायः।

या च श्रुतिः केनचिदुपन्यस्यते ब्राह्मणादिचण्डालान्तं वेदाधिकार इति स्वमतसमर्थनाय, सा तमेव श्रुतिहस्तमनुपनीतं दर्शयति। यद्युपनयनलब्धवेदमार्गः स्यात्, तदा कथं वदेदाचण्डालं वेदाधि-

कार इति सत्यद्विजः? न कोऽपि वक्ति लोकेऽस्मद्धने सर्वेषामधिकार इति। नाहं जाने कोऽयं परधने लक्ष्मीनारायणः? तस्मादवश्यं विज्ञेयं त्रैवर्णिकैरुपनीतानामस्माकमेवेदं महाधनं पितृपरम्परायत्तं वेदो नाम। मनुष्यमात्रं यद्यपि ज्ञानाधिकारि; तथापि शास्त्राय-त्तता दुर्घटेति। केषांचिदेवाधिकारः क्रमप्राप्तः। शास्त्रयत्तता हि वेदानामासनम्, तस्मिन्निषीदन्ति नान्यथा। शास्त्रं हि ब्राह्मणम-ष्टमे क्षत्रियमेकादशे वैश्यं द्वादशे समुपनयेदिति पितरं वेदसंस्कृतं वैदिकसंस्कारेणोत्पादकं एतावति वयसि पुत्रमुपनीय वेदमध्याप-येदिति शास्ति द्विजातिम्, न कंचनेतरम्। यत उपनयनोद्देश्यता ब्राह्मणादिशब्दैः शास्त्रे। ननु न मन्ये सूत्रं ब्राह्मणादिशब्दम्, सूत्रं च न मन्ये पक्षपातपरमिति चेत्, उक्तं पुरस्ताद्गर्भाधानमारभ्य संस्कारवत एवोपनयनमिति शास्त्रतात्पर्यमिति। यदि तथा न संस्कृतः, तस्माद्वेदः स्रवेत्, न प्रविशेच्च तस्मिन्। किं पाषाणस्यं लवणशाको य उपदंशनामा दृष्टचरः। तस्मात् सा जातिरन्यैव, या परम्परया वैदिकी। यत्र वेदः सफलः स द्विज एवार्हति वेदम्।

ननु कर्मठैरुपनीतैरेवायं वेदो विद्यारण्यादिमुनिभिरन्यथा व्या-ख्यातः, इदानीन्तनैर्बहुदर्शिभिर्बहुभाषाभिज्ञैर्विचारपरैः समीचीन-तया व्याख्यातस्तस्मादिदानीन्तनानां सर्वेषामधिकारः समञ्जसो न द्विजाभिमानिनामिति चेत्, युक्तमुपन्यस्तं बहुदर्शिनां बहुभा-षाभिज्ञानां विचारपराणामधिकार इति। परन्तु सम्प्रदायाभिज्ञता तु द्विजाधीनैवेति बहुदर्शित्वादिगुणा द्विजनिष्ठा एव वेदव्याख्या-नोपयुक्ताः, नेतरनिष्ठाः, यथा स्वातन्त्र्यशौर्यगाम्भीर्यबहुज्ञत्वादि-गुणा राजनिष्ठा एव राज्यव्यवहारहेतवो मर्यादापालकाश्च। अत एवान्यत्रान्यत्रान्यफलाय। ततो गुणसम्पन्नैर्द्विजैरेव व्याख्यातव्यः

सफलत्वात्, यतोऽनधिकारी पण्डितोऽप्यधिकं ब्रूयान्न मामिकम्। अतो नवीनैरप्रमाणकोटौ काव्यादिवन्निवेशितो वेदः, स एव प्रमाणमूर्धन्यः प्राचीनपरम्परानुसारिणाम्, प्रामाण्यं च मर्माभिज्ञतामूलम्, यतस्तैर्व्याख्यातो वेद उच्चतां याति न नीचताम्, इतरैस्तु नीचताम्। इयं हि व्याख्यातृसरण्यैव व्याख्येयता सिद्ध्येत्। सा च प्रयोजनाधीना। तत्सिद्धिः प्रामाण्यग्रहाधीना। तामेव न साधयति वेदसंस्कारहीनः। निर्बन्धहीनव्याख्यानं कुर्यात्तन्नेष्टं शिष्टानाम्, यतः प्रामाण्यात्भ्रश्यते। ततो निर्बन्धनिचितो वेद उपनयनपरम्परावताध्येतव्यो विज्ञातव्यश्चेति। तथाच यथासम्प्रदायमुपनयनमध्ययनं ज्ञानं ज्ञानफलं च व्यवस्थितं अधिकारिणो व्यवस्थिता इति शिष्टसम्मतो मार्गः। तत्तत्सम्प्रदायमज्ञात्वा तत्र तत्र प्रवेशः किं शिष्टसम्मतः? विचारयन्तु भवन्तः—कुतोयं वेदोऽवमन्यते विज्ञैरपि। अथोपकारारूढः कश्चिद्विद्वान्यतिरब्रवीत् सकलजनसाधारणो वेद इति, तत्र श्रुतिं च प्राह "यथेमां वाचं कल्याणीमावदानि जनेभ्यः। ब्रह्मराजन्याभ्यां शूद्राय चार्याय स्वाय चारणाय च। प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृध्यतामुपमादो नमतु"। अस्यायमभिप्रायः—परमेश्वरः सर्वमनुष्यैर्वेदाः पठनीयाः पाठ्या इत्याज्ञां ददातीति। अत्र दमुच्यते। अयमभिप्रायो न वर्णयितुं शक्यते केनचित्। शक्यत इत्थं तु, यजमानो यज्ञान्ते सन्निहितान्प्रति ब्राह्मणक्षत्रियवैश्यान् सभासदः शूद्रं शर्मिमित्रकर्मणि विनियुक्तं सेवकं कदाचिदुपकरणयोजनप्राप्तं चोद्दिश्य वदति—कल्याणीं श्रद्धासम्पन्नां वाचं सन्निहितेभ्यो जनेभ्यः सामान्यतो विशेषतश्च ब्राह्मणक्षत्रियवैश्यशूद्रसेवकेभ्यश्च प्राप्तेभ्यो वदामीति प्रतिज्ञाय, यथेति तामेव प्रतिज्ञातां वाणीं आव-

यति दक्षिणादानाद्देवानां प्रियो भूयासमिति। एतेनेदं व्यज्यते सभ्यपूजया ऋत्विग्दक्षिणया च परमेश्वरो देवाश्च तुष्टा भवन्तीति। तेनेशतुष्ट्या देवतुष्ट्या च हेतुना मे कामः समृद्ध्यतामिति सभा प्रार्थ्यते। अदः परोक्षं सुखं मे समीपे नमतु प्रह्वीभवत्विती्शो देवाश्च प्रार्थ्यन्ते। तेन दक्षिणान्तयज्ञेन सभ्याः परमेश्वरश्च तुष्यति, तेनाभीष्टसुखं च लभत इति। अत्र मन्त्रे परोक्षाणां देवानां तथा सुखस्य चाङ्गीकारो व्यज्यते। अयमर्थः सकलवैदिकसंमतः, त्वदुक्तार्थे को वैदिकः संमतिं यच्छेत्? यतो वैदिकानामयं सिद्धान्तः,—प्रामाणिकपरोक्षवेत्तारो विद्वांस इति। इतरेषां प्रात्यक्षिकमात्रवेत्तारस्तथेति वेदो न प्रत्यक्षमात्रपरः। तस्मात्संप्रदायाद् बहिरर्थं वर्णयतोऽस्य मते न वर्णाश्रमविभागः,न वेदमहत्त्वम्, ततो यथेच्छव्याख्यारम्भः, ततोऽप्रामाण्यमित्यादिदोषा आपद्येरन्। सांप्रदायिकार्थे तु न दोषाः, स तु ब्राह्मणसूत्रयोः सांप्रदायिकयोश्चारितार्थ्यमनुरुध्य भवेत्। किं त्वं वैदिक; तर्हि वैदिकेन पथा गच्छ, न चेत् कस्तेऽधिकारो वेदमार्गे शुभाशुभविचारे? किमन्यगेहमन्येन परीक्ष्यते? किं स्वगेहमन्यस्मै प्रदर्शयति यत्र प्रमादप्रसङ्गः? तस्मात् द्विजा एवाधिकारिण इति युक्तम्। यदि वर्णाश्रमविभागोऽवगतः, तर्हि पितैवोपनयेत्पुत्रमिति वैदिकनिर्बन्धमनुसृत्य विहितोपनयनस्य वेदाध्ययनं नान्यस्य, तदा सर्ववर्णाध्ययनविधिः कथम्? वेदाध्ययनार्थं दीक्षितपुत्रस्याभावात्। यो हि तथा, सोऽध्ययनाधिकारीति नियमो वैदिकानाम्। क्षत्रियवैश्यपुत्रांस्तूपनीतपित्रनुज्ञातः पुरोहित उपनयति, तथाप्यधिकारितावच्छेदकं परम्पराप्राप्तोपनयनत्वमव्याहतम्। पितैवोपनयेत्पुत्रमित्यस्य तूपनयननिरपेक्षसंस्कारसमर्थजन्यत्वमुपनयनोद्देश्यतावच्छेदकमिति पर्यवसि-

तोऽर्थः। तेन न हिरण्यगर्भेऽव्याप्तिः, नाप्यनुपनीतपारम्पारिकेऽतिव्याप्तिः, ईश्वरे नित्यसिद्धज्ञानत्वादन्यत्रोपनयनसापेक्षत्वात्। संस्कारेण जातिपरावृत्तिकथनं तु न युक्तम्, जातिर्नित्येति वैदिकदृष्टिः। सा कथं परिवर्तेत? प्रत्यक्षं दृश्यन्ते शास्त्रायत्तत्वावच्छेदकद्विजत्वव्याप्यास्तिस्रो जातयः, नातो द्विजेतरेषामधिकारः, स्याद्वृत्तिविपर्ययस्तु। अत्र देवानांप्रियः पृच्छयते त्वदुपन्यस्तमन्त्रात्सर्वे वेदाः पठनीयाः पाठ्याश्चेति कथं लभ्यते? न काचिदक्षरसंगतिः। अक्षराणि तु आ वदानीति। अस्तु अग्रेऽधिकारिनिरूपणप्रसङ्गे चारणोऽतिशूद्रोऽन्त्यज इति व्याख्यातः। कथमन्त्यजो वेदाधिकारी? किं तस्यान्त्यजत्वम्। वयं तु व्रूमो वेदाद्दूरतरत्वम्, अत एवातिशूद्रत्वम्। कथं तस्याधिकारो विधीयतेऽनेन मन्त्रेणोद्देश्यतावच्छेदकचण्डालत्वविरुद्धः? यद्यधिकारः, वर्णत्रयेण गतार्थता

ननु वर्णत्रयाद् बहिरपि विधीयत इति चेत्, किं तद्विधिलिङ्गम्? लिङ्गं तु प्रतिज्ञाया आ वदानीति। प्रतिज्ञातं च प्रदर्शितं प्रियो देवानामित्यादि। नास्य वाक्यस्य वक्ता परमेश्वरः, भूयासमिति प्रार्थनादर्शनात्कामसमृद्धिप्रार्थनादर्शनाच्च। कश्चिद्यजमानोऽस्य वक्तेति युक्तम्। तस्माच्चारणशब्दो नान्त्यजपरः; तस्य वेदाध्ययनकल्पनाया गौरवात्प्रमाणाभावाच्च। द्विजेतरेषु वेदश्रवणनिषेधाद्वेदकर्माविरोधी परिचारकादिः कल्प्यः; ततो मन्त्रार्थः समञ्जसः। अथवा प्रकृतशूद्रस्य विशेषणं चारणायेति। चरणो यज्ञपुरुषस्य भवश्चारण इति समञ्जसम्। चतुर्णामेव वर्णानां यज्ञपुरुषाङ्गत्वेन यज्ञियत्वमिति द्योतनाय स्वायेति विशेषणम्। तस्माद्यज्ञाङ्गचातुर्वर्ण्योद्देशेन यजमानोक्तिः समञ्जसा। अग्रिममन्त्रे "बृहस्पते अतियदर्य" इति बृहस्पतिशब्देन काचिद्देवता प्रार्थ्यते

संबोध्य यजमानेन। तस्मान्नात्र मन्त्रे सार्ववर्णिकाध्ययनविधिगन्धोऽपीति द्विजमात्राधिकारिको वेदः। किंच किं पालयेत्तमपि द्विजत्वं चण्डालः? कस्य कन्यामुद्वहेत्? यद्युत्पत्तिजातिकन्यां, तदा द्विजत्वहानिः। द्विजस्येति चेत्, किं द्विजत्वेन सह कन्यां च यच्छसि। धन्या तवेयं वैदिकता वर्णसङ्करनाम्नी। ननु न सन्ति वर्णा इति चेत्, पूर्वमेवोक्तं तव मते वर्णाश्रमविभागो नास्तीति। वेदे त्वस्ति विभागः, ततो न सार्ववर्णिकः। यदुक्तं सर्वाधिकारत्वे परमेशसृष्टत्वं हेतुरिति, तदयुक्तम्; ईशसृष्टेऽखिले जगति दायविचाराभावप्रसङ्गात्। सर्वे सर्वाधिकारिण इति तव मतम्। तत्र न्योन्यस्वत्वप्रतिबन्धान्न कस्यापीति प्राप्तम्। यदि न प्रतिबन्धः, तर्हि न स्वत्वं किञ्चित्करम्। तस्मादीशविनिर्मितेऽपि स्वत्वनियमो मन्तव्यः, स च प्रमाणाधीनः। तत्र वेदस्तत्त्वे प्रमाणमुपनयनं पारम्परीकम्, ततो न सर्वाधिकारसिद्धिः। वस्तुतस्तु तवेयं च्युतिः, क्वचिद्वेदमनादिं क्वचिदीशकृतं वर्णयसे; पत्युद्वयो दायनिर्णयशास्त्रस्य जागरूकत्वात्। द्विजैरुपनीतैरध्येतव्य इति हि शास्त्रम्। तन्न मन्ये इति पूर्णपाण्डित्ये प्रकाशिते, कोपि ब्रूयात्किं त्वं न दायादो वेदे? किं नासौ दायनिर्णयः? वेदस्तु वदति वेदश्रोतुः शूद्रस्य त्रपुजतुभ्यां कर्णपूरणं पद्युश्मशानत्वेन वक्तुर्जिह्वाच्छेदं च। एतेनायं दायो द्विजानामेवेति। अन्यथा वेदेऽयं दण्डो दृष्टो न स्यात्। नहि किञ्चिज्जगति सर्वाधिकारिकं दृष्टचरम्; तारतम्यव्याप्तत्वात्। अत एव तत्र तत्राधिकारिनिर्देशः। का विद्या निर्णीताधिकारिका न भवति? किं तद्वस्तु तथा? "ऋचः सामानि यजूंषि। सा हि श्रीरमृता सताम्" इति श्रुतौ द्विजत्रय उक्तः। अमृतेत्यच्युच्छिन्ना, सतामिति परम्पराप्राप्तोपनयनवतामित्येवार्थः,

श्रियोऽमृतत्वविशेषात्, आगन्तुके तदयोगात्। तस्माद्वेदसंमतं दायमाश्रित्योपनयनविधिनाऽध्येतव्य इति वैदिकः पन्थाः। अवैदिकानां निर्णयो यथेच्छमवैदिकत्वादेव। किं काको हंसमर्यादानिर्णयाय प्रभुः? ईशनिर्मितेष्वपि मुक्ताफलेषु किं दायाद ईशसृष्टोपि काकः? कोऽयं बलात्कारोऽतदर्थेष्वप्यनधिकारिणाम्। किमपात्रे दानमुपकार उतापकारः? किं तत्तेषु शोभते? फलति वा? तस्मादपरीक्षककथा सर्वमनुष्यसाधारणो वेद इति। ईदृशा अपि वैदिका येषां वैदिकः पन्थाः परम्पराप्राप्तो न रोचते। अभिनवा एते वैदिकाः। कीदृशीयं वैदिकता या म्लेच्छैः श्लाघ्यते निन्द्यते च पारम्परीकैः? तथा पन्थानमाश्रय, यः शिष्टक्षुण्णः, यतः शास्त्रप्रत्यक्षविरुद्धं त्वद्व्याख्यानम्, शास्त्रं तूक्तम्। प्रत्यक्षमपि शासनायत्तत्वम्। तेन न ते स्वातन्त्र्यमूलः प्रमादः। सत्यवैदिकता च लोके जीवेत्। तस्मात्—ये वैदिकास्त एवेह श्रुतेर्मार्गं विजानते। वारीणां मत्स्य एवैको मर्यादां वेद नेतरः॥ १॥

ननु प्राचीनैर्वेदा हिंसापरत्वेनान्यथा व्याख्याताः, सत्यप्यन्यथोपाये, तस्मादिदानींतनानामेव व्याख्या समञ्जसा, यत्र न बीभत्सप्रसक्तिः? युक्तमुक्तं सति तथात्वे। प्राचीनैस्तु ब्रह्मपरतया व्याख्याताः। तर्हि कथं कर्माणि? अधिकारसिद्ध्यर्थमिति। किं हिंसात्मकेनापि तेनाधिकारसिद्धिः? क्व हिंसा, कस्य, कस्मै; को हेतुः, को विधिः, केन कृता? ननु यज्ञे पशोर्देवतुष्टये वैदिकत्वसकामत्वादिहेतुना वैदिकविधिना यजमानेन कृतेति चेत्, किमियं हिंसा? किं विधिविषयो विधिना गच्छन् पापमाचरति? किं यथेष्टं गच्छन्? नेदं पश्वालम्भनं यथेष्टम्, किन्तु वैधम्; तस्मान्न यजमानेन कृता हिंसा। पशुस्तु गतः स्वर्गं विधिबलात्। किं ह-

न्तव्याः प्रशवोऽन्ये वा ? विधिश्च तथैव । ईशाज्ञा हि विधिः कथमुल्लङ्घ्येत विदुषा ? तर्हीयं हिंसा केन कृता ? न केनचित् । तर्हि पशोः का गतिः ? स्वर्ग इत्यनवद्यम् ; यज्ञाङ्गत्वेन वेदसंस्कारात् । तर्हि 'मा हिंस्यात्सर्वाभूतानी' ति शास्त्रस्य का गतिरिति चेत्, त्वत्संमतैवेति वदामः । ननु मम हिंसासामान्यं न संमतमिति चेत्, कस्य न संमतम् ? उक्तमनुपदमेव नेयं हिंसेति । यतो न यजमानः कामचारी । तर्हि पिष्टपशुविधानं वदन्ति केचित्, कथं तदुपपद्यते ? उपपद्यते वेदेष्वश्रद्धयाऽनभिज्ञतया च । किं राज्ञाऽऽज्ञप्तो दूषणमाधत्ते हिंसन्नपि यं कञ्चन ? वेदानां वक्ता ईशः, तेन सृष्टं यज्ञियं द्रव्यं पशुर्नाम, तद्विधिना जुह्वतोऽपि किं दूषणम् ? परं च भूषणं विधिपरतन्त्रत्वं द्विजानाम् । ननु भक्षणाय हिनस्ति यजमान इति चेत्, किं यथेच्छं भुनक्ति सशास्त्रमथवा ? आद्ये न यजमानः, किंतु हिंसकः । द्वितीये शास्त्रपरतन्त्रत्वाच्छास्त्रार्थता, न भोजनविषयता पशोः । यथाऽऽलम्भनं शास्त्रार्थस्तथा हविःप्रतिपत्तिरपि शास्त्रार्थः ॥

ननु भागवते यज्ञियाः पशवो लोहशृङ्गा यजमानं हिंसन्तीति श्रूयते, तस्माद्यज्ञवधो दोषाय, ततः पिष्टपशुरिति चेत्, किमनया कथया यज्ञो निषिध्यते, उत पिष्टपशुर्विधीयते ? आद्ये न तथा सामर्थ्यं भागवते, येन वैदिको यज्ञो निषिध्येत । न द्वितीयः; पिष्टपशुविधानादर्शनात्तत्र । यदीयं हिंसा भवेत् तदा भवेदपि पिष्टपशुः । यदि विधावपि दोषास्तदा ज्ञातं बलं विधेः । ननु पिष्टपशुवचनान्युपलभ्यन्ते, का गतिस्तेषामिति चेत्, इयं तेषां गतिः । श्रूयते काचिदाख्यायिका वेदे, कदाचिद्देवासुरसरीसृपमानुषा ब्राह्मणं शरणं जग्मुः, तदा तेन चतुर्वक्त्रेणोपदिष्टं युगपत् 'ददद्द' इति;

तदा देवैर्दमः, असुरैर्दया, सरीसृपैर्दशः, मानुषैर्दानमिति पृथक्पृथगवबुद्धो धर्मः, तदासुरैर्दयापरैः कल्पितानि स्वबोधानुकूलानि वचनानि वेदतात्पर्यानभिज्ञतामूलानि "अहिंसा परमो धर्मः" इति सिद्धान्तप्रतिपादनाय। अत्र वादे याज्ञिकैरयाज्ञिकैर्वा "मा हिंस्या" दिति विधिः पालित एव; परन्तु याज्ञिकैः पशुःस्वर्गं गमितः, हिंसा च न लब्धा, वैदिकत्वं व्यक्तीकृतम्, स्वर्गोऽपि जिघृक्षयते, अवैदिकैः पशुः पालितः, वेदश्रद्धा शिथिलिता, अवैदिकत्वमपि व्यक्तीकृतम्, स्वर्गेतरजिघृक्षयते स्वर्गो वा। वेदप्रामाण्यरूढास्तु याज्ञिका एव। ननु किमवैदिकाः पिष्टपशुवादिनः? सत्यं तथा। कुतः? ब्राह्मणसूत्रप्रसिद्धपश्वङ्गविभागोपप्लवात्। ननु कल्प्यन्तेऽङ्गानि पशोरिति चेत्, अत एवोच्यत उपप्लव इति। यद्यङ्गानि किं कल्पनया? यदि कल्पना? कुतो विभागः? विभज्याभावात्। यदि कल्पनया विभागसम्भवः, तर्हि स्वर्गे तस्य लोहशृङ्गसम्भवः। ननु पिष्टपशुः स्वर्गं नाधिरोहतीति चेत्; यजमानस्यापि सैव गतिरर्थसिद्धा। किं पिष्टपशोर्लोहशृङ्गमङ्गीक्रियते अथवा स्वर्गस्त्यज्यते? ननु हिंसाभावाल्लोहशृङ्गाभाव इति चेत्, असावेव प्रत्यक्षपशौ न्यायः। विधेरनादरत्वाद्वक्तुः सर्वज्ञत्वाद्यज्ञभोक्तुः स्वतन्त्रत्वाद्यजमानस्य विधिपरतन्त्रत्वात्पशोर्द्रव्यत्वाच्च न काचिद्धिंसा। भागवताभिप्रायस्तु स्वर्गैषणा त्याज्या मुमुक्षुणेति। तस्मात्पिष्टपशुरवैदिकः कैश्चित्कल्पितः। यतो द्रव्यमप्यस्ति हिंसापि नास्तीति पिष्टपशुकल्पना न न्याय्या। मा हिंस्यादिति विधिर्हिंसामुद्दिश्य, पश्वालम्भनविधिर्वैदिकानिति। यथा समे यजेतेति विधिर्विषमदेशे यष्टारं प्रत्येव, अन्यत्रानुवादः, तथा मा हिंस्यादिति हिंसामात्रे समीक्ष्यते तत्रैव प्रविष्टस्तद्विरोधी पश्वा

लम्भनविधिर्न हि सेति प्राचीनव्याख्यानमेव समञ्जसं प्रामाण्यपरिपन्थित्वाद्वेदानाम्। प्रामाण्यपरिपन्थिता नव्येष्वेव, वधेऽपि हिंसाकल्पनात्। तस्माद् वेदप्रामाण्यं जानन्तो वैदिकाः प्राचीनेन पथा ब्राह्मणसूत्रसिद्धेन गच्छन्तु, न काल्पनिकेन केनचित्। यतः सर्वपुराणप्रणेतृव्यासशिष्योऽपि जैमिनिः पिष्टपशुनामापि न जग्राहेति प्रसिद्धम्। तस्मादर्वाचीनैर्वेदप्रविष्टैः प्रच्छन्नबौद्धैः कल्पितानि पिष्टपशुवचनानि मुग्धैरप्राप्तेऽपि प्रसङ्गे इति सर्वमनवद्यम्। "यस्य कस्य तरोर्मूलं यस्मै कस्मै च रोगिणे। येन केनापि दातव्यं यद्वा तद्वा भविष्यति" इति श्लोकमाह्वयति पिष्टपशुः। नायं यज्ञः किंतु यज्ञाडम्बरः, तेन स्वर्गाडम्बरोऽपि। ननु ऋग्वेदब्राह्मणे "पुरुषं वै देवाः पशुमालभन्त" इत्यादिना पुरुषादिभ्यो मेधोत्क्रमणमुक्त्वा "उत्तरत उत्क्रान्तमेधा अमेध्याः पशवस्तस्मादेतेषां नाश्नीयात्त मस्यामन्वगच्छन्त्सोनुगीतो व्रीहिरभवत्तद्यत्पशौ पुरोडाशमनुनिर्वपन्ति समेधेन नः पशुनेष्टमसत्केवलेन नः पशुनेष्टमसदिति समेधेन हास्य पशुनेष्टं भवति य एवं वेद" इत्यादिवेदवाक्यात् व्रीहौ मेध्यतमत्वाभिधानात्प्रत्यक्षपशोरमेध्यत्वाभिधानात्सिद्ध्यति पिष्टपशुः इति चेत्, न सिद्ध्यति पिष्टपशुः। तर्हि किं सिद्ध्यत्यस्माद् ब्राह्मणात्। इदं तु सिद्ध्यति पुरोडाशप्रशंसनम्। कुतो बिभेषि विधिपरोऽपि विधेः? विधिरपि कुतोपि न बिभेति स्वतन्त्रः। यजमानोऽपि कुतो बिभेति शास्त्रपरतन्त्रः? तस्माद्यत्र पशुरुक्तस्तत्र पशुरेव, यत्र पुरोडाशस्तत्र पुरोडाश एव, अत एवोपसंहारे "य एवं वेदेति" वेदनस्यापि पशुयागफलमुक्तम्। तत्र सिद्धेऽन्यथार्थे यत्नो न श्लाघ्य इति न्यायेन पिष्टपशुमपि जहासि किम्? यथा पुरोडाशेन पशुं प्रत्यक्षम्। तस्मादिदं पुरोडाशप्रशंसापरम्, पश्वादिशब्दाः

प्रसिद्धपशुपराः, यजमानो विधिपरो न स्वरुचिपरः, वेदार्थः प्राचीनो व्याख्यातो विरोधरहितः समञ्जसः। यतो वेदो न व्याख्यातृशरणः, व्याख्यातारो वेदशरणाः, तस्माद्वेदव्याख्यानं वैदिकैरेव परम्परासमधिगतवेदैः व्याख्येयो नेतरैरिति बहु पल्लवितेनालम्।

पुनरत्र पृच्छयते येन पिष्टपश्वादराय ब्राह्मणमुपन्यस्तम्, तेनैवान्ते उपसंहृतम्, काम्ये कर्मणि प्रत्यक्षं मांसमुक्त्वा निष्कामकर्मणि "य इच्छेत्पुरुषोऽत्यन्तमात्मानं निरुपद्रवम्। स वर्जयेत मांसानि भूतानामिह सर्वशः" इति सकामनिष्कामभेदेन मांसस्य ग्रहणाग्रहणमुक्तम्, तत्कथं युज्यते? यत्र मांसप्राप्तिः, तत्र पिष्टपशोर्मांसविरोधी, ततः कथं सकामस्य मांसप्राप्तिर्निष्कामस्य कथं त्यागः? विधिप्राप्तं मांसं व्यवस्थापयसि, यदि पिष्टपशुस्तर्हि कथमेषा व्यवस्था? यदि निष्कामोऽसि, मा कुरु यज्ञम्, अकामस्य कर्मणामप्राप्तेः। यदि करोषि, तर्हि किंचित्कामयसे, किंचित्करोष्यपि, तत्र प्राप्तोऽपि यज्ञः, तत्र सकामस्य किं प्राप्तं त्वन्मते? तद्भोक्तव्यमेव विधिना। प्रवाहप्राप्ते को विवादः, इति तवाभिप्रायः, त्यक्तः पिष्टपशुः, त्वया मांसप्राप्तये तदैव मांसं व्यवस्थाप्येत। रागतस्तु मांसमप्राप्तमेव, मा हिंस्यादिति निषेधात्। किंच धर्मो द्विविध उपन्यस्तः सकामो निष्काम इति। एतेन द्वयोर्धर्मत्वेन कथं निष्कामेन त्यागः कार्यः? कामाभावादिति चेत्, अप्राप्तिरियं यज्ञस्य। सकामत्वे अकामत्वे वा विधिना प्रतिपादितं कथं त्यज्येत? अत एवाग्राणपक्षः श्रौतः। श्रुतेर्न मांसभोजने तात्पर्यम्, किंतु यज्ञपुरुषप्रतिपादितविधिपरत्वे यजमानस्य। यदि धान्यमेव पशुशब्दार्थस्तदा सर्वेषां नित्यं मांसभोजनप्रसक्तिः, न चेद्यज्ञे मांसभोजनं दुर्वारम्। अत एव प्रत्यक्षमांसमङ्गीकृतं त्वयेति समाहितः

पिष्टपशुवादी। अतः प्राचीनैर्व्याख्यातो यथा, तथैव सुस्थ इति नन्दन्तु वैदिकाः।

वस्तुतस्तु परम्पराप्राप्तोपनयनवतां वेदे प्रामाण्यग्रहदार्ढ्याद्वैदिकपरम्पराप्राप्तव्याख्यानमेव समञ्जसम्, नेतरजनसमञ्जसं समञ्जसं। यतो वैदिकपरम्परायां तेषां समञ्जसता व्यर्था। कस्यमन्यमार्गः स्वसामञ्जस्यप्रदर्शयिता? एतेन स्वसामञ्जस्यमूलमश्वमेधादीनामन्यथा व्याख्यानं निरस्तम्, स्वसामञ्जस्याप्रयोजकत्वाद्विधेस्त्याज्यत्वादिति। विधिर्वेदः, तद्वक्ता तत्प्रतिपाद्यश्च तज्ज्ञपुरुषो वेदाभिन्नः, तेन कृतो यज्ञः, यजमानादयो भृत्या न स्वतन्त्रा इत्यभिप्रेत्याह श्रुतिः "यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः।" इति। यज्ञेन इज्यतेऽनेनेति करणसाधनेन वेदेन विधिना, यज्ञं इज्यत इति यज्ञस्तं परमेश्वरं यज्ञभोक्तारम्, देवा दीप्तिमन्तोऽधिकारिणः, अयजन्त इष्टवन्तो यथाप्राप्तम्, न यथेच्छम्। तानि ते, धर्माणि लिङ्लोडादिप्राप्तानि कर्माणि धर्माः, प्रथमानि अप्रदृष्टस्वपूर्वकालानि अनादीनि अनादय इति यावत्; तन्निर्दिशति आसन्निति, न तानि कल्पितानि वचनानि कर्माणि वेत्यर्थः। ते यष्टारो विधिपराः, महिमानः पूज्यतमाः, नाकं दुःखरहितं स्थानम्, सचन्त प्राप्तवन्तः, यत्र, पूर्वे प्राचीना यष्टारः, साध्यास्तन्नामानो देवाः, सन्तीति। तस्माद्विधिपराणां वैदिकानामनल्पफलम्, विधिस्तु स्वतन्त्रः सफलश्च। यतो यज्ञाः स्वतन्त्रेण वेदपुरुषेणेशेन कृताः, न वैदिकैः परतन्त्रैः, स्वर्गस्तु लब्धः पारतन्त्र्यफलम्। ननु कस्मादयं पक्षपातो वेदे? नायं पक्षपातः, किन्तु न्यायः। यथा गौः ईश्वरेण सृष्टा, तथापि तत्पालनाधिकारो

न म्लेच्छानां हिंसासंभवात् । नहि गवि सर्वेषामेकतात्पर्यम् । द्विजाः पूजयन्ति, म्लेच्छा मारयन्ति । तस्माद्येभ्यो निर्विघ्नं सुखं तेषामेव तद्रक्षणाधिकारो यथा, तथा परम्पराप्राप्तोपनयनानां वेदरक्षणाधिकारः; अन्यत्रासंभवात् ॥ इति ।

अस्ति कश्चिद्ब्रह्माण्डमण्डले षडङ्गमण्डितो वेदो नाम मन्त्र-विनियोगेतिकर्तव्यात्मा संहिताब्राह्मणकल्पनामधेयः पुरातनो ग्रन्थः, यदुत्पत्तिकालो नाद्यापि कैश्चन निश्चीयतेऽनुमीयते वा दृष्टान्ताभावादुपष्टम्भकाभावाच्च । इदमेवास्य पुरातनत्वं यदननुमितानिश्चितोत्पत्तिकालत्वे सति वर्तमानत्वम्, यथेश्वरस्य यत्किंचित् दृश्यते श्रूयते वा, तस्मात्सर्वस्मात्पुरा विद्यमानत्वं पुरातनत्वमनादित्वे पर्यवस्यति । तस्मादनादेर्वक्ताऽनादिमीशं विना कः संभवेत् ? न हि कश्चिज्जीवोऽनादिरस्य वक्तेति वक्तुमुचितम् । शिक्षाधीनज्ञानस्य नैतादृशं ज्ञानं वचनं वा संभवति, येन ज्ञानेनात्यन्तपरोक्षं वस्तु निरूपयेत् । यच्च वचनं देवा इति वक्तव्ये देवास इत्युक्त्वा पाणिन्यादिशब्दाचार्यसंमतो वक्ता वचनं वा । वक्ति च शब्दाचार्यः "छन्दसि दृष्टानुविधिः" इति तत्र प्रयोगमात्रसाधुताम् । न च वागियं संस्कृता, शाब्दिकसंस्कारमनादृत्य प्रवृत्तत्वात्, अत एव प्रातिशाख्यं तत्तच्छाखायाम् । नापि प्राकृतो, कस्मिन्नपि देशे तथावाचोऽनुपलम्भात् । तस्मादलौकिकानादेर्वेदस्यालौकिकोऽनादिरीश्वर एव वक्ता ॥

अत्र केचिदर्हन्मतानुयायिनः प्राचीनाः पौरुषेय इति प्रत्यवतस्थिरे, तद्यजुश्चोपवीतं तदाश्रितक्रियां च । तदाप्यासन्नेवातिपुरातनत्ववादिनः । किं पौरुषेयवादिनः पुरातना उत पुरातनवादिनः पुरातना इति विमर्शे पुरातनवादिनः पुरातनाः, अन्यथा पौरुषे-

थवादानुत्थानात्। नहि पौरुषेयवादनिरासार्थी पुरातनवादः, यतो धत्ते वेदोऽनुश्रव इति नाम पुरातनसंमतम्। अत एव श्रुतिरित्यपि नामान्तरम्, यतः श्रूयत एव। नतूत्पत्तिकालो निश्चितोऽनुमितो वा द्वाभ्यामपि। नच प्रलये वक्तुरभावाद्वेदाभावे पौरुषेयत्वं गले पाशायत इति वाच्यम्, तदानीमपि वक्तुरीश्वरस्य सत्त्वात्। नहि वक्तुरीश्वरस्याभावेऽग्रिमपुरुषाणां व्यक्तं वक्तुं शक्तिः, जातिबधिराणामपि वाग्व्यवहारप्रसङ्गात्। नहि तथा कश्चिद्दृष्टः श्रुतो वा। यतः शिक्षकं वक्तारमन्तरा वैखरी नोत्पन्ना, ततो वैखर्यात्मकस्य पुरातनस्य वेदस्येश्वरः पुरातनः कारणपुरुषो वक्तेति वक्तुं युक्तम्। एवमेव प्राकृत्योऽपि सर्वा भाषाः पुरातन्यः, तासामपि निर्मातुरनुपलम्भादीश्वरे सामञ्जस्याच्च, तत्तद्भाषायां मन्त्रोपलम्भादीश्वरेतरस्य तत्र शक्तिमाधातुमशक्यत्वात्, "त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शंभुमते मताः। प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा॥" इति शिक्षावचनात्। वेदः संस्कृतं प्राकृतं चेति तिस्रोपि भाषाः पुरातन्यः, संस्कृतसाधुत्वबोधकाः पाणिन्यादय आचार्याः, भाषास्वपि केचिदगस्त्यादय आचार्याः श्रूयन्ते, वेदाचार्यो महेश्वर एव। तत्संप्रदायविदो महर्षय इति आचार्या इति च व्यपदिश्यन्ते। ननु भाषामन्त्राणामपीश्वरमूलत्वाद्वेदत्वापत्तिरिति चेत्, न; कस्यामपि शाखायामपाठात्, वेदत्वाभावेऽपीश्वरोक्तत्वात्, वेदतुल्यत्वात्, कर्णोपकर्णतया लब्धत्वात्, अचिन्त्यशक्तित्वात्, तन्त्रत्वेनाङ्गीकारो युक्तः। तनु विस्तार इत्यस्य तन्त्रमिति रूपम्, स च विस्तारो देशकालानवच्छिन्नः, नहि तावन्तं देशं तया तया भाषया नियन्तुं शक्नोति कश्चित्। यया भाषया यावन्तोऽवबुध्यन्ते, तावतः पदार्थानपरोक्षीकृत्यास्यैतन्नामेति न संकेतितुं शक्यते, प्रत्येकभा-

षाया आनन्त्यात्पदार्थानन्त्यात्संकेतयितुर्जीवस्याल्पज्ञत्वादिति दिक्। कर्तुरनुपलम्भात्कालानिश्चयात्प्रलयानङ्गीकारपक्षे पाश्चात्यसाहसिकपक्षे च पुरातनवादस्य सुस्थत्वात्। 'अस्य महतो भूतस्य निःश्वसितं" इतीश्वरोपलम्भादुपलब्धं वक्तारमनादृत्य वक्त्रन्तरकल्पनाया अविचारमूलत्वात् पौरुषेयवादः सुत्यजः॥ ननु युक्तमुक्तप्रसिद्धेश्वरश्रद्धालूनां समाधानम्, तदनङ्गीकर्तॄणां समाधानं तु दुर्घटं इति चेत्, न; वेद एव तत्प्रसिद्धेः। किमीश्वरानङ्गीकारो वेदानङ्गीकारमूलः, उतेश्वरानङ्गीकारमूलो वेदानंगीकारः? नाद्यः, उपलब्धवेदानङ्गीकारे मानाभावात्। तदङ्गीकारे तद्वक्तुरीश्वरस्याप्यङ्गीकारात्। न द्वितीयः, मानाभावात्। नचानुपलब्धिर्मानमिति वाच्यम्, सर्वेषामपि स्वस्वमूलपुरुषत्यागप्रसङ्गात्, अनुपलब्धेस्तुल्यत्वात्। नचार्थापत्त्या तत्सिद्धिरिति वाच्यम्; तर्हि किमपराद्धमीश्वरेण जगन्मूलपुरुषेण? यथा मूलपुरुषानङ्गीकारे वंशानुपपत्तिस्तथा जगदनुपपत्तिरीश्वरानङ्गीकारे, तेषां मूलापेक्षत्वात्। नहि निर्मूला सृष्टिरुपपन्ना। यो हि सर्वस्य जगतो मूलं सर्वशिक्षाप्रवर्तकः पुरातनतमः परमेश्वरः, स एवानादिवेदानां वक्तेति समञ्जसम्। न चोभयं मन्यामहे इति चेत्, उपन्यसनीयमेतत्स्वातन्त्र्यं कुतो लब्धमिति॥ नन्वनादित्वं वेदानां दुर्वचं तत्रार्वाचीनराजकथोपलम्भाद्भूतनिर्देशाच्चोपन्यस्तकथोत्तरकालिकत्वे उपन्यसनीयविषयसिद्धेर्भूतकालनिर्देशोपपत्तेश्चेति चेत्, न; सर्वज्ञस्य स्वतन्त्रस्येश्वरस्य न विषयसिद्ध्यधीना वाग्व्यवहृतिः, किंतु वाग्व्यवहाराधीना विषयसिद्धिः, ईशपरतन्त्रत्वाद्विषयाणाम्। भूतकालनिर्देशस्तु सर्वज्ञदृष्टौ भविष्याणामपि जातप्रायत्वादुपपद्यते, त्रैकालिकतदीयज्ञानस्य सदातनत्वात्। इतिहासोपन्यासिनां तथा

संप्रदायाच्च न विरुध्यते भूतनिर्देशः, यथा रामायणे रामावतारात्प्रागेव वाल्मीकिवचनं "रामो राज्यमचीकरत्" इति। यच्च ऋषिभिः कृता मन्त्रा इति कथनं वादिनाम्, तदृषिशब्दार्थमविज्ञायेति मन्तव्यम्, ऋषयो मन्त्रद्रष्टार इति तद्व्याख्यानस्योपलम्भात्। तस्मात्तानि तानि मण्डलानि तैस्तैः ऋषिभिर्दृष्टानि, नतु कृतानि, अर्थंप्सव ऋषय इति परिभाषणाद्यो यदर्थप्रियः स तदर्थप्रतिपादकं मन्त्रं दृष्टवानिति सांप्रतम्, ननु श्रौत्रैकविषयस्य दर्शनमनुपपन्नं शब्दस्येति चेत्, न; चक्षुःश्रवःसु सर्पजातिषु तत्प्रसिद्धेः, तपोबलेन महर्षिष्वपि तत्संभवात्। इयमेव सिद्धानां सिद्धिर्यदितरासाधारणत्वम्॥ ननु तथा न दृश्यन्ते, तत एतद्वचनं मन्तुमशक्यमिति चेत्, किमयं तवापराध उत सिद्धानाम्? किंतु सर्वस्यापि वस्तुजातस्य दर्शनं देशकालाधीनम्। नहि सर्वदा सर्वं पश्यति कश्चित्, तस्माद्दृष्टान्तयुक्तियुक्तं मन्तव्यमेव भवति सति बुद्धिवैशारद्ये। तत्र तत्र कृधातुप्रयोगास्तु तत्र तत्रोपलब्धकर्मणा नेतव्याः। द्यूतव्यभिचारादिविषयोपन्यासस्तु निषेधोपन्यासार्थम्। एतेनाधुनिकहूणमतानुयायिन उदुम्बरकृमिसमानदृष्टयोऽपि समाहिता इत्यवधेयम्॥

स चायमनादिर्वेदोऽनादेरीश्वरादाविर्भूतोऽनादिसिद्धत्रैवर्णिकैः परम्पराप्राप्तोपनयनसंस्कारैरनुश्रवत्वं पालयद्भिः कर्णोपकर्णतया समधिगतः पालितश्च। तत्र केचिन्नास्तिकवञ्चिता उदरम्भरयः क्रियास्वलसाः प्रपञ्चपरमार्थोभयविवेकशून्याः पण्डितंमन्या उपनयनं वेदाध्यनं च तत्यजुः, यत्त्यागे वर्षसहस्रं तन्यूनो वा कालो व्यतीयायेत्यनुमीयते। केचित्तु बुद्धावतारमारभ्येति, केचित्तु म्लेच्छप्रवेशान्तरमित्याहुः। ननु वेदोऽयमार्यावर्त एव दृश्यते, नान्यत्र, ततो नेश्वरप्रवर्तितो वेद इति चेत्, ईशसृष्टं सर्वत्रेति

नियमः केनाङ्गीकर्तुं शक्यः, त्वय्येव व्यभिचारात्। कथमपि त्यक्तस्वत्वानां पुनस्तत्र स्वत्वलाभो दुरूह इति न्यायविदः। किमु वक्तव्यं कदाप्यलब्धस्वानुभावानां वेदे स्वत्वाभावान्नाध्ययनाधिकारो वर्णत्रयेतरेषामिति। ननु त्रैवर्णिकबालकानामपि नाधिकारः प्राप्नोति, कदाप्यलब्धस्वत्वादिति चेत्, उच्यतां कथमुत्तरेषां पैतृकधने स्वत्वलाभ इति। वयं तु ब्रूमस्तद्वंशोत्पन्नत्वात्तत्समधिगतवेदाधिकारो धनाधिकारवदिति। अत एव कल्पसूत्रमष्टमे वर्षे ब्राह्मणमुपनयीतेत्यादि संगच्छते। एतेन यमुपनयेत्तस्य वेदाधिकारः, यमष्टमे, स ब्राह्मणः, यमेकादशे, स क्षत्रियः, यं द्वादशे, स वैश्य इति वदन्तो नवीनाः सर्वेषामपि वेदाधिकारवादिनः परास्ताः। उपनयनोद्देश्यतया द्वितीयान्तब्राह्मणादिशब्दपाठात्; अन्यथा प्रथमान्तपाठापत्तेः। विधेयविशेषणत्वे द्वितीयान्तपाठस्वारस्यभङ्गापत्तेरनिर्दिष्टकर्मतापत्तेरुपनयनस्य। तस्मादनुपनीतेऽपि बाले ब्राह्मत्वादिजातिरस्तीत्यादि मन्तव्यम्। नहि काचिज्जातिरुत्पाद्यते केनचित्संस्कारेण। अत एव त्रयाणामपि वर्णानां संस्कारोत्तरं द्विज इति नामधेयं न ब्राह्मण इत्यादि; तस्य स्वतः सिद्धत्वात्। ननु ब्राह्मणत्वादिजातयो न दृश्यन्ते, या आश्रित्य प्रवृत्तमुपनयनसूत्रं यथार्थं मन्यामह इति चेत्, वदतु भवान् का जातीर्दृष्टवान्? ननु मनुष्यत्वमिति चेत्, कथं तत्? हस्तपाद्याद्यवयवैरिति चेत्, सावयवां किं मन्यसे जातिम्। पण्डितास्तु निरवयवां नित्यां मन्यन्ते। तदभिव्यञ्जकानि चावयवक्रियागुणादीनि। काचिज्जातिः केनचिदभिव्यज्यते, यथा आम्रतण्डुलादिषु आम्रत्वे तण्डुलत्वे, व्यापकजातौ सत्यामपि व्याप्या जातयोऽवबुध्यन्ते केनचित्परिचायकेन, तथा सत्यपि मनुष्यत्वे ब्राह्मणत्वादयोऽप्यवबुध्यन्ते बुद्धिमद्भिः, ननु

बालैः, यतो यत्किंचित्कार्यतावच्छेदकतया कारणतावच्छेदकतया वा जातयः सिद्ध्यन्ति । यथा ब्राह्मणो ज्ञानं ज्ञानसामग्रीम्, क्षत्रियो राज्यं राज्यसामग्रीम्, वैश्यो धनं धनसामग्रीम्, शूद्रः सेवां सेवासामग्रीम् च संपादयितुं शक्नोति, तथा नेतरः, संपादिताप्यन्येन न यथावत्संभवतीति तत्त्वम् । अत एव तास्ताः क्रियास्तासु तासु जातिष्वेव प्रशस्यन्तेऽन्यत्र निन्द्यन्ते च प्रसङ्गात् । तस्मात् ज्ञानप्रधानजातिमष्टमे, आज्ञाप्रधानजातिमेकादशे, लोभप्रधानजातिं द्वादशे उपनयेद् बुद्धितारतम्यात्, न शूद्रं कदापि । ननु दृश्यते बुद्धिरन्यत्रापीति चेत्, संस्कारोपयोगिनी बुद्धिः काचिदन्यैव । ननु सत्स्वपि जातिमत्सु क्वचित्कदाचित्फलं न दृश्यते इति चेत्, फलस्य कालाधीनत्वादाम्रादिफलवदिति । तस्मात्सिद्धासु जातिषूपनयनसूत्रं समञ्जसम् । अतो यत्परम्परायां वेदप्रवृत्तिस्तैरेवाध्येतव्यो वेदो नेतरैः, अधीते च राजदण्डमर्हन्ति । एतेनेशसृष्टत्वाद्वेदः सर्वैरध्येतव्य इति परास्तम्, सर्वेष्वपि पदार्थेष्वव्यवस्थापत्तेः, ईशसृष्टत्वस्य तुल्यत्वात् । अत एव व्यवस्थापकं राजानमपेक्षन्ते सर्वाः प्रजाः । एतदेव राज्ञः कर्म यत्परम्पराप्राप्तमार्गव्यवस्थापनम् । स्वीयं राजत्वं जानन्न वञ्चको राजा । परम्पराप्राप्तधर्मान्पालयेदेव नीतिनिपुणः । ततोऽनादिवर्णत्रयपरिपालितः कर्णोपकर्णतया लब्धोऽनादिर्वेदोऽनादिनारायणादुद्भूतो न पौरुषेय इति सिद्धम् । अलौकिकीम्, अनन्तार्थगर्भिताम्, गौतमकणादकपिलमप्रभृतिपण्डितैर्दुर्विज्ञेयाम्, व्यासजैमिनिवैशम्पायनाश्वलायनबौधायनयाज्ञवल्क्यप्रभृतिभिः पण्डितैः प्रवर्तिताम्, शाकटायनादिभिः कथंचित्सप्रमाणं व्याख्याताम्, को ब्रूयादलौकिपुराणपुरुषमन्तरा, यां वाणीं शिरसा संमनुते पाणिनिः येन वशीकृत वाङ्मयं सर्वम्, यदा

ज्ञामन्तरा न कोऽपि वक्तुमीष्टे पण्डितः सभायाम्, किं बहु वक्तव्यम्, अद्यापि राजसभामान्यो मनुरप्याह "अनादिनिधना दिव्या वागुत्सृष्टा स्वयंभुवा" इति शम्। इति।

अयं च प्रमाणविचारोऽतितरां विस्तारं प्रापयितुं शक्यत एव। पुनः पुनः क्रियमाणेऽपि विस्तारे नैकोपि प्रश्नः समाधानं वा नूतनं प्राचीनैराचार्यवर्यैरसमालोचयितं केनापि प्रदर्शयितुं शक्यत इति प्राचीनसिद्धान्तायोगसमर्थनं कस्यापि न सुशकमिति प्राचीनपद्धत्यैव सर्वोऽपि धर्मविचारः कर्तव्यः, नाधुनिकाल्पज्ञसम्पादितया पद्धत्येति धर्माधर्मपरिवर्तनकथा अधुनातनानामत्यन्तमेवासमुचिता। नहि क्रियामात्रं धर्मः, किन्तु फलसाधनं क्रियैव, न चास्मदाद्यल्पज्ञानां धर्माधर्मादिशब्दप्रयोगमात्र इव फलेऽप्यधिकारोऽस्ति, तथाच यावत् फलमिदन्तया प्रदृश्येदं साधनान्तरेण भवतीति न विविच्यते, तावद्धर्मपरिवर्तनं क्रियमाणमपि अप्रयोजकमकार्यकारि च स्यादिति प्राचीनानां निबन्धकाराणां व्यवस्थयैव धर्मादिनिर्णयः कर्तव्यः।

नहि परिस्थितिमूलकं धर्माधर्मपरिवर्तनं संभवति। न हि मन्वादयोऽपि तत्र देशकालानुसारेण स्वयं धर्माधर्मप्रवर्तकाः। अन्यथा मन्वादिस्मृतीनामेतत्कालानुपयुक्तत्वे इदानीमध्ययनाध्यापनपरम्परायां परिपालनं वितथमेव संपद्येत। एतेन—मन्वादिस्मृतीनामेतद्देशकालपरिस्थित्यनुसारेण चरितविमर्शकदृष्ट्या विवरणमपि परास्तम्। वाक्यार्थनिर्णयो हि वक्तृतात्पर्याधीन एव समुचितः, न तु श्रोतृतात्पर्याधीनः। तद्यदि मन्वादिस्मृतयः प्रकृतपरिस्थितिविरुद्धाः, तर्हि वरं तासां दूरतो निरसनम्, न तु तासामेवार्थान्तरकल्पनम्। तदिदं सिद्धम्—यत् मीमांसकपद्धत्यैव शास्त्रा-

र्थविचारः कर्तव्यो न चरितविमर्शकदृष्टयेति तदभिमतानि धर्मप्रमाणानि 'न शास्त्रपरिमाणत्वादिति' सूत्रविवरणावसरे मीमांसकोपपादितरीत्या पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशैव, नैतिहासिकपद्धतिरपरापीति ।

इति ।

श्रीसन्तोजिमहाराजचाल्यमान सनातनधर्मो-
ज्जीविनीसभाङ्ग ग्रन्थनिर्माणसमिति-
संपादिते सनातनधर्मप्रदीपे प्रमा-
णप्रकाशः समाप्तः ।



❀ श्रीः ❀

# सनातनधर्मप्रदीपः ।

## चातुर्वर्ण्यप्रकाशः.

मातामहमहाशैलं महस्तदपितामहम् ।
कारणं जगतां वन्दे कण्ठादुपरि वारणाम् ॥

केचित् तु मन्यन्ते जातिभेदो न वैमत्यकारणम्, शतशो व्यभिचारात्, किंतु कलिदोष एवेति कालेयीं परिस्थितिमनुसृत्य जातिभेदादिपरिवर्तनं युक्तमिति ।

[ कलिदोष-निरूपणम् ] तत्र कलिदोष एवेदानीन्तनवैमत्ये शूद्राणां ब्राह्मणाचारानुरागादौ ब्राह्मणानां शूद्राचारानुरागादौ च कारणमित्यत्र न विशयलेशोऽपि । व्यवस्थापितं चैतत्कलिदोषवर्णनप्रसङ्गेन ब्रह्माण्डपुराणे एकविंशतितमेऽध्याये स्पष्टतरमेव। तद्यथाः—

द्वापरस्यांशशेषेण प्रतिपत्तिः कलेरपि ।
हिंसाऽसूयाऽनृतं माया वधश्चैव तपस्विनाम् ॥
एते स्वभावास्तिष्यस्य, साधयन्ति च वै प्रजाः ।
एष धर्मः कृतः कृत्स्नो धर्मश्च परिहीयते ॥
मनसा कर्मणा स्तुत्या वार्ता सिद्ध्यति वा नवा ।
कलौ प्रमारको रोगः सततं क्षुद्भयानि च ॥
अनावृष्टिभयं घोरं देशानां च विपर्ययः ।

न प्रामाण्यं स्मृतेरस्ति तिष्ये लोकेषु वै युगे ॥
गर्भस्थो म्रियते कश्चित् यौवनस्थास्तथा परे ।
स्थाविरे केऽपि कौमारे म्रियन्ते वै कलौ प्रजाः ॥
दुरिष्टैर्दुरधीतैश्च दुष्कृतैश्च दुरागमैः ।
विप्राणां कर्मदोषैस्तैः प्रजानां जायते भयम् ॥
नाधीयते तदा वेदान् न यजन्ते द्विजातयः ।
उत्सीदन्ति नराश्चैव क्षत्रियाश्च विशः क्रमात् ॥
शूद्राणामन्त्ययोनेश्च सम्बन्धो ब्राह्मणैः सह ।
भवतीह कलौ तस्मिन् शयनासनभोजनैः ॥
राजानः शूद्रभूयिष्ठाः शूद्राचाराश्च ब्राह्मणाः ।
राजवृत्तास्तथा चोराः चोराचाराश्च पार्थिवाः ॥
भृत्या एते ह्यसुभृतो युगान्ते समुपस्थिते ।
अशीलिन्योऽनृताश्चैव स्त्रियो मद्यामिषप्रियाः ॥
मायाविन्यो भविष्यन्ति युगान्ते समुपस्थिते ।
एकपत्न्यो न शिष्यन्ति युगान्ते मुनिसत्तमाः ॥
श्वापदप्रबलत्वञ्च गवां चैव ह्युपक्षयः ।
साधूनां विनिवृत्तिं च विद्यात्तस्मिन् युगक्षये ॥
चातुराश्रम्यशैथिल्यो धर्मः प्रविचरिष्यति ।
तदा ह्यल्पफला भूमिः क्वचिच्चापि महाफला ॥
न रक्षितारो भोक्तारो बलिभागस्य पार्थिवाः ।
युगान्ते च भविष्यन्ति स्वरक्षणपरायणाः ॥
अरक्षितारो राजानः विप्राः शूद्रोपजीविनः ।
शूद्राभिवादिनः सर्वे युगान्ते द्विजसत्तमाः ॥
अट्टशूला जनपदाः शिवशूला द्विजातयः ।

प्रमदाः केशशूलाश्च युगान्ते समवस्थिते ॥
तपोयज्ञफलानाञ्च विक्रेतारो द्विजोत्तमाः।
यतयश्च भविष्यन्ति बहवोऽस्मिन् कलौ युगे ॥
चित्रवर्षी यदा देवस्तदा प्राहुर्युगक्षयम्।
सर्वे वाणिजकाश्चापि भविष्यन्त्यधमे युगे ॥
भूयिष्ठं कूटभावैश्च पण्यं विक्रीणते जनाः।
कुशीलचर्या पाखण्डैर्व्याधिरूपैः समावृतम् ॥
पुरुषाल्पं बहुस्त्रीकं युगान्ते समुपस्थिते।
बहुयाचनकल्लोलो भविष्यति परस्परम् ॥
आशङ्का चैव पतिते युगान्ते तस्य लक्षणम्।
ततः शून्या वसुमती भविष्यति वसुन्धरा ॥
गोप्तारश्चाप्यगोप्तारः प्रभविष्यन्ति शासकाः।
हर्तारः पटरत्नानां परदाराभिमर्शकाः।
कामात्मानो दुरात्मानो ह्यधमाः साहसप्रियाः ॥
प्रणष्टचेतसो धूर्ता मुक्तकेशास्त्वशूलिनः।
ऊनषोडशवर्षाश्च प्रजायन्ते युगक्षये।
शुक्लदन्ता जिताक्षाश्च मुण्डाः काषायवाससः ॥
शूद्रा धर्मं चरिष्यन्ति युगान्ते समुपस्थिते।
सस्यचोरा भविष्यन्ति तथा चेलापहारिणः ॥
चोराच्चोराश्च हर्तारो हर्तुर्हर्ता तथा परः।
ज्ञानकर्मण्युपरते लोके निष्क्रियतां गते ॥
दृश्यन्ते च न दृश्यन्ते वेदाः कलियुगेऽखिलाः।
उत्सीदन्ते तथा यज्ञाः केवला धर्मपीडिताः ॥
कषायिणोऽथ निर्ग्रन्थाः तथा कापालिकाश्च ह।

वेदविक्रयिणश्चान्ये पाषण्डाः परिपन्थिनः ॥
उत्पद्यन्ते तथा ते वै सम्प्राप्ते तु कलौ युगे ।
अधीयते तदा वेदान् शूद्रा धर्मार्थकोविदाः ।
यजन्ते चाश्वमेधेन राजानः शूद्रयोनयः ॥
दुःखप्रवचनाल्पायुर्देहाल्पायुश्च रोगतः ।
अधर्माभिनिवेशित्वात् तमोवृत्तं कलौ स्मृतम् ॥
प्रजासु भ्रूणहत्या च तदा वैरात् प्रवर्तते ।
तस्मादायुर्बलं रूपं कलिं प्राप्य महीयते ॥इति॥

अयं च विषयो ब्रह्मपुराणेऽपि एकोनत्रिंशदुत्तरद्विशततमेऽध्याये विवेचितः। अथ प्रतिपत्तिसौकर्यार्थं पुराणान्तराणामप्यध्यायसंख्यामात्रं विलिख्यते। तद्यथाः—देवीभागवते द्वादशोऽध्यायः, वायुपुराणेऽष्टपञ्चाशत्तमोऽध्यायः, लिङ्गपुराणे चत्वारिंशोऽध्यायः, श्रीमद्भागवते द्वादशस्कन्धे प्रथमोऽध्यायः, इत्यादि; तथाप्येतद्दोषपरिहारार्थं कल्यनुगुणव्यवस्थाकल्पनमप्रामाणिकम्। सर्वत्रापि पुराणेषु कलिदोषवर्णनानन्तरं ह्युक्तदोषो यथा न बाधेत, यथा च स्वधर्मरक्षा स्यात्, तथा सम्पादनार्थमेवोपायाः प्रतिपादिताः। तत्र ब्रह्मवैवर्तपुराणे यद्यपिः—

[कलिदोषपरिहारोपायो- न परिवर्तनम् ]

अर्थानां निर्णयो नास्ति योनीनां च विशेषतः ।
आश्रमाणां जनानां च सर्वे म्लेच्छमयाः कलौ ॥
एवं कलौ सम्प्रवृत्ते सर्वे म्लेच्छमया भवे ।
हस्तप्रमाणे वृक्षे चांगुष्ठमाने च मानवे ॥
विप्रस्य विष्णुयशसः पुत्रः कल्की भविष्यति ।
नारायणकलांशश्च भगवान् बलिनां बली ॥
दीर्घेण करवालेन दीर्घघोटकवाहनः ।

म्लेच्छशून्यां च पृथिवीं त्रिरात्रेण करिष्यति ॥

( प्रकृतिखण्डे सप्तमोऽध्यायः )

इति पूर्वोक्तकलिदोषस्य दुष्परिहरत्वमेव मानवैरुपपाद्यते ; तथापि कालविशेषोऽपि दशसहस्रवत्सरानन्तररूप एव विवक्षित इतीदानीं वर्णाश्रमधर्माणां यथावत्परिपालनयोग्यतैव ततोऽवगम्यत इति कलिदोषं स्वभावदोषं चाविगणय्य वर्णाश्रमधर्मपरिपालनार्थमेव यतितव्यम्, नतु व्यवस्थान्तरसम्पादनार्थम्। अत्रानुसन्धेयानि ब्रह्मवैवर्तवाक्यानीमान्येव। तद्यथाः—

[दशसहस्रपर्यन्तं कलिदोषाभावः।]

कलौ पञ्चसहस्रं च वर्षं स्थित्वाऽत्र भारते।
जग्मुस्ताश्च सरिद्रूपं विहाय श्रीहरेः पदम् ॥
यानि सर्वाणि तीर्थानि काशीं बृन्दावनं विना।
यास्यन्ति सार्धं ताभिश्च हरेर्वैकुण्ठमाज्ञया ॥
सालिग्रामो हरेर्मूर्तिर्जगन्नाथश्च भारतम्।
कलेर्दशसहस्रान्ते ययौ त्यक्त्वा हरेः पदम् ॥
वैष्णवाश्च पुराणानि शङ्खाश्च श्राद्धतर्पणम्।
वेदोक्तानि च कर्माणि ययौ तैः सार्धमेव च ॥
हरिपूजा हरेर्नाम तत्कीर्तिगुणकीर्तनम्।
वेदाङ्गानि च शास्त्राणि ययुस्तैः सार्धमेव च ॥
सत्त्वश्च धैर्यं धर्मश्च वेदाश्च ग्राम्यदेवताः।
व्रतं तपस्याऽनशनं ययुस्तैः सार्धमेव च ॥
वामाचाररताः सर्वे मिथ्याकापट्यसंयुताः।
तुलसीवर्जिता पूजा भविष्यन्ति ततः परम् ॥
एकादशीविहीनाश्च सर्वे धर्मविवर्जिताः।

हरिप्रसङ्गविमुखा भविष्यन्ति ततः परम् ॥
शठाः क्रूरा दाम्भिकाश्च महाहङ्कारसंयुताः ।
चोराश्च हिंसकाः सर्वे भविष्यन्ति ततः परम् ॥
पुंसां भेदस्तथा स्त्रीणां विवाहे वादनिर्णयः ।
स्वस्वामिभेदो वस्तूनां न भविष्यत्यतः परम् ॥
सर्वे जनाः स्त्रीवशाश्च पुंश्चल्यश्च गृहे गृहे ।
तर्जनैर्भर्त्सनैः शश्वत् स्वामिनं ताडयन्ति च ॥

इत्यादीनि॥ एतैर्हि वचनैरिदं स्पष्टमवगम्यते । कलिदोषस्यापरिहार्यत्वं जातिधर्माव्यवस्थादिकं च दशसहस्रसंवत्सरानन्तरमेव भवति, न ततः पूर्वमिति । तथाच कालेयी परिस्थितिरपि नेदानीं धर्मपरिवर्तनपर्याप्ता संजातेति किमिति वा कलौ भारसमर्पणेन धर्मान्यथाकरणार्थं प्रवर्तितव्यमिति न वयं जानीमः। सर्वथा रागद्वेषाभिवृद्धिं प्रति न जात्याचारभेदः कारणम्, नवा कलिदोषोऽपि, किन्तु तत्तत्पुरुषदोष एव कारणमिति स्वीयानामेव दोषाणां परिशोधनार्थं संघटनाभिलाषुकैर्यतितव्यम्, नतु जात्यादिपरिवर्तनार्थम् । धर्मपरिपालने हि यथावदेव सर्वैरपि क्रियमाणे परस्परसङ्घटनं विनैवाऽऽयासं संसेत्स्यत्येव ।

[ स्वराज्यकामुकानामपि जातिधर्मपरिवर्तनायोगः । ]

यत्तु किल बहव एवेदानीं स्वराज्यमेव लक्ष्यमात्मनो मन्यन्ते, मन्यामहे—तेषामपीदानीं स्वस्वधर्मपरिपालनमेव योग्यं कर्तुमिति । महाभारते हि शान्तिपर्वणि स्वराज्यनिमित्तं स्वस्वधर्मपरिपालनमेवेति हि स्पष्टमेवोनषष्टितमेऽध्याये विवेचितम् । तद्यथाः—

नियतस्त्वं नरव्याघ्र ! शृणु सर्वमशेषतः ।
यथा राज्यं समुत्पन्नमादौ कृतयुगेऽभवत् ॥

नैव राज्यं न राजासीत् न दण्डो न च दाण्डिकः।
धर्मेणैव प्रजाः सर्वं रक्षन्ति स्म परस्परमिति ॥

यदि तु धर्मपराङ्मुखत्वं स्वपारतन्त्र्यञ्च धर्मस्योरीक्रियेत, तदा खलु न केवलं स्वराज्यस्य, किन्तु सर्वस्यापि विनाश इत्यपि तत्रैव निरूपितम् ॥

तद्यथाः—पाल्यमानास्तथान्योन्यं प्रजाः सर्वेण भारत ! ।
दैन्यं परमुपाजग्मुस्ततस्तान् मोह आविशत् ॥
ते मोहवशमापन्ना मनुजा मनुजर्षभ ! ।
प्रतिपत्तिविमोहाच्च धर्मस्तेषामनीनशत् ॥
नष्टायां प्रतिपत्तौ च मोहवश्या नरास्तदा।
लोभस्य वशमापन्नाः सर्वे भरतसत्तम ! ॥
अप्राप्तस्याभिमर्शार्थं कुर्वन्ति मनुजर्षभ ! ।
कामो नामापरस्तत्र प्रत्यपद्यत वै प्रभो ! ॥
तांस्तु कामवशं प्राप्तान् रागो नामाभिसंस्पृशत्।
रक्ताश्च नाभ्यजानन्त कार्याकार्ये युधिष्ठिर ! ॥
अगम्यागमनं चैव वाच्यावाच्यं तथा परे।
भक्ष्याभक्ष्यं च राजेन्द्र दोषादोषं च नात्यलम् ॥इति॥

अनेन चेदं स्पष्टमवगम्यते—स्वराज्यविनाशचिन्हानि यान्यत्र भारतवचनेषूपनिबद्धानि, तान्येवेदानीन्तनाः स्वराज्यप्राप्तिनिमित्तानि मन्यन्त इत्यहो मोहपारवश्यमधुनातनानां संस्कारकम्मन्यानाम्। तथाच न स्वराज्यप्राप्तिनिमित्तं धर्मपरिवर्तनमस्माकमभिलष्यते।

यत्तु बहव इदानीमपि जानपदसभादिषु प्रतिनिधयोऽविगणित-

[इदानीन्तनानां जात्या-चाराविगणनायोग्यता ] जातिभेदमेकस्यामेव पङ्क्तावुपविश्य भुञ्जते; तत्र केचिदाहुः—नैतद्धर्मत्वेनावगन्तुं प्रभवामः। भिन्नरुचिर्हि लोक इति न्यायेन हि न वयं तेषां प्रतिनिधीनां प्रवृत्तिमसम्भवदुक्तिकां वदामः। इदन्तु सुधीरं वयमपि वक्तुं पारयाम एव, यदेतेषामयमाचारो नान्येषां धर्मभीरूणां धर्मपक्षपातिनां वा समादरणीय इति; स्वैराचारत्वादेतेषामाचाराणाम्। न खलु स्वैराचारो नाम धर्मो भवति। कथमन्यथा केषाञ्चन परदारपरिग्रहणं चौर्यादिकमन्यद्वा स्वैराचारोऽपि न धर्मः स्यात्? निरङ्कुशं हि चित्तमेतेषामेवमपथे निधापयति। तद्यदि समाजस्य श्रेयोऽपेक्ष्यते, तर्हि वयं मन्यामहे मनोवेगजन्याश्चैवंविधा अवश्यं निरोद्धव्या आचारा इति। अनिरुद्धा ह्येते महान्तमनर्थं जनयेयुः। न चाप्येते धर्मत्वमर्हन्ति। एवंहि वेशवाटविहरणादयः के के वा न धर्मत्वमापादयिष्यन्ते। समर्थयन्ति हि सर्वान्नभक्षणमिव वेशवाटविहरणादिकमपि तत्पक्षीयाः कृपाकटाक्षपरतन्त्रा इति नेदं परोक्षं कस्य चनापि। न हि सर्वत्र भक्षणं विनाऽशक्यसमुत्पादं पारस्परिकं प्रेम। दृश्यन्ते हि विनापि तदन्नभक्षणं तत्र निरतिशयं प्रेम कुर्वाणाः पुरुषाः। यथा वङ्गीया धार्मिका महाराष्ट्रीयेषु धर्मनिष्ठेषु। यथाच पञ्चाबदेशीया मद्रविभागिषु। यथाच गुर्जराः कर्णाटकेषु। न चैतदभ्यवहारजन्यं प्रेम। न चाप्यविहितेऽभ्यवहारे तदेतदनुचितं मन्यन्ते।

[सङ्घटनोपायप्रयोजनादिपरीक्षणम्] तत्र च कीदृशं वा सङ्घटनमपेक्षितमिति प्रथमतो विनिर्णयः कर्तव्यः। अत्रावसरे किम्प्रयोजनमिदं सङ्घटनमिति विचारस्तु सर्वेषामप्यवश्यमेव निपुणतरं कर्तव्यः समापतितः। तत्र हिन्दुमहासभाप्रवर्तका मन्यन्ते—बहव एवेदानीं

मोहम्मदादिमते प्रवर्तन्ते, तत्र च कारणं मोहम्मदादीनां बलात्कारेण प्रवर्तनम्, तेषां च बलात्कारो विनाऽस्माकं सङ्घटनं न परिहर्तुं शक्यत इति हिन्दूनां सङ्घटनमपेक्ष्यते । अत्रापरे केचन मन्यन्ते । बलात्कारेण प्रवर्तनं हि क्रियमाणं कथमपि नास्माकं दोषकरम् । नहि बलात्कारेण प्रवर्तितानां प्रायश्चित्तादिना स्वमतप्रवेशं केऽपि वारयन्ति । सनातनधर्मावलम्बिनोऽपि हि बलात्कारेण मतान्तरं प्रवेशितानां स्वमतप्रवेशमनुमन्यन्त एव । ये हि किलेदानीं मलकानापदवाच्या अन्ये वा वर्तन्ते, तेषां पूर्वतना वयं मन्यामहे न बलात्कारेण मतान्तरं प्रवेशिताः, किन्तु कामत एव तत्र प्रविष्टाः । अन्यथा हि पूर्वस्मिन्नेव काले पूर्वतनानामेव स्वमतप्रवेशोऽपि प्रायश्चित्तेन सिद्ध एव स्यात् । नहि पूर्वस्मिन् काले बलात्कारेण मतान्तरं प्रवेशिता अपि न स्वमतं प्रापिता इत्यत्र किमपि गमकं वर्तते । यदि कदाचन केऽपि स्वमतं न प्रवेशिता अप्यभवन्, तर्हि पूर्वाचार्यैरिदमपि कदाचन निर्णीतं स्यात्, यत् प्रथमं बलात्कारेण प्रवेशिता अपि ते यौनमपि सम्बन्धं तत्र स्वीचक्रुरिति । व्यवस्थापितमिदं बौधायनादिधर्मसूत्रेषु--यद्यौनेन हि सम्बन्धेन कथमपि न स्वपूर्वतनजातिः प्रापयितुं शक्यत इति । न हि परम्पराचतुष्टयातिक्रमानन्तरं पञ्चमादीनामन्येषां च प्रायश्चित्तेनापि स्वमतप्रवेशाधिकारः सम्भवति । सर्वथा तु मलकानाविभागावलम्बिनामेतेषां प्रायश्चित्तेन स्वपूर्वतनजातिसम्बन्धानुमोदनं न हिन्दुमहासभाया धर्मशास्त्रसंमतम् ।

अस्तु वा कथमपि तत्प्रवृत्तिर्हिन्दुमहासभाप्रवर्तकानाम्, किमर्थं वेयं प्रवृत्तिरेतैराद्रियते, किंवा प्रयोजनं संघटनस्य मन्यत इति च पुनरपि निपुणतरं समालोचयामः । सत्यं संघटनेन हिन्दूनां समुदाय-

शक्तिरभिवर्धते; तथाप्यभिवृद्धया तया शक्त्या धर्मपरिरक्षणमभिकाङ्क्षितमुत लौकिकव्यवहारेषु स्वोत्कर्षसम्पादनम् ।

आद्ये हि धर्मपरिरक्षणं मुष्टिमेयानामपि तत्तज्जातिभेदनिबन्धनतत्तत्सनातनधर्मावलम्बिनामवस्थानमेव ह्यपेक्षते, न तु संख्याधिक्यम् । शास्त्रसमाजादिपरिवर्तनेन हि न सनातनधर्मसंरक्षणम्, किन्तु नूतनसम्प्रदायप्रवर्तनमेव फलति । नहि शास्त्रविरुद्धं नूतनसम्प्रदायप्रवर्तनं कैरपि कदापि प्रवर्तितम् । भगवद्रामानुजादयोऽपि शास्त्रप्रामाण्यमूरीकृत्यैव शास्त्रीये भक्तिमार्गे एव केषां चनाधिकारं प्रददुः, न तु यथेच्छं शास्त्रस्वरूपपरिवर्तनेन । नहि भगवद्रामानुजादिसम्मतः सिद्धान्तः शंकरभगवत्पादादीनामप्यसम्मतः । तदविरोधेनैव खलु शंकरभगवत्पादा अप्यद्वैतं स्थापयन्तीति तु खलु साम्प्रदायिकः पन्थाः । अस्मिन्नवसर इदमपि सूच्यते—यत् भगवद्रामानुजादिभिरपि न जातिब्राह्मण्यं शूद्रादयः प्रापिता इति ।

अत्र च श्रीमत्सच्चिदानन्दसरस्वतीनां वाक्यानि संगृह्य प्रकाशयामः ।

[श्रीरामानुजादीनां जातिपरिवर्तनकथापरीक्षणम् । ]

तद्यथा—रामानुजादयः शास्त्रमुल्लङ्घ्य यत्किमपि नाकुर्वन् । शास्त्रेष्वेवेयं रीतिर्दृश्यते । कर्मकाण्डे तस्य तस्य तादृशतादृशधर्मनियमनमुपवर्ण्येश्वरानन्यभक्तेषु सर्वस्याप्येतस्य कर्मकाण्डोक्तस्यापवादः कृतः । एवमपि कर्मठैर्द्विजातिभिरन्यैश्चाहङ्कारवशात् भागवतधर्मा नानुष्ठीयन्ते । कृष्णावतारसमये ऋषयस्तस्मै भोजनं न प्रायच्छन् । संदिष्टमपि "हुतायां वपायां दीक्षितस्यान्नमश्नीयात्" इति वचनं नाद्रियन्ते स्म । मुनिपत्न्यस्तु भगवति भक्त्यतिशयवशात् अन्नं गृहीत्वा तन्निकटं त्वरितं जग्मुरिति श्रीभागवते दृश्यते । एवं च कर्मिभिर्महर्षिभिरपि भागवतधर्मा भगवद्-

भक्ताश्च न केवलं नाद्रियन्ते स्म, अप्युपालभ्यन्त च। एतत्सर्वदा स्वाभाविकमेव। यदा यदा हि भक्तिमार्गोऽत्यन्तमेव क्षीणो भवति, तदा भगवानपि स्वप्रतिज्ञानुसारं राजादिरूपेणाचार्यादिरूपेण वाऽवतीर्य स्वीयं साम्प्रदायिकं भक्तिमार्गमपि प्रकटीकरोति। सर्वानपि भीष्मादीनुल्लङ्घ्यात्मसात्कृत्य विदुरगृह एव भोजनार्थं भगवानगमदिति महाभारते दृश्यते। श्रीमद्रामानुजादयोऽपि भगवतोऽवतारपुरुषा एव। तेऽपि साम्प्रदायिकमेव धर्ममुपदिदिशुः। सत्यं चण्डालादयोऽपि परमैकान्तिपदं प्राप्ता वैष्णवैर्विष्णवालयेषु केनचन सम्प्रदायेन व्यवहरद्भिः पूज्यन्ते। नहि ब्रह्मज्ञानित्वं परमभागवतत्वं परमैकान्तिपदं वा ब्राह्मणानामेव धनमिति कोऽपि मन्यते। अयमेव खलु सनातनधर्मीयाणामपि सम्प्रदायान्तरप्रवर्तकानां चाचार्याणां सिद्धान्तः—यद्यदि न जन्मान्तरे ज्ञानादिकम्, तर्हि तु नूतनेन प्रयत्नेन ब्रह्मज्ञानं न ब्राह्मण्यमन्तरेण सम्भवतीति। ये हि विष्णवालयेषु पूज्यन्ते, ते हि जातमात्रा एव परमैकान्तिन इति खलु मन्यन्ते। नहि जातिमात्रेण ब्रह्मज्ञानिनां परमैकान्तिनां वा कर्मकाण्डाधिकारं कोऽपि मन्यते। नहि वयमिदानीमपि परमभागवतोत्तमान् चण्डालानपि परमपूजनीयान् न मन्यामहे, परं त्विदमेवास्माकमशक्यं समापतितम्, यत्के वा ब्रह्मज्ञानिनः के वा नेति विनिर्णयकरणम्। न केवलमियं रीतिर्वैष्णवसम्प्रदाय एव, शैवसम्प्रदायेऽपि हि कण्णप्पादयो बहव एव भक्ताः शैवालयेषु पूज्यतयेदानीमपि संगृहीता वर्तन्त एव। अद्वैतसम्प्रदायेऽपि हि नेदमसम्मतम्। विदितं हि शंकरविजयदर्शिनां सर्वेषाम्—यत् शंकरभगवत्पादोऽपि काश्यां चण्डालस्यापि जात्या, ब्रह्मज्ञानित्वं तस्यावगत्यालिङ्गनमपि चकारेति;

तथापि हि तेषां जातिब्राह्मण्यं न कस्मिन्नपि सम्प्रदाये स्वीकृतमस्ति। ते हि न जातिवैष्णवाः, किन्तु धर्मवैष्णवा एव। जातिवैष्णवा हि सर्वथा स्मार्तानेव धर्माननुसरन्तो दृश्यन्ते। नहि दिव्यसंस्कारवन्तोपि भागवताः कर्मठानां पुरत आगत्य वयमुत्तमा भवदपेक्षयेति, भवतामस्माकं च साम्यं वर्तत इति वा, वेदाः सर्वेपि केनचन पुरुषेण रचिता इति वा, मन्त्रा एव प्रमाणमिति वाऽन्यदृ इदानीन्तना इव व्यवहरन्तः पूर्वं केऽपि वर्णसंकरस्य धर्मसंकरस्य वा सम्पादनमेव परमं धर्ममूरीकुर्वाणाः कदाप्यासन्। न हि वयं सनातनधर्मीया अपि तत्तत्संप्रदायपीठाधिपानां केवलं शास्त्रपरतन्त्रतामेव स्वस्य परमस्वं मन्यमानानां च परमाचार्याणामुपदेशेन कस्यापि मतान्तरप्रविष्टस्यान्यस्य वा शुद्धिं क्रियमाणामपि विरुद्धां मन्यामहे। नहि कैरपि पूर्वाचार्यैः केषामपि भक्तिमार्गं प्रापितानां सहभोजनाधिकारोऽपि दत्तः। श्रीवैष्णवसम्प्रदाये हीदानीमपि बहुषु स्थलेषु ब्राह्मणैः साकमपि विना देवालयस्थानं तत्प्रसादं वाऽन्यत्र न सहभोजनादिकं दृश्यते। तथाच यदि केचन भक्तिमार्गं प्रति मतान्तरावलम्बिनोऽपि नेयाः, तर्हि दीयतां सोऽधिकारो यथाशास्त्रं तत्तत्सम्प्रदायाधिपतिभिरेव। सर्वथा यदि हिन्दुसंघटनं धर्मपरिपालनार्थं केऽपि प्रार्थयन्ति, तर्हि केवलं तत्तदाचार्या एव निरपेक्षाः शास्त्रपक्षपातिनश्च शरणं प्राप्याः, नान्या कापि गतिरत्र वर्तत इति वयमुत्पश्यामः।

धर्मपरिपालनं च यदि प्रयोजनं नापेक्षन्ते संस्कारकम्मन्याः, यदि च लौकिकव्यवहारपरिस्थितिविशेषमेव काङ्क्षन्ति, तर्हि कामं प्रवर्तन्तां किमपि सम्पादयितुम्। इदं च तेषां सविधे सानुनयं निवेद्यते—यत् स्वीयाः सिद्धान्ताः सर्वे पि शास्त्रारूढाः शास्त्रसम्मता

वेति न सन्दिग्धधर्ममतयः सनातनधर्मविश्वासिनः पामरा अन्ये वा बोध्यन्ताम् , न वा प्रतार्यन्तां सर्वे पि धर्मभीरव इति ।

अत्र प्रसङ्गे इदमपि विचारणीयं समापतितम्—यत् वर्णसांकर्यस्य जातिव्यवस्थाभावस्यास्पृश्यस्पर्शव्यवस्थापनस्य च हिन्दुसंघटनेन कः सम्बन्ध इति । न ह्यस्पृश्यस्पर्शव्यवस्थापनं संघटनोपयुक्तम् । उद्घुष्यते हि सर्वैरपि मोहम्मदादीनां विषये नास्माभिः स्पर्शास्पर्शविचारः क्रियते, चण्डालैस्तु स विचारः क्रियत इति महतीयं न्यूनताऽस्माकमिति । इदमपि चोद्घुष्यते—मोहम्मदादिभिर्बलात्कारेण स्वमतं प्राप्यमाणानामस्मदीयानां रक्षणार्थं हिन्दुसंघटनं क्रियत इति । तत्र यदि स्पर्शास्पर्शाविचारो विशेषतः पारस्परिकं प्रेम सम्पादयेदिति सम्मतम्, तर्हि कथं मोहम्मदानां भारतीयानां च, येषामिदानीं स्पर्शास्पर्शविचारो नास्ति, तेषां न परस्परं संघटनं संवृत्तम् ? कथं वा तेषां सर्वेषां च परस्परं विरोधः ?

[ हिन्दूसंघटने जातिसंकरादेरुपयोगपरीक्षणम् ]

एतेन—पूर्वं कदापि तावदैकमत्यं जातिभेद आचारभेदश्च नासीदेव, दृश्यतां विश्वामित्रवसिष्ठादिसंवाद इत्यादिशङ्कापि—परास्ता । विश्वामित्रादिकलहे हि न जातिभेदः कारणम् , किन्तु वसिष्ठस्य यद् बलमासीत्, तन्न विश्वामित्रस्यासीदिति ईर्ष्यासूयादिकमेव । नहि जातिमात्रेण वसिष्ठेन विश्वामित्रस्य पराजयः सम्पादितः, किन्तु तपोविशेषेणासादितब्रह्मबलविशेषेण ।

[ पूर्वतनकाले जातिभेदस्य वैमत्यनिदानत्वपरीक्षणम् ]

नहि वयमपि जातिमात्रेण ब्राह्मणमुत्कृष्टं वदामः, किन्तु जातिकर्मोभयेनेति विश्वामित्रवत् यदि कोऽपि क्षत्रियो वाऽन्यो वा वर्णः तपोविशेषमनुष्ठाय ब्रह्मर्षित्वं प्राप्स्यति, तर्हि प्राप्नोतु नाम । विश्वामित्रस्यापि

[ तपोविशेषेण विश्वामित्रादीनां ब्रह्मर्षित्वमेव न ब्राह्मणत्वम् ]

सविधे वसिष्ठेन न ब्राह्मण इति कृत्वा स्वश्योत्कर्षः प्रतिपादितः । विश्वामित्रादिकालेऽपि गुणकृतं ब्राह्मण्यमित्यादिकं नासीदेव ; अन्यथा कथं "ब्रह्मतेजो बलं बलम्" इति विश्वामित्रस्य वचनमुपपद्येत । गुणकृतमेव ब्राह्मण्यादिकं तदाप्यासीदिति कल्पनायां हि किमिति बहुसहस्रवत्सरपर्यन्तं तपोविशेषो ब्रह्मर्षित्वसम्पादनार्थं कृतः । "शमो दमस्तपः शौचम्" इत्यादिवचनोक्ता हि गुणविशेषा विश्वामित्रस्य वसिष्ठदर्शनकालेऽप्यासन्नेव । नहि लोभविशेषः कश्चन सञ्जात इत्येतावता तत्कालमात्रे न ब्राह्मणत्वमिति कल्पना सम्भवति । वसिष्ठेनापि हि कामधेनुरक्षणार्थं विश्वामित्रेण साकं युद्धं कृतमेवेति वसिष्ठस्यापि कथं न क्षत्रियत्वम् ? तथाच क्षत्रियत्वावस्थायामेव शक्तिविशेषो विश्वामित्रेण वसिष्ठेऽनुभूत इति "ब्रह्मतेजोबलं बलम्" इति वचनमनुपपन्नमेव गुणकर्मकृतत्वे ब्राह्मणत्वक्षत्रियत्वादीनां स्यादिति गुणकृतं ब्राह्मण्यमिति वादे वसिष्ठविश्वामित्रादिसंवादो नावलम्बतामर्हति । वस्तुतस्तु विश्वामित्रस्यापि ब्रह्मर्षित्वमेव प्राप्तम्, न ब्राह्मणजातिः । व्यवस्थापितं हि भाट्टकौस्तुभे खण्डदेवाचार्यैरपि विश्वामित्रादीनामपि हि न ब्राह्मण्यजातिः, किन्तु ब्रह्मबलमात्रनिष्पत्तिरिति । अधिकं चात्र साधकबाधकप्रमाणविचारावसरे निरूपयिष्यते । विदितमिदं सर्वेषाम्—चातुर्वर्ण्यव्यवस्थेयं रामायणकालेऽपि स्म वर्तते इति ।

[ चातुर्वर्ण्यव्यवस्थाया अनादित्वम् ]

अन्यथा हि कथं तपोविशेषमनुतिष्ठतः शम्बूकनाम्नः शूद्रस्य शिरश्छेदनं भगवता श्रीरामचन्द्रेण सम्पादितमुपपद्येत ? तथाच तत्र तत्र स्पर्धाविशेषादिकं भिन्नजातीयानां यत् दृश्यते, तत्र न जातिभेदः कारणम्, किन्त्वसूयादिकमन्यदेव सूकारणम् । तच्चायादिकमिदानीमपि यदि सर्वैः

परित्यज्यते, तर्हि जातिभेदादिपरिपालनं कथमपि न दोषाय भविता; प्रत्युत गुणायैव भविता। अन्यथा हि सर्वेषामेकजातीयत्वेऽविद्यमाने चोच्चनीचभावे कथं वा लोकव्यवहारोऽपि निरुह्येत।

वस्तुतस्तु न वयं जातिभेदप्रयुक्तमाचारभेदप्रयुक्तं वोच्चनीचभावमैहिकेषु व्यवहारेषु समादरणीयं पश्यामः, किन्तु पारलौकिकव्यवहारेष्वेव। अत्र च विना शास्त्रं नान्या कापि गतिर्वर्तत इति पूर्वमेव विवेचितम्। सम्मतमिदमधुनातनानामपि वृत्तिविशेषव्यवस्था ब्रह्मक्षत्रियविशां परस्परसौकर्यार्थं लोकरक्षार्थं चैवेति वृत्तिभेदो न वैमत्यकारणमिति। अन्यथा हि कथं वा भारतवर्षं प्रत्यागतानामार्याणां व्यक्तिभेदेन वृत्तिभेदव्यवस्थानमुपपद्येत? आर्या अपि हि वृत्तिभेदं विना वैमत्यं स्यादिति मन्वाना एव तं व्यवस्थापयामासुरिति हि आधुनिकानां मतम्। तथाच वृत्तिभेद इवाचारभेदो जातिभेदोऽपि ऐकमत्यकारणमेवासीदिति कल्पनमेव युक्तम्। एतेन—पूर्वं वर्णभेदकल्पनैवासीत्, न जातिभेदकल्पनेति वादोऽपि—परास्तः, वर्णभेदोऽपि यः कल्पितः सोऽपि जातिभेदं पुरस्कृत्यैव कल्पित इति कल्पनायां को दोषः? नहि जातिभेद आर्याणामपि भारतवर्षं प्रत्यागमनात् पूर्वं नासीदिति कल्पनायां किमपि गमकं वर्तते। वेदे हि कुत्रचन वर्णद्वयस्य कुत्रचन वर्णत्रयस्य कुत्र चनैकस्य वर्णस्य च दर्शनेन हीदं स्पष्टमवगम्यते—यच्चातुर्वर्ण्यं वेदकालेऽप्यासीदिति। यथाच मन्त्रसाधकत्वेनैवर्षित्वम्—न तु मन्त्ररचयितृत्वेन, तथा प्रमाणविचारावसर एव सप्रमाणमुपपादितमेवेति सर्वस्यापि वेदस्यापौरुषेयत्वेन क्रमिकतावादोऽपि न सङ्गतः। अस्तु वा वर्णभेदकल्पनायां गुणवृद्धिन्यूनतादिकमेव कारणमिति, एवमप्युच्चनीचभावोऽयं

[ जातिभेदमात्रेणोच्चनीचभावाद्ययोगः। ]

कारणान्तराधीनो वर्तत एवेति कथं वा न वैमत्यं स्यात् ? नहि जातिभेदकृत उच्चनीचभाव एव वैमत्यकारणं न कारणान्तराधीन इत्यत्र किमपि गमकं वर्तते ।

[ जातिभेदस्यानादित्वे पुराणादिपरीक्षणम् ]

पुराणादिषु एको वर्ण आसीत्, इत्यादि व्यवहारो हि सृष्ट्यारम्भकालाभिप्राय एव । सृष्ट्यारम्भकाले हि ब्रह्मणा मानसा ब्राह्मणा एव सृष्टा इति हि न दोषः । यथाच मानसानामपि दक्षादीनां ब्राह्मण्यं ब्राह्मणमातापितृकत्वाभावेऽप्युपपद्यते—तथा कुसुमाञ्जल्यादिषु विवेचितम् । उपरिष्टाच्चैतन्निरूपयिष्यते । एतेन क्षत्रियवंशे विश्वामित्रादीनां ब्राह्मणादीनामुत्पत्तिरपि व्याख्याता । महर्षीणां संकल्पविशेषोऽपि जातिपरिवर्तने पर्याप्त एव । विश्वामित्रब्राह्मण्येऽपि ऋचीकमहर्षेः संकल्पविशेष एव कारणमिति महाभारते एव व्यक्तम् । येषां तु महर्षिसंकल्पविशेषं विनापि ब्राह्मण्यमिति प्रसिद्धम्, तत्र सर्वत्र ब्राह्मण्यपदेन वेदसमूहावाप्तिरेव विवक्ष्यते । व्यक्तं चैतन्महाभारते आर्ष्टिषेणोपाख्याने उपरिष्टाच्च स्पष्टं भविष्यति । कर्तुमकर्तुमन्यथा कर्तुं हि येषां शक्तिस्त एव स्वीयजातेरन्यजातेर्वा परिवर्तनसमर्थाः, न तु शान्त्यादिसाधारणगुणमात्रविशेषविशिष्टाः । शान्त्यादिकं हि साधारणो धर्मः सर्वेषामपि वर्णानामिति प्रथमं कदापि विना जातिभेदमवस्थानं नासीदेवेति कथं वा वर्गभेदकल्पनाप्यार्याणां पूर्वं जातिभेदाभावं गमयति । अयं भावः—पुराणे खल्वेक एव वर्ण आसीदित्यादिकमुच्यते, नतु वेदे । नव्यमते हि पुराणं त्वतिनवीनमैतरेयब्राह्मणादिषूपनिषत्सु ब्राह्मणान्तरेषु चोपलभ्यमानं जातिभेदं कथं वा बाधेत ? सर्वथा तु न जातिभेदो वैमत्यकारणमासीत्, किन्तु वृत्त्यादिव्यवस्थानुगुणत्वादैकमत्यकारणमेवासीदिति सिद्धम् ।

अत एव सर्वैरपि पूर्वाचार्यै जातिभेदाबाधेनैव वृत्तिव्यवस्थादिकं सर्वमपि सम्पादितम्, न तु तद्बाधेनेति जातिभेदविनाशो महते-ऽनर्थाय स्यादिति तत्परिपालनमेव युक्तम् ।

[ प्राचीननवीनमतपरीक्षणम् ]

सम्मतमिदं समाजसौकर्याय वर्गशो विभागः परिकल्पित इति वर्गशो विभागश्च न वैमत्यकारणमिति च नव्यानाम् । तत्र नवीनैः कल्प्यमानो वर्गशो विभागो यदि न वैमत्यकारणं भवति, तर्हि कथं स्वभावसिद्धो जातिविभागस्तत्कारणं स्यादिति सर्व एव विवेचयन्तु । यथाहि नवीनमते वृत्तिव्यवस्था न नियता, वर्गव्यवस्थायामपि स्वीयमातापितृवर्गवृत्तिसम्पादना-शक्तौ वृत्त्यन्तरस्वीकरणं न दोषाय, एवं जातिभेदव्यवस्थावा-दिनामपि मते स्वजातियोग्यवृत्त्यशक्तौ वृत्त्यन्तरस्वीकरणमपि न दोषायेति जातिभेदानुसारेण वृत्तिविशेषव्यवस्थापनं नानुपपन्नम् । इदमेवास्माकमत्र वक्तव्यम्—आपदि वृत्त्यन्तरस्वीकरणेन जीवन-निर्वाहः कथमपि क्रियताम् । पारलौकिकफलधर्माणामनुष्ठानं तु यथावदेव कथं न सम्पादयितुं योग्यम् । पारलौकिकं फलं न कस्या-पि प्रत्यक्षमिति यथाशास्त्रमेव तत्र व्यवस्था सम्पादनीयेति कथं वा-ऽऽचारपरिवर्तनमपि योग्यं भवति । तथाच वृत्त्यैक्यसम्पादनेऽपि यद्यपि न दोषसम्भावना, फलस्य तदानीमेव सम्भवात् । आचारै-क्यसम्पादने तु कथं न दोषः । को वाऽऽचाराणामधिकारिव्यव-स्थां विनापि फलाधानशक्तिर्भविष्यतीति सुदृढं वक्तुं पारयति । हेतुवादेनास्मदीयसनातनधर्मव्यवस्थादिसम्पादनार्थं बहुभिः प्रय-तितं प्रागपीति सर्वविदितमिदम् । नहि केनाप्यद्ययावत् धर्मश्रद्धा भारतीयानां बहूनां विनाशिता । अधिकं चात्र निरूपणीयं पूर्व-मेव विवेचितम् । सर्वथा तु जातिव्यवस्थेयमत्यन्तमेव गुणायैव भवति ।

उपपादितं हि भगवतापि—संकरो नरकायैव कुलघ्नानां कुलस्य चेति। एतेन—वर्णानां जातिस्वरूपत्वेन विभागानन्तरमेव शूद्राभार्यादिनिषेध इत्याद्यपि—परास्तम्। किमिति वा वर्णानां जातिरूपेण परिणामः कल्पितः। तदपि यदि समाजसौकर्यार्थं तर्हि कथं वा तत्सौकर्यं जातिभेदविनाशनेनेदानीं सम्पादयिष्यते। एतेन पूर्वं वर्णाः खलु समाजसौकर्यार्थं श्रमविभागार्थं परिकल्पिता अव्यनन्तरं जातिरूपेण विपरिणामिताः, लोकेऽपि किंचित्कालपर्यन्तं कस्मिंश्चित्कार्ये नियुक्तस्ततोऽपि तत्कार्यकारित्वात्तत्त्वेनैवात्मानं मन्यते, आचारभेदश्च कार्यानुसारेणानन्तरं भवत्येव। एवं जीविकानियमोऽपि। एवं च ते सर्वेऽपि भेदास्समाजसौकर्यार्थमेव परिकल्पिताः, न तेषां जातित्वं पृथक् सिद्ध्यत्येवेतिहासं पर्यालोचयतां सिद्धान्त इति शङ्कापि—परास्ता। अत्र श्रमविभागार्थं वर्णविभागा ब्रह्मणैव सम्पादिताः सृष्टिसमये इति प्राचीनमतम्। नवीनानां तु भारतवर्षागमनानन्तरं ते सम्पादिता इति। अत्र चेदमेव वक्तव्यम्—यदार्याणां भारतवर्षागमनात् पूर्वं वेदकालतः पूर्वमयं विभागो नास्तीति भारतदेशागमनानन्तरमेवायं विभागः कल्पित आर्यैरिति चार्याणां भारतं प्रत्यागतानां शासनपत्रतो यद्यवगतं, तर्हि तु नास्माभिः किमपि वक्तुं शक्यते। नहि तादृशं किमपि शासनमैतिहासिकानां हस्ते लब्धमस्ति, विनापि शासनादिकं स्वमनोरथकल्पितेनाकाशमण्डपेन तु किं वा कार्यं भविष्यतीति न वयं जानीमः।

पुराणेषु तु सृष्टिकाल एव जातिविभागा वृत्तिविभागाश्च [सृष्टिकालमारभ्य] कल्पिता इति स्पष्टमेव प्रतिपाद्यते। तद्यथा—

[जातिभेदे ब्रह्माण्डपुराणम्।] ब्रम्हाण्डपुराणेऽनुषङ्गपादे ३१ तमेऽध्यायेः—

भाविनोऽर्थस्य च बलात् ततः कृतमवर्तत ।
प्रवृत्ते तु ततस्तस्मिन् पूते कृतयुगे तु वै ॥
उत्पन्नाः कलिशिष्टास्तु प्रजाः कार्तयुगास्तथा ।
तिष्ठन्ति चेह ये सिद्धा अदृष्टा विचरन्ति च ॥
सह सप्तर्षिभिश्चैव तत्र ते च व्यवस्थिताः ।
ब्रह्मक्षत्रविशः शूद्रा बीजार्थं ये स्मृता इह ॥
कलिजैः सह ते सन्ति निर्विशेषास्तदाऽभवन् ।
तेषां सप्तर्षयो धर्मं कथयन्तीतरेषु च ॥
वर्णाश्रमाचारयुक्तः श्रौतः स्मार्तो द्विधा तु सः ।
ततस्तेषु क्रियावत्सु वर्तन्ते वै प्रजाः कृते ॥
श्रौते स्मार्ते कृतानां च धर्मे सप्तर्षिदर्शिते ।
केचिद्धर्मव्यवस्थार्थं तिष्ठन्तीहायुगक्षयात् ॥ इति ।

अनुषङ्गपादे सप्तमाध्यायेऽपिः—

ये वै परिग्रहीतारस्तासामासन् बलीयसः ।
इतरेषां कृतत्राणान् स्थापयामास क्षत्रियान् ॥
उपतिष्ठन्ति तावन्तो यावन्तो निर्मितास्तथा ।
सत्यं ब्रूत यथाभूतं ध्रुवं वो ब्राह्मणास्तु ताः ॥
ये चान्ये ह्यबलास्तेषां संरक्षाकर्मणि स्थिताः ।
कीतानि नाशयन्तिस्म पृथिव्यां ते व्यवस्थिताः ॥
वैश्यानित्येव तान् प्राहुः कीनाशान् वृत्तिसाधकान् ।
सेवन्तश्च द्रवन्तश्च परिचर्यासु ये रताः ॥
निस्तेजसोऽल्पवीर्याश्च शूद्रांस्तानब्रवीत्तु सः ।
तेषां कर्माणि धर्मांश्च ब्रह्मा तु व्यदधात् प्रभुः ॥
संस्थित्यां तु कृतायां वै चातुर्वर्ण्यस्य तेन वै ।

पुनः प्रजास्तु ता मोहात् धर्मं तं नान्वपालयन् ॥
वर्णधर्मैश्च जीवन्त्यो व्यरुध्यन्त परस्परम् ।
ब्रह्मा बुध्वा तु तत्सर्वं याथातथ्येन स प्रभुः ॥
क्षत्रियाणां बलं दण्डं युद्धमाजीव्यमादिशत् ।
याजनाध्यापने ब्रह्म तथा दानप्रतिग्रहम् ॥
ब्राह्मणानां विभुस्तेषां कर्माण्येतान्यथादिशत् ।
पाशुपाल्यं च वाणिज्यं कृषिं चैव विशां ददौ ॥
शिल्पाजीवभृतां चैव शूद्राणां व्यदधात् पुनः ।
सामान्यानि च कर्माणि ब्रह्मक्षत्रविशां पुनः ॥
यजनाध्ययने दानं सामान्यानीतरेषु तु ।
कर्माजीवं तु वै दत्त्वा तेषामिह परस्परम् ॥
तेषां लोकान्तरे मूर्ध्नि स्थानानि विदधे पुनः ।
प्राजापत्यं द्विजातीनां स्मृतं स्थानं क्रियावताम् ॥
स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वपलायिनाम् ।
वैश्यानां मारुतं स्थानं स्वस्वकर्मोपजीविनाम् ॥
गान्धर्वं शूद्रजातीनां परिचर्ये च तिष्ठताम् ।
स्थानान्येतानि वर्णानां योग्याचारवतां सताम् ॥
संस्थित्यां तु कृतायां वै चातुर्वर्ण्यस्य तस्य तत् ।
वर्णास्तु दण्डभयतः स्वस्वे वर्णे व्यवस्थिताः ॥
तेन स्थितेषु वर्णेषु स्थापयामास चाश्रमान् ॥ इत्यादि ।

एतैश्च वचनैरिदं स्पष्टमवगम्यते—वर्णव्यवस्था, जीविकाव्यवस्था, परलोके स्थानव्यवस्था, ऐकमत्यार्थं साधारणधर्मव्यवस्था च ब्रह्मणैव सृष्ट्यादावेव सम्पादिता । यथावत्स्वस्वधर्मापरिपालनमेव परस्परवैमत्यनिमित्तमिति । अत एव

[ब्रह्माण्डपुराण-समालोचनम् ।]

साधारणधर्मोपदेशः सर्वस्मृतिपुराणेतिहासेषु दृश्यमान उपपद्यते । विशेषधर्माणामितरेतरानधिकारिकत्वेऽपि साधारणधर्मसाम्येन कथं वा सर्वेषां नैकमत्यं भवति, नहि केनापि सर्वेषां सर्वात्मना साम्यमापादयितुं शक्यते । सर्वसाधारणधर्मोपदेश एव खल्वैकमत्यसाधनम् । नहि सर्वेऽपि धनिनो दरिद्रा मध्यमा वा सम्पादयितुमस्माभिः पार्यन्ते । तत्तत्कर्माधीनसुखविशेषादिकमितरस्य सञ्जातं दृष्ट्वा यदि कोऽप्यसूयया विद्विष्यात्, तर्हि कथं वा तत्रैकमत्यं सम्पादयितुं शक्येत । तथाच जातिभेदोऽयमनादिसिद्धो न वैमत्यकारणम् । प्रत्युत स एवैकमत्यकारणमिति सिद्धम् ।

[ ऐतिहासिकदृष्ट्या जातिभेदविचारः ।]

अङ्गीक्रियते चैतदैतिहासिकैरपि जीविकाभेदादिकं समाजसौकर्यार्थमिति । इदमेव तेषां विप्रतिपन्नं यत् जातिपदप्रयोगो नानादिरिति । अत्रास्माकमिदमेव वक्तव्यम्—यत् नामभेदे यदि विवादस्तर्हि किञ्चित्करोऽयं विषयः । वर्णभेदस्यानादिसिद्धत्वं यद्यैतिहासिकानामपि सम्मतम्, तर्हि वयमिदमेव निवेदयामः—यत् वर्णशब्दस्थाने जातिशब्दप्रयोगमात्रेणैकमत्यं सम्पाद्यतामिति । वर्णशब्दो ह्यस्माभिर्जातिविशेषवाचकत्वेनैव मन्यते न तु जातिसामान्यवाचकत्वेन । व्यक्तं चैतत्कायस्थप्रदीपादौ विवेचितमुपरिष्टाद्व्यक्तीभविष्यति । एवं च वर्णशब्दः किं जातिवाचकः, रङ्गवाचकः, वर्गवाचक इति विकल्पो निरालम्ब एव । कोशेऽपि हि 'वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे' इति ब्राह्मणादिजातिचतुष्टय एव वर्णशब्दः सङ्केतितः । अधिकं बालम्भट्टीये स्मृतिकौमुद्यां च व्यक्तम् । वर्णशब्दो हि यद्यपि स्तुतितत्साधनादिष्वेव धात्वर्थानुगतो वर्त्तते, तथापि मनुष्येषु सर्वेषु जातमात्रेषु जातिशब्दवाच्येष्वपि स्तुतियोग्यत्वमुत्कर्षो वा

ब्रह्मक्षत्रविशामेव धर्मविशेषाधिकारिणां वर्तते इति वर्णशब्दस्य द्विजादौ प्रयोगो नानुपपन्नः । एतेन—धातोरनुसारेणार्थनिर्णये च वर्णशब्दस्य केवलस्तुतितत्साधनादिवाचकत्वं लभ्यते । तदत्र जातिवाचकत्वं नहि व्युत्पत्त्या भवति । लोकरूढिश्च त्वसा किम्मूलिकेति विचारणायामिदमेव वक्तव्यम्—यदार्याणां भारतप्रवेशानन्तरमत्रत्यानामार्याणां गौरवर्णत्वात् व्यवहारार्थमार्यैरेतेषु स्वेषु च रङ्गत्वप्रवृत्तिनिमित्तेन रूढिमापदितोऽयं शब्दो जातिवाचकः संवृत्तः । आगमनकाले त्वार्याणां मध्ये श्रमविभागार्थं वर्गकल्पना त्वासीदेव, न वर्णकल्पना । परं चाग्रे तस्या जातौ पर्यवसानमिति शङ्का—परास्ता । धात्वर्थाननुगतत्वे उक्तरीत्या शुक्लादिवर्णस्यापि द्विजादिना साकं समानत्वे कथं द्विजादौ गौणत्वं रङ्गादौ मुख्यत्वमिति भवन्त एव समालोचयन्तु । अत्रावसरे श्रीमहाभारते वर्णेन जातिविभागो न सम्भवतीति यद्व्यवस्थापितम्, तदप्यनुसन्धेयम् । वचनानि तु प्रमाणसंग्रहावसरे योजयिष्यन्ते । अस्तु वा कथमपि वर्णशब्दस्य द्विजादौ गौणत्वमेव । एवमप्यार्यैर्भारतागमनतः पूर्वमपि येयं वर्गकल्पना कृता, तस्मिन् वर्गे प्रवेशयोग्यानामत्रत्यानामार्याणामपि वर्णशब्दप्रयोगं विनापि स्वेषामिव व्यवहारः कथं न सम्भवति । यद्यत्रार्याणामागमनतः पूर्वमपि वर्णशब्देन व्यवहार आसीदिति चिन्त्यते, तर्हि त्वार्याणामत्रागमनानन्तरमेव वर्णशब्देन व्यपदेशः प्रवर्तित इति कथा निरालम्बैव भवति । वस्तुतस्तु यदि वर्णशब्दव्यपदेशे गौरादिवर्ण एव प्रयोजकस्तर्हि कथं चण्डालादीनामनुलोमप्रतिलोमजादीनामपि वर्णशब्देन व्यपदेशो न स्यात् । निरस्तं हि याज्ञवल्क्यादिभिर्वर्णाश्रमेतराणां चेति प्रयोगेणानुलोमप्रतिलोमजादीनां वर्णत्वमिति स्पष्टमिदं मिताक्षरादिदर्शिनाम् । यत्तु—

अमेरिकादेशे गौरवर्णानां केषांचन 'रेड इण्डियन' इतिव्यपदेशः, न स आर्याणाम्, किन्तु अमेरिकापश्चिमदेशीयानामेव। प्रसिद्धा हीयं कथा सर्वत्र यत् कोलम्बसाभिधानः कश्चन पोर्चुकेशमहाराजसाहाय्येन भारतवर्षं द्रष्टुं प्रतिष्ठमानः प्राच्या दिशा गन्तुं पश्चिमया दिशा गतोऽमेरिकादेशस्यैव कंचन पश्चिमभागं भारतमिति जग्राह। तदारभ्य च तत्रत्यानां सर्वेषां 'इंडियन' इति व्यवहारः प्रारब्धः। अनन्तरं यदा भारतवर्षमेव वस्तुसदधिगतं वासकोडिनाम्ना पोर्चुकेशवास्तव्येन, तदारभ्यात्रत्यानां तेषां च भिन्नत्वेन व्यवहारार्थं 'रेडइंडियन' इति व्यपदेश उपक्रान्त इति। अनेन चेदं स्पष्टमवगम्यते यत् ( Black Indian ) इति व्यपदेशोऽत्रत्यानामाङ्ग्लैः क्रियते चेदपि यथा तदनुसारेणात्रत्यानां सर्वेषां न शूद्रत्वमेवं तेषामपि न ब्राह्मणत्वादिकमित्यवश्यमेवोरीकर्तव्यम्। तथाच गौरादिवर्णसम्बन्धकृतो ब्राह्मणादिषु न वर्णशब्दप्रयोग इत्यनादिरयं वर्णविभाग इत्यवश्यमेवोरीकर्तव्यमिति सिद्धम्।

[ब्राह्मणादिविभागस्य स्वभावसिद्धत्वम्]

एतेन—ब्राह्मणादिविभागोऽपि स्वभावसिद्ध इति—व्याख्यातम्। व्यक्तं चैतदुमामहेश्वरसंवादे महाभारते विवेचितम्। वचनानि चात्रापेक्षितान्युत्तरत्र स्पष्टीभविष्यन्ति। सत्यं, ब्रह्मक्षत्रविट्शूद्राणां नावयवभेदः समस्ति, तथापि न जात्यैक्यं सम्भवति। नहि सर्वेषामवयवसाम्येन सर्वपुत्रत्वं सर्वपितृत्वं वा सम्भवति। अयमस्य पुत्रोऽयमस्य पुत्र इति भेदे हि नावयवभेदः कारणम्, किन्तु व्यवहारमात्रमिति तु सर्वसम्मतमिदम्। अनेन च न्यायेनेदमपि सिद्धं भवति कस्मिंश्चन समुदाये ब्राह्मणत्वेन प्रसिद्धे पुत्रत्वादिना सञ्ज्ञा-

तानां ब्राह्मणत्वमन्येषां क्षत्रियत्वादिकमिति व्यपदेशे न कोऽपि विरोधः ।

अस्मिन् प्रसङ्गे प्रकरणपञ्चिकातः कानिचन वाक्यानि सर्वेषां पुरतः स्पष्टप्रतिपत्त्यर्थमुपन्यस्यन्ते । तद्यथा— "अनयैव दिशा ब्राह्मणत्वादिजातिरपि निवारिता । नहि नानास्त्रीपुरुषव्यक्तिषु पुरुषत्वादर्थान्तरभूतमेकमाकारमात्मसात्कुर्वन्ती मतिराविर्भवति । नहि क्षत्रियादिभ्यो व्यावर्तमानं सकलब्राह्मणेष्वनुवर्तमानमेकमाकारमतिचिरमनुसन्दधतोऽपि बुध्यन्ते । यदप्याहुः—यद्यप्यापातसंजातया बुद्ध्या ब्राह्मण्यं नावसीयते, तथापि ब्राह्मणभूतमातापितृसम्बन्धानुसन्धानप्रभवायां बुद्धौ तच्चकास्तीति । तदपि स्वमानसाविसंवादि । अनुसन्दधानोऽपि मातापितृसम्बन्धं को जात्वेकमाकारमवबोद्धुं शक्नोति । नन्वेवं बह्ववहीनम् । किंनिबन्धनो हि तदानीमाहवनीयादिसाध्यकर्मसु केषाञ्चिदधिकारो नान्येषामिति । किन्निबन्धना च ब्राह्मणादिशब्दस्य प्रवृत्तिव्यवस्था । अत्रोच्यते—अनादौ संसारे जन्यजनकभावेन व्यवस्थितास्तावत् काश्चित् पुरुषसन्ततयः सन्ति । तासामन्योन्यव्यतिरेकजाताः स्त्रीपुंव्यक्तयो ब्राह्मणशब्दवाच्याः । अनिदम्प्रथमतया च सन्ततेः सर्वेषां तत्सन्ततिपतितत्वात्सिद्धा ब्राह्मणपदवाच्यता । तेन सन्ततिविशेषप्रभवत्वमेव ब्राह्मणशब्दप्रवृत्तावुपाधिः । तत्प्रभवनामेव कर्मस्वधिकार इति न किञ्चिदवहीनम् । के पुनस्ते सन्ततिविशेषाः, न ते परिगणय्य निर्देष्टुं शक्यन्ते । किन्तु लोकत एव प्रसिद्धाः प्रत्येतव्याः । तथा च तज्जन्यत्वेऽवगते ब्राह्मणशब्दं प्रयुञ्जते लोकाः, इत्यादि ।

[जातिभेदे शालिकनाथादिमतपरीक्षणम्]

अनेन चेदं स्पष्टमवगम्यते यदेतत्पुत्रत्वादिकमिव ब्राह्मणत्वमपि नानुगत आकारविशेषः सर्वावबोधयोग्यो यद्यपि, तथाप्ययं ब्राह्मणोऽयं क्षत्रिय इति सन्ततिविशेषप्रभवत्वादिना निर्णेतुं शक्यत एवेति। इयान् विशेषः—यदधुनातना वर्गविशेषं परिकल्प्य तेषां ब्राह्मणादिव्यपदेशं कल्पयन्ति, शालिकनाथस्तु वर्गमप्यनादिसिद्धं तत्र ब्राह्मणपदव्यपदेशमप्यनादिसिद्धं मन्यते। अयमपरो विशेषः—यदधुनातनानां मते वर्गपरिवर्तनं योग्यम्, शालिकनाथमते न तत्परिवर्तनं योग्यमिति। किमत्र युक्तम्? शालिकनाथमतमेव युक्तम्। नह्यन्यथा समाजसौकर्यमपि सम्भवतीति तु पूर्वमेव सूचितम्। सन्ततिविशेषजन्यानां च तेषां सन्ततिविशेषान्तर्भावार्थं संस्कारभेदाः शास्त्रेषु विहिताः। तादृशसंस्कारं विना तु न ब्राह्मणादिसन्ततावन्तर्भाव इत्यभिप्रायेणैव 'जन्मना जायते शूद्रः' 'कर्मणा जायते द्विजः' इत्यादीनि वचनानि प्रवृत्तानि। नहि वयमपि संस्कारविशेषैर्ब्राह्मण्यं जायत इति वदामः, किन्तु विद्यमानं ब्राह्मण्यमभिव्यज्यत इति। अत एवोपनयनादीनां संस्कारशब्देन व्यपदेशः। विद्यमानयोग्यताभिव्यञ्जकमेव खलु संस्कारकर्म भवति। अत एव घर्षणादिकमादर्शस्य संस्कारकर्मेति व्यपदेशः।

[ जातिपरिवर्तनासम्भवः ]

एतेन—सन्तत्यन्तरजन्यानामप्युपनयनादिना ब्राह्मण्यादिकमिति वादोऽपि—परास्तः। नहि घर्षणादिकमादर्शस्येव लोष्टादेरपि संस्कारकर्म भवति। अत्रायं निष्कर्षः—जन्ममात्रेण ब्राह्मण्यम्, कर्मणा तु वर्णत्वमिति। एतेन—"ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्" इति वचनमपि व्याख्यातम्। ब्राह्मणेषु तु वर्गरूपेण रूपान्तरेण वा विभागान्तरादि-

कल्पनं तु नास्माकमपि विप्रतिपन्नम् । अतो गौडद्राविडादिविभाग उपपद्यते । एतेन—तिबेटादिदेशेषु जावाद्वीपे चाधुनापि वर्गरूपेण भेदकल्पनादिकं विद्यत इत्यत्रापि तादृशमेव तदासीदिति शङ्कापि-परास्ता । न ह्यन्यत्रापि यथा विभागस्तथैवात्रापि विभागकल्पनं नियतम् । नह्यस्मदीयं धर्मशास्त्रादिकं ते प्रमाणतया मन्यन्ते । एतेन—भगवत्सृष्टत्वाविशेषात् कथं यूरोपादिदेशेषु नास्मच्छास्त्राधिकारिणः केऽपि वर्तन्त इति शङ्कापि—परास्ता । शास्त्राधिकारो हि श्रद्धाविशेषप्रयुक्तः । तद्देशीयानां च ख्रिस्तमतावलम्बित्वात् कथमस्मच्छास्त्रेषु श्रद्धा भवति । श्रद्धोत्पत्तौ चोपदेशकानां व्याख्यानमेव निमित्तम् । देशान्तरे च भारतीयशास्त्राप्रमाणीकरणमेव परमधर्मतया स्वीकुर्वन्त्युपदेशकाः । न केवलं देशान्तर एवेदं कार्यमेते समाचरन्ति, किन्तु भारतवर्षेऽपीति प्रत्यक्षमिदं सर्वेषाम् । यूरोपीया अपि हि ते भारतीयानां जातिभेदव्यवस्थामत्यन्तमेव समादरणीयां मन्यन्ते । किञ्च वर्गभेदोऽपि पूर्वं कल्पितः समाजसौकर्यार्थमिति खलु भवतां मतम् । तत्र च यदि न व्यवस्था स्वीक्रियते, तर्हि किंवा समाजसौकर्यं तत्र भवतीत्यकामैरप्यस्य व्यवस्थितत्वमेव स्वीकर्तव्यम् । तथाच किमिति तस्य कर्मणो वा विपरिवर्तनमिदानीं कर्तव्यम् । कीदृशमसौकर्यं वर्गभेदकल्पनात्पूर्वमासीत्, इदानीं च तदसौकर्यं वर्गभेदव्यवस्थापरित्यागेनापि परिहरिष्यत इत्यादिकमवश्यमेवाधुनातनानामपि समालोचनीयम् । विघटनं ह्यल्पशक्तिकेनापि व्यवस्थाविशेषाणां सम्भवति । संघटनमेव खलु महतामप्यसाध्यम् । संघटनं चेदं तत्तद्धर्मपरिपालनाधीनमेवेति पूर्वमेव ब्रह्माण्डपुराणादिवचनानुसारेण निरूपितम् । तथाच कदापि चातुर्वर्ण्यं न कर्मकृतमासीत्, जन्मकृतमेव तदासी-

दिति सिद्धान्तः। एतेन—चातुर्वर्ण्यं पूर्वं कर्मकृतमासीत् कालान्तरेण व्यवसायदैर्घ्यात् जन्मकृतं संवृत्तमित्यादिशङ्कापि—परास्ता। अत एव "ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत" इति सृष्ट्यारम्भकाल एव ब्राह्मणादिसृष्टिराम्नायमानोपपद्यते। वृत्तिविशेषकृतं ब्राह्मण्यादिकमिति पक्षे हि "पद्भ्यां शूद्रो अजायत, इति जननश्रवणमनुपपद्यमानमेव स्यात्। अस्तु प्रथमं वर्णभेदकल्पनमेवासीत्, नतु जातिभेदकल्पनादिकम्, जीविकाविशेषकृतैव ब्राह्मण्यादिव्यवस्था चेति। एवमपि ह्यनापदि वर्णान्तरजीवनेन स्ववर्णाच्च्युतिः स्वस्य पुत्रादेश्चावश्यमेवोरीकर्तव्या। तत्र च स्वस्मात्पञ्चमस्य सप्तमस्य वा स्वपूर्वतनवर्णप्रवेशो यद्यपि "जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा" इति याज्ञवल्क्यादिवचनेन योग्यः। एवमपीदानीं वर्णपरिवर्तनकथाया नावसरः। इयमत्रत्या मिताक्षरा— "जातयो मूर्धावसिक्तादयस्तासामुत्कर्षो ब्राह्मणत्वादिजातिप्राप्तिः जात्युत्कर्षो युगे जन्मनि सप्तमे पञ्चमे। अपिशब्दात् षष्ठे बोद्धव्यः। व्यवस्थितश्चायं विकल्पः। व्यवस्था च—ब्राह्मणेन शूद्रायामुत्पादिता निषादी सा ब्राह्मणेनोढा दुहितरं काञ्चित् जनयति सापि ब्राह्मणेनोढाऽन्यामित्यनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति। एवं ब्राह्मणेन वैश्यायामुत्पादिताऽम्बष्ठा क्षत्रियायामुत्पादिता मूर्धावसिक्ता षष्ठं पञ्चमं च यथाक्रमं ब्राह्मणं जनयति" इत्यादि। अत्र यत् जात्यन्तरोत्पादितस्त्रीपरम्परायां षष्ठ्याः पञ्चम्याश्चतुर्थ्या वोत्कृष्टब्राह्मणोढाया ब्राह्मणादिपुत्रजनकत्वमुक्तम्, तदिदं वर्णान्तरप्रविष्टस्य या कन्या तत्कन्यापरम्पराया अप्युपलक्षणमेव। अत एव सङ्करजातानामपि पञ्चमे सप्तमे युग इव वृत्त्यन्तरजीवनेन पतितानामपि

पञ्चमे सप्तमे वा युगे उत्कृष्टं जन्म भवतीत्यभिप्रेत्यैव मनुना वृत्त्यन्तरं स्वीकृतानामपि पतितानां पञ्चमसप्तमयुगादिषूत्कर्षः प्रतिपादित उपपद्यते । सर्वथा तु वर्गभेदव्यवस्थानन्तरं वर्गान्तर-पतितत्वं येषां तेषां तत्पुत्रादेर्वा न जात्युत्कर्षः, किन्तु तत्कन्या-पञ्चमादिपरम्परोत्पन्नस्यैव जात्युत्कर्ष इति तेषामेव वर्गपरिवर्तन-मिदानीं कारयितुं शक्यं येषां स्वमातृमात्रादिपरम्परायां बहोः कालादारभ्योत्कृष्टवर्गसम्बन्धो ज्ञायत इति । इदानीं यदा वयमस्म-न्मातृमातामह्यादीनामेकजातीयवर्गसम्बन्धमेव जानीमस्तदा वर्ग-परिवर्तनस्य जातिपरिवर्तनस्य वा नावकाशः । नहीदानीं कोऽपि क्षत्रियत्वेन वैश्यत्वेन शूद्रत्वेन वा प्रसिद्धः स्वमात्रादेर्बहोः काला-दारभ्य ब्राह्मणोढत्वमेव वर्तत इति मन्यते इत्युक्तयाज्ञवल्क्यवचना-नुसारेणेदानीं जातिपरिवर्तनवादोऽत्यन्तमेवायोग्यः । एतेन—-एवंच कर्मभिर्जातिपरिवर्तनं याज्ञवल्क्यसम्मतमेव, द्रष्टव्या चात्र मिताक्षरेति शङ्कापि—परास्ता । सर्वथा तु वर्गपरिवर्तनं जातिपरि-वर्तनं वा कर्मपरिवर्तनं वाऽनापदि कथमपि न योग्यम् । परिवर्तनं चापत्कालिकं दृष्टकर्मणामेव । अदृष्टार्थानामापत्कालेऽननुष्ठानमेव योग्यम्, न तु तत्परिवर्तनमपि । विद्यते हि यथाशक्तिन्यायो मीमांस-कानाम् । स च नित्यनैमित्तिकविषय एव, न तु काम्यकर्मविषये । काम्यकर्मणि तु प्रारब्धापरिसमाप्तौ प्रायश्चित्तमाम्नातं वर्तते । नच तत्राङ्गलोपोऽपि सह्यः । तथाच यत्रापत्तिस्तर्हि यावदापन्नित्य-कर्म नानुष्ठीयताम् । दृष्टार्थेषु भोजनादिष्वापदवस्थायां यावदापत्ता-वन्निषिद्धभक्षणमपि न दोषायेति सर्वसम्मतमिदम् । व्यक्तं चैतन्महाभारते विश्वामित्रश्वपचसंवाद इति तत एवावगन्तव्यम् । नहि जातिपरिवर्तनं विना किमप्यनर्थमिदानीं वर्तते । अत्र चायं

पर्यनुयोगः सर्वेषामसमाधेय एव—यदि जातिः परिवर्तनीया, तर्हि सर्वेषां ब्राह्मणत्वं प्रापणीयमुत कस्यापि कापि न जातिर्वर्तत इति। अत्र चापरोऽपि पर्यनुयोगो वर्तत एव—यत्पारलौकिकफलमपि जातिपरिवर्तनेऽपि भविष्यति वा न वेति। नहि परलोकविश्वासो येषां नास्ति तेषां जात्याचारव्यवस्थादिकं किमप्यादरणीयं वयमपि पश्यामः। कति वा शास्त्राणि जातिभेदमवलम्ब्यैव प्रवृत्तानि भारते वर्षे वर्तन्ते। एतावतां सर्वेषामपि शास्त्राणामप्रामाण्यं केन च शास्त्रान्तरेणावष्टब्धेनास्माभिः साधनीयम्। वयं तु पश्यामः—शास्त्रीया व्यवस्था पर्यालोच्यमाना जातिभेदं सुदृढमेव साधयतीति सङ्करजातादीनां जातिपरिवर्तनं न कथमपि योग्यम्।

[ आपदि वृत्त्यन्तरानौचित्यम्। ] एतेन—"जघन्यो नोत्तमां वृत्तिमनापदि भजेन्नरः" इत्यत्रानापद्युत्तमवृत्तिस्वीकारनिषेधादापदि तत्स्वीकारे बाधकाभाव इति सिद्धान्तोऽपि—व्याख्यातः; इष्टत्वात्। इदमेवात्रालोचनीयम्—का वा तादृशी कष्टतरावस्था, यया जघन्यानामुत्तमवृत्तिस्वीकारमन्तरा जीवनयात्रापि न भवति।

[ कर्मकृतब्राह्मण्यादिकं जन्मान्तरीणम्।] तथाचानादिसिद्धजातिपरिवर्तनमत्रैव जन्मनि कथमपि न भवति। जन्मान्तरे तु कर्माधीनं ब्राह्मण्यादिकं सम्भवत्येव। व्यक्तं चैतन्महाभारते इन्द्रमतङ्गसंवादे विवेचितम्। उपरिष्टाच्च वचनानि विलिखिष्यन्ते। एवं च कर्मकृता ब्राह्मणजातिरित्यादिवचनानां जन्मान्तरब्राह्मण्यादिविषयतयैव योजनं युक्तम्, नतु तत्तज्जन्मब्राह्मण्यादिविषयतया। "मासेन शूद्रो भवति ब्राह्मणः क्षीरविक्रयात्" इत्यादिवचनानां तु ब्राह्मणादिकर्मानधिकारबोधनेन शूद्रसमत्वबोधन एव तात्पर्यम्। व्यक्तं चैतत्तत्तद्वचनविचारपूर्वकमुपपादयिष्यते। एतदेवाभिप्रेत्य

छान्दोग्ये "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा" इति विवेचितम्। अत्र योनिशब्दप्रयोगात् जन्मत एव ब्राह्मण्यादिकमिति स्पष्टमेवावगम्यत इति कर्मकृतब्राह्मण्यादिवादोऽयमत्यन्तमेवावहेयः।

अत्रेदमालोचनीयम्—आपद्यपद्धर्माचरणेन कथमब्राह्मण्यादिकम्। प्रकृत्यनुसारिणी खलु जनानां भक्ष्याभक्ष्यादिप्रवृत्तिः। तदुक्तं गीतायां "प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति" इति। नहि कदाचित्पातित्यप्रयोजकसुरापानादिना सर्वदा पतितत्वम्; प्रायश्चित्तविधिवैयर्थ्यापातात्। नहि सुरापानप्रवृत्त्योऽन्यजातीयत्वनिर्णयः सम्भवति। तथाच स्वभावानुसारेण ब्राह्मण्यादिकं न निर्णेतुं योग्यम्। अतो गत्यन्तराभावात् जातिपरिवर्तनमिदं केवलशास्त्रसमधिगम्यम्, नतु प्रत्यक्षसमधिगम्यम्। व्यक्तं चैतत्कुमारिलपादैः "जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा" इतिवचनव्याख्यानप्रसङ्गेन विवेचितम्। अयं तत्रत्यसारांशः—ब्राह्मण्यादिकं सत्यं मातापितृजात्यैव सर्वत्रावगम्यम्। पञ्चमे सप्तमे वा जन्मनि तु मातापित्रोरुभयोरपि ब्राह्मणादिजातिकत्वाभावेऽपि ब्राह्मण्यं केवलशास्त्रप्रामाण्येनैव स्वीकर्तव्यमिति। अनेन हीदं स्पष्टं सूच्यते—यत्र यत्र भिन्नजातीयमातापितृकत्वेऽपि भिन्नजातित्वं शास्त्रसमधिगम्यं वर्तते; तत्र तज्जातीयत्वं केवलशास्त्रसमधिगम्यमिति। तथाचानापद्यापद्धर्मानुसरणेनापि शास्त्रप्रामाण्यात्तस्याब्राह्मण्यं ब्राह्मणोचितकर्मानधिकारो वा बोध्यत इति न किञ्चिदनुपपन्नम्। ये तु पुनर्गुणकर्मकृतमेव

[ जातिभेदस्य प्रत्यक्षत्वपरीक्षणम्। ]

ब्राह्मण्यमिति वदन्ति, तेषां मते कदाचित् ब्राह्मण्यं कदाचना-ब्राह्मण्यमिति महत्यव्यवस्था समाप्नोति ।

यत्तु—अनार्यता निष्ठुरता क्रूरता निष्क्रियात्मता ।

[ब्राह्मण्यस्य शीलनिर्णयत्वप्रमाणपरीक्षणम्]

पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥
पित्र्यं वा भजते शीलं मातुर्वोभयमेव च ।
न कथञ्चन दुर्योनिः प्रकृतिं स्वां नियच्छति ॥
कुले महति जातस्य यस्य स्याद्वर्णसंकरः ।
संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु ॥
शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते ।
अश्रेयान् श्रेयसीं जातिं गच्छत्यासप्तमाद्युगात् ॥
शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ।
क्षत्रियाज्जातमेवं तु विद्याद्वैश्यात्तथैव च ॥
अनार्यायां समुत्पन्नो ब्राह्मणात्तु यदृच्छया ।
ब्राह्मण्यामप्यनार्यात्तु श्रेयस्त्वं क्वेति चेत् भवेत् ॥
जातो नार्यामनार्यायामार्यादार्यो भवेद्गुणैः ।
जातोऽप्यनार्यादार्यायामनार्य इति निश्चयः ॥
यस्माद् बीजप्रभावेण तिर्यग्जा ऋषयोऽभवन् ।
पूजिताश्च प्रशस्ताश्च तस्माद् बीजं प्रशस्यते ॥

इति शीलादिनिर्णेयं ब्राह्मणत्वादिकमित्युक्तम्; तदिदं यत्र मातापितृविनिर्णयो नास्ति, यत्र वा संकरजातित्वनिर्णयो वर्तते, तद्विषयमेव । अत एव—

वर्णापेतमविज्ञातं नरं कलुषयोनिजम् ।
आर्यरूपमिवानार्यं कर्मभिः स्वैर्विभावयेत् ॥

इत्युपक्रम उपपद्यते ।

अत्रोक्तानां वचनानामुपन्यासेनेदमपि सूच्यते—संकरजातानामपि केषाञ्चन पितृब्राह्मणत्वादिना ब्राह्मणत्वादिकं भवतीति यद्विवेचितम्—तदिदं सप्तमयुगमारभ्यैव, नतु प्रथमजन्मारभ्यापि। तदुक्तम्—आसप्तमाद्युगात्, इति। तथाच कुम्भजातादीनां विश्वामित्रादीनां च गुणतः प्रशस्तत्वेऽपि ब्राह्मण्यं तत्कन्यापरम्परायां षष्ठ्यामुत्पन्नस्यैव जातिब्राह्मणत्वेन सर्वब्राह्मणकर्माधिकारः। कुम्भजातादीनां तु स्वपित्रनुग्रहविशेषेण सर्वविद्यास्फुरणमेवेति ब्राह्मणजातित्वं तेषां नास्त्येवेति। एतदेवाभिप्रेत्य खण्डदेवाचार्यैरपि विश्वामित्रादीनां न ब्राह्मणजातित्वमिति विवेचितम्। एतेन—"शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैव शूद्रताम्" इति मनुवचनमपि—व्याख्यातम्। इदं हि वचनं 'अश्रेयान् श्रेयसीं जातिं गच्छत्यासप्तमाद्युगात्' इति वचनानन्तरमेव प्रवृत्तमिति न भिन्नजातीयमातापितृकाणां तस्मिन्नेव जन्मनि ब्राह्मणत्वादिपरमित्यकामेनाप्यूरीकरणीयम्। एतेन—व्यासादयोऽपि—व्याख्याताः। अधिकं चात्र निरूपणीयं पूर्वमेव निरूपितम्, निरूपयिष्यते चोपरिष्टात्। सर्वथा तु जातिपरिवर्तनमिदं न कथमपि सम्भवति।

[ पञ्चमे सप्तमे वा युगे जातिपरिवृत्तियोग्यता ]

जन्मवैचित्र्यं हि पूर्वजन्मकृतशुभाशुभकर्मफलमिति पूर्वोक्तछान्दोग्यवचनानुसारेणावश्यमेवोरीकर्तव्यमिति कथं न स्वभावसिद्धा जातिः। एतेन—पूर्वजन्मकृतशुभाशुभफलं न जातिः, किन्तु सुखदुःखविशेषादिकमेवेति शङ्कापि—परास्ता। न ह्यन्यथा 'वसन्ते ब्राह्मणमुपनयीत' इत्यादि ब्राह्मणादीनामुपनयनतः पूर्वं सिद्धवदनुवाद उपपद्यते। यथा हि पाकात्पूर्वमोदनस्याभावेनोदनस्य

[ जातिभेदस्य जन्मान्तरीयकर्मनिमित्तत्वाङ्गीकारः ]

साध्यत्वं सम्भवति। नहि पाकात्पूर्वं या तण्डुलावस्था सैव पाकानन्तरमप्यनुभूयत इति युक्तमोदनस्य साध्यकर्मत्वम्। उपनयनात्पूर्वं विद्यमानैव खल्ववस्थोपनयनानन्तरमपि समनुभूयते, न तु किमप्यवस्थान्तरम्। अतो हि 'व्रीहीन् प्रोक्षति' इत्यादौ प्रोक्षणेन व्रीहीणामिव ब्राह्मणस्यापि संस्कार एव फलमुपनयनेनेत्यवश्यमेवोरीकर्तव्यम्। तत्र च व्रीहीणामिव सिद्धवदनुवादो ब्राह्मणादेर्यो विद्यते; स हि जातित एव ब्राह्मण्यं विना न कथमप्युपपद्यते। एतेन—ओदनं पचतीत्यादौ पाकेनोदनं करोतीतिवत् 'वसन्ते ब्राह्मणम्' इत्यादावपि वसन्ते ब्राह्मणमुपनयनेन कुर्यादित्यर्थस्वीकारे बाधकाभाव इति शङ्कापि—परास्ता। एतेन "राजा राजसूयेन स्वाराज्यकामो यजेत" इति वाक्यमपि व्याख्यातम्। अत्रापि ह्यभिषिक्तक्षत्रियमात्रग्रहणमिति हि मीमांसका विवेचयन्ति। तत्र यदि येन राज्यं क्रियते तस्यैव राजपदेन ग्रहणम्, तर्हि कथं वाऽवेष्ट्यधिकरणविरोधो न भवति?

यत्तु सर्वस्यापि मीमांसाशास्त्रस्यार्वाचीनत्वमिति वर्ण्यते, तत्रेदमेवास्माकं वक्तव्यम्—यद्यदि मीमांसाशास्त्रमर्वाचीनमर्वाचीनत्वेन न प्रमाणम्, तर्हि कथं वा भवतां व्याख्यानमद्यतनमत्यन्तमेवार्वाचीनतमं च प्रमाणं भवति?

मीमांसाशास्त्रं हि वयं तु मन्यामहे लौकिकानां न्यायजातानामुत्सर्गापवादविधया तत्र तत्र योजनेनैव तत्तादृशं निश्चयं सम्पादयतीति कथं वा तदप्रमाणता शङ्कितुमपि शक्या? शास्त्रपारतन्त्र्येण खलु शास्त्रार्थविचारो युक्तः शास्त्रपौरुषेयत्वेऽपौरुषेयत्वे च, नत्वल्पज्ञस्वानुभवपारतन्त्र्येणेति मीमांसाशास्त्रमेवोक्तविधयैव शास्त्रार्थनिर्णयपरं सर्वादरणीयम्, न त्वाधुनिकानां विवरणजालं

यथेच्छमिति जातिपरिवर्तनमिदं मीमांसकमतविरुद्धमपि भवति; अन्यथा हि राजसूयादीनां ब्राह्मणाधिकारिकत्वेऽपि न दोष इति स्यादिति पारलौकिकफलं स्वर्गादिकमन्याधिकारिकेण कर्मणाऽन्येन कृतेनापि स्यादिति कल्पनापि कर्तव्या स्यात्। सा च यावत्पारलौकिकफलस्वरूपस्य तस्य कर्मणश्च साध्यसाधनभावस्य च ज्ञानमन्तरा कथं सम्भवति? अस्तु वा स्वर्गस्य लोकान्तरस्थत्वं मा वा, जन्मान्तरसम्बन्धित्वे तु न विवादः। नहि सर्वस्य कर्मणः फलं तत्तज्जन्मन्येव भवतीति कल्पनं सम्भवति; जन्मान्तरस्याकस्मिकत्वापातात्। जन्मान्तरीयं च सुखविशेषमिदन्तया प्रदर्श्य को वा शक्नोति भगवन्तमन्तराऽनेन साधनेनेदं भवति नानेनेत्यादि निरूपयितुमित्यादि पूर्वमेव निरूपितं विस्तरेणेति जातिपरिवर्तनमिदं सर्वथा न क्षमायेत्यत्र तु न विशयलेशोऽपि। यथा च सृष्टिकालमारभ्यैव जातिः स्वभावसिद्धा वर्तते, तथा पूर्वमेव विवेचितम्।

[ क्षत्रियादिवंशे ब्राह्मणाद्यनुत्पत्तिः ]

नहि क्षत्रियवंशे ब्राह्मणो ब्राह्मणवंशे क्षत्रियश्च क्षत्रियमातापितृकत्वे ब्राह्मणमातापितृकत्वे वा कदाप्यासीत्। विश्वामित्रविषये तु चरौ मन्त्रविशेषेण ब्राह्मणशक्तिः सम्पादितेति महाभारत एव व्यक्तम्। वीतहव्यादीनां तु ब्रह्मर्षित्वमात्रं न तु ब्राह्मणत्वं ब्राह्मणकर्माधिकारो वा। ब्रह्मर्षीणां च वीतहव्यादीनां वंशे ब्राह्मणानामेवावस्थानमनन्तरमासीदिति महाभारतवचनानामपि वीतहव्यकन्यापरम्परायां पञ्चम्यादिसमुत्पन्नापत्यविषयत्वमित्यूरीकरणान्नानुपपत्तिः।

[ क्षत्रियाणां प्रवरकोटियोग्यतापरीक्षणम् ]

यत्तु क्षत्रियाणामपि केषाञ्चित् अम्बरीषादीनां प्रवरमध्ये प्रवेशात् ब्राह्मणापत्यत्वं ब्राह्मणानामेवेति न नियमः, किन्तु क्षत्रियाणामपीत्यवश्यमूरीकर्तव्यमिति वर्णितम्।

अयं भावः—"राजन्यानां पितृपितामहप्रपितामहत्वं स्वीकर्तव्यम् गोत्रपुरुषस्योत प्रवरणाम् ? आद्ये गोत्रपुरुषस्य ब्राह्मणत्वे तन्निरूपितपित्रादित्वं राजन्ये स्यात्। द्वितीये जातिपरिवर्तनानङ्गीकारे कथं क्षत्रियाणां प्रवरणं नाम ? तदत्र ज्ञायते जातिपरिवर्तनेन क्षत्रिया अपि ब्राह्मणाः संवृत्ता इति। अत एव वायुपुराणे—

(अ० ९९-१९९)

दायादश्चापि गर्गस्य शिनिबद्धाद् बभूव ह।
स्मृताश्च ते ततो गार्ग्याः क्षत्रोपेता द्विजातयः॥
मुद्गलस्यापि मौद्गल्याः क्षत्रोपेता द्विजातयः।
एते ह्याङ्गिरसः पक्षे संश्रिताः कण्वमुद्गलाः॥
तस्यामुत्पादयामास मान्धाता त्रीन् सुतान् प्रभुः।
पुरुकुत्समम्बरीषं मुचुकुन्दं च विश्रुतम्॥
अम्बरीषस्य दायादो यौवनाश्वः परः स्मृतः।
हरीतो युवनाश्वस्य हारिताः शूरयः स्मृताः॥
एते ह्याङ्गिरसः पुत्राः क्षत्रोपेता द्विजातयः॥ इति।

अत्र च क्षत्रोपेता द्विजातय इति पदाभ्यां क्षत्रिया ब्रह्मकर्मयुक्ता इत्येवार्थः प्रतीयते, न तु सङ्करजातीया इति; क्षत्रवंशस्य प्रकृतित्वात्। एवमेव खलु तेषां प्रवरणं सङ्गच्छते; अन्यथा तदसङ्गतं स्यात्। एवञ्च क्षत्रियवंशसम्भूतस्यापि ब्राह्मण्यं पूर्वं सुलभमासीदेव। विश्वामित्रस्तत्र स्पष्टतया दृष्टान्तः। किञ्च ऋषभदेवस्य पुत्रशते एकाशीतिपुत्राणां ब्राह्मण्यं नवानां श्रमणत्वमित्याद्यपि ज्ञेयम् ? किमधिकलेखनेन। सर्वथा पूर्वं जात्यभाव एवासीत्, इदानीं तु जातिपरिवर्तनमवश्यमपेक्ष्यते। केवलं चतुर्विधवर्गीकरणमनादि, तदेव पुनरपि स्थापनीयम्। नान्यजातिवर्गादिकमित्यलमधिकलेखनेनेति"॥

तत्र केचित् वदन्ति—न प्रवरमध्ये कस्यापि क्षत्रियस्य निवेशः। अम्बरीषयौवनाश्वयोरप्यत्र ब्राह्मणयोरेव ग्रहणम्। नामसाम्यमात्रेण हि कथं क्षत्रियस्यैवात्र ग्रहणमुपपद्यते। अत एव—"ऐलाद्याः पुरूरवाश्च क्षत्रियाः। तेषां गोत्रं मनुः। त्रिप्रवराः मन्वैलपौरूरवसेति। वैश्या भालन्दनादयः। तेषां गोत्रं भलन्दनः। भालन्दनसास्नमाक्कीलेति होता। तत्र द्विविधाः क्षत्रियाः। केचिद्विद्यमानमन्त्रदृशः स्वीयानेव प्रवरान् प्रवृणीरन्, केचिदविद्यमानमन्त्रदृशः पुरोहितप्रवरान् प्रवृणीरन्। स्वीयप्रवरसत्त्वेऽपि स्वस्वपुरोहितगोत्रप्रवरपक्ष एव मिताक्षरामेधातिथिप्रभृतिभिराश्रितः। आपस्तम्बेनापि पक्षद्वयमुक्त्वा स्वपुरोहितप्रवरोऽस्त्येव न्यायेनेति। अयं भावः—मन्वादिषु गोत्रप्रवरलक्षणाभावः। अगस्त्याष्टमसप्तर्षीणां ब्राह्मणत्वेन तदपत्यत्वाभावात्। क्षत्रियवैश्ययोर्गोत्रत्वाभावात् सप्रवरत्वस्य सुतरामभावः। नापि सर्वे मन्त्रकृत इति। तस्मात् सर्वैः क्षत्रियैर्वैश्यैर्वा वरणीयः पुरोहित उपात्तः। तद्गोत्रप्रवरैरेव तेषां कर्मानुष्ठानं विवाहाविवाहौ चेति" वीरमित्रोदयकृता प्रवरव्यवस्थोपपद्यते। अन्यथा हि मन्वादिगोत्रप्रवरस्यापि भवन्मतरीत्या सम्भवात् कथमुक्ता व्यवस्थोपपद्येत? वयं तु पश्यामः—पूर्वोक्तवायुपुराणे दायादत्वं क्षत्रियाणामपि यद्वर्णितम्, तदिदं विद्याकृतवंशीयत्वमादायाप्युपपद्यते। अत एव—'एते ह्यङ्गिरसः पक्षे संश्रिता' इति वचनमुपपद्यते। तथाच प्रवरकोटिव्यवहारः क्षत्रियाणामपि न जन्मना चातुर्वर्ण्यसिद्धान्तविरोधीति।

अयं भावः—गोत्रसम्बन्धो हि तदपत्यपरम्पराप्रवेशेन। प्रवराणां तु न गोत्रापत्यत्वमपेक्षितम्। मन्त्रदर्शनमात्रेण खलु प्रवरत्वम्। तथाच विश्वामित्रदृष्टस्य तत्साधितस्य वा मन्त्रस्य शुनः

शेफादिभिरपि साधनात्तदनपत्यस्यापि शुनःशेफस्य यथा तत्प्रवर-प्रवेशः, व्यक्तं च तच्छ्रीमद्भागवतादौ, एवमम्बरीषादिभिरपि हरितदृष्टस्य तत्साधितस्य वा दर्शनं साधनं वा कृतमिति प्रवरत्वं नानुपपन्नम्। सर्वथा तु क्षत्रियाणामपि प्रवरप्रवेशानुपपत्त्या न ब्राह्मणानामपि क्षत्रियाः क्षत्रियाणामपि ब्राह्मणाश्च पुत्रा भवन्तीति कल्पनं सम्भवतीति ब्राह्मणादिमातापितृकत्वेनैव ब्राह्मण्यादिकमित्य-ङ्गीकारे न कोऽपि विरोधः। यत्तु—गोत्रत्वेन परिगणिताः केचि-दृषय एव गोत्रसम्बन्धिन एव पितृपुत्रपौत्रक्रमेणावस्थिताः प्रवरा इति वर्णितम्, नायं नियमः, किन्तूत्सर्गः। अन्यथा हि बहुषु प्रवर-भेदाम्नानं कथमपि नोपपद्यते। गोत्रैक्ये प्रवरैक्ये च विवाहनिषे-धार्थं खल्वसमानार्षगोत्रजामिति वर्णितम्। तत्र यदि गोत्रसम्ब-न्धिनां पितृपुत्रपौत्रादीनामेव प्रवरत्वम्, तर्हि समानगोत्रामित्यनेनै-वेष्टसिद्ध्या व्यर्थं समानप्रवराया अपि निषेधनमिति हि सर्वविदि-तमिदम्। सर्वथा च भिन्नजातीयानामपि प्रवरप्रवेशो न चातुर्व-र्ण्यमव्यवस्थितं गमयतीति सिद्धम्। अस्तु वा क्षत्रियाणामम्बरी-षादीनां गर्गादिमहर्षिसङ्कल्पविशेषेण ब्राह्मण्यमसीदिति, नहि तावताऽस्मदादिसङ्कल्पविशेषेण जातिपरिवर्तनं सम्भवति। एतेन— "यवीयांस एकाशीतिर्जायन्तेयाः पितुरादेशकरा महासत्त्वशालिनो महाश्रोत्रिया यज्ञशीलाः कर्मविशुद्धा ब्राह्मणा बभूवुः" इति श्री-मदृषभयोगिपुत्राणां कर्मणा ब्राह्मण्यप्रतिपादकं श्रीभागवतवाक्य-मपि—व्याख्यातम्; भगवदिच्छाया अपर्यनुयोज्यत्वात्। एतेन— अंमलनेरस्थनारायणकाशीनाथभट्टानां प्रबन्धोऽपि—व्याख्यातः। तद्यथा—

"दृष्टादृष्टप्रयोजनायैव जात्यादिभेदः कल्पितः पूर्वम्, न तु स

तथैवेदानीमपि प्रयोजनाय स्यात्। ग्रीष्मे पुष्णादपि जलसेचनं वनस्पतीन् वर्षासु नैव पुष्णाति। अपिच वैमत्यकारणेष्वेकं कारणं जात्यादिभेदः।

कारणान्तरसामग्र्यां वैमत्यमभावेऽभाव इति कारणान्तरं [ नवीनमतानुसारी प्रबन्धविशेषः। ] चेत्प्रतिबन्धनीयम्, शक्याशक्यतापि विचारणीयेति।

चातुर्वर्ण्यं कर्मकृतमिति शक्यं साधयितुम्। भवतु वा जन्मकृतं चातुर्वर्ण्यम्। जन्म पुनः कर्मकृतम्। अपिच पूर्वकृतसत्कर्मणा चेदुन्नता जातिः, नात्रैव कृतात् कर्मण इत्यत्र किं नियामकम्? गर्हितकर्मणा चेदत्रैव ब्राह्मणः शूद्रत्वमियात्, शूद्रोऽपि तर्हि प्रशंसनीयेन कर्मणा ब्राह्मणत्वं प्राप्तुं शक्नुयात्। श्रूणुमश्च नन्दीश्वरादेरुत्कर्षम्। मास्तु वा समाने जन्मनि कर्मणा जात्युत्कर्षः, तथापि शक्यं चेत् परिवर्तनं नैवायं कामयेदुन्नतां जातिम्; ऐकान्तिकत्वात् कर्मफलानाम्। न खलु कर्मणा गर्दभत्वं यातोऽश्वत्वमाप्तुं शक्नुयात्। सङ्करजातानां परिवर्तने युगोत्कर्षवचनं प्रमाणीक्रियताम्। तथाच मनुः—

शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत् प्रजायते॥
अश्रेयान् श्रेयसीं जातिं गच्छेदासप्तमाद् युगात्॥१०।६४।

याज्ञवल्क्यश्चः—

जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्॥ १-९६ ॥" इति॥

अत्र हि प्रबन्धे जात्यादिभेदोऽपि वैमत्यकारणमिति यदुक्तम्, [ उक्तप्रबन्धसमालोचनम्। ] तदिदं तस्यान्यथासिद्धत्वान्न कारणत्वमिति पूर्वमेवोपपादितत्वादकिञ्चित्करम्। एतेन—पूर्वजन्मकृता-

त्कर्मणो यद्युन्नता जातिस्तर्हि कथमत्र कृतात्कर्मणो नेति शङ्कापि-पराहृता। पूर्वजन्मन्यामरणं तत्तज्जातिधर्माणां यथावत्परिपालनेनैवोन्नता जातिर्यदि स्यात्, तर्हि तु कथमत्र जन्मनि मरणात् पूर्वं कर्म-विशेषेणोन्नता जातिर्भवेदिति सर्व एव विजानन्तु। नहि पूर्वजन्म-न्यत्र जन्मनि वा ईदृशमेव कर्मोन्नतजातिसाधनमिति निर्णयः कस्यापि वर्तते। गर्हितकर्मणा च शूद्रत्वमत्र जन्मनि ब्राह्मणकर्मा-नधिकारो जन्मान्तरे च शूद्रत्वमिति खलु शास्त्रीया व्यवस्था, नत्वत्रैव जन्मनि जात्यन्तरं कस्यापि सम्भवति। नन्दीश्वरादेरु-त्कर्षस्तु योगविशेषेणाणिमाद्यष्टैश्वर्यसिद्ध्योपपद्यत एव। नहीदानीं तादृशो योगसिद्धः कोऽपि स्वस्य ब्राह्मण्यमभिलषन् दृश्यते। तथाच न समाने जन्मनि जात्युत्कर्षः। अनापद्यापद्धर्माचरणादिना पतितानां तु प्रायश्चित्तेन स्वीयजातिसिद्धिः स्वीयकर्माधिकारो वा समाने जन्मन्यपि सम्भवेदेव। नहि कर्मणाऽश्वः कदापि गर्दभत्वं प्राप्नोति, किन्तु तत्तुल्यत्वमेव। एतेन—सङ्करजाता अपि व्या-ख्याताः। तेषामपि सप्तमे युगे जात्युत्कर्षः सर्वसम्मत एव। सर्वथा तु नायं प्रबन्धो व्यवस्थितं कमपि विषयं प्रतिपादयतीति प्रबन्धान्तरसमालोचनार्थं प्रवर्तामहे।

अत्रच प्रसङ्गे श्रीयुक्तमराठे नारायणशास्त्रिमहोदयानां प्रबन्धः समालोचनार्थं स्वीक्रियते। स यथाः—

[श्रीनारायणशास्त्रि-मराठेमहोदयानां मतम्।]

"इदानीन्तनवैमत्ये केवलं जातिभेदो न कारणम्। जाति-भेदीयो भूयानंशः स्वाभाविकवैषम्यात्मको भवति। स च न प्रक्षोभे कारणतां भजते। अस्वाभाविकवैषम्यं हि तत्र कारणम्। अस्वाभा-

त्रिकस्य वैषम्यस्य दिग्यथा—जन्मत एव जातीनामुच्चनीचभावः, नीचजातीनां शुद्धाचारादिद्वारोच्चीकरणाभावः, देशतः कर्मत आचारतो वा भिन्नजातीनां समानाचारोत्पादेन वा विद्यमानसमानधर्मद्वारा वा एकीकरणाभावः । किञ्च देशस्य महत्त्वम्, अन्नादेर्वैपुल्यम्, एकसमाजत्वभावनाया अभावः, विचारवतामपि राष्ट्रबुद्ध्यभावः, देशान्तरेषु गमनागमनादिसाधनसौलभ्याभावेनान्येन वा केनचित् कारणेन देशान्तरीयस्थित्यादिज्ञानाभावः, इत्यादिकारणसमुदायेन सहकारिताबुद्ध्यभावः ।

पूर्वाचार्यैस्तदानीन्तनपरिस्थित्यनुसारेण व्यवस्थाकरणार्थमेव जातिभेदादिकं प्रदर्शितम् । तादृशव्यवस्थया जातिभेदे वर्तमानेऽपि स्वप्रगत्यधिकप्रगतिवद्भिः परकीयैः सह जितजेत्रादिसम्बन्धो नासीत्, यथाधुना । तेन तदानीं विद्यमानेऽपि जातिभेदे व्यक्ततया न दर्शनार्हमनैकमत्यम् । वस्तुतस्त्वैकमत्यं स्यान्न वेति को जानाति तदानीन्तनमितिहासम् । प्रत्युत बौद्धजैनाद्युत्पत्तिः, हैहयभार्गवादिकलहः, देवदैत्यसङ्ग्रामादिकं चैतानि किं दर्शयन्ति । किञ्च योऽयं शिकन्दरादिबाह्यैः शतशो भारतीयानां पराजयः, यश्च भारतीयानामुत्तरोत्तरं नाश एव समजनि जायते च, सोऽयं नास्त्युत्तमं सङ्घटनं भूयसि काले चातुर्वर्ण्यस्येत्येव दर्शयति ।

कदाचित् पूर्वतमस्मिन् काले चातुर्वर्ण्यं कर्मभेदेनैव समजनि । सूचितं चैतद्भारते प्रागेक एव वर्णस्त्रेतायां विस्तर इत्यादिप्रतिपादके भागवतादौ च । पश्चात्तु रूढे कर्मभेदे जन्मतश्चातुर्वर्ण्यं नियमितम् । एवं स्थिते उभयविधवाक्यानामेकवाक्यतापि दुःशका ।

संकरजातीनां परिवर्तनं ( उच्चीकरणम् ) शास्त्रोक्तमेव ।

'जात्युत्कर्षो युगे ज्ञेयः' इत्यादि च तत्रानुकूलं वचनम् ।

जन्मवैचित्र्यं यद्यपि पूर्वकर्माधीनम्; तथापि 'दैवाधीनं कुले जन्म मदायत्तं तु पौरुषम्"—इति॥

अत्र हि प्रबन्धे—वैमत्ये न जातिभेदः कारणम्, किन्तु तत्स-
[ उक्तमतपरीक्षणम् ] म्बन्धिनः केचन नियमविशेषा वैमत्यकारणमित्यत्र न विशयलेशोऽपि, इति यद्विवेचितम्, तत्रेदमेव वक्तव्यम्—यदि जातिभेदो न दोषाय, तर्हि कथं वा तत्परित्यागः समुचितः। उच्चनीचभावादिकं तु सर्वं जातिभेदस्य स्वाभाविकत्वे स्वभावसिद्धमेव भवति। को हि ब्राह्मण इति पतितमपि ब्राह्मणं सच्छूद्रादुत्कृष्टं मन्यते? न कोऽपि। सच्छूद्रोऽपि हि असद्-ब्राह्मणापेक्षयोत्कृष्ट इत्यत्र न विशयलेशोऽपि। नहि पतितेन सहासनादिनेव सच्छूद्रेण सहासनादिना पातित्यमिति कोऽपि मन्यते। सच्छूद्रोपि न कदापि वेदाध्ययनस्य तदध्यापनस्य वाऽधिकारं कांक्षेदिति न तस्योत्कृष्टब्राह्मणादर्शनेन वैमत्यस्य सम्भावना। असच्छूद्रापेक्षया त्वसद्ब्राह्मणस्योत्कर्षो जातिमात्रकृतः कथं वारयितुं शक्यते। सर्वथोच्चनीचभावो यदि वैमत्यकारणं तर्हि तस्य बहुनिमित्तस्य परिहारः कथमपि न सम्भवति। यथा च परिस्थितिविशेषो न धर्माणां जातिभेदादीनां च मूलम्, तथा प्रमाणविचारावसर एव विवेचितम्। नहि कर्मकृतं चातुर्वर्ण्यमिति कदाप्यासीत्। व्यक्तं चैतत्पूर्वमेव विवेचितम्। एतेन—शिष्टमपि व्याख्यातम्। तदयं सिद्धान्तः—चातुर्वर्ण्यं न केवलं जन्मकृतं न वा कर्मकृतम्, किन्तूभयकृतम्। तदुक्तं भविष्यमहापुराणे—"संसिद्धिं याति मनुजो जातिकर्मसमुच्चयात्—"इति। उभयकृतत्वं चैवमनुसन्धेयम्—प्रथमतः सर्वेषां जन्मना ब्राह्मण्यादिकम्, अनन्तरं च कर्मणा तत्परिपूर्णं भवतीति। तदुक्तं याज्ञवल्क्यस्मृतौ—

चित्रकर्म यथानेकै रङ्गैः सम्यक् प्रपूर्यते ।
ब्राह्मण्यमपि तद्वत्स्यात्संस्कारैर्विधिपूर्वकैः ॥ इति ।

चित्रकर्म हि यथा आपाततो रूपविशेषमुल्लिख्यानन्तरमेव रङ्गविशेषादिदानेन समाप्यते, एवं जातित आपातसिद्धं ब्राह्मण्यमादायैव पूर्णं ब्राह्मण्यं सम्पादनीयमिति तदर्थः । एतेन—चातुर्वर्ण्यमुभयकृतमेव, तच्च पूर्वं कर्मकृतमिदानीं जन्मकृतमिति शम्भुभट्टसिद्धान्तोऽपि परास्तः ।

अत्र समालोचनसौकर्यार्थं शम्भुभट्टप्रबन्धोऽपि यथावदेव [ शंभुभट्टप्रबन्धः ] निर्दिश्यते । तद्यथाः—

"चातुर्वर्ण्यं कर्मकृतमुत जन्मकृतम् ? उभयमपीति ममाशयः । चातुर्वर्ण्यव्यवस्थापनकाले कर्मकृतमेव तद्भवितुमर्हति । सम्प्रति तु जन्मकृतमित्येव गण्यते, ननु सृष्टिकालेऽपि जन्मकृतमित्यवगम्यते । तथाहि—

लोकानां तु विशुद्ध्यर्थं मुखबाहूरूपादतः ।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत्—३१-१ मनुः ।
मुखबाहूरूपज्जानां पृथक्कर्माण्यकल्पयत्—४०-७ मनुः ।

अनेन विज्ञायते प्रथममेव चत्वारो वर्णा जाताः । पश्चादेव कर्मनियन्त्रणमिति । ब्राह्मणोऽस्य मुखमासीदिति श्रुतिरप्यमुमर्थमुपोद्बलयतीति चेन्न । तत्र प्राचीनवर्णव्यवस्थायां जन्मकृतत्वकल्पनानुपपत्तेः; एकस्मादेव ते चत्वारोऽपि जाता इति हि तत्रोच्यते । कुतो नैकजातीयत्वं तेषामायातमिति पृच्छामः । पश्चात् सर्वशक्तेन गुणकर्मभ्यां विभज्य व्यवस्थापनं कृतमिति नातिविलक्षणः पक्षः । ब्राह्मणादीनामेव सृष्टिरुक्ता, न तु सृष्टानां ब्राह्मणत्वादिव्यवस्थापनं कृतमिति चेत्, किञ्चातः ? लोके हि जातानां

मेव नामकरणम् । कृते नाम्नि नाम्ना निर्दिश्यायं कदा जात इति पृच्छ्यते, कथमेतद्घटताम्? जननकालावच्छेदेन नाम्न एवासिद्धेः। उभयस्थो दोषो नैकतरेण चोदनीयः ; उभयत्रापि समः समाधिः ; तस्मात्तत्तत्कर्मनिर्वर्तनपाटवं विलोक्य तत्तत्कर्मसु नियोगः, तदनुरोधेन वर्णविभागश्च कृत इत्याभ्यूहिकप्रस्थानेन विचार्यमाणे व्यक्तं भवति। किञ्च वर्णविभाग एव नातिप्राचीनः। मनोः पूर्वं वर्णनियम एव नातिव्यवस्थित आसीत्। येन देववर्गे नायं वर्णनियमः। ऋषिवर्गे दृष्टोऽपि निर्नियन्त्रण एव दृष्टः। विश्वामित्रोपाख्यानमसुमर्थं समर्थयति। पूर्वमेवैतत् प्रपञ्चितमित्येतावता विरम्यते। "चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः" इति गीतापि पस्पष्टममुमर्थमाचष्टे ।

स्य यथा अरणिनिर्मन्थनजातोऽग्निरेव गार्हपत्यसंविष्टः पश्चादाहवनीयादिषु प्रणीयते, न तु तत्रान्यन्निर्मन्थनं कृत्वाऽग्न्यन्तरसम्पादनम्। तथा सकृद्विभागशो गुणकर्मद्वारा वर्णविभागे कृते पश्चात्तत्तज्जातीयक्षेत्रजातानां तत्तज्जातीयत्वम्, नतु पुनरपि पूर्वोपाधिकी व्यवस्था। अयमर्थः स्मृत्यादिषु न विविच्य प्रदर्शितः ; प्रयोजनाभावात्। तत्र हि क्षेत्रप्रयुक्ता जातिव्यवस्थाऽऽश्रीयते । ततस्तदनुगुणमेवोच्येत। अहमस्मिन् क्षेत्रे जात इत्येवंरूपस्मृतिर्जातिरिति महता प्रपञ्चेनार्थवादपादे कुमारिलभट्टेन तन्त्रवार्तिके प्रदर्शितम्। अयमाधुनिको नियमः "समानवर्णासु पुत्राः समानवर्णा भवन्ति, अनुलोमासु मातृवर्णाः, प्रतिलोमास्त्वार्यविगर्हिताः" इति वि० स्मृ० १५—१—३ ॥ यदि गुणकर्ममात्रप्रयुक्तोऽयं विभागः सर्वदाऽनुस्तियते तर्हि बकवृत्तीनां गुणकर्मविज्ञाने प्रमादसम्भवात् साङ्कर्यं समापततीति क्षेत्रमूलको नियमः समाश्रितः। यदि क्षेत्र-

मूलको नियमस्तथापि गुणकर्माननुगुणस्य कस्यचित्सम्भवे का गतिरिति विचार्य विहितधर्मोल्लङ्घने बहिष्करणादिव्यवस्था स्वीकृता। यदि त्वपकृष्टवर्णोऽपि क्रमेण गुणकर्मानुगुणो भवति, तर्हि तस्य का गतिरिति विचार्य समुचितसंस्कारानुरूप उत्कर्षोऽनुमतः। अत एव सङ्करजातीनां परिवर्तनं शास्त्रेणानुशिष्टम्। यथा—

"जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा" १-९६ या० स्मृ०।

शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते।

अश्रेयान् श्रेयसीं जातिं गच्छत्यासप्तमाद्युगात् ६४-१० इति मनुनाप्युक्तम्। "वर्णान्तरगमनमुत्कर्षापकर्षाभ्यां सप्तमेन" ४-२२ इति गौतमेनाप्युक्तम्। कर्मणां व्यत्ययेऽप्यधरोत्तरभावो याज्ञवल्क्येन प्रदर्शितः "व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तर इति १—९६। प्रतिलोमसङ्कराणां पुनर्वर्णबाह्यत्वं क्वचिदुक्तं दृश्यते। तेषां परिवर्तनं च प्रत्येकतया शास्त्रेणोक्तं न दृश्यते इति व्याख्यातृजनग्रहः।

जन्मवैचित्र्यं पूर्वजन्मकृतशुभाशुभकर्मफलं न वा ? पूर्वकृतशुभाशुभकर्मफलमित्यनुमीयते। नहि कार्ये वैचित्र्यं कारणवैचित्र्यमन्तरा सम्भवति। कस्य जन्मेति प्रथमं विचार्य पश्चाद्वैचित्र्यकारणं गवेषयामः। जन्म शरीरस्यात्मनो वा ?। यदि नित्यत्वादात्मनः शरीरस्यैवेत्युच्यते, तर्हि तदीयं वैचित्र्यं शुक्रशोणितादीनामुपादानभूतानां पोषकसामग्रीसंसेवनरूपं मातापितृशुभाशुभकर्म निमित्तीकरोतीति व्यक्तम्। अत एव च वर्णादिविशेषकामनया जनयित्रोः घृताद्याहारविशेषपरिग्रह उपनिषदादिभिरुपदिश्यते। अथ नित्यत्वेऽप्यात्मनः शरीरोपग्रह एव जन्मेत्युच्यते, तर्ह्यात्मनो जन्मान्तरीयं कर्म वैचित्र्ये नियामकमित्यभ्युपगन्तव्यम्; अन्यथा

तत्र दुर्निर्वचत्वात् । "वैचित्र्यं च समस्य न" इत्यादिना कुसुमाञ्जलावुदयनाचार्यैर्जन्मवैचित्र्ये कारणवैचित्र्यं विचारितम् । अन्ते चैवमुक्तम्—

"कर्तृधर्मा नियन्तारश्चेतिता च स एव नः ।
अन्यथानपवर्गः स्यादसंसारोऽथ वा ध्रुवः" इति कु० १-१४ ।

पूर्वजन्म च 'जातमात्रस्य स्तन्यपानादौ प्रवृत्तिदर्शनात्' इत्यादिना न्यायनये समर्थ्यते, किमधिकोक्त्या ? नियतिरिति भागधेयमिति दैवमित्याद्यनेकैरभिधानैर्यत्पूर्वाचरितं कर्म, तदेव सकलवैचित्र्यनियामकतया पुराणेतिहासप्रभृतिषु प्रदर्श्यते । तच्चोच्चावचविचित्ररचनाचारुसन्निवेशस्य संसारस्य वैचित्र्यान्यथानुपपत्त्यैवानुमीयत इति । सर्वमप्येतत्कार्ये वैचित्र्यं सामग्रीप्रयुक्तमिति तत्त्वम् । तस्माच्चापकृष्टेनापि क्रमिकोत्कर्षानुगुणसामग्रीसम्मेलनाय सततजागरूकेण उत्कृष्टेनाप्यपकर्षकसामग्रीपरिहाराय निरन्तरश्रद्धालुना, उभाभ्यामप्युभयाभिमतसिद्ध्यानुगुणमैकमत्यं सम्पादयितुं सामुदायिकश्रेयः समार्जयितुं चाश्रान्तपरिश्रमाभ्यां वर्तितव्यमिति, न पुनरत्र स्वर्गप्रच्यवाद्भीत्या वा नरकोपनिपाताद्भयेन वा वैमुख्यं समाश्रयणीयम् । इति" ॥

अत्र व्यवस्थापनकाले कर्मकृतमेव चातुर्वर्ण्यमासीत्, इदानीं जन्मकृतमिति यत् व्यवस्थापितम् तदिदमनुपदमेव निरस्तमिति नात्र विस्तारं कर्तुमभिलाषामः ।

[ उक्तप्रबन्धसमालोचनम् । ]

अत्रेदमवश्यमस्माकमप्यालोचनीयमेव—यदेकब्रह्मोत्पत्तिकानां ब्रह्मक्षत्रविट्शूद्राणां कथं भिन्नजातित्वमिति । वयमत्र पश्यामो नैकब्रह्मोत्पत्तिकत्वेन सर्वेषामेकजातीयत्वमिति । अन्यथा पशुपक्षिसरीसृपवृक्षपञ्चभूतादीनां सर्वेषामप्येकजातीयत्वं स्यात् । जन्मकृतं

ब्राह्मण्यमिति व्यपदेशो हि यस्य यच्छरीरं ब्राह्मणमातापितृशुक्र-शोणितविकाररूपं भवति तदभिप्राय एव । ब्राह्मणः प्रथमसृष्टौ हि सङ्कल्पविशेषेण मानसा एव पुत्रा जायन्ते । तत्सङ्कल्पविशेषेण च ब्रह्मक्षत्रियविट्शूद्रा जायन्ते । तदनन्तरसृष्टिस्तु ब्राह्मणादि-मूलिकेति ब्रह्मसृष्ट्यनन्तरकालमारभ्यैव ब्राह्मणमातापितृकत्वेन ब्राह्मण्यादिजातिव्यवहारः, प्रथमसृष्टावपि सङ्कल्पविशेषेण ब्राह्मणा-दिजातयो जन्ममात्रेणोत्पन्ना इत्यङ्गीकारे नहि किमपि बाधकम् । जन्मान्तरीयतत्कर्मानुरूपं खलु सर्वेषां शरीरं भवति । मानस-पुत्राणां तु ब्राह्मण्यादिकमपि सङ्कल्पविशेषाधीनम् । तत्पुरस्कृत्यैव ब्राह्मणकर्माधिकारः, नतु कर्मणा ब्राह्मण्यम् । "धाता यथापूर्वम-कल्पयत्" इति श्रुतिर्हि ब्रह्मणापि पूर्वतनकल्पानुसारेण सृष्टिः सम्पादितेति बोधयन्ती नापूर्वं सृष्ट्यारम्भकालेऽपि ब्राह्मणत्वादिक-मिति गमयति । अन्यथा हि कथं वा सृष्टिकाल एव ब्राह्मणादीना-मुल्लेख उपपद्यते ? एतेन—तत्तत्कर्मपाटवं दृष्ट्वा तत्तत्कर्मसु विनियोगेन ब्राह्मणादिविभाग इति शङ्कापि—प्रत्युक्ता। यत्तु देववर्गे ऋषिवर्गे च वर्णनियमो न दृश्यते, तत्र तेषां योगसिद्ध्यादिकमेव प्रयोजकमिति नास्मदादीनां विषये स व्यवहार उपयुक्तो भविष्यति । चातुर्वर्ण्यविचारोऽपि मनुष्याधिकारिक एवेति देवानां तिरश्चां वा वर्णनियमाभावेन का वाऽस्माकं हानिर्भविष्यति । मनुष्या यदारभ्य वर्तन्ते तदारभ्य चातुर्वर्ण्यविभागो वर्तत इत्यत्र तु न विवादः ।

[ विश्वामित्रब्राह्मण्ये विचारत्रयीनिर्णयः । ]

विश्वामित्रस्य तु ब्राह्मण इत्युपाधिमात्रं न तु वस्तुगत्या ब्राह्मण्यमिति तु विचारत्रय्यां विवेचितम् । तद्यथा:—

"ननु कथं विश्वामित्रे ब्राह्मणशब्दः । तस्मादगुणतो वर्णाङ्गी-

कार आवश्यक उभयोः। तदा सर्वोऽयं तुरीयमीमांसानिबन्धः सुसम्बद्ध इति चेत्, उपकृतं विश्वामित्रेण त्रिशङ्काविव। महता तपसा ब्राह्मणशब्दं सम्पादितवान् वसिष्ठात्; राजन्यं वा वैश्यं वेति-श्रुत्यनुग्रहाभावात्। यथाधुना राजादिपदवी तथायं ब्राह्मणशब्दः। क्रोशमात्रेप्याज्ञा यस्य नास्ति सोऽपि राजेत्युच्यते। नैतावता ब्राह्मणजातिप्रवेशः; सापिण्ड्यव्यवस्थानुपपत्तेः। "प्रजातन्तुं मा व्यवच्छेत्सीः" इति सापिण्ड्योच्छेदो निषिद्धोऽङ्गीकृतः स्यात्, नान्यथा जात्यन्तरप्रवेशः। यत्र जातौ प्रविष्टस्तत्राप्यभिनवं सापिण्ड्यं निरुद्धम्, केनाप्यसम्बन्धात्। तस्माद्गोत्रप्रवर्तको विश्वामित्रो जातिब्राह्मण एव यं गायत्र्या ऋषिं स्मरामः। अभिनवो विश्वामित्र-नामा ब्राह्मणः। तस्य ब्राह्मणशब्दलाभात्पूर्वं यद्गोत्रं तदेवानुवृत्तं सापिण्ड्यं च; अन्यथोभयभ्रष्टत्वापत्तेरिति दिक्" इति।

[वर्णविभागस्य सार्वदिकत्वम्]

अस्तु वा ब्राह्मणत्वमेव विश्वामित्रस्य सिद्धमिति। एवमपि तदानीं वर्णविभाग आसीदेवेत्यत्र तु न विशय-लेशोऽपि। जन्मतोऽपि ब्राह्मण्यमेव विश्वामित्रस्य वर्तते। तत्तु न परं ज्ञातं नाभिव्यक्तं वा तपो विशेषं विनेति खलु महाभारतादवगम्यते इति कथं वा वर्णविभागोऽयं नातिप्राचीनः।

[चातुर्वर्ण्यस्य गुणकृतत्वनिरासः]

चातुर्वर्ण्यं मया सृष्टमिति गीतावाक्यं तु नात्रानुकूलम्। अत्र हि चातुर्वर्ण्यं भगवत्सृष्टमाम्नायते; मयाशब्द-प्रयोगात्। यदि हि गुणकर्मकृतं चातुर्वर्ण्यं स्यात्तदा मयाशब्दप्रयोगोऽत्रासङ्गत एव स्यात्। नहि गार्हपत्य-माहवनीयमिति चानर्थान्तरम्। भिन्नौ खलु तावग्नी। तत्रारणि-मन्थनजत्वं गार्हपत्यस्यैवापेद्यते। आहवनीयस्य तु प्रणयनमा-

त्रसीति वचनादेव व्यवस्था । एवं च ब्राह्मण्यादिविषयेऽपि व्यवस्थाहि न सम्भवतीति गुणकर्मकृतत्वे इदानीमपि जातिपरिवर्तनं स्यादेव । यथाच न गुणकर्मकृतत्वं तथा बहुधोपपादितम् । सर्वथा तु सकृत् गुणकर्मविभागशो वर्णविभागे कृते पश्चात्तत्तज्जातीयत्वेत्रजातानां तत्तज्जातीयत्वं न तु पुनरपि पूर्वोपाधिकमिति वदतामेतत्प्रबन्धकाराणामिदानीं जातिव्यवस्थैव सम्मतेति नात्र विशेषतो वक्तव्यं पश्यामः । इदं त्वत्रावश्यमेव वक्तव्यम्— यदेवं भवतां कल्पनायां न किमपि प्रमाणं वर्तते । कुमारिलपादादयो हि कर्मकृतत्वं न ब्राह्मण्यादेः, किन्तु ब्राह्मणमातापितृकत्वप्रयुक्तमेवेति स्पष्टमेव विवेचयन्ति । तेषां तु पक्षोऽर्वाचीनः भवतां पक्षस्तु प्राचीनतम इति वादः केवलमुपहासास्पदमेव भवति । अधिकं चात्र वक्तव्यं पूर्वमेव विवेचितम् । सम्मतमिदमेतत्प्रबन्धकाराणामपि—यज्जन्मवैचित्र्ये पूर्वजन्मकृतशुभाशुभमेव कारणमिति । तत्र च जन्मान्तरीयकर्मणैव ब्राह्मणादिशरीरान्तरारम्भे कथं वा समाने जन्मन्येकस्यैव कर्मविशेषेण ब्राह्मण्यं स्यादिति सर्वं एव विजानन्तु । एवं च जात्युत्कर्षो यदि जन्मान्तर एव भवति, तर्हि तत्तज्जात्युत्कर्षपरिपालनपूर्वकमेव सामुदायिकं श्रेयः सम्पादनीयं नान्यथा । सामुदायिकं च श्रेयो दृष्टमदृष्टमुभयं च वर्तते । तत्र दृष्टे यथेच्छं प्रवर्त्यताम् । यदि तत्र परलोकान्न भीतेरस्त्यवकाशः । परलोकभीतिं विहाय सम्पादितं तु सर्वथा न श्रेयो भवितुमर्हतीति धर्माविरोधेनैव किमपि श्रेयः सम्पादनीयम् ।

यत्तु पुनः केचन ब्राह्मणैरेव स्वोत्कर्षार्थं नियमविशेषाः स्वजात्युत्कर्षश्च प्रकाशिता इति वर्णयन्ति, तत्र सूनृतवादिनी सम्यगेव समालोचयतीति तामत्र सर्वेषां पुरत उपस्थापयामः । तद्यथाः—

यदि किलेदानीं संचार्येत सर्वतो दृष्टिः प्रज्ञावद्भिः,तदा ननु विनैवायासमेतद्विज्ञायेत-यद्यत्र यत्र गम्यते तत्र तत्र ब्राह्मणैरेवावनतिपथं नीतेयं भारतभूमिरित्यवश्यं प्रतिपाद्यते समुन्नतम्मन्यैरिति। विशेषतश्च ब्राह्मणकुलोत्पन्नानामेवायं कोलाहल इति नूनं विस्मयास्पदमेतत्। न चामीषां दुर्बोधं नाम माहात्म्यं ब्राह्मणजातेः। किन्तु बोधो हि नाम न हि विना जिज्ञासां समुत्पद्यते। सुदूरापेता चामीषामत्र विषये जिज्ञासा, यथा हि ब्राह्मणानां नः प्रमाणमूर्धन्यभूतानि श्रुतिवचनानि; एवमेवामीषां पाश्चात्यवचनानि। एतान्येव चानुसृत्य निर्णयन्तीदानीं सन्दिग्धानर्थान्नव्यशिक्षितमहाभागाः। अभिदधति चैतद्विरुद्धानामप्रमाणतां प्रायेण। मन्यन्ते च पाश्चात्यानामेवानुग्रहेण समुन्मीलितां दृष्टिमात्मीयाम्। पश्यन्तश्च पाश्चात्यानां वेषं च भाषां च सौष्ठवं चाहारं च विहारं चाचारं च मोहातिशयमिव प्रविष्टा उपहतदृष्टय इव निर्विशङ्कमेव निन्दन्ति भारतवर्षीयानाचारान्। तदनुयायिनश्च ब्राह्मणा इति गर्हयन्त्येतानेते। भारतवर्षे किल चत्वारो वर्णा अनेका जातयो नानाविधानि कर्म्माणि तानि च तत्तज्जातिनियतान्येव, नात्र ब्राह्मणः शूद्रीं परिणयति, शूद्रो वा ब्राह्मणीं विवाहयति। नापि विधवां पाणौ गृह्णाति स्वधर्मप्रणयी कश्चिदपि। एतच्च सर्वं ब्राह्मणानामेव प्राधान्याद् भवतीति विनिन्दन्तीदानीं स्वैराचाराः। केषांचित्तु श्राद्धादिषु ब्राह्मणानां निमन्त्रणमेव शिरःशूलमुत्कोपयति। अपरे तु विनैवायासं मिष्टान्नभोजिन एत इति द्विषन्त्येतान्। इतरे तु ब्राह्मणैरेवाज्ञानगर्ते निपातिताः स्म इति प्रलपन्तः कृतघ्ना ब्राह्मणानेव क्लेशयितुं प्रवर्तन्ते। तदन्ये च नितान्तमेवानुपयुक्ता ब्राह्मणजातिरिति निर्विशङ्कमेव व्याहरन्तो यावच्छक्यं

प्रद्र ह्यन्त्येतस्यै । केचित्पुनः स्वार्थान्धतामनुप्राप्तैः प्रतारिताः स्मो ब्राह्मणैरिति प्रलपन्तः शपन्त्येतान् । यदि किल भारतवर्षीयाणामेवेयं कथा, तदा वैदेशिकैर्विधर्मीयैश्च ब्राह्मणेष्वन्यथाऽव्यापारणीयं चक्षुरिति नात्र किमप्याश्चर्यम् । सर्वथा च येयमिदानीमनुभूयतेऽवनतिर्भारतवर्षीयैः, तत्र किल निदानं ब्राह्मणा एवेति सिद्धान्तः केषांचिदिति दिने दिने दावानलप्रसारं प्रसरतः सिद्धान्तस्यास्य स्वरूपमिदानीं परीक्षितुमिच्छामः ।

आस्तां तावदर्वाचीना ब्राह्मणजातिः । परस्तात्किलैनां विचारयिष्यामः । प्रथमतस्तावद्दीयतां दृष्टिर्ब्राह्मणेषु प्राचीनेषु । एते किल शान्ताश्च दान्ताश्च निगृहीतेन्द्रियाश्च ऋजवश्च क्षमाशीलाश्च समभूवन् । जन्मतः प्रभृति पञ्चमे वत्सरेऽक्षरग्रहणादिकमभ्यस्यन्तोऽष्टमे चोपनीता एकं वा द्वौ वा त्रीन्वा चतुरो वा साङ्गान्वेदानधिजगिरे । निखिलान्यपि शास्त्राण्याकलयामासुः । गुरोरेव सदने न्यूषुः । पितृनिर्विशेषं च सम्मेनिर आचार्यम् । तदुपदिष्टेनैव च वर्त्मना जग्मुः । अधीतविद्याश्च समावृत्ताः परिणीय दाराननुपालयाञ्चक्रुर्गार्हस्थ्यम् । अपत्योत्पादनायैव नासीद्दारपरिग्रह एतेषाम् । गार्हस्थ्ये वर्तमानाश्चैते प्रत्यहमुपस्थितानतिथीन् भोजयामासुः । छात्रांश्चाध्यापयामासुः । दानादिभिश्च पात्रभूतान्सम्भावयामासुः । अन्येभ्यश्च पङ्गुप्रभृतिभ्यश्च ग्रासादिकं प्रददुः । उपदिदिशुर्धर्मम् । उपार्जयामासुः कीर्तिम् । सम्पादयामासुः सुकृतम् । परितत्यजुरैहलौकिकमेव सुखं जनयतः परलोकविरुद्धानर्थान् । विदधुश्च राजकर्मणि राज्ञः साहाय्यम् । आपदमुपगताश्चावरस्यावरस्य वर्णस्योपजीविकामाजीवन्ति स्म । परोपतापश्च नरकायैवेत्याकलयामासुः । सम्मानं च विषमिव

सुदूरतः परिजहुः। निर्वर्तितगार्हस्थ्याश्च प्रविविशुररण्यानीम्। तत्र च कुटीरेष्वेव न्यूषुः। नीवारादिकमेव चाभ्यवहरन्तो जीवितशेषमतिवाहयामासुः। परःसहस्रांश्च छात्रानन्नप्रदानादिपुरःसरमध्यापयामासुः, योगबलाच्चाभीष्टमुत्पादयितुं प्रबभूवुः। निर्ममिरे नव्यान् ग्रन्थान्। अनुशीलयामासुः शास्त्राणि। प्रादुश्चक्रुर्नवनवानि विज्ञानानि। विचिन्तयामासुर्वेदार्थान्। समुन्निन्युर्नीतिम्। परलोकाविरोधेनैव च सुलभतां नयन्तः सुखमैहलौकिकं स्वर्गनिर्विशेषं चक्रुर्भूलोकम्। योगबलाच्च भूतं भवन्तं भाविनं चार्थं प्रत्यक्षीकुर्वाणास्तदनुसारेणैव व्यवजह्रुः। अन्ततश्च स्वीकृततुर्याश्रमाः स्वानुभवमात्रसंवेद्यं परं ब्रह्म ध्यायन्तस्तत्रैव बभूवुर्लीनाः। विस्तरभिया तु नात्रोदाहृतानि प्रमाणान्यस्माभिः। सति तु प्रसङ्गे तान्येतान्यवश्यं प्रदर्शयिष्यामः।

अथोच्यतां प्रियमहाभागैः—किमत्रापराद्धं ब्राह्मणैरिति। यथा चामीभिरुन्नामिता स्वीया जातिरेवमपरा अपि ननु समुन्नामिता एव। एतेषामेव ह्यनुग्रहादवापुर्वैदुष्यं क्षत्रियाः। अमीषामेवानुग्रहेणाधिजग्मुः पाण्डितीं वैश्याः। एषामेव चानुकम्पया विविदुः समुन्नतिं शूद्राः। सर्वथा किल तथाविधाऽऽसीत्पूर्वस्मिन्काले ब्राह्मणानां वृत्तिर्यया॰मी एकान्तत एव दुर्लभस्य भूदेवपदस्य पात्रतां जग्मुः।

यथा किल स्वजातिसमुन्नतये समुत्पादिता ब्रह्मविद्याविषयका नानाविधाः प्रबन्धा ब्राह्मणैर्यथाच तानध्यापिताश्छात्राः, एवं न किल क्षत्रियादीनामपि कृते न किञ्चित्कृतं ब्राह्मणैः, किन्तु कृतमेव। एतैर्हि सुदूरमुत्सार्य पक्षपातं विनिर्मिताः क्षत्रियाणां कृते दण्डनीतिग्रन्थाः। नूनं कलामात्रमिदं तस्या नीतेर्येयमिदानीमवगता

नीतिः पाश्चात्यैः । एवंविधां च नीतिमधिकृत्य प्रबन्धं प्रणयन्भगवान् व्यासो वा नारदो वा कामन्दको वा शुक्रो वा घटखर्परो वा चाणक्योऽपि वा ब्राह्मण एव; सङ्ग्रामविध्युपदेष्टारश्च नालिकास्त्रादिनिर्माणस्याग्निचूर्णादिविधिविज्ञानस्य चोपदेष्टारः शुक्रादयो ब्राह्मणा एव। येऽपि च पाशुपाल्यकृष्यादयो वैश्यानां धर्माः,न किल तानधिकृत्य न प्रणीतानि शास्त्राणि ब्राह्मणैः, परन्तु प्रणीतान्येव। श्रीमते बृहद्रथाय गवां लक्षणानां प्रवक्ता भगवान् पराशरो ब्राह्मण एव। अश्वलक्षणशास्त्रस्य संदृब्धाऽपि ननु शालिहोत्रो ब्राह्मण एव। हस्त्यायुर्वेदस्य विरचयिता भगवान् पालकाप्यमुनिर्ब्राह्मण एव। कृष्युपयुक्ताया भूपरीक्षाया भूगर्भविज्ञानस्य च कर्तारः सांहितिका ब्राह्मणा एव। ब्राह्मणानामेव प्रबन्धेषु संदृब्धो वृक्षायुर्वेदः। एकत्र प्ररूढस्य वृक्षस्यान्यत्र संक्रमणम्, भुवो रोगास्तत्रोपचाराः, वृक्षाणां रोगास्तच्चिकित्सा, कुसुमफलागमोपायाः, वृक्षाणां विरोपणे परस्परमन्तरम्, काण्डरोप्या बीजरोप्याश्च तरवः, स्कन्धारोपण ( कलम ) प्रकाराश्चेत्येवमादीनामुद्यानविधीनामादितो निबन्धारो ब्राह्मणा एव। न किल शूद्राणामपि कृते किमपि न कृतं ब्राह्मणैः, परन्तु कृतमेव। नर्तनोपजीविनां कृते नृत्यशास्त्रं किल ब्राह्मणैरेव प्रणीतम्। गान्धिकानां कृते गन्धोत्पादनयुक्तयो ब्राह्मणैरेवोद्भाविताः। वसनवानादीनां च ब्राह्मणैरेव विनिर्मितानि शास्त्राणि। रथोत्पादनगृहनिर्माणादयश्च त्वष्टृजनोपयुक्ता ब्राह्मणैरेवादितः समुत्पादिता ग्रन्थाः। आलेख्यशास्त्रमपि ननु ब्राह्मणैरेवादितः प्रादुष्कृतम्। पत्रच्छेद्यप्रभृतयश्च विधयो ब्राह्मणैरेव विनिर्मिताः। किमधिकं न किल तथाविधं किमपि शास्त्रं भारते वर्षे, यन्नाम न प्रणीतं ब्राह्मणैः, यद्वा नाखिलानां सुव्यवस्थमुपयुज्यते। ब्राह्मणाः

पुनर्धर्मशास्त्रादिष्वेवाधिकृताः, न पुनरेतैरनापदि समाश्रिता हीनवर्णानां वृत्तिः । न किल कदाचिदपि कोऽपि महामुनिरादाय शस्त्रं सह राज्ञा युयुधे । नापि वा पशून् पालयन् रुरोध वैश्यानां वृत्तिम् । नापि वा कारुकर्मादिषु मनो व्यापारयन् व्याजघान वृत्तिं शूद्राणाम् । मैत्रो हि ब्राह्मणः । अस्य किल निखिलमपि जगन्मित्रम् । न पुनः कश्चिदपि प्रद्वेष्यः । यः किल न केवलं निखिलानां मनुजानाम्, अपि तु निखिलानां भूतानां हितायाविगणितशरीरपातं प्रयतते स्म, किं नाऽसौ ब्राह्मणस्ततो लेभे ? येन किल प्रणीतं वास्तुशास्त्रं स एव ब्राह्मणः कुटीरमेवात्मनो रोचयायास । येनैव विनिर्मिता अङ्गरागकल्पनास्तस्यैव चाङ्गरागो भसितम् । येनैव प्रादुष्कृतमलङ्करणनिर्माणं नाडिन्धमानां कृते, तस्यैव चालङ्करणानि रुद्राक्षमालादीनि । येनैव संदृब्धं पटवानशास्त्रम्, स एव पुनर्वल्कलानि परिधत्ते स्म । येनैवोत्पादितं कृषीवलानां कृते कृषिशास्त्रम्, स एव वने निवसन्नीवारैर्वा कन्दैर्वा मूलैर्वा जीविकां विदधे । एवं च नासीत्क्वापि कस्यापि ब्राह्मणस्य स्वार्थमूलिका प्रवृत्तिरपि । अनेन हि यद्यदालोचि, यद्यदकारि, यद्यद्वानुसमाधायि, तत्समग्रमपि केवलं परार्थमेव । आत्मनस्तु कृते कुशासनं च कृष्णाजिनं च वल्कलानि च समिधश्च गोमयं चेत्यादिकमेव परिगृहीतं ब्राह्मणेन । न केवलं प्रभविष्णूनामेवेयं वार्ता, किन्तु प्रभवतामपीति नैतद् विस्मरणीयम् । अत एव च येन प्रतिज्ञाय समुन्मूलितं नन्दकुलम्, तस्यापि किल निखिलनीतिनिष्णातस्य चाणक्यस्य गृहे गोमयभेदकानामुपलशकलादीनामेव सौलभ्यं समभूत्, नतु संपल्लेशस्यापीति शक्यमेतदवबोद्धुं प्राचीनप्रबन्धप्रदत्तदृष्टिभिर्महाभागैः । एवं सर्वात्मनाऽविगणितविशेषमशेषाणामपि श्रेयस एव प्रयतमानेष्वपि यद्

ब्राह्मणेषु विकीर्यन्तेऽपवादजालानि, तन्न जानीमः किमत्रापराद्धं ब्राह्मणैरिति । नचाप्यभिलषितो ब्राह्मणैः समधिकः सम्मानः ।

संमानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव । इति हि स्मर्यते ॥

यत्तूच्यते कैश्चित् ब्राह्मणैरेवात्मनो गौरवस्य परिरक्षणायाज्ञानगर्ते पातिताः क्षत्रियादयो वर्णा इति, तदतिनिःसारम् । न किल कुत्राप्यस्ति स्तोकमपि प्रमाणम्, येनायमर्थः साध्येत । ब्राह्मणा हि वेदश्च शास्त्राणि च कलाश्च निर्व्याजमेव क्षत्रियादीनप्यध्यापयामासुः । पाण्डवांश्च कौरवांश्चाध्यापन्ननु द्रोणो ब्राह्मण एवासीत् । भगवते च कौशिकाय जृम्भकास्त्राण्युपदिशन्भगवान्कुशाश्वो ब्राह्मण एवाभूत् । क्षत्रियाय सुरथा व वैश्याय समाधये च भगवत्याश्चण्डिकाया आराधनमुपदिशन् भगवान् सुमेधा अपि ननु ब्राह्मण एव ।

शूद्रा अपि न किल नाध्यापिता एतैः, यस्तु तेषामध्ययनादिनिषेधः, सोऽयं श्रुतिविषयक एव । श्रुतौ हि नाधिक्रियन्ते शूद्राः, श्रुत्यैवास्योपनयनप्रतिषेधात् । तथापि नासौ पुराणश्रवणादिषु नाधिक्रियते । नापि वा नास्त्यस्य नित्यं कर्म । नचापि न विद्यते गार्हस्थ्यं च पाकयज्ञाश्च । नापि नास्ति होमादि । केवलं त्वस्य श्रुतावेवाधिकारः प्रतिषिध्यते । नचापि शूद्राणां वेदाध्ययनतः फलं किमपि; पुराणश्रवणादिनैव चरितार्थत्वात् । यच्चामीषां नियतं कर्म, न किल तत्र ते प्रवीणा नासन् । नापि वाऽवनतिगर्ते निपातिता ब्राह्मणैरेते । परन्तु यावच्छक्यं समुन्नमिता एव । यद्यपि वर्णत्रयशुश्रूषैव शूद्राणां कर्मेति निगदितं स्मृत्यादौ ; तथापि नहि तावता शक्यतेऽनुमातुमधः पातिता ब्राह्मणैरेत इति । न किल सेवा नाम भाण्डादिघर्षणं पादसंवाहनं सदनोपलेपनमन्यद्वा जघन्यं

कर्मैव, किन्तु वेतनादानपुरःसरं परकर्मानुष्ठानमेवेति नैतद् दुर्बोधम्। यदि चैवमपि सेवमानाः सेव्यैः धः पात्यन्त इत्यभिमानः, तदा ननु निगद्यतां रिपन् करसन् मिएटो मोर्ले किच्नेर प्रभृतयः पाश्चात्या इव रानडे मित्रदत्तवन्द्योपाध्यायघोषादयः प्राच्या अप्यध एव पातिताः सार्वभौमेनेति। न चैतदुल्लिखितमद्यापि केनापि। न चाप्युक्तमेतत्समञ्जसतया केनापि समयेन। एतेऽपि किल महात्मानः सेवामेव तन्वते सार्वभौमस्य। एवमपि यथा नैते क्लेशिताः क्लेश्यन्ते वा सार्वभौमेन, एवं न किल त्रैवर्णिकैरपि क्लेशिताः शूद्राः। धर्माधिकरणेषु लेखनादिकर्मसु च नियुक्ताः किल प्राचीनैः कायस्था इति नैतत्तिरोहितम्। शूद्रा एव चामी कायस्थाः। यथा चैतत्तथा निर्णीतं धर्मशास्त्रेणैव धर्माधिकरणेनापि।

शस्त्रकर्मोपजीविन उग्राः, देवतायतनानि राजमन्दिराणि च सुष्ठुतमं निर्मितवन्तः स्थपतयो, दारुकर्माणि कुर्वाणा रथकाराः, स्वर्णाद्यलङ्करणानि निर्मिमाणा नाडिन्धमाः, वसनसीवनाद्युपजीविनः सूचिकाः, नाट्यमाजीवन्तो नटाः, आलेख्यमुपजीवन्तश्चित्रकराः, विजयस्तम्भादिनिर्मातारः कर्माराश्चान्ये च नानाविधास्तैस्तैरलौकिकैः शिल्पैस्त्रैवर्णिकेभ्यः समुचितं पुरस्कारमापन्नाः शूद्रा एवेति सम्यगेतदवबुध्यतां नव्यशिक्षितमहाभागैः। अत एव च ब्रूमो रिक्तोऽयं स्वीयेषु भेदमात्रोत्पादनेन कृतार्थीभवितुकामानां केषांचिदर्वाचीनानां प्रवादो—"यदुच्यते गौरवमात्मनो रक्षितुकामैरज्ञानान्धकूपे पातिता ब्राह्मणैर्जघन्या जातय" इति। एवं च निर्विशङ्कमेव प्रलपितुं प्रगल्भमानैरवश्यमालोच्यतां सुदूरमुत्सार्य मात्सर्यं च ब्राह्मणप्रद्वेषं च शूद्रधर्मसंग्रहो नव्यशिक्षितमहाभागैः। अवबुध्यतां चैतद्यन्न किञ्चदपि कस्याप्यपकृतं ब्राह्मणजात्या, किन्तु सत्यवसरे यथोचितमपकृतमेवेति।

शनैः शनैश्चापसृते प्राथमिके युगत्रितये प्रवृत्ते च बद्धकक्ष इव सनातनधर्मोन्मूलने कलिकाले, वैदेशिकैरालेकुजाण्डरादिभिर्जर्जरीकृतेषु भारतवर्षीयेषु, निजधर्मपिशाचिकाकवलितान्तरैश्च माहम्मदैः करालतरकरवालबलात्स्वधर्मतः प्रच्यावितेषु भारतीयेषु, दग्धेषु धर्मग्रन्थेषु, निर्मूलितेषु दर्शनजालेषु, पराहतेषु पुराणनिकुरम्बेषु, सर्वथा जीवितसंशयमापन्नेष्वपि भारतवर्षीयेषु, यदद्यापि विलोक्यन्ते प्राचीनानि शास्त्राणि, यदद्यापि श्रूयन्ते यथावस्थितमेव श्रुतयः, यदद्यापि श्रवणसरणिमारोहन्ति पुराणानि, यच्चाद्यापि संदृश्यन्ते तत्तत्कलाविषयका नानाविधाः प्रबन्धाः, सोऽयं केषां वा प्रभावः? किं क्षत्रियाणामुताहो वैश्यानामाहोस्विच्छूद्राणामेव? ननु पाठकमहाभागाः! सोऽयमशेषोऽपि प्रभावो ब्राह्मणानामेव। समापतितेऽपि हि दुस्तरतमेऽवसरे प्राणानप्यविगणय्य पुस्तकनिरपेक्षमेवाधीत्य कण्ठे कृतानि ब्राह्मणैः श्रुत्यादीनि; यस्यैव किल सुविशुद्धं फलमेतत्, यदिदानीमपि प्रतीयते प्राचीनं वैभवं भारतवर्षीयाणाम्। यदि पुनरवसरेऽस्मिन्नाभविष्यत्स्वार्थसम्पर्कशून्यासौ ब्राह्मणजातिः, तदा नन्वन्धं तम एव प्रसारिष्यदशेषे भारते वर्षे।

सत्यप्येयं कालवैषम्यादेव केवलमुपारूढा अवनतिं भारतवर्षीयाः। न खल्वत्र शूद्रा एवावनताः, किन्तु ब्राह्मणा अपीति द्रष्टव्यम्। अत एवानुयुज्यतेऽस्माभिः 'किमत्र ब्राह्मणैरेवापराद्धमिति।

उन्नतानवनतौ निपातयन्:—
उन्नतौ च विनतान् यथाक्रमम्।
काल एव बलवानयं पुनः
कस्य केन किमु वा विधीयताम्॥—इति॥

[ प्रवीनमतानुसारी निबन्धः ]

विस्तरभयादुपरमन्तो वयं उडुपिसंस्कृतकलाशालाप्रधानाध्यापकानां श्रीकाशीशेषवेंकटाचलशास्त्रिणां चाशयमत्र संगृह्य प्रकाशयामः । तत्र प्रथमो यथाः—

"चातुर्वर्ण्यं कर्मकृतमुत जन्मकृतम् ? मतद्वयेऽपि साधकबाधकवचनानां कथमविरोधः ? सङ्करजातीनां परिवर्तनं शास्त्रोक्तं न वा । अत्र त्रयाणामवान्तरानुयोगानामाद्यश्चतुर्दशप्रश्नोत्तरेणैव दत्तोत्तरः । द्वितीयेऽपि साधकबाधकवाक्यानि प्रागुदाहृतानि, तदुपलम्भितानीतराणि च । बाधकवाक्यानि तु प्रष्ट्राशयमुपारूढानि कानि तानीति निर्णेतुं न शक्यन्तेऽसाक्षात्कृतपरबुद्धिभिरस्माभिः । अथापि सम्भावनामात्रेणैतत्प्रतिवक्तुं किञ्चिद्यतामहे । तथाहि— "जन्मना जायते जन्तुः कर्मणा जायते द्विजः" इत्यादिवाक्यानि प्रायो बाधकतया शङ्क्यमानानि भवेयुः । तानि चोपनयनादिसंस्काराणामत्यावश्यकतां तद्धीननिन्दनमुखेन बोधयन्ति । यथा 'अपशवो वा गो अश्वेभ्यः अन्ये, इत्यादीनि श्रौतवचनानि अजादीनां पशूनामपि पशुत्वनिषेधमुखेन गवाश्वानां प्रशस्तपशुत्वमावेदयन्ति, तथेहापि असंस्कृतनिन्दाद्वारा संस्कारप्राशस्त्य एव तात्पर्यम्, नत्वब्राह्मण एवोत्पद्यत इति; अन्यथा गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनमिति, उपनयनात् पूर्वमपि ब्राह्मणत्वप्रतिपादकगौतमादिवाक्यविरोधात् । जन्मनेत्यादेः ब्राह्मण्यां ब्राह्मणात्समुत्पन्नो जन्तुर्ब्राह्मणो जायते, उपनयनादिकर्मणा तु द्विज इति वाक्यार्थः । अत एव द्विर्जायत इति निर्वचनं युज्यते, नतु शूद्रो वा सारमेयादिवत् प्राणिमात्रो वा जायत इत्यर्थः । गर्भाधानसीमन्तोन्नयनादिश्रौतस्मार्तसंस्कारसंस्कृतगर्भवत्यां समुत्पन्नस्तद्रहितोत्पन्नप्राणिवत् कथं जन्तुमात्रः स्यात् ? नहि त्रैवर्णिकेतरगर्भाणां

तादृशः संस्कारः । नहि गोत्ववत्यां समुत्पन्नो जन्तुमात्र इत्युच्यते, किन्तु गौरित्येव । एवं ब्राह्मण्यां ब्राह्मणादुत्पन्नोऽपि ब्राह्मण एव । अत एव "ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः परिकीर्तितः, इति निर्देशः । अत एतादृग्वचनानि कर्मरहितनिन्दाद्वारा ब्राह्मणस्य वैदिककर्मणां प्राशस्त्यार्थानि चेत्येवं प्रकारेणोक्तार्थे वचनानां साधकबाधकानां विरोधपरिहारप्रकारो द्रष्टव्यः ।

ननु कुम्भकारकुविन्दकारुरजकभिल्लतक्षकादयः खलु सङ्करजातीया नाम, नैतेषां कदापि कुत्रापि शास्त्रपरिवर्तनं दृष्टम् । ते च लौकिकव्यवहारेष्वपि शूद्राद्प्यत्यन्तनीचतयैतद्देशेषु गण्यन्ते । तन्नैच्यमधुनाप्येते सहन्ते च । तेषां यदि परिवर्तनम्, तर्हि का नाम क्षतिः शूद्राणां परिवर्तने । नच तदप्यस्त्विति चेन्न ; अविहितत्वात्, जात्यन्तरस्य जात्यन्तरपरिवर्तने शास्त्रीयविधेः प्रष्टव्यत्वाच्च । तस्मादुक्तपरिवर्तनं न शास्त्रीयमित्युत्तरम् ॥

जन्मवैचित्र्यं पूर्वजन्मकृतशुभाशुभकर्मफलमेव, आदिसृष्टौ तु स्वभावाख्या योग्यता या हठाख्या यानादिसिद्धा सर्वजीवेषु नित्या, सा कारणं प्रथमं तु, द्वितीयमनादिकर्मैव, तथा तृतीयो जीवप्रयत्नः, इत्यादिप्रमाणानुसारेण तत्तद्योग्यतोपोद्बलितमनादिकर्मैवोक्तवैचित्र्ये कारणम् ॥

शूद्रान्नमुदरे कृत्वा ब्राह्मणो म्रियते यदि ।
स चण्डालत्वमाप्नोति दारिद्र्यं कोटिजन्मसु ॥

इत्येवं जातीयकानि वचनानि श्रीमन्महाभारते आनुशासनिके पर्वणि कर्मविपाकप्रकरणे मनुयाज्ञवल्क्यपराशरस्मृत्यादिषु च सहस्रशः सन्ति प्रसिद्धानि, नोदाहृतानि तान्यत्र ग्रन्थलेखनाधिक्यश्रमभिया ॥ इति ॥

[ प्रबन्धान्तरम् ] अयमत्र श्रीकाशीशेषवेङ्कटाचलशास्त्रिणामाशयः। तद्यथाः—

आचारभेदो जातिभेदश्च नैकमत्ये कारणम्, किन्तु धर्मशास्त्रीये प्रायश्चित्तभेदे विवाहभेदे उपनयने उपदिश्यमानमन्त्रयज्ञोपवीतमेखलाशौचादिभेदादौ। जातिभेदश्च देशभेदकुलभेदवातजलभेदापदनापद्भेदादयोऽप्याचारभेदप्रयोजकाः। यथाऽऽश्रमभेदो वर्णभेदो नैष्ठिकोपकुर्वाणब्रह्मचर्यभेद इत्यादिकम्।

नाचार्यैर्जातिभेद आचारनियमो वा परिकल्पितः, किन्तु भगवतैव सृष्ट आदौ, "धाता यथा पूर्वमकल्पयत्" इति श्रुतावुक्तेः। पूर्वसृष्ट्यनुरोधेन जनिष्यमाणजीवगतप्राग्भवीयकर्मानुरोधेन च ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चोदपादि। अत एवापौरुषेयेऽनादौ वेदेऽश्वमेधादौ पशुत्वेनानेकजातीयानामानुलोम्येन प्रातिलोम्येन च जातानां निर्देश उपपद्यते। बीजवृक्षन्यायवदनादिकालात् ब्राह्मणत्वादिजातयः सन्ति; तेषां तेषां कर्मणामपि प्रायो वेदे श्रूयमाणत्वात्, संसारस्यानादित्वात्। अविरुद्धांश ऐकमत्यमनेकधा बभूव, तथा भेदोऽपि। तत्तत्सामन्तिकराजानुसन्धेयसम्पदापदनुरोधेन देशकालाद्यनुरोधेन च तयोर्भेदैक्ययोः साहजिकत्वात्; कामनाभेदश्च। स्वस्ववर्णाश्रमाचारजीविकासु यथासम्भवं तत्तत्प्रतिबन्धकतया प्राप्ता व्यवहारा एवापदो व्यस्ताः समस्ता वा। तासां दिक्प्रदर्शनमेव कृतं धर्मशास्त्रपुराणादिषु, नतु परिगणनं कृतम्।

चातुर्वर्ण्यं तु जन्मकृतमेव। अत एवाष्टवर्षं ब्राह्मणमुपनयीत, वसन्ते ब्राह्मणमुपनयीत, इत्याद्युक्तिः सङ्गच्छते। यद्यपि विश्वामित्रादिवत् कर्मभिर्जातिपरिवर्तनं कर्तुं शक्यम्, अत एव "शूद्रो

ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्" इत्यादीनि कानिचन परिवर्तनबोधकानि वचनानि स्मृतिषु पुराणादिषु च । तथेतिहासाश्च दृश्यन्ते; तथापि शूद्रतां शूद्रसादृश्यं ब्राह्मणतां ब्राह्मणसादृश्यमित्येव तदर्थः । अत एव ब्राह्मणधर्मं प्राप्य विश्वामित्रेण ब्राह्मणीविवाहादिकं ब्राह्मणकृत्यं किमपि नानुष्ठितम् । ब्रह्मर्षिरसीति वसिष्ठोक्तेः, ब्राह्मणतुल्यो मुनिरसीत्येव तदाशयः । यद्वा चरुपरिवर्तनप्रयोज्यमेव ब्रह्मर्षित्वं वसिष्ठेनोक्तं न त्वपूर्वम् । तच्च व्यवहारमात्रप्रयोजकं न त्वपूर्वं ब्राह्मणकृत्यमनेनानुष्ठितमिति स्पष्टमेव । अत एव चण्डालतां ( चण्डालतौल्यं ) प्राप्तस्य विप्रस्य प्रायश्चित्तेन विप्रत्वम्, अत एव परशुरामस्य तद्वृत्तेन क्षत्रियत्वं नाभूत् । अत एव त्रिशंकुना यज्ञे क्रियमाणे चण्डालो यजमान इत्येवमन्यैर्ब्राह्मणैर्न गतम् । अन्यथा वृत्तेन ( यज्ञेन ) चण्डालत्वनिवृत्त्या चण्डालो यजमान इत्युक्तिरयुक्ता स्यात् । चातुर्वर्ण्ये पूर्वं पूर्वं बलवदित्यर्थवादप्रयोजकं वा विश्वामित्रोपाख्यानम् । शशपृष्ठाद्गोतम इत्यादिकं तु शशेन पूर्वजन्मनि कृतस्य तपसो बलेनैव देवताद्यनुग्रहेण वा यथा ब्राह्मणो ब्राह्मण्यम् । एकस्माद्विप्राद्राज्ञः ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राश्च पुत्रा उदभूवन्नित्यादौ च चातुर्वर्ण्यकन्यानामपि पूर्वयुगेषु ब्राह्मणस्य विवाह्यत्वोक्त्या नानुपपत्तिः । ब्राह्मणशुक्राचार्यकन्या क्षत्रियेणोढेति स्वापातोक्तिमात्रेण, न तु शास्त्रसम्मतः स विवाहः । किन्तु प्रत्यवाय एव शास्त्रात्सम्पन्न इति ।

[ उक्तप्रबन्धसमालोचनम् । ]

एतेषां प्रबन्धानां समालोचनेनैव सर्वेऽप्याक्षेपाः समाधयश्च सर्वैरपि सम्यगेवावगता भवन्तीति न वयमत्र बहूनां प्रबन्धानां योजनेन ग्रन्थविस्तरं सम्पादयितुमिच्छाम इति प्रतिपत्तृसौकर्यार्थं सर्वेऽप्याक्षेपाः समाधयश्च संगृह्य निष्कृष्य च प्रकाश्यन्ते ।

तत्र प्रथमं वर्णव्यवस्थायामाक्षेपाः—

१ सर्वथा जातिः गुणकर्मावलम्बिन्येवाभिप्रेयते शास्त्रेण । अत

[ चातुर्वर्ण्यस्य गुण- कृतत्वे गीतोपष्टम्भः।] एवोक्तं भगवता गीतासु "चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः" इति। चत्वारो ब्राह्मणक्षत्रविट्-शूद्रा इत्येते वर्णाश्चातुर्वर्ण्यम्। एतच्च मया भगवता गुणकर्म-विभागानुरोधेन सृष्टम् इति। यदि हि नाभविष्यदभिप्रेतं गुणकर्मा-वलम्बित्वं वर्णव्यवस्थायास्तदा नैवमभ्यधास्यत भगवता वासुदेवेन 'गुणकर्मविभागश' इति।

अत्रैवमपरे प्रत्यवातिष्ठेरन् 'ननु भो यदि गुणकर्मावलम्बि-

[ पुरुषसूक्तविरोध-परिहारः । ] न्येव वर्णव्यवस्थेति सिद्धान्त्येत, तदा "ब्राह्मणोऽस्य मुखमासीत्"इत्यादयः श्रुतयो व्याकुप्येयुः। एतासु हि परमात्मनो मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिः श्रूयते। इति।

अत्रोच्यते अर्वाचीनं किल पौरुषं सूक्तं कैश्चिदुदरम्भरिभि-र्ब्राह्मणैरेव परस्तादृग्वेदे विनिवेशितम्। अतो नैतत्प्रमाणपदवीमा-रोढुं प्रभवति। न हि पौरुषं सूक्तमेकमपहायान्यत्र क्वापि वेद-वचने ब्राह्मणादीनां ब्रह्मणो मुखादिजन्यत्वमुच्यते, यद्विरोधापात-भिया गीतावचने (चातुर्वर्ण्यं मया सृष्टम्) इत्यत्र अर्थान्तरं कल्प-नीयं स्यात्। अतश्च सुस्थिरं गुणकर्मावलम्बित्वं वर्णव्यवस्थाया इति।

अत्रेयं स्वत एव शङ्का समुदेति। यद्यदि गुणकर्मावलम्बिनी

[ स्मृतिविरोधा-प्रयोजकता । ] वर्णव्यवस्थेत्येष एव द्रढीयान्सिद्धान्तस्तदा का गतिः स्मृतिग्रन्थानाम् ? इति, अत्र ब्रूमः। निर्मू-लानि किलैतानि स्मृतिवचनानि। न ह्यत्र मूलभूतं किमपि श्रुति-वचनमुपलब्धमिति। यत्र च नास्ति मूलभूतं श्रुतिवचनं नैषा स्मृतिः प्रमाणम्। वेदवचनानुरोधेनैव हि प्रामाण्यमस्याः स्वीकरणीयम्।

तच्च तदैव ज्ञायेत, यदा मूलभूतं श्रुतिवचनमुपलभ्येत । न चैतदुपलब्धम् । अतो नैषा प्रमाणम् इति ।

ननु भोः ! यदि न दृष्टं मूलभूतं श्रुतिवचनम्, तदा कल्प्यतामेतत्; अविरोधात् । न हि ब्राह्मणादीनां ब्रह्मणो मुखादिजन्यताया विरोधिनी काचिदपि श्रुतिः सन्दृष्टा । श्रुतिवचनेनाविरोधे तु स्मृतेर्मूलभूता श्रुतिः कल्पनीयेत्याहुः शास्त्रकृतः । तथाहि जैमिनिः 'विरोधे त्वनपेक्षं स्यात् असति ह्यनुमानम्' इति सूत्रयामास । अस्यायमर्थः--विरोधे, श्रुतिस्मृत्योः परस्परं विरुद्धत्वे स्मृतिवचनमनपेक्षं त्याज्यं स्यात्, असति पुनर्विरोधे नैतत्त्याज्यम्, किन्तु मूलभूतस्य श्रुतिवचनस्यानुमानमेव करणीयम् इति । भट्टाचार्या अपि 'सम्भाव्य-वेदमूलत्वात्स्मृतीनां मानतोचिता' इति मूलभूतो वेदः सम्भावनीय इत्याचक्षत इति ।

सोऽयं केषांचिद्वादो न न्याय्यः । यदि हि तत्र तत्रानुपलब्धं श्रुतिवचनं कल्पनीयम्, तदा सर्वेषामप्याचाराणामनाचाराणां च प्रामाण्यं दुर्वारं स्यात् । सर्वत्रापि हि शक्येत श्रुतिवचनं प्रकल्पयितुमिति । न चैतद्युक्तम् । यदि चात्र मूलमभविष्यत्तदा तदेतदघ्यगंस्यत । विद्यन्ते ह्यद्यापि साङ्गाः समग्रा वेदा इति । तत्र चानुपलब्धं वचनं न शक्यते कल्पयितुं प्रामाणिकैः । अत एव च निर्मूलत्वादप्रमाणं ब्राह्मणाद्युत्पत्तिप्रतिपादिकाः स्मृतयः । एतेन पुराणान्यपि व्याख्यातानि । तदेवं सिद्धं गुणकर्मावलम्बित्वं वर्णव्यवस्थाया इति ।

[ गुणकर्मकृतत्वे चातुर्वर्ण्यस्यावल- ] २ इतश्च न जन्मतः सिद्धा, प्रत्युत गुणकर्मावलम्बिन्येव वर्णव्यवस्था । तथा ह्याहुः—

'जन्मना जायते शूद्रः संस्कारात् द्विज उच्यते ।

स्वभूतानि स्मृति- विद्यया याति विप्रत्वं ब्रह्मवित् ब्राह्मणो भवेत् ॥" इति।
वचनानि।]

शूद्र इत्यसावौत्सर्गिको वर्णः। उत्सर्गतो हि शूद्रा एव सर्वेऽपि। तदेवोक्तं जन्मना जायते शूद्र इति। शूद्रस्य च द्विजत्वविप्रत्व ब्राह्मणत्वादिप्राप्तौ संस्कारादीनां कारणतेति स्पष्टमेवात्राभिहितम्। ततश्च सिद्धं गुणकर्मावलम्बित्वमेव वर्णव्यवस्थाया इति। अत्रानुसन्धेयानि स्मृतिवाक्यानिः—

तथाच मनुः—

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥२।१६८॥
हीनजातिस्त्रियं मोहादुद्वहन्तो द्विजातयः।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम् ॥ ३।१५ ॥
शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥ ३। १६ ॥
शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम्।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते ॥ ३। १७ ॥
राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम्।
आयुः सुवर्णकारान्नं यशश्चर्मावकीर्तिनः ॥ ४। २१८ ॥
उत्तमानुत्तमान् गच्छन् हीनान् हीनांश्च वर्जयन्।
ब्राह्मणः श्रेष्ठतामेति प्रत्यवायेन शूद्रताम् ॥ ४। ८४५ ॥
शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्।
क्षत्रियाज्जातमेवं तु विद्याद्वैश्यात्तथैव च ॥१०। ६५ ॥
सद्यः पतति मांसेन लाक्षया लवणेन च।
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् ॥ १०। ९२॥

इतरेषां तु पण्यानां विक्रयादिह कामतः ।
ब्राह्मणः सप्तरात्रेण वैश्यभावं नियच्छति ॥ १० । ९३ ॥
जीवेदेतेन राजन्यः सर्वेणाप्यनयं गतः ।
न त्वेव ज्यायसीं वृत्तिमभिमन्येत कर्हिचित् ॥१०।९५॥
यस्य कायगतं ब्रह्म मद्य नाप्लाव्यते सकृत् ।
तस्य व्यपैति ब्राह्मण्यं शूद्रत्वं च स गच्छति ॥ ११।९७ ॥
तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः ।
वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडश ॥११।१८६॥

परिशिष्टेऽपि—

ब्राह्मणाः क्षत्रिया वैश्याः स्वावधेरुर्ध्वमब्दतः ।
अकृतोपनयाः सर्वे वृषला एव ते स्मृताः ॥ ८।१८ ॥

तथैव बृहत्पराशरसंहितायाम्—प्रथमाध्याये ।

शूद्राश्च ब्राह्मणाचाराः शूद्राचारास्तथा द्विजाः ।
अन्त्यानुयायिनश्चान्ये वर्णास्तान्नोजीविनः ॥ अ० १ ॥
सन्ध्या येन न विज्ञाता ज्ञात्वा नैव ह्युपासिता ।
स जीवन्नेव शूद्रत्वमवगच्छति सान्वयः ॥ अ० २
मृते भर्तरि या नारी क्षुत्पिपासातुरा पुरम्‌ ।
तवाहमिति सम्भाष्य तृतीया स्वैरिणी तु सा ॥ ७ ॥

अत्रिसंहितायामपि—

क्षत्रियान्नं पयस्तेनो विशोऽन्नं पशुपालनात् ।
देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः ॥
पशुर्म्लेच्छोऽपि चण्डालो विप्रा दशविधाः स्मृताः ।
सन्ध्यां स्नानं जपं होमं देवतानित्यपूजनम् ॥
अतिथिं वैश्वदेवं च देवब्राह्मण उच्यते ।

शाके पत्रे फले मूले वनवासे सदा रतः ॥
निरतोऽहरहः श्राद्धे स विप्रो मुनिरुच्यते ।
वेदान्तं पठते नित्यं सर्वसङ्गं परित्यजेत् ॥
साङ्ख्ययोगविचारस्थः स विप्रो द्विज उच्यते ॥
अस्त्राहताश्च धन्वानः संग्रामे सर्वसन्मुखे ।
आरम्भे निर्जिता येन स विप्रः क्षत्र उच्यते ॥
कृषिकर्मरतो यश्च गवां च प्रतिपालकः ।
वाणिज्यव्यवसायश्च स विप्रो वैश्य उच्यते ॥
लाक्षालवणसम्मिश्रकुसुम्भक्षीरसर्पिषाम् ।
विक्रेता मधुमांसानां स विप्रः शूद्र उच्यते ॥
चौरश्च तस्करश्चैव सूचको दंशकस्तथा ।
मत्स्यमांसे सदा लुब्धो विप्रो निषाद उच्यते ॥
ब्रह्मतत्त्वं न जानाति ब्रह्मसूत्रेण गर्वितः ।
तेनैव च स पापेन विप्रः पशुरुदाहृतः ॥
वापीकूपतडागानामारामस्य सरस्सु च ।
निःशङ्कं रोधकश्चैव स विप्रो म्लेच्छ उच्यते ॥
क्रियाहीनश्च मूर्खश्च सर्वधर्मविवर्जितः ।
निर्दयः सर्वभूतेषु विप्रश्चाण्डाल उच्यते ॥
यो न सन्ध्यामुपासीत ब्राह्मणो हि विशेषतः ।
स जीवन्नेव शूद्रस्तु मृतः श्वा चैव जायते ॥

लघ्वाश्वलायनस्मृतावपि—

अनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति मानवः ॥

वसिष्ठस्मृतौ द्वितीयाध्यायेऽत्रिसंहितायां च—

सद्यः पतति मांसेन लाक्षया लवणेन च ।
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् ॥

वसिष्ठस्मृतौ तृतीयाध्याये—

यश्च काष्ठमयो हस्ती यश्च चर्ममयो मृगः ।
यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः ॥

शङ्खस्मृतौ सप्तमाध्याये—

जन्मना यस्तु निर्विण्णो मरणेन तथैव च ।
आधिभिर्व्याधिभिश्चैव तं देवा ब्राह्मणं विदुः ॥

दक्षस्मृतौ द्वितीयाध्याये—

सन्ध्यां नोपासते यस्तु ब्राह्मणो हि विशेषतः ।
स जीवन्नेव शूद्रः स्यात् मृतः श्वा चैव जायते ॥

अङ्गिराः—

यो भुङ्क्ते हि च शूद्रान्नं मासमेकं निरन्तरम् ।
इह जन्मनि शूद्रत्वं मृतः श्वा चैव जायते ॥

इत्यादि ॥

[गुणकर्मकृतत्वे चातुर्वर्ण्यस्य विश्वामित्रादिदृष्टान्तोपन्यासः ]

३ इतश्च गुणकर्मावलम्बिन्येव वर्णव्यवस्था । तथाहि विदिताः किल भगवन्तो वसिष्ठप्रभृतयो ब्रह्मर्षयः सर्वेषाम् । एते पुनर्न ब्राह्मणकुलसम्भूताः । स्मर्यते ह्येषामुत्पत्तिरतो विपरीतैव । यथाः—

'जातो व्यासस्तु कैवर्त्याः श्वपाक्यास्तु पराशरः ।
शुक्या शुकस्तथोलूक्याः कणादाख्यः सुतोऽभवत् ॥
मृग्यां ऋष्यशृङ्गस्त्वभून्मृग्या वसिष्ठो गणिकात्मजः ।
मन्दपालो मुनिश्रेष्ठो नाविकापत्यमुच्यते ॥
माण्डव्यो मुनिराजस्तु मण्डूकीगर्भसम्भवः । इति ।

एवं श्वपाकीप्रभृतिभ्यः समुद्भूता अप्येते मुनयो ब्रह्मर्षयः स्मर्यन्ते। शिरसा च पूज्यन्ते ब्राह्मणप्रवरैः। गोत्रप्रवर्तकाश्च दृश्यन्ते। न हि विना वर्णव्यवस्थाया गुणकर्मावलम्बित्वमेतत्सङ्गच्छते। जात्या हि श्वपाकः कथं ब्राह्मणतामुपगच्छेत्। गुणकर्मावलम्बित्वे पुनर्वर्णव्यवस्थाया नैष दोषः सम्भवति। एवं हि ब्राह्मणोचितगुणोपपन्नो ब्राह्मणो भविष्यति। तत्र च तपआदिभिः सुसम्पादं ब्रह्मर्षित्वमेतेनेति। तत एव चोच्यते गुणकर्मावलम्बिनी वर्णव्यवस्थेति।

[चातुर्वर्ण्यस्य स्वभावसिद्धत्वे वज्रसूच्युपनिषदुपष्टम्भः]

४ इतोऽपि च गुणकर्मावलम्बिन्येव वर्णव्यवस्था। एवं हि वज्रसूच्युपनिषदि समाम्नायते—ब्रह्मक्षत्रियवैश्यशूद्रा इति चत्वारो वर्णास्तेषां वर्णानां ब्राह्मण एव प्रधान इति वेदवचनानुरूपं स्मृतिभिरप्युक्तम्। तत्र चोद्यमस्ति, को वा ब्राह्मणो नाम? किं जीवः? किं देहः? किं जातिः? किं ज्ञानम्? किं कर्म? किं धार्मिक इति। तत्र प्रथमो जीवो ब्राह्मण इति चेत्, तन्न; अतीतानागतानेकदेहानां जीवस्यैकरूपत्वात्, एकस्यापि कर्मवशादनेकदेहसम्भवात्; सर्वशरीराणां जीवस्यैकरूपत्वाच्च। तस्मान्न जीवो ब्राह्मण इति। तर्हि देहो ब्राह्मण इति चेत्, तन्न; आचण्डालपर्यन्तानां मनुष्याणां पाञ्चभौतिकत्वेन देहस्यैकरूपत्वाज्जरामरणधर्माधर्मादिसाम्यदर्शनाद्ब्राह्मणः श्वेतवर्णः क्षत्रियो रक्तवर्णो वैश्यः पीतवर्णः शूद्रः कृष्णवर्ण इति नियमाभावात्। पित्रादिशरीरदहने पुत्रादीनां ब्रह्महत्यादिकदोषसम्भवाच्च। तस्मान्न देहो ब्राह्मण इति। तर्हि जातिर्ब्राह्मण इति चेत्, तन्न; तत्र जात्यन्तरजन्तुष्वनेकजातिसम्भवा महर्षयो बहवः सन्ति। ऋष्यशृङ्गो मृग्याः, कौशिकः

कुशात्, जम्बूको जम्बूकात्, वाल्मीकिर्वल्मीकात्, व्यासः कैवर्तकन्यायाम्, शशपृष्ठाद्गौतमः, वसिष्ठ उर्वश्याम्, अगस्त्यः कलशे जात इति श्रुतत्वात्। एतेषां जात्या विनाप्यग्रे ज्ञानप्रतिपादिता ऋषयो बहवः सन्ति। तस्मान्न जातिर्ब्राह्मणः। तर्हि ज्ञानं ब्राह्मण इति चेत्, तन्न; क्षत्रियादयोऽपि हि परमार्थदर्शिनो बहवः सन्ति। तस्मान्न ज्ञानं ब्राह्मणः। तर्हि कर्म ब्राह्मण इति चेत्, तन्न; सर्वेषां प्राणिनां प्रारब्धसंचितागामिकर्मसाधर्म्यदर्शनात्; कर्मभिः प्रेरिता जनाः क्रियाः कुर्वन्तीति। तस्मान्न कर्म ब्राह्मण इति। तर्हि धार्मिको ब्राह्मण इति चेत्, तन्न; क्षत्रियादयो हिरण्यदातारो बहवः सन्ति। तस्मान्न धार्मिको ब्राह्मण इति। तर्हि को वा ब्राह्मणो नाम? यः कश्चिदात्मानमद्वितीयं जातिगुणक्रियाहीनं षडूर्मिषड्भावेत्यादिसर्वदोषरहितं सत्यज्ञानानन्दानन्तस्वरूपं स्वयं निर्विकल्पमशेषकल्पाधारमशेषभूतान्तर्यामित्वेन वर्तमानमन्तर्बहिश्चाकाशवदनुस्यूतमखण्डानन्दस्वभावमप्रमेयमनुभवैकवेद्यमपरोक्षतया भासमानं करतलामकवत्साक्षादपरोक्षीकृत्य कृतार्थतया कामरागादिदोषरहितः शमदमादिसम्पन्नो भयमात्सर्यतृष्णाशामोहादिरहितो दम्भाहङ्कारादिभिरसंस्पृष्टचेता वर्तते, एवमुक्तलक्षणो यः स एव ब्राह्मण इति श्रुतिस्मृतिपुराणेतिहासानामभिप्रायः; अन्यथा हि ब्राह्मणत्वासिद्धिर्नास्त्येव इति। एवं च गुणकर्मावलम्बिन्येव वर्णव्यवस्थेति सुस्पष्टमेवायमर्थः सिध्यति।

५. अपरं च स्मर्यते—

[उक्तार्थे स्मृत्यन्तरोपष्टम्भः।]

शूद्रयोनौ प्रजातस्य सद्गुणानुपतिष्ठतः।
वैश्यत्वं लभते ब्रह्मन् क्षत्रियत्वं तथैव च॥
आर्जवे वर्तमानस्य ब्राह्मण्यमभिजायते। इति।

सन्त्यक्तव्या प्रसिद्धा ये जातिभेदविधायिनः ।
वस्तुभूताः परोक्षैर्वा प्रमाणैर्न विनिश्चिताः ॥
अव्यक्तागमसिद्धश्चेज्जातिभेदविधिर्नृणाम् ।
विकल्पोऽयं न पुष्णाति भवतः शेमुषीबलम् ॥

ब्रह्मोवाच—

एवमेतन्न सन्देहो यथायथं वदन्ति ह ।
शृणुध्वं योगिनो वाक्यं सतर्कं शिष्यश्रेयसे ॥

योगेश्वर उवाच—

प्रमाणे हि प्रसिद्धे तु भिन्नार्थविषये यतः ।
स्पष्टयोग्यार्थविषयप्रत्यक्षं तावदीक्ष्यते ॥
सामान्यातीन्द्रियग्राही सिद्धान्तोऽभ्युपगम्यते ।
स एव भगवानेकं प्रमाणमिति चेन्न तत् ॥
यस्माद्विविधमेतत्ते सङ्कटं भद्र वर्तते ।
वेदस्य पौरुषेयत्वं नित्यजातिसमर्थकम् ॥
कार्या विशेषा वेदोक्ता न युक्तमकृतं वचः ।
ताल्वादिकरणानां च व्यापारानन्तरं श्रुतेः ॥
व्यापारात्परतस्तस्य प्रागभावविशेषतः ।
तद्भावानुविधायित्वमन्वयव्यतिरेकतः ॥
तस्माद्ब्रूमाग्निवद्वार्थफलभागोऽवतिष्ठते ॥
नच व्यापारवचसोरन्यथाऽनुपपत्तितः ॥
पुरुषानुगता जातिर्ब्राह्मणत्वादिकाऽस्ति चेत् ।
द्विवर्णजातिभेदेन प्रत्यक्षार्थोपलक्षणात् ॥
गोवर्गमध्यं च गतो यथाश्वो
निर्धार्यते ज्ञैः सुविचक्षणत्वात् ॥

मनुष्यभावादविशिष्यमाणा—

स्त्वद्वत् द्विजः शूद्रगणान्न भिन्नः॥

मनुष्य जातेर्न परो विशेषो

यः कल्प्यते सर्वनरानुयायी।

संस्कारयुक्ता हि क्रिया विशिष्टा

द्विजन्मनां शूद्रविवेकहेतुः॥

जीवोऽपि ब्राह्मणः प्रोक्तो यैरतत्त्वज्ञमानवैः।

प्रभ्रष्टब्रह्मणत्वास्ते जायन्ते वि सङ्कतः॥

जराजन्मान्तरक्लेशदुष्टग्राहकुलाकुलम्।

नरतिर्यगसत्त्वक्रूद्धयोनिदुःखोर्मिसङ्कटम्॥

दौःस्थित्यरोगशोकार्तिजनावर्तसमन्वितम्।

श्वानशूकरचाण्डालकृमिकूर्मादिकायकम्॥

संसारसागरं घोरं मग्नः खलु परिप्लवन्।

भूरिपापभराक्रान्तः स जीवो ब्राह्मणः कथम्॥

ब्रह्मोवाच—

सप्तव्याधकथा विप्रा मनुना परिकीर्तिता।

तां निशम्य यदुश्रेष्ठ नित्यं जातिपदं त्यजेत्॥

सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ।

चक्रवाकाः सरिद्द्वीपे हंसाः सरसि मानसे॥

तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः।

प्रस्थिता दीर्घमध्वानं यूयं किमवसीदथ॥

तस्मान्न जीवे ब्राह्मण्यं पश्यामो हि कथञ्चन।

शस्त्रादिमद्भागवज्जातियुक्तो

गजाश्वगो जोष्ट्रखरादिकानाम्।

अत्र च गुणैः कर्मभिश्चोन्नतोन्नतजातिप्रत्यापत्तिरभिधीयते । ततश्च सुस्पष्टमेव सिध्यति यद् गुणकर्मावलम्बिन्येव वर्णव्यवस्थेति ।

६ विदितः किल भगवान्विश्वामित्रो निखिलानाम् । सोऽयं जात्या क्षत्रियोऽपि सन्ब्रह्मर्षित्वमापन्नः । तदेतद् गुणकर्मावलम्बित्वमेव वर्णव्यवस्थायाः सिद्धान्तयति । न ह्यन्यथा जात्या क्षत्रियस्य ब्राह्मणत्वापत्तिसम्भावना नामास्तीति, तत एवोच्यते गुणकर्मावलम्बिन्येव वर्णव्यवस्थेति ।

७ इतश्च गुणकर्मावलम्बिनी वर्णव्यवस्था । तथाहि अस्ति
[पूर्वोक्तार्थे छान्दो- किल च्छान्दोग्योपनिषत्सु सत्यकामजाबालोपाख्या-
ग्योपष्टम्भः ।] नम् । तत्र च सत्यवचनमात्रेण ब्राह्मणत्वमभ्युपगतं गुरुणेति प्रतिपाद्यते । यथा—सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्यं भवति विवत्स्यामि किंगोत्रोन्वहमस्मीति । साहैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसि । जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स सत्यकामो जाबालो ब्रवीथा इति ॥ स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति विवत्स्याम्युपेयां भगवन्तमिति ॥ तꣳहोवाच किंगोत्रो नु सोम्यासीति। सहोवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातरꣳ सा मा प्रत्यब्रवीद् बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे, साहमेतन्न वेद यद्गोत्रस्त्वमसि, जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति, सोहꣳ सत्यकामो जाबालोऽस्मि भो इति ॥ तꣳहोवाच नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोपत्वा नेष्ये न सत्यादगा इति ॥ अत्र चोपनयने ब्राह्मणत्वस्यावश्यकत्वं ब्राह्मणत्वस्य च सत्यानुमेयत्वमभिधीयते । ततश्च सत्यमेव ब्राह्मण्ये हेतुरिति स्फुटीभवति । तत्सिद्धं गुणकर्मावलम्बिन्येव वर्णव्यवस्थेति ।

८ अपरे पुनः पौराणिका गुणा एव वर्णभेदे बीजम्, नैव तु जातिरित्याहुः। यदि हि गवाश्वादिवज्जन्मत एवाभविष्यज्जातिव्यवस्था, तदा न क्षत्रियादिस्त्रीषु ब्राह्मणादिभ्योऽपत्यान्युदपत्स्यन्त। न हि गव्यश्वादिभ्योऽपत्यं जायते। भवति च ब्राह्मणादिषु विजातीयानां संयोगेऽपत्योत्पत्तिः। ततश्च कृतक एवायं गुणाद्यवलम्बी ब्राह्मणादिभेद इति स्फुटीभवति इति। अत्रानुसन्धेयानि भविष्यत्पुराणवचनानि। तद्यथाः—

[ उक्तार्थे भविष्यत्पुराणवचनोपष्टम्भः। ]

भविष्योत्तरपुराणे ४०तमेऽध्याये—शतानीक उवाच—

जातिः श्रेष्ठा भवेद्वीर उत कर्म भवेद्वरम्।
संशयस्तु महानत्र दृष्ट्वा मे कृत्तिकासुतम्॥
एतद्वद विनिश्चित्य न यथो संशयो भवेत्।
जन्मतः कर्मणश्चैव यज्ज्यायस्तद् ब्रवीहि मे॥

सुमन्तुरुवाच—

इममर्थं पुरा पृष्टो ब्रह्मा शिष्यैर्मनीषिभिः।
यदुक्तं तेन तेषां च तत्ते वच्मि निबोध मे॥
सुरज्येष्ठं सुखासीनमभिगम्य महर्षयः।
प्रणम्य च महाबाहो विश्वामित्रस्य विप्रताम्॥
दृष्ट्वा विस्मयमागत्य कौतूहलसमन्विताः।
भक्तिश्रद्धां पुरोधाय प्रणम्यानतकन्धराः॥

ऋषय ऊचुः—

भो ब्रह्मन्नादिकल्पे हि ब्राह्मण्यं ब्रूहि किं भवेत्।
जात्यध्ययनदेहात्मसंस्काराचारकर्मणाम्॥
बाह्याभ्यन्तरसामान्यविशेषा यदि कृत्रिमाः॥
मनोवाक्कर्मशारीरजातिद्रव्यगुणात्मकाः॥

शक्त्या कृतो ह्यङ्गजवर्णधर्मै-
र्भेदः स्फुटं लक्षणतोऽत्र यद्वत् ॥
तदुत्तरान्नैव वितर्कनीया
ब्राह्मण्यजातिर्नृषु नास्ति काचित् ।
नित्याकृतिर्नानुपभेदरूपा ।
यथाहि भेदः परमोऽत्र सिद्ध्येत् ॥
सिताद्यसाधारणतुल्यरूपः ।
सनातनोऽङ्गेषु न वर्णभेदः ॥
ब्राह्मण्यमध्रुवमिदं किल कृत्रिमत्वा-
दकृत्रिमं भवति सामयिकत्वयोगात् ।
साङ्केतिकं सुकृतलेशविशेषलब्धम्
वाणिज्यभेषजकृतामिव जातिभेदाः ॥
किं ब्राह्मणा ये सुकृतं त्यजन्ति ।
किं क्षत्रिया लोकमपालयन्तः ॥
स्वधर्महीना हि तथैव वैश्याः ।
शूद्राः स्वमुख्यक्रियया विहीनाः ॥
तस्मान्न गोऽश्ववत्कश्चित् जातिभेदोऽस्ति देहिनाम् ।
कार्यशक्तिनिमित्तस्तु सङ्केतः कृत्रिमो भवेत् ॥
एवं प्रमाणैः प्रतिषिद्ध्यमानां ।
साङ्केतिकीं याति नरो व्यवस्थाम् ॥
स्वकीयसिद्धां स्वमतैर्निषिद्धाम्
न बुध्यते मूढमना वराकः ॥
गोमहिष्यजवाज्युष्ट्रानेयाविशजाधिपाः ।
प्रेष्यवार्धुषिकाः कार्यकरणोद्यतमानसाः ॥

वणिक्कारुक्रियाविष्टा द्विव्यास्तेऽपि च ते द्विजाः ।
विनष्टास्ते तु विज्ञेयाः क्रव्यादाश्च कुशीलवाः ॥
पलाण्डुलशुनादाश्च मृग्युष्ट्रीक्षीरपायिनः ।
मांससर्वरसक्षीरक्रयविक्रयकारिणः ॥
पुनर्भूवृषलीवेश्याचाण्डालस्त्रीनिषेविणः ।
शूद्रान्नरसपुष्टाङ्गाः प्रेतवस्त्रान्नभोजनाः ॥
मृतसूतकलब्धान्नपानाद्यभ्यवहारिणः ।
ब्रह्मदेवपितृभूतमनुष्येषु बहिष्कृताः ॥
मात्सर्यमदविद्वेषतृष्णाकामतपोमयाः ।
हीनाचारा हि ये केचिदपरे पिशुना द्विजाः ॥
प्रकारैर्बहुभिः सर्वे ते प्रणश्यन्ति नान्यथा ॥
एवं शास्त्रोदितन्यायमार्गभ्रष्टास्तु ये नराः ।
विशिष्टगोत्रसंस्कारकलापसकलात्मकाः ॥
वेदानध्यापयन्तोऽपि तेऽधीयाना श्रुतिक्रमात् ।
ब्राह्मणत्वाद्विहीयन्ते दुराचारविधायिनः ॥
तस्मान्न जातिरेकत्र भूतात्माऽस्त्यनपायिनी ।
नाशित्वादत्र च श्लोकान्मानवाः समधीयते ॥
सद्यः पतति मांसेन लाक्षया लवणेन च ।
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयी ॥
गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान् ।
प्रेष्यान्वाधुषिकांश्चैव शूद्रांस्तान्मनुरब्रवीत् ॥
शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ।
क्षत्रियो याति विप्रत्वं विद्याद्वैश्यं तथैव च ॥

[ इति चत्वारिंशोऽध्यायः ]

तथा—भविष्यपुराणे एकचत्वारिंशत्तमोऽध्यायः । ब्रह्मोवाच—

वेदाध्ययनमप्येतद् ब्राह्मण्यं प्रतिपद्यते ।
विप्रवद्वैश्यराजन्यौ राक्षसा रावणादयः ॥
श्वादचाण्डालदासाश्च लुब्धकाभीरधीवराः ।
येऽन्येऽपि वृषलाः केचित्तेऽपि वेदानधीयते ॥
शूद्रा देशान्तरं गत्वा ब्राह्मण्यं क्षत्रियं श्रिताः ।
व्यापाराकारभाषाद्यैर्विप्रतुल्यैः प्रकल्पितैः ॥
वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् ।
प्रोद्वहन्ति शुभां कन्यां शुद्धब्राह्मणजां नराः ॥
अथवाधीत्य वेदांस्तु क्षत्रवैश्यैस्तु वा नराः ।
गौडपूर्वां कृतामीयुर्जातिं वा दाक्षिणात्यजाम् ॥
अपरिज्ञातशूद्रत्वाद् ब्राह्मण्यं यान्ति कामतः ।
तस्मान्न ज्ञायते भेदो वेदाध्यायक्रियाकृतः ॥
शास्त्रकारैस्तथा चोक्तं न्यायमार्गानुसारिभिः ।
ते साधुमतमाकर्ण्य सन्तः सन्ति विमत्सराः ॥
आचारहीनान्न पुनन्ति वेदाः
यद्यप्यधीताः सह षड्भिरङ्गैः ॥
शिल्पं हि वेदाध्ययनं द्विजानां ।
वृत्तं स्मृतं ब्राह्मणलक्षणं तु ॥
अधीत्य चतुरो वेदान् यदि वृत्ते न तिष्ठति ।
न तेन क्रियते कार्यं स्त्रीरत्नेनेव षण्डकः ॥
शिखाप्रणवसंस्कारसन्ध्योपासनमेखलाः ।
दण्डाजिनपवित्राद्याः शूद्रेष्वपि निरङ्कुशाः ॥
प्रसङ्गोऽपि हि शूद्राणां न शक्यो विनिवारितुम् ।

देवोत्तमत्रयेणापि निवर्तन्ते नराः स्वयम् ॥
तस्मान्नैतेऽपि लक्ष्यन्ते विलक्षणतया नृणाम् ।
यज्ञोपवीतसंस्कारमेखलाचूलिकादयः ॥
आभिचारिकमन्त्राद्यैर्दुर्लभत्वादि भाषणैः ।
ब्राह्मणस्यैव शक्तिश्चेत्केनास्य विनिहन्यते ॥
तपःसत्यादिमहात्म्याद्दैवतासमयस्मृतिः ।
मन्त्रशक्तिर्नृणामेषां सर्वेषामपि विद्यते ॥
वञ्चनं दुर्वचस्यापि क्रियते सर्वमानवैः ।
शूद्रब्राह्मणयोस्तस्मान्नास्ति भेदः कथञ्चन ॥
शापानुग्रहकारित्वशक्तिभेदो न विद्यते ।
चौरचाटादिराजन्यदुर्जनाभिहते नृणाम् ॥
आत्मदुःखोदयापायं स्वेषु जन्तुषु रक्षणम् ।
कर्तुं न प्रभवेच्छूद्रो ब्राह्मणस्तद्वदेव हि ॥
मा भूद्युगे कलावेतद्देशे चाकार्यकृद्द्विजे ।
स्यादन्यदेशकालादौ द्विजानामतिशायिनाम् ॥
शापानुग्रहसामर्थ्यमन्यद्वाध्यात्मगोचरम् ।
ब्रह्मसाधनमेतद्धि लिङ्गं केचित् प्रचक्षते ॥
संसारासक्तचेतस्का मोहान्धतमसावृताः ।
पतन्त्युन्मार्गगर्तेषु प्रत्यग्नि शलभा यथा ॥
जातिधर्मः स्वयं किञ्चिद्विशेषः श्रुतिसङ्गमात् ।
असिद्धः शूद्रजातीनां प्रसिद्धो विप्रजातिषु ॥
संस्कारो योनिसाध्यो वा सामग्रीप्रभवोऽथवा ।
शूद्रेभ्योऽतिशयं धत्ते यः साधारणतागुणः ॥
विप्राणां पञ्चधा भेदः कल्पनीयस्तु पण्डितैः ।

न जातिजस्त्रयीजो वा विशेषो युक्तिबाधकात् ॥
क्रमाक्रमक्रियाः सन्ति न सनातनवस्तुनः ।
नित्यो न हेतुर्विगतक्रियत्वात्
हेतुर्भवेद्धेदविशेषतः सः ।
स तत्समस्तत्प्रतिसन्निधानात्
कालात्ययेऽनित्यत्वमयुक्तमेव ॥
स्वान्तः शरीरवृत्तिस्थः श्रुतियोगादुदेति यः ।
सोऽनन्यवेद्यविज्ञातस्वभावोऽन्यैर्न गम्यते ॥
विशिष्टाधीतिधर्मत्वे कृत्रिमा ब्रह्मसङ्कृतिः ।
यस्यास्त्यतिशयस्तस्य नान्यो नाश्रयते यदि ॥
दृष्टस्वभावं किमभीष्टमेतत्
ब्राह्मण्यमाहोस्विददृष्टरूपम् ॥
सर्वैः प्रतीयेत हि दृश्यरूपम् ।
ततोऽन्यथावद्गतिरेव न स्यात् ॥
सामग्र्यभावात्परमं विशेषम् ।
भूदेवगात्रस्थमभूमिदेवाः ॥
स्मरन्ति ते नात्मनि पुण्यपापम् ।
यथा तथेत्येतदयुक्तमुक्तम् ॥
सामग्र्यनुष्ठानगुणैः समग्राः ।
शूद्रा यतः सन्ति समा द्विजानाम् ॥
तस्माद्विशेषो द्विजशूद्रनाम्नो-
र्नाध्यात्मिको बाह्यनिमित्तको वा ॥
संस्कारतः सोऽतिशयो यदि स्यात्
सर्वस्य पुंसोऽस्त्यतिसंस्कृतस्य ॥

॥ यः संस्कृतो विप्रगणप्रधानो
व्यासादिकैस्तेन न तस्य साम्यम् ॥
हेतुत्वं घटते नैषां जात्यादीनामसम्भवात् ।
जातेरकृतकत्वाच्च अधीतेन विशेषतः ॥
संस्कारातिशयाभावादन्तरस्यागते परैः ।
भौतिकत्वाच्छरीरस्य समस्तानामसंहतेः ॥
किश्चान्यनास्तिकम्लेच्छयवनादिजनेष्वलम् ।
वेदोदितबहिर्दुष्टचरितेषु दुरात्मसु ॥
धर्मादतिशयो दृष्टः क्रूरसाहसिकादिषु ।
तस्माद्विप्रेषु जात्यादिसामग्रीप्रभवो न सः ॥
तस्मान्न च विभेदोऽस्ति न बहिर्नान्तरात्मनि ।
न सुखादौ नचैश्वर्ये नाज्ञायां नाभयेष्वपि ॥
न वीर्ये नाकृतौ नाप्ते न व्यापारे न चायुषि ।
नाङ्गे पुष्टे न दौर्बल्ये न स्थैर्ये नापि चापले ॥
न प्रज्ञायां न वैराग्ये न धर्मे न पराक्रमे ।
न त्रिवर्गे न नैपुण्ये न रूपादौ न भेषजे ॥
न स्त्रीगर्भे न गमने न देहमलसम्प्लवे ।
नास्ति रन्ध्रे न च श्लेष्मिणि न प्रमाणे न लोमसु ॥
शूद्रब्राह्मणयोर्भेदो मृग्यमाणोऽपि यत्नतः ।
नेक्ष्यते सर्वधर्मेषु संहतैस्त्रिदशैरपि ॥
उक्तमात्राविसम्भूतिर्विचारक्रमकारिभिः ।
वृद्धवृन्दारकाधीशैरप्रधृष्यमिदं वचः ॥
न ब्राह्मणाश्चन्द्रमरीचि शुभ्राः ।
न क्षत्रियाः किंशुकपुष्पवर्णाः ॥

न चेह वैश्या हरितालतुल्याः।
शूद्रा न चाङ्गारसमानवर्णाः॥
पादप्रचारैस्तनुवर्णकेशैः।
सुखेन दुःखेन च शोणितेन॥
त्वङ्मांसमेदोस्थिरसैः समानाः
चतुःप्रभेदा हि कथं भवन्ति॥
वर्णप्रमाणाकृतिगर्भवास—
वाग्बुद्धिकर्मेन्द्रियजीवितेषु॥
बलत्रिवर्गामयभेषजेषु।
न विद्यते जातिकृतो विशेषः॥
स एक एवात्र पतिः प्रजानाम्
कथं पुनर्जातिकृतः प्रभेदः॥
प्रमाणदृष्टान्तनयप्रवादैः
परीक्ष्यमाणो विघटत्वमेति॥
चत्वार एकस्य पितुः सुताश्च
तेषां सुतानां खलु जातिरेका॥
एवं प्रजानां हि पितैक एव
पित्रैकभावान्नच जातिभेदः॥
फलान्यथोदुम्बरवृक्षजातेः
यथाग्रमध्यान्तभवानि यानि।
वर्णाकृतिस्पर्शरसैः समानि
तथैकतो जातिरितिप्रचिन्त्या॥
ये कौशिकाः काश्यपगोतमाश्च।
कौण्डिन्यमाण्डव्यवसिष्ठगोत्राः॥

आत्रेयकौत्साङ्गिरसाः सगार्गाः ।
मौद्गल्यकात्यायनभार्गवाश्च ॥
गोत्राणि नानाविधजातयश्च ।
भ्रातृस्नुषामैथुनपुत्रभावाः ॥
वैवाहिकं कर्म न वर्णभेदाः ।
सर्वाणि शिल्पानि भवन्ति तेषाम् ॥
ये चान्ये पण्डिताः प्राहुर्देहब्राह्मणतां नराः ।
तेषां दृष्टितिमिरमपनीयानुकम्प्य च ॥
न्यायाञ्जनौषधैर्दिव्यैः परिणामसुखावहैः ।
उपनीतैः प्रयत्नेन सुदृष्टिं संविदध्महे ॥
मूर्तिमत्त्वाच्च नाशित्वं नाशित्वाच्छेषभूतिवत् ।
देहाधारनिविष्टानां ब्राह्मण्यं न प्रकल्प्यते ॥
एकैकोऽवयवस्तेषां न ब्राह्मण्यं समश्नुते ।
न चानेकसमूहेऽपि सर्वथातिप्रसङ्गतः ॥
पृथिव्युदकवाय्वग्निपरिणामाविशेषतः ।
देहतः सर्वभूतानां ब्राह्मणत्वप्रसङ्गतः ॥
देहस्य ब्राह्मणत्वं यैरतत्त्वज्ञैः प्रकल्प्यते ।
संस्कर्तॄणां शरीरस्य तेषां न ब्रह्मता भवेत् ॥
मृग्यमाणे प्रयत्नेन देहे तन्नोपलभ्यते ।
तस्मान्न देहे ब्राह्मण्यं नापि देहात्मकं भवेत् ॥
वर्णापसदचाण्डालश्वादीनां च प्रसज्यते ।
यदि देहस्य विप्रत्वं भवद्भिरुपगम्यते ।
देहशक्तिगुणैः क्षीणैः कायभस्मादिरूपवत् ।
तस्माद्देहात्मकेनैतद्ब्राह्मण्यं नापि कर्मजम् ॥

इति भविष्योत्तरपुराणे ब्राह्मे पर्वणि षष्टिकल्पे ब्राह्मण्यविवेक-
वर्णनं नामैकचत्वारिंशोऽध्यायः ।

अथ द्विचत्वारिंशत्तमोऽध्यायः ४२

ब्रह्मोवाच—

अपरैश्च सदाचारयोगयुक्तैर्मनीषिभिः ।
यदकारि महासत्त्वैः सुभाषितमिदं शृणु ॥
बहुवनस्पतिशङ्खपिपीलिका—
भ्रमरचारणजातिमुदाहरन् ॥
गतिषु कर्ममितो नटवत्सदा ।
भ्रमति जन्तुरलब्धसुदर्शनः ॥
रूपैश्वर्यज्ञानकुलैर्विभवै—
र्वर्मितो भूत्वा धर्मपथं चेद्विजहासि ॥
न वक्ष्ये व्रजन् भुवनानि त्वमटिष्यन् ।
तस्मादभिभस्मीभूते मद आत्मनः ॥
जातिकुलरूपवयोवर्णा—
नेकश्रुतमदान्धाः क्लीबाः ।
परत्र चेह च हितमप्यर्थं न पश्यन्ति ।
ज्ञात्वा भवपरिवर्ते जातीनां कोटिशतसहस्रेषु ।
हीनोत्तममध्यत्वं को जातिमदं बुधः कुर्यात् ॥
नैकान् जातिविशेषानिन्द्रियनिवृत्तिपूर्वकान्सर्वान् ।
कर्मवशाद्गच्छत्यत्र कस्यैका शाश्वती जातिः ॥
विद्वत्सदसि योऽप्य् इह संस्कराद्ब्राह्मणो भवन् ।
न्यायज्ञैः स निराकार्यो वाक्यैर्न्यायानुसारिभिः ॥
गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा ।

जातकर्म नामकर्म तथान्नप्राशनं च वै ।
चूडोपनयनं चास्य व्रतादेशस्तथैव च ।
समावर्तनमध्यन्यत्पाणिग्रहणमेव च ॥
इत्येवमादिसंस्कारविधानैर्येऽतिसंस्कृताः ।
त एव ब्राह्मणा येषां नैरन्तर्येण कामनाः ॥
यस्माद्वै ब्राह्मणा जाता ब्राह्मणैः कृतसंस्कृतैः ।
नायुः शक्तिर्हि कान्त्यादिविशेषो विद्यते स्फुटः ॥
तौ वा ब्राह्मणगोत्रोत्थसंस्कृतासंस्कृतौ नरौ ।
इष्टानिष्टाप्त्यनाप्तिभ्यां न भिद्येते परस्परम् ॥
ज्ञानाध्ययनमीमांसानियमेन्द्रियनिग्रहैः ।
विना संस्कारयोगेऽपि पुंसः शूद्रान्न भिन्नता ॥
संस्काराः क्रियमाणाश्च न शूद्रे च प्रवर्तते ।
संस्कृताङ्गश्च पापेभ्यो न पश्यति निवर्तते ॥
विलासिनीभुजङ्गादिजनवन्मदविह्वलाः ।
व्यामुह्यन्ति सदाचाराद् ब्राह्मणत्वात्पतन्ति च ॥
संस्कृतोऽपि दुराचारो नरकं याति मानवः ।
निःसंस्कारः सदाचारो भवेद्विप्रोत्तमः सदा ॥
मन्त्रपूतात्मसंस्कारयुक्तोऽपि प्लवते न तु ।
ब्राह्मण्यादविकल्पं स पश्चाद् श्चरितो नरः ।
सामर्थ्यात्पतनं तस्माद् ब्राह्मण्यान्मुच्यते ध्रुवम् ।
दुरनुष्ठानसक्तानां पुंसां पुरुषपुङ्गवैः ॥
किं क्वचित् दृष्टमेवैतत्किं वा स्पर्धां दधात्ययम् ।
तुल्यमुत्सहसे कर्तुमप्यदृष्टं तदा वद ॥
आचारमनुतिष्ठन्तो व्यासादिमुनिसत्तमाः ।

गर्भाधानादिसंस्कारकलापरहिताः स्फुटम् ॥
विप्रोत्तमाः श्रियं प्राप्ताः सर्वलोकनमस्कृताः।
बहवः कथ्यमाना ये कतिचित्तान्निबोधत ॥
जातो व्यासस्तु कैवर्त्याः श्वपाक्याश्च पराशरः।
शुक्यां शुकः कणादाख्यस्तथोलूक्याः सुतोऽभवत् ॥
मृगीजोऽथर्ष्यशृङ्गोऽपि वसिष्ठो गणिकात्मजः।
मन्दपालो मुनिश्रेष्ठो नाविकापत्यमुच्यते ॥
माण्डव्यो मुनिराजस्तु मण्डूकीगर्भसम्भवः।
बहवोऽन्येऽपि विप्रत्वं प्राप्ता ये पूर्ववत् द्विजाः ॥
यच्चैतच्चारुचरितैरर्च्यमुच्चरितं वचः।
तद्विचार्याचरन्नुच्चैराचारोपचितद्युतिः ॥
हरिणीगर्भसम्भूतो ऋष्यशृङ्गो महामुनिः।
तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम् ॥
श्वपाकीगर्भसम्भूतः पिता व्यासश्च पार्थिव।
तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम् ॥
उलूकीगर्भसम्भूतः कणादाख्यो महामुनिः।
तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम् ॥
गणिकागर्भसम्भूतो वसिष्ठश्च महामुनिः।
तपसो ब्राह्मणो जातः संस्कारस्तेन कारणम् ॥
नाविकागर्भसम्भूतो मन्दपालो महामुनिः।
तपसा ब्राह्मणो जातः संस्कारस्तेन कारणम् ॥
वेदतन्त्रजसंस्कारकलापनिपुणैरपि।
विद्यातपोधनबलादुत्कृष्टं प्राप्यते फलम् ॥
लब्धसंस्कारदेहाश्च महापातकिनो नराः।

यस्मान्निवर्तते ब्रह्म तस्मात्साङ्केतिकं विदुः॥

इति श्रीभविष्यपुराणे ब्राह्मे पर्वणि षष्टिकल्पे ब्राह्मणयसंस्कारविवेकवर्णनं नाम द्विचत्वारिंशोऽध्यायः॥ ४२॥

अथ भविष्यपुराणे त्रिचत्वारिंशोऽध्यायः ४३ ब्रह्मोवाच—

किञ्चान्यदपरं यूयं वेदमन्त्रविदो जनाः।
प्रष्टव्याः कस्य संस्कारे विशेषमुपगच्छत॥
किं देहस्योत येनासौ निसर्गमलिनः स्थितः।
शुक्रशोणितसम्भूतः शमलोद्भवकीटवत्॥
निषेकादिश्मशानान्तैर्विविधैर्विधिविस्तरैः।
देहिनोऽतिशयं केचिदुपगच्छन्ति मानवाः॥
तेषां गूढमनःकायवाग्विदुष्टैः सुचेष्टितैः।
असंयतमनुष्याणां पक्षोऽयं दृष्यते मया॥
वैदिकाखिलसंस्कारसारभूता द्विजातयः।
सर्वकार्यकरान् सर्वान् वृषलानतिशेरते॥
चण्डकर्मा विकर्मस्थो ब्रह्महा गुरुतल्पगः।
स्तेनो गोघ्नः सुरापाणः परस्त्रीरमणप्रियः॥
मिथ्यावादी मदोन्मत्तो नास्तिको वेदनिन्दकः।
ग्रामयाजकनिर्ग्रन्थो बहुदोषो दुरासदः॥
निषिद्धाचारसंसेवी चोरश्चाटो मदोद्धतः।
धूर्तो नरः शठः पापी सर्वाशी सर्वविक्रयी॥
वाङ्मनःकायजैर्दुष्टैर्हता ये ब्राह्मणाधमाः।
ते न शुद्धिं व्रजन्तीह अपि यज्ञशतैरपि॥
शूद्राणां यान्यनिष्टानि सम्पद्यन्ते स्वभावतः।
विप्राणामपि तान्येव निर्विघ्नानि भवन्ति न॥

तस्मामन्त्तोऽग्निहोत्रं वा वेद्यां पशुवधोऽपि वा।
हेतवो नहि विप्रत्वे शूद्रैः शक्या क्रिया यथा॥
ये चापि कर्मबन्धेन बद्धाः सीदन्ति जन्तवः।
संसारानलसन्तापविक्लवीकृतमानसाः॥
ते जन्ममरणाटव्यां सुखामृतपिपासवः।
कृपणास्याश्रयेऽटन्तो लभन्ते नैव निर्वृतिम्॥
चतुर्वर्णा नरा ये तु तत्तद्वीर्ये नराधमाः।
तेषां सर्वात्मना सर्वधर्मैः साङ्कर्यमीक्ष्यते॥
शूद्रविप्रादयो योनौ न भिद्यन्ते परस्परम्।
सर्वधर्मसमानत्वात्संस्कारादि निरर्थकम्॥
तदनुष्ठानवैधर्म्यवियोगमरणादिभिः।
असेव्यसेवनैरन्यैः शूद्रविप्रादयः समाः॥
बुद्ध्या शक्त्या स्वभावेन धर्मैर्जात्यादिभिः श्रिया।
कर्तव्यैः पुण्यपापाभ्यां शनैः सर्वशरीरगैः॥
बन्धनै रोधनैर्नानायातनोपायपीडनैः।
दण्डैरदण्डकरणैर्विषादपरिदेवनैः॥
सात्त्विकैः प्रीतिधर्माद्यै राजसैश्चित्रचेष्टितैः।
तामसैस्तापमोहाद्यैर्दूयमानाः पुनः पुनः॥
श्लेष्ममारुतपित्ताद्यैर्महाबीभत्सदर्शनैः।
क्वचिद्वृत्तिनिवृत्तिभ्यामृतानृतहिताहितैः॥
अलङ्कारोपयोगेन मन्मथाद्यैर्विचेष्टितैः।
धनलाभाशया नैकजन्तुसङ्घातपातनैः॥
अर्थसिद्धिमतिं यान्ति नानाविधमनोरथैः।
आत्मस्नेहपरद्वेषस्वीकृतद्रव्यरक्षणैः॥

अतितीव्रत्वसङ्घोभतुतन्नामत्वसामयैः ।
यातनोपायपैशुन्यशून्यत्वोपशमैस्तथा ॥
अप्रशस्तैरनुष्ठानैः समोपस्थापदः समाः ।
हिंसकाः प्राणिनः पापवितथालापभाषिणः ॥
साधूनां भाषकाः स्तेना निर्दयाः पारदारिकाः ।
नीचकर्मसमाचाराः सर्वभक्ताः पिशाचवत् ॥
दुष्कुलीना दुराचारा नृपाणामुपजीविनः ।
विप्रकार्या विकर्मस्था धनिनो दुष्टचेतसः ॥
लुब्धका हरिणान् हत्वा वासं कृत्वा यथा वने ।
तथा खादन्ति पिशुना बहवश्च क्रियावशात् ॥
वेदवादमधीयानाः प्राणिघाताभिशंसिनः ।
पुष्णन्ति कपटैरर्थान् वेदविक्रयिणोऽधमाः ॥
मायिनो मत्सरग्रस्ता लुब्धा मुग्धा मदोद्धताः ।
चाटाः कार्पटिकाः क्रूराः कदर्याः कलहप्रियाः ॥
वाचाटा दुष्टकुलटा अटन्तो भाटकैः सह ।
भण्डम्मन्या भटाटोपैः सङ्क्रुद्धाः सुविलुण्ठकाः ॥
पर्यटा भाटका जीवाः कण्टकश्लोकभाषिणः ।
विक्रीणते ह्यविक्रेयमभक्ष्यद्रव्यभक्षिणः ॥
शूद्रकर्मानुतिष्ठन्तो निस्तपास्ते नराधमाः ।
सेवाध्यापनवाणिज्यकृष्याद्यारम्भलम्भिनः ॥
गृह्णन्तः सम्पदो बाह्या द्रव्यधान्यधनादिकाः ।
क्रोधादाभ्यन्तरान् दोषान् तथा दुष्टमनोरथान् ॥
अत्यजन्तो विशिष्टानां श्रेष्ठास्ते कच्चमर्दिनः ।
नोपादेयानि वस्त्राणि नित्यमाददते द्विजाः ॥

ह्रापयन्ति न हेयानि कथन्ते गुरवः क्षितौ ।
दण्डिकादण्डिकाभण्डाश्चण्डाश्चण्डालचेष्टिताः ॥
वैतण्डकास्ते निघ्नन्ति यथा सिंहो मृगान् पशून् ।
निर्ग्रन्थं मुनिमालोक्य मन्यमानाः समुन्नतम् ।
परिभूयावतिष्ठन्ते धिक् तान् रिक्तान् स्ववैरिणः ॥
तस्मात्सांसारिकाः सत्त्वाश्चित्तक्लेशकलङ्किताः ।
दौःशील्यदौर्मनस्याद्यैस्तुल्यजातीयबन्धनात् ॥
शूद्रां प्ररोचते विप्रो रागिण्यां मैथुनं प्रति ।
सा कामदुःखविगमे गर्भं धत्ते समागमे ॥
कामं कामातुराभ्यस्तु रोचन्ते शूद्रमानवाः ।
मैथुनं प्रति ब्राह्मण्ये तेऽपि तासां सुखावहाः ॥
ये तु जात्यादिभिर्भिन्ना गवाश्वोष्ट्रमतङ्गजाः ।
ते विजातिषु नो गर्भं कुर्वतेऽपि सुखार्थिनः ॥
अनड्वानेव गोरेव कामं पुष्णाति सङ्गमे ।
घोटकाश्च रतिं सम्यक्कुर्वते वडवासु च ॥
पतिं करभमेवाप्य करभी रमते मुदा ।
गजमेव पतिं लब्ध्वा सुखं तिष्ठति हस्तिनी ॥
तिर्यग्जातिस्त्रिया साकं कुर्वाणोऽपि हि मैथुनम् ।
न तस्याः कुरुते गर्भं नरो नापि सुखासिकाम् ॥
तिरश्चा सह कुर्वाणा मैथुनं मनुजाङ्गना ।
नाधत्ते तत्कृतं गर्भं न युक्तं मैथुनं तयोः ॥
नैवं कश्चिद्विभागोऽस्ति मैथुने स्त्रीमनुष्ययोः ।
येन सङ्कीयते भेदः प्रस्फुटं द्विजशूद्रयोः ॥
वेदपाठच्छलेनायं न क्रियाभिः प्रपद्यते ।

बहुभिर्जडसङ्घातैरविशिष्टे मदेऽहनि ॥
देहे देहिनि चामुष्मिन्नशुचावनवस्थिते ।
रागद्वेषादिभिर्दोषैरधिकं परिपीडिते ॥
कुलालचक्रवद् भ्रान्तमानसे विषयार्णवे ।
घोरदुःखभयाक्रान्ते समाजेऽनीश्वरात्मनि ॥
जन्ममृत्युजराशोकानिष्टयोगाग्निपीडिते ।
हीनसत्त्वशरीरादौ न विशेषो विभाव्यते ॥
तस्मान्मनुष्यभेदोऽयं सङ्केतबलनिर्मितः ।
ब्राह्मण्यं ब्राह्मणासङ्गाद् ब्राह्मणी चोपसेवते ॥
पतिं त्यक्त्वा सुखास्वादलालसैर्मदलालसैः ।
आसेव्यते चिरं गत्वा बन्धकी चेटकैरपि ॥
ब्राह्मण्यात्प्रच्यवन्तेऽन्ये महापातकसेविताः ।
व्यलीककल्पनैवैषा तस्माज्जात्यादिकल्पना ॥

इति श्रीभविष्यपुराणे ब्राह्मे पर्वणि षष्टिकल्पे वर्णव्यवस्थावर्णनं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

[जातेर्गुणकर्मकृतत्वे उपसंहारः]

परे तु वर्णशब्दो रागवाचकः संदृष्टः । श्वेतादिषु हि प्रयुज्यमानोऽयं दृश्यते । श्वेतोवर्णः कृष्णो वर्णो लोहितो वर्ण इति । आसीच्च प्रागेषा व्यवस्था यत् त्रिकालदर्शिनो मुनयः प्रतीच्या दृष्ट्या साक्षात्कृत्य वर्णं गर्भस्य जातिं निर्णयन्ति स्म । तत एव च जातावयं वर्णशब्दो रूढः । सम्प्रति पुनर्विलुप्तोऽयं प्रचार इति ।

तदेवं भगवद्गीतासु गुणकर्मविभागश एव ब्राह्मणादिसृष्टे रभिधानात्, पौरुषस्य सूक्तस्यावैदिकत्वेन प्रामाण्याभावात्, स्मृतीनामपि मूलवचनानुपलम्भेन प्रामाण्यस्य स्वीकर्तुमशक्यत्वात् जन्मना 'जायते

शूद्र' इत्यादिषु वर्णव्यवस्थाया गुणकर्मावलम्बित्वोक्तेर्वसिष्ठादीनां ब्रह्मर्षित्वस्य विना वर्णव्यवस्थाया गुणकर्मावलम्बित्वमुपपादयितुमशक्यत्वाद्वज्रसूच्युपनिषदि गुणत एव ब्राह्मण्यप्राप्तेः प्रतिपादनान्महाभारतादिषु च 'शूद्रयोनौ प्रजातस्य ब्राह्मणत्वप्राप्तेरभिधानात् विश्वामित्रस्य क्षत्रयोनौ समुत्पन्नस्यापि तपसा ब्राह्मण्यावाप्तेरवगम्यमानत्वाच्छान्दोग्योपनिषदि जाबालोपाख्याने च सत्यकामस्य जाबालस्य सत्यवचनमात्रेण ब्राह्मणत्वानुमानाज्जातीनां जन्मतः सिद्धत्वेऽर्थादकृत्रिमत्वे ब्राह्मणादिभिः क्षत्रियादिषु सन्तानोत्पत्तेरनुपपद्यमानत्वाच्चेत्येवमाद्यैः कारणैर्गुणकर्मावलम्बिन्येव वर्णव्यवस्था, नैवतु जन्मावलम्बिनीति संसिद्धम् इति।

सोऽयमुपन्यस्तः संक्षेपतः केषांचिदर्वाचीनानां पूर्वः पक्षः।

[ उक्ताक्षेपपरिहाराः। ] अवश्यं चात्र प्रतिवक्तव्यम्। तदिदानीं प्रमाणगर्भितैर्वचनैः सुदूरमुत्क्षेप्तुमाक्षेपानेतान्क्रमशः परिहरामः।

तत्र तावद्यदुक्तं 'गुणकर्मावलम्बिनी वर्णव्यवस्थेत्यत्र भगवती

[ भगवद्गीतापरीक्षणम्। ] गीतैव प्रमाणम्' इति, तन्न; अर्थस्यास्य भगवद्गीतातः कथंचिदपि साधयितुमशक्यत्वात्। तथाहि—'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः'। इत्येतद्भगवद्गीतागतं पद्यार्धमेवाक्षेपकाणां कल्पद्रुमायमाणं संदृष्टम्। एतत्पुनरमीषामभीष्टं फलयति। यो हि पद्यार्धस्यास्योपवर्ण्यतेऽर्थोऽमीभिर्नायमेतस्यार्थ इति। दीयतां तावत्पद्यस्यास्य भगवत्पादीयभाष्ये दृष्टिः प्रियपाठकमहाभागैरतीदानीं तदेवात्रोपहर्तुमिच्छामः। तद्यथा 'चातुर्वर्ण्यम्' इति। चत्वार एव वर्णाश्चातुर्वर्ण्यम्। मया ईश्वरेण सृष्टमुत्पादितम्' 'ब्राह्मणोऽस्य मुखमासीत्।' इत्यादिश्रुतेः। गुणकर्मविभागशो गुणविभागशः कर्मविभागशश्च। गुणाः सत्त्वरज-

स्तमांसि। तत्र सात्त्विकस्य सत्त्वप्रधानस्य ब्राह्मणस्य शमो दमस्तपः इत्यादीनि कर्माणि। सत्त्वोपसर्जनरजःप्रधानस्य क्षत्रियस्य शौर्यतेजःप्रभृतीनि कर्माणि। तम उपसर्जनरजःप्रधानस्य वैश्यस्य कृष्यादीनि कर्माणि। रजउपसर्जनतमःप्रधानस्य शूद्रस्य शुश्रूषैव कर्मेत्येवं गुणकर्मविभागशश्चातुर्वर्ण्यं मया सृष्टमित्यर्थः।' इति।

अत्र चादितो भगवतैव चातुर्वर्ण्यं सृष्टमित्यर्थे 'ब्राह्मणोऽस्य मुखमासीत्' इति प्रतिवादिनां शिरसि शूलं जनयन्त्येव भगवती श्रुतिः प्रमाणतयोपन्यस्ता श्रीमद्भिराचार्यैरिति नैतद्विस्मरणीयम्। ततश्चास्याः श्रुतेरनुसारेणैव लापनीय एतद्भगवद्गीतायाः पद्यार्थ इत्यर्थादेव समायाति। श्रुतौ पुनरेतस्यां भगवतो मुखादिभ्य एव ब्राह्मणादीनामुत्पत्तिराम्नायते। यथा चैतत्तथाऽग्रे स्फुटीकरिष्यामः।

अग्रे च ब्राह्मणस्य शमो दमस्तप इत्यादीनि कर्माणीति भाषितमाचार्यैः, नैव पुनः शमदमादिविशिष्टो ब्राह्मण इत्यादि। अतश्च प्रतीयते न गुणकर्मावलम्बिनी वर्णव्यवस्थेति। यदि ह्यसावभविष्यत्तदा चातुर्वर्ण्यसृष्टिं विवरीतुकामा आचार्याः शमदमादिसम्पन्नो ब्राह्मण इत्येवावक्ष्यन्। न चैवमवादिषुरिति सत्त्वप्रधानस्येति स्वरूपनिर्देशः। सत्त्वं हि ब्राह्मणेषु प्राधान्येन संदृष्टमिति। एवमुत्तरत्रापि द्रष्टव्यम्। अत्र च मया सृष्टमिति पदं न विस्मरणीयम्। मयैव चातुर्वर्ण्यं सृष्टं नैव पुनरन्येन सृज्यत इत्यर्थः।

ननु सत्त्वप्रधानस्येत्यादिकं ब्राह्मणादीनां लक्षणमेव कुतो न स्यादिति चेदप्रसङ्गादित्यवबुध्यस्व। नह्यत्र ब्राह्मणादीनां लक्षणकथनं प्रसक्तम्। चातुर्वर्ण्यसृष्टेर्भगवत्कृतत्वमेव ह्यत्र प्रतिपादयितुमिष्यत इति कुतः पुनर्ब्राह्मणस्यैव शमादीनि कर्माणि क्षत्रियस्यैव च शौर्यतेजःप्रभृतीनीत्यादिरयं नियम इत्येतद्वक्तव्यमित्यभि-

प्रत्यैव चोक्तमाचार्यैः सत्त्वप्रधानस्येत्यादि, नैव पुनर्ब्राह्मणादिलक्षणोपन्यासधियेति द्रष्टव्यम्। तदेवं सर्वथा प्रतिकूलमेव वर्णव्यवस्थाया गुणकर्मावलम्बित्वे भगवत्पादानां भाष्यम्।

अत्र च गुणकर्मविभागश इति पदं न विस्पष्टतया व्याख्यातमाचार्यैः। एतत्पुनर्गीतार्थसङ्ग्रहे श्रीमद्भिर्यामुनाचार्यैर्विवृतम् 'गुणकर्मविभागशः गुणविभागेन कर्मविभागेन च सह।' इति। बालबोधिनीकृतोऽप्येवमेवाहुः।

यत्पुनः पौरुषं सूक्तं प्रत्येव संशय्यते 'तदेतदर्वाचीनैरेव वेदेषु [पुरुषसूक्तप्रामाण्यम्।] प्रवेशितम्' इति, तदेतन्मूर्खप्रतारणमेव। नह्यस्य सूक्तस्य वेदेषु प्रवेशे कारणाभावात्। विना हि कारणं न किंचिदपि कश्चित्करोतीति। नच वर्णव्यवस्थाया गुणकर्मावलम्बित्वप्रतिषेध एव कारणं भवति; प्राप्तेरेवाभावात्। तदा हि प्रतिषेधो युज्यते, यदा प्राप्तिर्भवति। प्राप्तं हि प्रतिषिध्यते नाप्राप्तमिति हि प्राहुः शास्त्रकृतः। नचास्ति वर्णव्यवस्थाया गुणकर्मावलम्बित्वस्य प्राप्तिः कथंचिदपि, येनायं तत्प्रतिषेधो युज्येत। तत्रापि हि श्रुत्यादिषु भगवतो मुखादिभ्य एव ब्राह्मणादीनामुत्पत्तिः प्रतिपाद्यते। तत्सर्वथाऽर्वाचीनमेव पौरुषं सूक्तमिति नायमर्थ उपपन्नो भवति।

किंच यद्येतन्नव्यमेवाभविष्यत्तदा नैव श्रीमदाचार्यसदृशैः प्रज्ञतमैः प्रमाणयकरिष्यत। नहि पौरुषेयाणि वचनान्यपौरुषेयतया स्वीकुर्युः प्रेक्षावन्त इति।

भवति च पौरुषस्य सूक्तस्य ऋग्वेदान्तर्गतत्वे प्रमाणं भगवती श्रुतिरेव। तथाहि श्रूयते छान्दोग्योपनिषत्सु 'तदेतदृचाभ्युक्तम्। तावानस्य महिमाऽतो ज्यायांश्च पुरुष' इत्यादि। ऋक् चेयं न हि

पौरुषं सूक्तमपहायान्यत्र क्वापि दृश्यते । ततश्च सिद्धमृग्वेदान्तःपातित्वं पौरुषस्य सूक्तस्येति ।

[ जातिव्यवस्थायां संहिताप्रामाण्यम् ]

यत्पुनरुच्यते—'पौरुषं सूक्तमेकमपहाय नान्यत्र क्वापि ब्राह्मणादीनां ब्रह्मणो मुखादिजन्यत्वमभिधीयत इति, तदेतदप्यज्ञानमात्रविलसितमेव । सन्ति हि भूयस्य एवैवंविधाः श्रुतयो यासु ब्राह्मणादीनां ब्रह्मणो मुखादिजन्यत्वमभिधीयते । यथा तैत्तिरीयसंहितायाम्—

"प्रजापतिरकामयत प्रजायेयेति । स मुखतस्त्रिवृतं निरमिमीत । तमग्निर्देवताऽन्वसृज्यत । गायत्री छन्दो रथन्तरꣳसाम ब्राह्मणो मनुष्याणामजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्तोरसो बाहुभ्यां पञ्चदशं निरमिमीत तमिन्द्रो देवताऽन्वसृज्यत त्रिष्टुप्छन्दो बृहत्साम राजन्यो मनुष्याणामविः पशूनां तस्मात्ते वीर्यावन्तो वीर्याद्ध्यसृज्यन्त मध्यतः सप्तदशं निरमिमीत तं विश्वेदेवा देवता अन्वसृज्यन्त जगतीच्छन्दो वैरूपꣳसाम वैश्यो मनुष्याणां गावः पशूनां तस्मात्ते आद्या अन्नधानाद्ध्यसृज्यन्त तस्माद्भूयाꣳसोऽन्येभ्यो भूयिष्ठा हि देवता अन्वसृज्यन्त पत्त एकविंशं निरमिमीत तमनुष्टुप्छन्दोऽन्वसृज्यत वैराजꣳसाम शूद्रो मनुष्याणामश्वः पशूनां तस्मात्तौ भूतसङ्क्रामिणावाश्वश्च शूद्रश्च तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः" इत्यादि ।

अत्र च पौरुषे सूक्त इव मुखतो ब्राह्मणस्य बाहुभ्यां क्षत्रियस्योरुतो वैश्यस्य पद्भ्यां च शूद्रस्योत्पत्तिः श्रूयते । ततश्च सुदूरं प्रक्षिप्तेऽपि पौरुषे सूक्ते कथं वा जन्मतः सिद्धत्वं वर्णव्यवस्थाया वारयितुं शक्येत ?

प्रतिपाद्यते चान्यत्रापि बहुषु श्रुतिषु परमेशेनैव विनिर्मिता ब्राह्मणादयो न तु गुणकर्माद्यनुसारेण मानुषैर्व्यवस्थापनीया इति। तथाहि श्रूयते ऐतरेयब्राह्मणे—

[ उक्तार्थे ऐतरेयब्राह्मण्यम् ]

"प्रजापतिर्यज्ञमसृजत। यज्ञं सृष्टमनु ब्रह्मक्षत्रे असृज्येताम् ब्रह्मक्षत्रे अनु द्वय्यः प्रजा असृज्यन्त हुतादश्चाहुतादश्च। ब्रह्मैवानु हुतादः क्षत्रमन्वहुताद एता वै प्रजा हुतादो यद् ब्राह्मणा अहुतादो यद्राजन्यो वैश्यः शूद्र इति।" यच्च भगवता सृष्टं नैतदन्येन विनिर्मातुं शक्यम्। अतश्च सत्त्वादिगुणविशिष्टानां ब्राह्मणादिविधानं सर्वथाऽप्रामाणिकमेव।

वाजसनेयिब्रह्मणेऽपि श्रूयते—

[ तत्र वाजसनेयिब्राह्मणपरीक्षणम् ]

"ब्रह्म वा इदमग्र आसीदेकमेव तदेकꣳसन्न व्यभवत् तच्छ्रेयो रूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः। तस्मात्क्षत्रात्परं नास्ति तस्माद् ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद् ब्रह्म। तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वा योनिं ।-।-।-। ११ स नैव व्यभवत् स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति। १२। स नैव व्यभवत् स शौद्रं वर्णमसृजत पूषणमियं वै पुषेयं हीदं सर्वं पुष्यति यदिदं किं च। १३। तदेतद् ब्रह्मक्षत्रं विट् शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद् ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते" इत्यादि।

अस्यायमर्थः । आदितस्तावदत्र जगत्यां ब्राह्मणजातिरेवैकाऽऽसीत् । सा पुनः परिपालनादिषु न समर्थेति तदर्थं क्षत्रियाः सृष्टाः । परिपालनमपि वित्तोपार्जनमन्तरा दुष्करम् । अतो वित्तोपार्जयितुरभावात्क्षत्रजातिरपि परिपालनकर्मणि न प्राभूत् । ततश्च विशः सृष्टाः । वित्तोपार्जनमपि परिचारकसापेक्षम् । विना हि परिचारकान्न शक्यं वित्तोपार्जनकर्म निर्वर्तयितुमिति । अतश्च परिचरणकर्माणः शूद्राः सृष्टाः इति ।

[तत्र तैत्तिरीयब्राह्मणप्रामाण्यम् ] तैत्तिरीयब्राह्मणेऽपि ब्रह्मणः सकाशादेव क्षत्रादीनामुत्पत्तिः श्रूयते २-४ । ८ "ब्रह्म देवानजनयत् । ब्रह्मविश्वमिदं जगत् । ब्रह्मणः क्षत्रं निर्मितम् । ब्रह्म ब्राह्मण आत्मना" इति । स्पष्टार्था चेयं श्रुतिः । एवं च पुरुषसूक्त इव विभिन्नास्वपि श्रुतिषु कण्ठत एव परमात्मनः सकाशादेव ब्राह्मणादीनामुत्पत्तेः श्रवणान्नास्ति गुणकर्मावलम्बित्वं वर्णव्यवस्थाया इति सिद्धम् ।

अत्रेयं स्वत एव शङ्का समुदेति यद् ब्रह्म देवानजनयदित्यादिषु किल श्रुतिषु परमात्मना ब्राह्मणादयः सृष्टा इत्यभिधीयते । सर्गश्चोत्पत्तिः । स च गुणानुसारेण व्यवस्थापनमेव किं न स्यात् । सृष्टेषु हि मनुष्येषु सत्त्वादिगुणवतां ब्राह्मणादित्वं व्यवस्थापितमित्यर्थः । पूर्वं हि ब्राह्मणादिभेदो नासीत् । स च गुणाद्यनुरोधेन परमात्मना विनिर्मितः । अतश्च सृजधातोः प्रयोगो नानुपपन्नः । तत्कथमुच्यते ब्राह्मणादीनां परात्ममुखादिजन्यत्वमिति ।

अत्र ब्रूमः । न खलु ब्रह्म देवानजनयत् इत्यादिषु ब्राह्मणादीनामुत्पत्तेरुपादानभूतोऽवयवविशेषो निर्दिष्टः । अतो नैतेभ्यो वचनेभ्योऽसौ बोद्धुं शक्यः । यो हि यस्यार्थः, स ततोऽवबुध्येत ।

न चायमेतेषामर्थः। अन्यूनानतिरिक्तो हि शब्दार्थो भवति। अतश्च कथं वा ब्रह्मक्षत्रादयो विनिर्मिताः; कुतश्च गात्राद्भिर्निर्मिता इत्यादिकं नैतेभ्यः श्रुतिवचनेभ्यः स्फुटीभवति। ततश्चास्पष्टानि वाक्यान्येतानि स्पष्टेन स मुखतस्त्रिवृतं निरमिमीतेत्यादिनैकवाक्यतामापद्यन्ते। ततश्च मुखादिभ्य एव परमात्मना ब्राह्मणादयो विनिर्मिता इत्यादिरर्थः पर्यवस्यति। ब्राह्मण एवादितः समुत्पादितस्ततः परं च क्षत्रादयो यथाक्रमं यथापेक्षं चेत्यादिकं तु वाजनेयिब्राह्मणतः प्रतीयते।

तदेवं विनापि पौरुषं सूक्तं श्रुतिवचनैरेव सिध्यति ब्रह्मणादीनां ब्रह्मणो मुखादिजन्यत्वमिति द्रष्टव्यम्। वस्तुतस्तु पौरुषस्यापि सूक्तस्य श्रुत्यन्तःपातित्वेन दुर्निवारमेव प्रामाण्यमिति बोद्धव्यम्।

अत एव भविष्योत्तरपुराणे चतुश्चत्वारिंशत्तमेऽध्याये जातिवर्णनम्। तद्यथा—

ब्रह्मोवाच—

[ उक्तार्थे भविष्योत्तरपुराणोपष्टम्भः ]

हेयोपादेयतत्त्वज्ञास्त्यक्तान्यायपथागमाः।
जितेन्द्रियमनोवाचः सदाचारपरायणाः॥
नियमाचारवृत्तस्था हितान्वेषणतत्पराः।
संसाररक्षणोपायक्रियायुक्तमनोरथाः॥
सम्यग्दर्शनसम्पन्नाः समाधिस्था हतक्रुधः।
स्वाध्यायभक्तहृदयास्त्यक्तसङ्गा विमत्सराः॥
विशोका विमदाः शान्ताः सर्वप्राणिहितैषिणः।
सुखदुःखसमालोका विविक्तस्थानवासिनः॥
अलोपयुक्तसर्वाङ्गा धार्मिकाः पापभीरवः।

निर्ममा निरहङ्कारा दानशूरा दयापराः ॥
सत्यब्रह्मविदः शान्ताः सर्वशास्त्रेषु निष्ठिताः ।
सर्वलोकहितोपायप्रवृत्तेन स्वयम्भुवा ॥
वागीश्वरेण देवेन नाभेयेन भवच्छिदा ।
ब्रह्मणा कृतमर्यादास्त एव ब्राह्मणाः स्मृताः ॥
महातपोधनैराद्यैः सर्वसत्त्वाभयप्रदैः ।
सर्वलोकहितार्थाय निपुणं सुप्रतिष्ठितम् ॥
बृहत्त्वाद्भगवान् ब्रह्मा नाभेयस्तस्य ये जनाः ।
भक्त्यासक्ताः प्रपन्नाश्च ब्राह्मणास्ते प्रकीर्तिताः ॥
क्षत्रियास्तु क्षतत्राणाद्वैश्या वार्ताप्रवेशनात् ।
ये तु श्रुते द्रुतिं प्राप्ताः शूद्रास्तेनेह कीर्तिताः ॥
ये चाचाररताः प्रहुर्ब्राह्मण्यं ब्रह्मवादिनः ।
ते तु फलं प्रशंसन्ति यत्सदा मानसेप्सितम् ॥
क्षमा दमो दया दानं सत्यं शौचं धृतिर्घृणा ।
मार्दवार्जवसन्तोषानहङ्कारतपःशमाः ॥
धर्मो ज्ञानमपैशुन्यं ब्रह्मचर्यममूढता ।
ध्यानमास्तिक्यमद्वेषो वैराग्यं च शमात्मता ॥
पापभीरुत्वमस्तेयममात्सर्यमतृष्णता ।
नैःसङ्ग्यं गुरुशुश्रूषा मनोवाक्कायसंयमः ॥
य एवं भूतमाचारमनुतिष्ठन्ति मानवाः ।
ब्राह्मण्यं पुष्कलं तेषां नित्यमेव प्रवर्धते ॥
ते स्वमतास्वादलब्धवर्णाचारा महौजसः ।
सर्वशास्त्राविरोधेन पवित्रीकृतमानसाः ॥
सज्जनाभिमताः प्राज्ञाः पुराणागमपण्डिताः ।

गीतगीतागमोचाराः स्मृतिकाराः पठन्ति च ॥
मन्वन्तरेषु सर्वेषु चतुर्युगविभागशः ।
वर्णाश्रमाचारकृतं कर्म सिध्यत्यनुत्तमम् ॥
संसिद्धायां तु वार्तायां ततस्तेषां स्वयंप्रभुः ।
मर्यादां स्थापयामास यथारब्धां परस्परम् ॥
ये वै परिगृहीतारस्तेषां सत्त्वबलाधिकाः ।
इतरेषां क्षत्रत्राणान् स्थापयामास क्षत्रियान् ॥
उपतिष्ठन्ति ये तान्वै याचन्तो नर्मदाः सदा ।
सत्यब्रह्म सदाभूतं वदन्तो ब्राह्मणास्तु ते ॥
ये चान्येऽप्यबलास्तेषां वैश्यकर्मणि संस्थिताः ।
कीलानि नाशयन्ति स्म पृथिव्यां प्रागतन्द्रिताः ॥
वैश्यानेव तु तानाह कीनाशान्वृत्तिमाश्रितान् ।
शोचन्तश्च द्रवन्तश्च परिचर्यासु ये नराः ॥
निस्तेजसोऽल्पवीर्याश्च शूद्रांस्तात ब्रवीतु सः ॥
ब्राह्मणक्षत्रियविशां शूद्राणां च परस्परम् ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥
कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥
योगस्तपो दया दानं सत्यं धर्मः श्रुतिर्घृणा ।
ज्ञानं विज्ञानमास्तिक्यमेतद् ब्राह्मणलक्षणम् ॥

शिखा ज्ञानमयी यस्य पवित्रं च तपोमयम् ॥
ब्राह्मण्यं पुष्कलं तस्य मनुः स्वायम्भुवोऽब्रवीत् ॥
यत्र वा तत्र वा वर्णा उत्तमाधममध्यमाः ।
निवृत्तः पापकर्मभ्यो ब्राह्मणः स विधीयते ॥
शूद्रोऽपि शीलसम्पन्नो ब्राह्मणादधिको भवेत् ।
ब्राह्मणो विगताचारः शूद्राद्धीनतरो भवेत् ॥
न सुरां सन्धयेद्यस्तु आपणेषु गृहेषु च ।
न विक्रीणाति च तथा सच्छूद्रो हि स उच्यते ॥
यद्येका स्फुटमेव जातिरपरा कृत्यात्परं भेदिनी ।
यद्वा व्याहृतिरेकतामधिगता यच्चान्यधर्मं ययौ ॥

एकैकाखिलभावभेदनिधनोत्पत्तिस्थितिव्यापिनी । किन्नासौ प्रतिपत्तिगोचरपथं यायाद्विभक्त्या नृणाम्" इति चतुश्चत्वारिंशोऽध्यायः ।

[ ब्राह्मणस्य शूद्रत्वादिबोधकस्मृतिवचनोपपत्तिः ]

एतेन—जन्मना जायते शूद्रः संस्कारात् द्विज उच्यत्र इत्यादिस्मार्तवचनान्यपि—व्याख्यातानि । एतानि हि वचनानि शूद्रपदेन शूद्रसमत्वमेव बोधयन्ति, न तु वस्तुगत्या शूद्रत्वम् । विवेचितं चैतत्तन्त्रवार्तिकेऽपि । तद्यथा—मासेन शद्रो भवतीत्यादिकं तु ब्राह्मणकर्माधिकारप्रतिषेधार्थमिति । तथाचोक्तवचनानां ब्राह्मणनिन्दायामेव तात्पर्यम् । अत एव मनुः—

न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम् ।
स शूद्रवद् बहिष्कार्यः सर्वस्मात् द्विजकर्मणः ॥१०३ । २
यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः ।
तथा विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति ॥

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् ।
सहस्रशः समेतानां परिषत्त्वं न विद्यते ॥ अ० १२

कात्यायनीये एकादशखण्डेऽपि—
एतत्सन्ध्यात्रयं प्रोक्तं ब्राह्मण्यं यत्र तिष्ठति ।
यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥

पाराशरस्मृतावष्टमाध्याये—
सावित्र्याश्चापि गायत्र्याः सन्ध्योपास्त्यग्निकार्ययोः ।
अज्ञानात् कृषिकर्तारो ब्राह्मणा नामधारकाः ।

शङ्खः—ब्राह्मणा ये विकर्मस्था वैडालव्रतिकास्तथा ॥
ऊनाङ्गा अतिरिक्ताङ्गा ब्राह्मणाः पङ्क्तिदूषकाः ॥ अ० २४
गुरूणां प्रतिकूलाश्च वेदाग्न्युत्सादिनश्च ये ।
गुरूणां त्यागिनश्चैव ब्राह्मणाः पङ्क्तिदूषकाः ॥
अनध्यायेष्वधीयाना शौचाचारबहिष्कृताः ।
शूद्रान्नरससम्पुष्टा ब्राह्मणाः पंक्तिदूषकाः ॥

शातातपः—अस्नाताशी अयाजी च विप्रकीर्णो भवेद् द्विजः ।
न तारयति दातारं नात्मानं सपरिग्रहम् ॥

वसिष्ठः—समार्घं धान्यमुत्सृज्य महार्घं यः प्रयच्छति ।
स वै वार्धुषिको नाम ब्रह्मवादिषु गर्हितः ॥
अश्रोत्रिया अननुवाक्या अनग्नयो वा
शूद्रधर्माणो भवन्ति । अ० ३ । १ ।
नास्तिकः पिशुनश्चैव कृतघ्नो दीर्घरोषकः ।
चत्वारः कर्मचाण्डाला जन्मतश्चापि पञ्चमः ॥

वर्णधर्मप्रकरणे लघ्वाश्वलायनः—
यश्च कर्मपरित्यागी पराधीनस्तथैव च ।

अधीतोऽपि द्विजश्चैव स च शूद्रसमो भवेत् ॥

प्रथमप्रश्न पञ्चमाध्याये बोधायनः—

गारक्षकान् वाणिजकांस्तथा कारुकुशीलवान् ।
प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥

अष्टमाध्याये पराशरः—

ग्रामस्थानं यथा शून्यं यथा कूपस्तु निर्जलः ।
यथा हुतमनग्नौ च अमन्त्रो ब्राह्मणस्तथा ॥
गायत्रीरहितो विप्रः शूद्रादप्यशुचिर्भवेत् ।

इत्यादीनि वचनान्युपपद्यन्ते । एतैर्हि वचनैर्भ्रष्टाचाराणामपि विप्राणां न जातिपरिवर्तनेन वस्तुगत्या शूद्रत्वम्, किन्तु पंक्तिदूषकत्वादिकमित्येव गम्यते । शूद्रसमत्वं चात्र बोधितममन्त्रककर्माधिकारादिनाप्यनुसन्धेयम् । शूद्राणामपि हि यज्ञादावमन्त्रककर्माधिकारो वर्तत एव । व्यक्तं चैतत् स्मृतिकौमुद्याम्, शूद्रकमलाकरे च ॥

अत एव शान्तिपर्वणि ५६ तमाध्यायगतानि वचनान्युपपद्यन्ते [ उक्तार्थे महाभारतोपष्टंभः ] तद्यथा—

स्वाहाकारो वषट्कारो मन्त्रः शूद्रे न विद्यते ।
तस्माच्छूद्रः पाकयज्ञैर्यजेताव्रतवान् स्वयम् ॥
पूर्णपात्रमयीं आहुः पाकयज्ञस्य दक्षिणाम् ।
शूद्रः पैजवनो नाम सहस्राणां शतं ददौ ॥
ऐन्द्राग्नेन विधानेन दक्षिणामिति नः श्रुतम् ।
यतो हि सर्ववर्णानां यज्ञस्तस्यैव भारत ! ॥
अग्र्ये सर्वेषु यज्ञेषु यतः श्रद्धा विधीयते ।

दैवतं हि महच्छ्रद्धा पवित्रं यजतां वयम् ॥
संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः ।
देवानामपि ये देवा यद् ब्रूयुस्तत्परं हितम् ॥
त्वं दैवतं ब्राह्मणः स्वेन नित्यं
परान्वर्णानयजच्चैवमासीत् ।
अधरो वितानस्त्वर्थतस्तत्र सृष्टो
न ब्राह्मणस्त्रिषु वर्णेषु राजन् ! ॥
तस्यापूर्णा ऋजवो तानि वर्णाः
संसृज्यन्ते तस्य विकार एव ॥ इति ।

किञ्च तत्रैव ३४ तमाध्यायेऽपि—

मान्धाता—यवनाः किराता गान्धाराश्चीनाः शबरबर्बराः ।
गोऽजाविमहिषाणां च वडवानां च पोषकाः ॥
वृत्त्यर्थं प्रतिपद्यन्ते तान् वैश्यान् सम्प्रचक्षते ।
ऐश्वर्यकामो ये चापि सामिषा वापि भारत ! ॥
निग्रहानुग्रहरतांस्तान् द्विजान् क्षत्रियान्विदुः ।
अश्वारोहा गजारोहा रथिनोऽथ पदातयः ।
एते वैश्यसमा राजन् ब्राह्मणानां भवन्त्युत ॥
जन्मकर्मविहीना ये कदर्या ब्रह्मबन्धवः ।
एते शूद्रसमा राजन् ब्राह्मणानां भवन्त्युत ॥
अश्रोत्रियाः सर्व एते सर्वे चानाहिताग्नयः ।
तान् सर्वान् धार्मिकान् राजा बलिं विष्टिं च कारयेत् ॥
आह्वायका देवलका नाक्षत्रा ग्रामयाजकाः ।
एते ब्राह्मणचाण्डाला महापथिक* पंचमाः ॥

* समुद्रे "नौयानेन" गच्छन् ।

म्लेच्छदेशाश्च ये केचित् परैरप्युषिता नरैः।
गत्वा तु ब्राह्मणास्तांस्तु चण्डालः प्रेत्य चेह च ॥
व्रात्यान् म्लेच्छांश्च शूद्रांश्च याजयित्वा द्विजातयः।
अकीर्तिमिह सम्प्राप्य नरकं प्रतिपद्यते ॥
व्रात्ये म्लेच्छे तथा शूद्रे तस्करे पतितेऽशुचौ।
कुदेशे च सुरापे च ब्रह्मघ्ने वृषलीपतौ ॥
अनधीतेषु सर्वत्र भुञ्जाने यत्र तत्र वा।
पुत्रघातिनि शत्रौ च न मन्त्राद्याश्च ये द्विजाः ॥
शकास्तुषाराः कङ्काश्च पह्लवाश्चान्ध्रमद्रकाः।
उष्ट्राः पुलिन्दा आरट्टाः काचा म्लेच्छाश्च सर्वशः ॥
ब्रह्मक्षत्रप्रसूताश्च वैश्याः शूद्राश्च मानवाः।
कथं धर्मांश्चरिष्यन्ति सर्वे विषयवासिनः ॥
मद्विधैश्च कथं स्थाप्याः सर्वे वै दस्युजीविनः।
एतदिच्छाम्यहं श्रोतुं मघवंस्तद् ब्रवीहि मे ॥
इन्द्रः—मातापित्रोर्हि शुश्रूषा कर्तव्या सर्वदस्युभिः।
आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् ॥
भूमिपानां च शुश्रूषा कर्तव्या सर्वदस्युभिः ॥
देशधर्मक्रियाश्चैव तेषां धर्मो विधीयते ॥
पितृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च।
दानानि च यथाकालं दातव्यानि द्विजातिषु ॥

इत्यादि वचनान्यपि व्याख्यातानि। एभिरमन्त्रकं तेषामपि पृथक् तत्तत्कर्माधिकारावगमात्। तथा च न सर्वात्मना ब्राह्मणादिभिः साम्यं विकर्मस्थानां शूद्रादीनां वेति सिद्धम्। अत एव शान्तिपर्वणि ६६ तमेऽध्याय—

युधिष्ठिरः—स्वकर्मण्यपरे युक्तास्तथैवान्ये विकर्मणि।
तेषां विशेषमाचक्ष्व ब्राह्मणानां पितामह ! ॥
भीष्मः—विद्यालक्षणसम्पन्नाः सर्वाम्नायप्रदर्शिनः।
एते ब्रह्मसमा राजन् ब्राह्मणाः परिकीर्तिताः॥
ऋत्विगाचार्यसम्पन्नाः स्वेषु कर्मस्ववस्थिताः।
एते देवसमा राजन् ब्राह्मणानां भवन्त्युत ॥
इत्यादिना शूद्रादीनां मन्त्रायाज्यत्वमुपपाद्य।
विकर्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथञ्चन ॥
नियम्याः संविभाज्याश्च धर्मानुग्रहकाम्यया ॥

इति पृथग्विभज्य संस्थापनमुपपद्यते। अस्मिन् प्रसङ्ग इदमपि सूच्यते यत्समुद्रयायिनां म्लेच्छदेशगन्तॄणां पतितानां सुरपादीनामपि मन्त्रानधिकारोऽत्र प्रतिपाद्यत इति।

तथाच पूर्वापरविरोधपरिहारार्थं जातिब्राह्मण्यादिकं नियतमेवाङ्गीकर्तव्यम्। अत एव—

मनुः—अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत्।
[ जातिब्राह्मण्ये मन्वादिवचनोपष्टम्भः ] प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥
श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति।
हूयमानश्च यज्ञेषु भूय एवाभिवर्धते ॥
एवं यद्यनिष्टेषु वर्तन्ते सर्वकर्मसु।
सर्वथा ब्राह्मणाः पूज्याः परमं दैवतं महत् ॥

पराशरः—दुःशीलोऽपि द्विजः श्रेष्ठो नतु शूद्रो जितेन्द्रियः।
कः परित्यज्य गां दुष्टां दुहेच्छीलवतीं खरीम् ॥

इत्यादीनि वचनान्युपपद्यन्ते। यत्तु पूर्वमस्माभिः स्वधर्मनिष्ठ- [ सच्छूद्रस्यपतित- ] स्यापि शूद्रस्य पतितब्राह्मणापेक्षयोत्कर्षः प्रतिपादितः,

ब्राह्मणापेक्षयोत्कर्षः ।] स प्रतितब्राह्मणस्येव न तस्याभोज्यान्नत्वमित्य-
भिप्राय एव । तदुक्तं विष्णुस्मृतौ—

शूद्रोऽपि द्विविधो ज्ञेयः श्राद्धीचैवेतरस्तथा ।
श्राद्धी भोज्यस्तयोरुक्तो ह्यभोज्यस्त्वितरो मतः ॥
प्राणानर्थांस्तथा दारान् ब्राह्मणार्थं निवेदयेत् ।
स शूद्रजातिर्भोज्यः स्यात् अभोज्यः शेष उच्यते ॥ इति

सर्वथा तु नोक्तानां ब्राह्मणादीनां शूद्रत्वादिबोधकानां वचनानामनुसारेण न वर्णव्यवस्था नियतेति वक्तुं पार्यते ॥

मन्वादिस्मृतिषु हि चातुर्वर्ण्यं यथास्थितमूरीकृत्योपनयनका-
[चातुर्वर्ण्यव्यवस्थि- लादयो ये विहिताः, तेहि जातिब्राह्मण्यं विना
तत्र मनुवचनानि न कथमप्युपपद्यन्ते । तदत्र प्रसङ्गे धर्मभेदाश्चा-
तुर्वर्ण्यपुरस्कारेण येषु वचनेषु विहितास्तेषां स्मार्तानां सांहितानां च वचनानां संगृह्य प्रकाशनमप्यत्यन्तमुचितं पश्यन्तो वयमत्र तानि विलिखामः । तद्यथा—

मनुः—

भगवन् ! सर्ववर्णानां यथावदनुपूर्वशः ।
अन्तरप्रभवाणां च धर्मान्नो वक्तुमर्हसि ॥ अ० १ । ८
यथर्तुलिङ्गान्यृतवः स्वयमेवर्तुपर्यये ।
स्वानि स्वान्यभिपद्यन्ते तथा कर्माणि देहिनः ॥ १ । ३०
लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः ।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत् ॥ १ । ३१
सर्वस्यास्य तु सर्गस्य गुप्त्यर्थं स महाद्युतिः ।
मुखबाहूरुपज्जानां पृथक्कर्माण्यकल्पयत् ॥ १ । ८७
अध्यापनमध्ययनं यजनं याजनं तथा ।

दानं प्रतिग्रहं चैव क्षत्रियस्य समासतः ॥ १ । ८८
पशूनां रक्षणं दानमिज्याध्ययनमेव च ।
वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥ १ । ९०
एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् ।
एतेषामेव वर्णानां शुश्रूषामनसूयया ॥ १ । ९१
उत्तमाङ्गोद्भवाज्ज्यैष्ठ्याद् ब्रह्मणश्चैव धारणात् ।
सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः ॥ १ । ९३
अस्मिन्धर्मोऽखिलेनोक्तो गुणदोषौ च कर्मणाम् ।
चतुर्णामपि वर्णानामाचारश्चैव शाश्वतः ॥ १ । १०७
वैश्यशूद्रोपचारं च संकीर्णानां च सम्भवम् ।
आपद्धर्मं च वर्णानां प्रायश्चित्तविधिं तथा ॥ १ । ११६
एतान्द्विजातयो देशान् संश्रयेरन् प्रयत्नतः ।
शूद्रस्तु यस्मिन् कस्मिन्वा निवसेद् वृत्तिकर्शितः ॥ २ । २४
एषा धर्मस्य वो योनिः समासेन प्रकीर्तिता ।
सम्भवश्चास्य सर्वस्य वर्णधर्मान्निबोधत ॥ २ । २५
गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ २ । २७
माङ्गल्यं ब्राह्मणस्य स्यात् क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ॥ २ । ३१
शर्मवद् ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥ २ । ३२
चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।
प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनात् ॥ २ । ३५
गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।

गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥ २ । ३६
ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ।
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे ॥ ८ ३७
आषोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते ।
आद्वाविंशात् क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥ २ । ३८
अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥ २ । ३९
कार्ष्णरौरवबास्तानि चर्माणि ब्रह्मचारिणः ।
वसीरन्नानुपूर्व्येण शाणक्षौमाविकानि च ॥ २ । ४१
मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य तु मौर्वी ज्या वैश्यस्य शणतान्तवी ॥ २ । ४८
कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृत्तं त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥ २ । ४४
ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ ।
पैलवौदुम्बरौ वैश्यो दण्डानर्हति धर्मतः ॥ २ । ४५
केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः ।
ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विशः ॥ २ । ४६
भवत्पूर्वं चरेद्भैक्ष्यमुपनीतो द्विजोत्तमः ।
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥ २ । ४९
हृद्गाभिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः ।
वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः ॥ २ । ६२
केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते ।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य ह्यधिके ततः ॥ २ । ६५
सहस्त्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः ।

महतोऽप्येनसो मासात् त्वचेवाहिर्विमुच्यते ॥ २ । ७९
एतयर्चा विसंयुक्तः काले च क्रियया स्वया ।
ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु ॥ २ । ८०
ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् ।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥ २ । १२७
ब्राह्मणं दशवर्षं तु शतवर्षं तु भूमिपम् ।
पितापुत्रौ विजानीयाद् ब्राह्मणस्तु तयोः पिता ॥ २ । १३५
पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च ।
यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ॥ २ ।१३७
ब्राह्मस्य जन्मनः कर्त्ता स्वधर्मस्य च शासिता ।
बालोऽपि विप्रो वृद्धस्य पिता भवति धर्मतः ॥ २ । १५०
विप्रानां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः ।
वैश्यानां धान्यधनतः शूद्रणामेव जन्मतः ॥ २ । १५५
ब्राह्मणस्यैव कर्मैतदुपदिष्टं मनीषिभिः ।
राजन्यवैश्ययोस्त्वेवं नैतत्कर्म विधीयते ॥ २ । १७०
गुरुवत्प्रतिपूज्याः स्युः सवर्णा गुरुयोषितः ।
असवर्णास्तु सम्पूज्याः प्रत्युत्थानाभिवादनैः ॥ ८ । २१०
अब्राह्मणादध्ययनमापत्काले विधीयते ।
अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः ॥२ । २४१
नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत् ।
ब्राह्मणे चाननूचाने कांक्षन् गतिमनुत्तमाम् ॥ २ ।२४२
सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि ।
कामतस्तु प्रवृत्तिनामिमाः स्युः क्रमशो वराः ॥ ३ । १२
शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते ।

ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः ॥ ३ । १३

न ब्राह्मणक्षत्रिययोरापद्यपि हि तिष्ठतोः ।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते ॥ ३ । १४

चतुर्णामपि वर्णानां प्रेत्य चेह हिताहितान् ।
अष्टाविमान्समासेन स्त्रीविवाहान्निबोधत ॥ ३ । २०

षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोऽवरान् ।
विट्शूद्रयोस्तु तानेव विद्याद्धर्मानराक्षसान् ॥ ३ । २३

चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः ।
राक्षसं क्षत्रियस्यैकमासुरं वैश्यशूद्रयोः ॥ ३ । २४

पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते ।
असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि ॥ ३ । ४३

शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया ।
वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने ॥ ३ । ४४

न ब्राह्मणस्य त्वतिथि र्गृहे राजन्य उच्यते ।
वैश्यशूद्रौ सखा चैव ज्ञातयो गुरुरेव च ॥ ३ । ११०

यदि त्वतिथिधर्मेण क्षत्रियो गृहमाव्रजेत् ।
भुक्तवत्सु च विप्रेषु कामं तमपि भोजयेत् ॥ ३ । १११

वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्मिणौ ।
भोजयेत्सह भृत्यैस्तावानृशंस्यं प्रयोजयन् ॥ ३ । ११२

सोमपा नाम विप्राणां क्षत्रियाणां हविर्भुजः ।
वैश्यनामाज्यपा नाम शूद्राणां तु सुकालिनः ॥ ३ । १९७

सोमपास्तु कवेः पुत्रा हविष्मन्तोऽङ्गिरः सुताः ।
पुलस्त्यस्याज्यपाः पुत्रा वसिष्ठस्य सुकालिनः ॥ ३ । १९८

चाण्डालश्च वराहश्च कुक्कुटः श्वा तथैव च ।

रजस्वला च षण्ढश्च नेक्षेरन्नश्नतो द्विजान् ॥ ३ । २३९
क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतम् ।
नावमन्येत वै भूष्णु कृशानपि कदाचन ॥ ४ । १३५
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ।
वैश्यानामन्नमित्याहुः शूद्रस्य रुधिरं स्मृतम् ॥ ४ । १४
प्रेतशुद्धिं प्रवक्ष्यामि द्रव्यशुद्धिं तथैवच ।
चतुर्णामपि वर्णानां यथावदनुपूर्वशः ॥ ५ । ५७
विप्रः शुद्ध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधम् ।
वैश्यः प्रतोदं रश्मीन्वा यष्टिं शूद्रः कृतक्रियः ॥ ५ । ९९
एवंवृत्तां सवर्णां स्त्रीं द्विजातिः पूर्वमारिणीम् ।
दाहयेदग्निहोत्रेण यज्ञपात्रैश्च धर्मवित् ॥ ५ । १६७
स्वेस्वे धर्मे निविष्टानां सर्वेषामनुपूर्वशः ।
वर्णानामाश्रमाणां च राजा सृष्टोऽभिरक्षिता ॥ ७ । ३५
ब्राह्मणान् पर्युपासीत प्रातरुत्थाय पार्थिवः ।
त्रैविद्यवृद्धान्विदुषस्तिष्ठेत्तेषां च शासने ॥ ७ । ३७
क्षत्रियस्य परो धर्मः प्रजानामेव पालनम् ।
निर्दिष्टफलभोक्ता हि राजा धर्मेण युज्यते ॥ ७ । १४४
जातिमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः ।
धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथञ्चन ॥ ८ । २०
द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं समम् ।
मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः ॥ ८ । १४२
शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ।
वैश्योऽप्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति ॥ ८ । २६७
पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने ।

वैश्ये स्यादर्धपञ्चाशच्छूद्रे द्वादशको दमः ॥ ८ । २६८
समवर्णे द्विजातीनां द्वादशैव व्यतिक्रमे ।
वादेष्ववचनीयेषु तदेव द्विगुणं भवेत् ॥ ८ । २६९
विप्रक्षत्रियवत्कार्यो दण्डो राजन्यवैश्ययोः ।
वैश्यक्षत्रिययोः शूद्रे विप्रे यः क्षत्रशूद्रयोः ॥ ८ । २०
समुत्कर्षापकर्षास्तु विप्रदण्डस्य कल्पनाः ।
राजन्यवैश्यशूद्राणां धनवर्ज्जमिति स्थितिः ॥ ८ । २१
एकजातिर्द्विजातीस्तु वाचा दारुणया क्षिपन् ।
जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः ८ । २७०
नामजातिग्रहं तेषामभिद्रोहेण कुर्वतः ।
निक्षेप्योऽयोमयं शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः ॥ ८ । २७१
श्रुतं देशं च जातिं च कर्म शारीरमेव च ।
वितथेन ब्रुवन्दर्पाद्दाप्यः स्याद्द्विशतं दमम् ॥ ८ ।२७३
ब्राह्मणक्षत्रियाभ्यां तु दण्डः कार्यो विजानता ।
ब्राह्मणे साहसः पूर्वः क्षत्रिये त्वेव मध्यमः ॥ ८ । २७६
विट्छूद्रयोरेवमेव स्वजातिं प्रति तत्त्वतः ।
छेदवर्जं प्रणयनं दण्डस्येति विनिश्चयः ॥ ८ । २७७
पतितं पतितेत्युक्त्वा चोरं चोरेति वा पुनः ।
वचनात्तुल्यदोषः स्यान्मिथ्या द्विर्दोषतां व्रजेत् ॥८२७८
शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ।
द्विजातीनां च वर्णानां विप्लवे कालकारिते ॥ ८ । ३४८
अब्राह्मणः संग्रहणे प्राणान्तं दण्डमर्हति ।
चतुर्णामपि वर्णानां दारा रक्ष्यतमाः सदा ॥ ८ । ३५९
शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन् ।

अगुप्तमङ्गं सर्वस्वैर्गुप्तं सर्वेण हीयते ॥ ८ । ३७४
वैश्यः सर्वस्वदण्डः स्यात्संवत्सरनिरोधतः ।
सहस्रं क्षत्रियो दण्ड्यो मौण्ड्यं मूत्रेण चार्हति ॥८।३७५
ब्राह्मणीं यद्यगुप्तां तु गच्छतां वैश्यपार्थिवौ ।
वैश्यं पञ्चशतं कुर्यात्क्षत्रियं तु सहस्रिणम् ॥ ८ । ३७६
मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते ।
इतरेषां तु वर्णानां दण्डः प्राणान्तिको भवेत् ॥ ८।३७९
वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजेत् ।
यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः ॥ ८ । ३८२
क्षत्रियां चैव वैश्यां च गुप्तां तु ब्राह्मणो व्रजन् ।
न मूत्रमुण्डः कर्तव्यो दाप्यस्तूत्तमसाहसम् ॥ ८ (२७)
सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन् ।
शूद्रायां क्षत्रियविशोः साहस्रो वै भवेद्दमः ॥ ८ । ३८३
क्षत्रियायामगुप्तायां वैश्ये पञ्चशतं दमः ।
मूत्रेण मौण्ड्यमिच्छेत्तु क्षत्रियो दण्डमेव वा ॥ ८।३८४
अगुप्ते क्षत्रियावैश्ये शूद्रां वा ब्राह्मणो व्रजन् ।
शतानि पञ्च दण्ड्यः स्यात्सहस्रं त्वन्त्यजस्त्रियाम् ॥८।३८५
शूद्रोत्पन्नांशपापीयान्न वै मुच्येत किल्बषात् ।
तेभ्यो दण्डाहृतं द्रव्यं न कोशे सम्प्रवेशयेत् ॥ ८ (२७)
क्षत्रियं चैव वैश्यं च ब्राह्मणो वृत्तिकर्शितौ ।
बिभृयादानृशंस्येन स्वानि कर्माणि कारयन् ॥ ८ । ४११
विस्रब्धं ब्राह्मणः शूद्राद्द्रव्योपादानमाचरेत् ।
न हि तस्यास्ति किञ्चित्स्वं भर्तृहार्यधनो हि सः ॥८।४१७
वैश्यशूद्रौ प्रयत्नेन स्वानि कर्माणि कारयेत् ।

तौ हि च्युतौ स्वकर्मभ्यः क्षोभयेतामिदं जगत् ॥ ८।४१८

इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम् ।
यतन्ते रक्षितुं भार्यां भर्तारो दुर्बला अपि ॥ ९ । ६

स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा ।
वर्णानां संकरं चक्रे कामोपहतचेतनः ॥ ९ । ६७

एतद्विधानं विज्ञेयं विभागस्यैकयोनिषु ।
बह्वीषु चैकजातानां नानास्त्रीषु निबोधत ॥ ९ । १४८

ब्राह्मणस्यानुपूर्व्येण चतस्रस्तु यदि स्त्रियः ।
तासां पुत्रेषु जातेषु विभागेऽयं विधिः स्मृतः ॥९।१४९

कीनाशो गोवृषो पानमलंकारश्च वेश्म च ।
विप्रस्यौद्धारिकं देयमेकशश्च प्रधानतः ॥ ९ । १५०

त्र्यंशं दायाद्धरेद्विप्रो द्वावंशौ क्षत्रियासुतः ।
वैश्याजः सार्धमेवांशमंशं शूद्रासुतो हरेत् ॥ ९ । १५१

चतुरोंऽशान् हरेद्विप्रस्त्रीनंशान् क्षत्रियासुतः ।
वैश्यापुत्रो हरेद्व्यंशमंशं शूद्रासुतो हरेत् ॥ ९ । १५३

ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक् ।
यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत् ॥ ९ । १५५

समवर्णासु ये जाता सर्वे पुत्रा द्विजन्मनाम् ।
उद्धारं ज्यायसे दत्त्वा भजेरन्नितरे समम् ॥ ९ । १५६

क्षत्रविट्शूद्रयोनिस्तु दण्डं दातुमशक्नुवन् ।
आनृण्यं कर्मणा गच्छेत् विप्रो दद्याच्छनैः शनैः ॥९।२२९

प्रायश्चित्तं तु कुर्वाणाः सर्ववर्णा यथोदितम् ।
नाङ्क्या राज्ञा ललाटे स्युर्दाप्यास्तूत्तमसाहसम् ॥९।२४०

वैश्यस्तु कृतसंस्कारः कृत्वा दारपरिग्रहम् ।
वार्तायां नित्ययुक्तः स्यात्पशूनां चैव रक्षणे ॥ ९ । ३२६

आपद्यपि हि यास्तेषां क्रमशस्तन्निबोधत ॥१।३३६
अधीयीरंस्त्रयोवर्णाः स्वकर्मस्था द्विजातयः।
प्रब्रूयाद्ब्राह्मणस्तेषां नेतराविति निश्चयः॥ १० । १
सर्वेषां ब्राह्मणो विद्याद्वृत्त्युपायान्यथाविधि।
प्रब्रूयादितरेभ्यश्च स्वयं चैव तथा भवेत्॥ १० । २
वैशेष्यात्प्रकृतिश्रैष्ठ्यान्नियमस्य च धारणात्।
संस्कारस्य विशेषाच्च वर्णानां ब्राह्मणः प्रभुः॥ १० । ३
ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः।
चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः॥ १० । ४
सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते॥१० ।५
ब्राह्मणाद्वैश्यकन्यायामम्बष्ठो नाम जायते।
निषादः शूद्रकन्यायां यः पारशव उच्यते॥ १० । ७
क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान्।
क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते॥ १० । ८
विप्रस्य त्रिषु वर्णेषु नृपतेर्वर्णयोर्द्वयोः।
वैश्यस्य वर्णे चैकस्मिन् षडेतेऽपसदाः स्मृताः ॥१०।१०
क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः।
वैश्यान्मागधवैदेहौ राजविप्राङ्गनासुतौ॥ १० । ११
शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम्।
वैश्य राजन्यविप्रासु जायन्ते वर्णसङ्कराः॥ १० । १२
एकान्तरे त्वानुलोम्यादम्बष्ठोग्रौ यथा स्मृतौ।
क्षत्तृवैदेहिकौ तद्वत्प्रातिलोम्येऽपि जन्मनि॥ १० । १३
पुत्रा येऽनन्तरस्त्रीणां क्रमेणोक्ता द्विजन्मनाम्।

तानानन्तरनाम्नस्तु मातृदोषात्प्रचक्षते ॥ १० । १४
ब्राह्मणादुग्रकन्यायामावृतो नाम जायते ।
आभीरोऽम्बष्ठकन्यायामायोगव्यां न्तु धिग्वणः ॥१०।१५
आयोगवश्च क्षत्ता च चण्डालश्चाधमो नृणाम् ।
प्रातिलोम्येन जायन्ते शूद्रादपसदास्त्रयः ॥ १० । १६
वैश्यान्मागधवैदेहौ क्षत्रियात्सूत एव च ।
प्रतीपमेते जायन्ते परेऽप्यपसदास्त्रयः ॥ १० । १७
जातो निषादाच्छूद्रायां जात्या भवति पुक्कसः ।
शूद्राज्जातो निषाद्यां तु स वै कुक्कुटकः स्मृतः ॥१०।१८
क्षत्तुर्जातस्तथोग्रायां श्वपाक इति कीर्त्यते ।
वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेण उच्यते ॥ १० । १९
द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान् ।
तान् सावित्री परिभ्रष्टान्व्रात्यानिति विनिर्दिशेत् ॥१०।२०
व्रात्यात् तु जायते विप्रात्पापात्मा भूर्जकण्टकः ।
आवन्त्यवाटधानौ च पुष्पधः शैख एव च ॥ १०।२१
झल्लो मल्लश्च राजन्याद्व्रात्यान्निच्छिविरेव च ।
नटश्च करणश्चैव खसो द्रविड एवच ॥ १० । २२
वैश्यां तु जायते व्रात्यात्सुधन्वाचार्य एव च ।
कारुषश्च विजन्माच मैत्रः सात्त्वत एव च ॥ १०। २३
व्यभिचारेण वर्णानामवेद्यावेदनेन च ।
स्वकर्मणां तु त्यागेन जायन्ते वर्णसङ्कराः ॥ १०।२४
संकीर्णयोनयो ये तु प्रतिलोमानुलोमजाः ।
अन्योन्यव्यतिषक्ताश्च तान् प्रवक्ष्याम्यशेषतः ॥१०।२५
सूतो वैदेहकश्चैव चण्डालश्चाधमो नृणाम् ।

मागधः क्षत्रजातिश्च तथाऽऽयोगव एव च ॥ १० ।२६
एते षट् सदृशान् वर्णान् जनयन्ति स्वयोनिषु ।
मातृजात्यां प्रसूयन्ते प्रवरासु च योनिषु ॥ १० ।२७
यथा त्रयाणां वर्णानां द्वयोरात्मास्य जायते ।
आनन्तर्यात्स्वयोन्यां तु तथा बाह्येष्वपि क्रमात् ॥१०।२८
यथैव शूद्रो ब्राह्मण्यां बाह्यं जन्तुं प्रसूयते ।
तथा बाह्यान्तरं बाह्यश्चातुर्वर्ण्ये प्रसूयते ॥ १० । ३०
प्रतिकूलं वर्तमाना बाह्या बाह्यान्तरात्पुनः ।
हीना हीनान्प्रसूयन्ते वर्णान्पञ्चदशैव तु ॥ १० । ३१
प्रसाधनोपचारज्ञमदासं दासजीवनम् ।
सैरिन्ध्रं वागुरावृत्तिं सूते दस्युरयोगवे ॥ १० । ३२
मैत्रेयकं तु वैदेहो माधुकं सम्प्रसूयते ।
नृन्प्रशंसंत्यजस्त्रं यो घण्ठाताडोऽरुणोदये ॥ १० ।३३
निषादो मार्गवं सूते दासं नौकर्मजीविनम् ।
कैवर्तमिति यं प्राहुरार्यावर्तनिवासिनः ॥ १० । ३४
मृतवस्त्रभृत्सु नारीषु गर्हितान्नाशनासु च ।
भवन्त्यायोगवीष्वेते जातिहीनाः पृथक त्रयः ॥ १०।३५
कारावरो निषादात्तु चर्मकारः प्रसूयते ।
वैदेहकादन्ध्रमेदौ बहिर्ग्रामप्रतिश्रयौ ॥ १० । ३६
चण्डालात्पाण्डुसोपाकस्त्वक्सारव्यवहारवान् ।
आहिण्डिको निषादेन वैदेह्यामेव जायते ॥ १० । ३७
चण्डालेन तु सोपाको मूलव्यसनवृत्तिमान् ।
पुक्कस्यां जायते पापः सदा सज्जनगर्हितः ॥१० । ३८
निषादस्त्री तु चण्डालात्पुत्रमन्त्यावसायिनम् ।

श्मशानगोचरं सूते बाह्यानामपि गर्हितम् ॥१०।३९
संकरे जातयस्त्वेता पितृमातृप्रदर्शिताः ।
प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः ॥१०।४०
सजातिजानन्तरजाः षट्सुता द्विजधर्मिणः ।
शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ॥१०।४१
तपोबीजप्रभावैस्तु ते गच्छन्ति युगे युगे ।
उत्कर्षं चापकर्षं च मनुष्येष्विह जन्मतः ॥ १० । ४२
शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः ।
वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥ १० । ४३
चैत्यद्रुमश्मशानेषु शैलेषूपवनेषु च ।
वसेयुरेते विज्ञाता वर्तयन्तः स्वकर्मभिः । १० । ४४
चण्डालश्वपचानां तु बहिर्ग्रामात्प्रतिश्रयः ।
अपपात्राश्च कर्तव्या धनमेषां श्वगर्दभम् । १० । ५१
वासांसि मृतचैलानि भिन्नभाण्डेषु भोजनम् ।
कार्ष्णायसमलंकारः परिव्रज्या च नित्यशः । १० । ५२
न तैः समयमन्विच्छेत् पुरुषा धर्ममाचरन् ।
व्यवहारो मिथस्तेषां विवाहः सदृशैः सह । १० । ५३
अन्नमेषां पराधीनं देयं स्याद्भिन्नभाजने ।
रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च । १० । ५४
दिवा चरेयुः कार्यार्थं चिन्हिता राजशासनैः ।
अबान्धवं शवं चैव निर्हरेयुरिति स्थितिः । १० । ५५
वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया ।
वध्यवासांसि गृह्णीयुः शय्याश्चाभरणानि च ॥ १० ।५६
वर्णापेतमविज्ञातं नरं कलुषयोनिजम् ।

आर्यरूपमिवानार्यं कर्मभिः स्वैर्विभावयेत् ॥१०।५७
शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते।
अश्रेयान् श्रेयसीं जातिं गच्छत्यासप्तमाद्युगात् ॥१०।६४
ब्राह्मणा ब्रह्मयोनिस्था ये स्वकर्मण्यवस्थिताः।
ते सम्यगुपजीवेयुः षट्कर्माणि यथाक्रमम् ॥१०।७४
अध्यापनमध्ययनं यजनं याजनं तथा।
दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः ॥१०।७५
षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥१०।७६
त्रयो धर्मा निवर्तन्ते ब्राह्मणात्क्षत्रियं प्रति।
अध्यापनं याजनं च तृतीयश्च प्रतिग्रहः ॥१०।७७
वैश्यं प्रति तथैवैते निवर्तेरन्निति स्थितिः।
न तौ प्रति हि तान्धर्मान्मनुराह प्रजापतिः ॥१०।७८
शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषीर्विशः।
आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः ॥१०।७९
वेदाभ्यासो ब्राह्मणस्य क्षत्रियस्य च रक्षणम्।
वार्ताकर्मैव वैश्यस्य विशिष्टानि स्वकर्मसु ॥१०।८०
अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा।
जीवेत्क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः ॥१०।८१
उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत्।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम् ॥१०।८२
वैश्यवृत्त्यापि जीवंस्तु ब्राह्मणः क्षत्रियोऽपि वा।
हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्जयेत् ॥१०।८३
यो लोभादधमो जात्या जीवेदुत्कृष्टकर्मभिः।

तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ॥१०।९६
वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः ।
परधर्मेण जीवन्हि सद्यः पतति जातितः ॥१०।९७
वैश्योऽजीवन्स्वधर्मेण शूद्रवृत्त्यापि वर्तयेत् ।
अनाचरन्नकार्याणि निवर्तेत च शक्तिमान् ॥ १० ॥ ९८
अशक्नुवंस्तु शुश्रूषां शूद्रः कर्तुं द्विजन्मनाम् ।
पुत्रदारात्ययं प्राप्तो जीवेत्कारुककर्मभिः ॥ १० ॥ ९९
यैः कर्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः ।
तानि कारुककर्माणि शिल्पानि विविधानि च ॥१०॥ १००
वैश्यवृत्तिमनातिष्ठन् ब्राह्मणः स्वे पथि स्मृतः ।
अवृत्तिकर्षितः सीदन्निमं धर्मं समाचरेत् ॥ १० ॥ १०१
नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात् ।
दोषो भवति विप्राणां ज्वलनाम्बुसमा हि ते ॥१०॥१०३
ब्राह्मणः क्षत्रियो वापि वृद्धिं नैव प्रयोजयेत् ।
कामं खलु तु धर्मार्थं दद्यात्पापीयसेऽल्पिकाम् ॥१०॥११७
चतुर्थमाददानोऽपि क्षत्रियो भागमापदि ।
प्रजा रक्षन्परं शक्त्या किल्बिषात्प्रतिमुच्यते ॥१०॥११८
स्वर्गार्थमुभयार्थं वा विप्रानाराधयेत्तु सः ।
जातिब्राह्मणशब्दस्य सा ह्यस्य कृतकृत्यता ॥१०॥ १२२
एते चतुर्णां वर्णानामापद्धर्माः प्रकीर्तिताः ।
यान्सम्यगनुतिष्ठन्तो व्रजन्ति परमां गतिम् ॥१०॥१३०
एष धर्मविधिः कृत्स्नश्चातुर्वर्ण्यस्य कीर्तितः ।
अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं परम् ॥१०। १३१
यज्ञश्चेत्प्रतिरुद्धः स्यादेकेनाङ्गेन यज्वनः ।

ब्राह्मणस्य विशेषेण धार्मिके सति राजनि ॥ ११। ११
यो वैश्यः स्याद्बहुपशुर्हीनक्रतुरसोमपः।
कुटुम्बात्तस्य तद्द्रव्यमाहरेद्यज्ञसिद्धये ॥११। १२
आहरेत्त्रीणि वा द्वे वा कामं शूद्रस्य वेश्मनः।
न हि शूद्रस्य यज्ञेषु कश्चिदस्ति परिग्रहः ॥११।१३
ब्राह्मणस्वं न हर्तव्यं क्षत्रियेण कदाचन।
दस्युनिष्क्रिययोस्तु स्वमजीवन्हर्तुमर्हति ॥११।१७
न तस्मिन्धारयेद्दण्डं धार्मिकः पृथिवीपतिः।
क्षत्रियस्य हि बालिश्याद्ब्राह्मणः सीदति क्षुधा ॥११।२१
न यज्ञार्थं धनं शूद्राद्विप्रो भिक्षेत कर्हिचित्।
यजमानो हि भिक्षित्वा चण्डालः प्रेत्य जायते ॥११।२४
श्रुतीरथर्वाङ्गिरसीः कुर्यादित्यविचारयन्।
वाक्शस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन्द्विज ॥११।३३
क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः।
[ तद्धि कुर्वन्यथा शक्ति प्राप्नोति परमां गतिम् ]
धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः ॥११। ३४
धान्यकुप्यपशुस्तेयं मद्यपस्त्रीनिषेवणम्।
स्त्रीशूद्रविट्क्षत्रवधो नास्तिक्यं चोपपातकम् ॥११।६६
ब्राह्मणस्य रुजः कृत्वा घ्रातिरघ्रेयमद्ययोः।
जैह्म्यं च मैथुनं पुंसि जातिभ्रंशकरं स्मृतम् ॥ ११।६७
धर्मस्य ब्राह्मणो मूलमग्रं राजन्य उच्यते।
तस्मात्समागमे तेषामेनो विख्याप्य शुद्धयति ॥ ११।८३
अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः।
वृषभैकसहस्रा गा दद्यात्सुचरितव्रतः ॥ ११ । १२७

एतदेव चरेदब्दं प्रायश्चित्तं द्विजोत्तमः ।
प्रमाप्य वैश्यं वृत्तिस्थं दद्याच्चैकशतं गवाम् ॥११।१२६
जीनकार्मुकबस्तावीन्पृथक दद्याद्विशुद्धये ।
चतुर्णामपि वर्णानां नारीर्हत्वाऽनवस्थिताः ॥११। १३८
वर्णानामानुपूर्व्येण त्रयाणामविशेषतः ।
अमत्या च प्रमाप्य स्त्रीं शूद्रहत्याव्रतं चरेत् ॥ ( ८ )
चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च ।
पतत्यज्ञानतो विप्रो ज्ञानात्साम्यं तु गच्छति ॥११।१७
ब्राह्मणक्षत्रियविशां स्त्रियः शूद्रेऽपसङ्गताः ।
अप्रजाता विशुध्येयुः प्रायश्चित्तेन नेतराः ॥११। ( ६ )
ब्राह्मणस्य तपो ज्ञानं तपः क्षत्रिस्य रक्षणम् ।
वैश्यस्य तु तपो वार्ता तपः शूद्रस्य सेवनम् ॥११।२३५
चातुर्वर्ण्यस्य कृत्स्नोऽयमुक्तो धर्मस्त्वयानघ ।
कर्मणां फलनिवृत्तिं शंस नस्तत्त्वतः पराम् ॥१२।१
चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् ।
भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिध्यति ॥१२ ।६७इति

तत्रैव परिशिष्टेऽपि---

तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ।
ब्राह्मणक्षत्रियविशां भार्याः स्वाः शूद्रजन्मनः ।२६६
विप्राणां दैवतं शम्भुः क्षत्रियाणां तु माधवः ।
वैश्यानां तु भवेद्ब्रह्मा शूद्राणां गणनायकः । २६३
द्वादशेऽहनि विप्राणामाशौचान्ते च भूभुजाम् ।
वैश्यानां तु त्रिपक्षादावथ वा स्यात्सपिण्डनम् ॥ ३२६

❀ इति ❀

एवमेव याज्ञवल्क्यास्मृतिगतान्यपि वचनानि यथा—

ब्रह्मचारिप्रकरणे आचाराध्याये—

[उक्तार्थे याज्ञवल्क्यवचनानि।]

ब्रह्मक्षत्रियविट् शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः।
निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥१०
गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्।
राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥१४
ब्राह्मणेषु चरेद्भैक्ष्यमनिन्द्येष्वात्मवृत्तये ॥२६
आदिमध्यावसानेषु भवच्छब्दोपलक्षिता।
ब्राह्मणक्षत्रियविशां भैक्ष्यचर्या यथाक्रमम् ॥३०
आषोडशाद्द्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥३७
मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जीबन्धनात्।
ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ॥३९

विवाहप्रकरणे—

यदुच्यते द्विजातीनां शूद्राद्दारोपसङ्ग्रहः।
नैतन्मम मतं यस्मात्तत्रायं जायते स्वयम् ॥५६
तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम्।
ब्राह्मणक्षत्रियविशां भार्याः स्वाः शूद्रजन्मनः ॥५७
पाणिर्ग्राह्यः सवर्णासु गृह्णीयात् क्षत्रिया शरम्।
वैश्या प्रतोदमाद्याद्वेदने त्वग्रजन्मनः ॥६२
सत्यामन्यां सवर्णायां धर्मकार्यं न कारयेत्।
सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा ॥८८

वर्णजातिविवेकप्रकरणे—

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः।

अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः ॥९०
विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् ।
अम्बष्ठः शूद्रयां निषादो जातः पारशवोऽपि वा ॥९१
वैश्याशूद्रयोस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः ॥९२
ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वै देहकस्तथा ।
शूद्राज्जातस्तु चण्डालः सर्वधर्मवहिष्कृतः ॥९३
क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च ।
शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥९४
माहिष्येण करण्यां तु रथकारः प्रजायते ।
असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः ॥९५
जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा ।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥९६

गृहस्थधर्मप्रकरणे च—

इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च ।
प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा ॥११८
प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम् ।
कुसीदकृषिवाणिज्यपाशुपाल्यं विशः स्मृतम् ॥ ११९
शूद्रस्य द्विजशुश्रूषा तयाऽजीवन् वणिग् भवेत् ।
शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन् ॥ १२०

स्नातकधर्मप्रकरणेऽपि—

विप्रा हि क्षत्रियात्मानो नावज्ञेयाः कदाचन ।
आमृत्योः श्रियमाकांक्षेन्न कश्चिन्मर्मणि स्पृशेत् ॥१५३
शूद्रेषु दासगोपालकुलमित्रार्धसीरिणः ।

भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥ १६६

अशौचप्रकरणे—

ब्राह्मणेनानुगन्तव्यो न शूद्रो न द्विजः क्वचित् ।
अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाग्निं घृतभुक् शुचिः ॥२६

आपद्धर्मप्रकरणे—

क्षात्रेण कर्मणा जीवेद्विशां वाप्यापदि द्विजः ।
निस्तीर्य तामथात्मानं पावयित्वा न्यसेत्पथि ॥ ३५
फलोपलक्षौमसोममनुष्यापूपवीरुधः ।
तिलौदनमधुक्षारान् दधि क्षीरं घृतं जलम् ॥ ३६
शस्त्रासवमधूच्छिष्टं मधु लाक्षा च बर्हिषः ।
मृच्चर्मपुष्पकुतपकेशतक्रविषक्षितीः ॥ ३७
कौशेयनीललवणमांसैकशफसीसकान् ।
शाकार्द्रौषधिपिण्याकपशुगन्धांस्तथैव च ॥ ३८
वैश्यवृत्त्यापि जीवन्नो विक्रीणीत कदाचन ॥

प्रायश्चित्तप्रकरणेऽपि—

अज्ञानात्तु सुरां पीत्वा रेतोविण्मूत्रमेव च ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ २५५
पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत् ।
इहैव सा शुनी गृध्री सूकरी चोपजायते ॥ २५६
ऋषभैकसहस्रा गा दद्यात्क्षत्रवधे पुमान् ।
ब्रह्महत्याव्रतं वापि वत्सरत्रितयं चरेत् ॥ २६६
वैश्यहाब्दं चरेदेतद्दद्याद्वैकशतं गवाम् ।
षण्मासाच्छूद्रहाप्येतद्धेनूर्दद्याद्दशाथ वा ॥ २६७
दुर्वृत्तब्रह्मविट्क्षत्रशूद्रयोषाः प्रमाप्य तु ।

इति धनुर्वस्तमवि क्रमाद्यघादिशुद्धये ॥ २६८

इत्यादि । अङ्गिरःस्मृतौ—

[अङ्गिरोवचनानि] भुञ्जीत ब्राह्मणस्यान्नं क्षत्रियस्य तु पर्वणि ।
सकृद्वैश्यस्य भुञ्जीत न शूद्रस्य कथञ्चन ॥
अमृतं ब्राह्मणस्यान्नं क्षत्रियस्य पयः स्मृतम् ।
वैश्यान्नमन्नमेव स्याच्छूद्रस्य रुधिरं स्मृतम् ॥
ब्राह्मणान्ने पवित्रत्वं क्षत्रान्ने पशुता स्मृता ।
वैश्यान्ने चापि शूद्रत्वं शूद्रान्ने नरकं व्रजेत् ॥
दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति ।
यस्यान्नं च समश्नाति भुङ्क्ते तस्य च किल्बिषम् ॥

इति । अत्रिसंहितायाम्—

[अत्रिसंहिता-वचनानि] स्वानि कर्माणि कुर्वाणा दूरे सन्तोऽपि मानवाः ।
प्रिया भवन्ति लोकस्य स्वे स्वे कर्मण्यवस्थिताः ॥
कर्म विप्रस्य यजनं दानमध्ययनं तपः ।
प्रतिग्रहोऽध्यापनं च याजनं चेति वृत्तयः ॥
दानमध्ययनं वार्ता यजनं चेति वै विशः ।
शूद्रस्य वार्ता शुश्रूषा द्विजानां कारुकर्म च ॥
मयैष धर्मोऽभिहितः संस्थिता ह्यत्र वर्णिताः ।
बहुमानमिह प्राप्य प्रयान्ति परमां गतिम् ॥
ये व्यपेताः स्वधर्मेभ्यः परधर्मे व्यवस्थिताः ।
तेषां शास्तिकरो राजा स्वर्गलोमे महीयते ॥
आत्मीये संस्थितो धर्मे शूद्रोऽपि स्वर्गमश्नुते ।
परधर्मो भवेत्त्याज्यः सुरूपपरदारवत् ॥
वध्यो राज्ञा स वै शूद्रो जपहोमपरश्च यः ।

यतो राष्ट्रस्य हन्तासौ यथा वन्हेश्च वै जलम् ॥
प्रतिग्रहोऽध्यापनं च तथाऽविक्रेयविक्रयः।
याज्यं चतुर्भिरप्येतैः क्षत्रविट्पतनं स्मृतम् ॥
ब्राह्मणान्नं यदुच्छिष्टमश्नात्यज्ञानतो द्विजः।
दिनद्वयं तु गायत्र्या जपं कृत्वा विशुद्ध्यति ॥
क्षत्रियान्नं यदुच्छिष्टमश्नात्यज्ञानतो द्विजः।
त्रिरात्रेण भवेच्छुचिर्यथाक्षत्रे तथा विशि ॥
अभोज्यान्नं तु भुक्तान्नं स्त्रीशूद्रोच्छिष्टमेव वा।
जग्ध्वा मांसमभक्ष्यं तु सप्तरात्रं यवान् पिबेत् ॥
ब्राह्मणो दशरात्रेण द्वादशाहेन भूमिपः।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति ॥
सपिण्डानां तु सर्वेषां गोत्रजः साप्तपौरुषः।
पिण्डांश्चोदकदानं च शावाशौचं तथाऽनुगम् ॥ इति ॥

आपस्तम्बस्मृतौ पञ्चमाध्याये—

आपस्तम्ब- चाण्डालेन यदा स्पृष्टो द्विजवर्णः कदाचन।
वचनानि। ] अनभ्युक्ष्य पिबेत्तोयं प्रायश्चित्तं कथं भवेत् ॥
ब्राह्मणस्तु त्रिरात्रेण पञ्चगव्येन शुद्ध्यति।
क्षत्रियस्तु द्विरात्रेण पञ्चगव्येन शुद्ध्यति ॥
अहोरात्रेण वैश्यस्तु पञ्चगव्येन शुद्ध्यति।
चतुर्थस्य तु वर्णस्य प्रायश्चित्तं कथं भवेत् ॥
व्रतं नास्ति तपो नास्ति होमो नैव च विद्यते।
पञ्चगव्यं न दातव्यं तस्य मन्त्रविवर्जनात् ॥
ख्यापयित्वा द्विजानां तु शूद्रो दानेन शुद्ध्यति ॥

षष्ठाध्याये--उदक्या ब्राह्मणी शूद्रामुदक्यां स्पृशते यदि।

अहोरात्रोषिता भूत्वा पञ्चगव्येन शुद्ध्यति ॥
एवं तु क्षत्रियां वैश्यां ब्राह्मणी चेद्रजस्वला ।
सचैलं प्लवनं कृत्वा दिनस्यान्ते घृतं पिबेत् ॥
सवर्णेषु तु नारीणां सद्यःस्नानं विधीयते ।
एवमेव विशुद्धिः स्यादापस्तम्बोऽब्रवीन्मनुः ॥

अष्टमाध्याये--यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रस्य सम्भवः ।
शूद्रान्ने नोदरस्थेन यः कश्चिन्म्रियते द्विजः ॥
स भवेत्सूकरो ग्राम्यस्तस्य वा जायते कुले ।
ब्राह्मणस्य सदा भुंक्ते क्षत्रियस्य तु पर्वणि ॥
वैश्यस्य यज्ञदीक्षायां शूद्रस्य न कदाचन ।
अमृतं ब्राह्मणस्यान्नं क्षत्रियस्य पयः स्मृतम् ॥
वैश्यस्याप्यन्नमेवान्नं शूद्रस्य रुधिरं स्मृतम् ।
वैश्वदेवेन होमेन देवताभ्यर्चनैर्जपैः ॥
अमृतं तेन विप्रान्नं ऋग्यजःसामसंस्कृतम् ॥
व्यवहारानुरूपेण धर्मेण छलवर्जितम् ॥
क्षत्रियस्य पयस्तेन भूतानां यच्च पालनम् ।
स्वकर्मणा च वृषभैरनुसृत्याऽऽयशक्तितः ॥
खलयज्ञातिथित्वेन वैश्यानां तेन संस्कृतम् ।
अज्ञानतिमिरान्धस्य मद्यपानरतस्य च ।
रुधिरं तेन शूद्रान्नं विधिमन्त्रविवर्जितम् ॥ इति

औशनसस्मृतौ-अतः परं प्रवक्ष्यामि जातिवृत्तिविधानकम् ।
अनुलोमविधानं च प्रतिलोमविधिं तथा ॥
[औशानसवचनानि] सान्तरालकसंयुक्तं सर्वं संक्षिप्य चोच्यते ।
नृपाद्ब्राह्मणकन्यायां विवाहेषु समन्वयात् ॥

जातः सूतोऽत्र निर्दिष्टः प्रतिलोमविधिर्द्विजः ॥
वेदानर्हस्तथा चैषां धर्माणामनुबोधकः।
सूताद्विप्रसुतायां तु सुतो वेणुक उच्यते ॥
नृपायामेव तस्यैव जातो यश्चर्मकारकः।
ब्राह्मण्यां क्षत्रियाच्चौर्याद्रथकारः प्रकीर्तितः ॥
वृत्तं च शूद्रवत्तस्य द्विजत्वं प्रतिषिद्ध्यते।
यानानां ये च वोढारस्तेषां च परिचारकाः ॥
शूद्रवृत्त्या तु जावन्ते(न्ति) न क्षात्रं धर्ममाचरेत्।
ब्राह्मण्यां वैश्यसंसर्गाज्जातो मगध उच्यते।
बन्दित्वं ब्राह्मणानां च क्षत्रियाणां विशेषतः ॥
प्रशंसावृत्तिको जीवेद्वैश्यप्रेषकरस्तथा।
ब्राह्मण्यां शूद्रसंसर्गाज्जातश्चाण्डाल उच्यते ॥
सीसमाभरणं तेषां कार्ष्णायसमथापि वा।
वध्रीं कण्ठे समाबध्य झल्लरीं कक्षतोऽपि वा ॥
मलापकर्षणं ग्रामे पूर्वाह्णे परिशुद्धिकम्।
नापराह्णे प्रविष्टोऽपि बहिर्ग्रामाच्च नैर्ऋते ॥
पिण्डीभूता भवन्त्यत्र नोचेद्वध्या विशेषतः।
चाण्डालाद्वैश्यकन्यायां जातः श्वपच उच्यते ॥
श्वमांसभक्षणं तेषां श्वान एव तु तद्धनम्।
नृपायां वैश्यसंसर्गादायोगव इति स्मृतः ॥
तन्तुवाया भवन्त्येते वसुकांस्योपजीविनः।
शालिकाः केचिदत्रैव जीवनं वस्त्रनिर्मितम् ॥
आयोगवस्य विप्रायां जातास्ताम्रोपजीविनः।
तस्यैव नृपकन्यायां जातः सूनिक उच्यते ॥

॥ सूनिकस्य नृपायां तु जात उद्बन्धकः स्मृतः ।
निर्णेजयेयुर्वस्त्राणि अस्पृश्याश्च भवन्त्युत ॥
नृपायां वैश्यतश्चौर्यात्पुलिन्दश्चेति कीर्तितः ।
पशुवृत्तिर्भवेत्तस्य हन्याद्‌वा दुष्टसत्त्वकान् ॥
नृपायां शूद्रसंसर्गाज्जातः पुल्कस उच्यते ।
सुरावृत्तिं समारुह्य मधुविक्रयकर्मणा ।
कृतकानां सुराणां च विक्रेता पाचको भवेत् ।
पुल्कसाद्वैश्यकन्यायां जातो रजक उच्यते ॥
नृपायां शूद्रतश्चौर्याज्जातो रञ्जक उच्यते ।
वैश्यायां रञ्जकाज्जातो नर्तको गायको भवेत् ॥
वैश्यायां शूद्रसंसर्गाज्जातो वैदेहकः स्मृतः ।
अजानां पालनं कुर्यान्महिषीणां गवामपि ॥
दधिक्षीराज्यतक्राणां विक्रयाज्जीवनं भवेत् ।
वैदेहकात्तु विप्रायां जाताश्चर्मोपजीविनः ॥
नृपायामेव तस्यैव सूचिकः पाचकः स्मृतः ।
वैश्यायां शूद्रतश्चौर्याज्जातश्चक्री च उच्यते ॥
तैलपिष्टकजीवी तु लवणं भावयन्पुनः ॥
विधिना ब्राह्मणः प्राप्य नृपायां तु समन्त्रकम् ।
जातः सुवर्ण इत्युक्तः सोऽनुलोमद्विजः स्मृतः ।
अथ वर्णक्रियां कुर्वन्नित्यनैमित्तिकीं क्रियाम् ॥
अश्वं रथं हस्तिनं वा वाहयेद्वै नृपाज्ञया ।
सैनापत्यं च भैषज्यं कुर्याज्जीवेत वृत्तिषु ॥
नृपायां विप्रतश्चौर्यात्सञ्जातो यो भिषक् स्मृतः ।
अभिषिक्तनृपस्याज्ञां प्रतिपाल्य तु वैद्यकः ॥

आयुर्वेदमथाष्टाङ्गं तन्त्रोक्तं धर्ममाचरेत् ।
ज्यौतिषं गणितं वापि कायिकीं वृत्तिमाचरेत् ॥
नृपायां विधिना विप्राज्जातो नृप इति स्मृतः ।
नृपायां नृपसंसर्गात् प्रमादाद्गूढजातकः ।
सोऽपि क्षत्रिय एव स्यादभिषेके तु वर्जितः ॥
अभिषेकं विना प्राप्य गोज इत्यभिधायकः ।
सर्वं तु राजवत्तस्य शस्यते पट्टबन्धनम् ॥
पुनर्भूकरणे राज्ञां नृपकानीन एव च ।
वैश्यायां विधिना विप्राज्जातो ह्यम्बष्ठ उच्यते ॥
कृष्याजीवो भवेत्तस्य तथैवाग्नेयनर्तकः ।
ध्वजविश्रावका वापि अम्बष्ठाः शास्त्रजीविनः ॥
वैश्यायां विप्रतश्चौर्यात्कुम्भकारः प्रजायते ।
कुलालवृत्त्या जीवेत नापिता वा भवन्त्युत ॥
सूतके प्रेतके वापि दीक्षाकालेऽथ वापनम् ।
नाभेरूर्ध्वं तु वपनं तस्मान्नापित उच्यते ॥
कायस्थ इति जीवेत्तु विचरेच्च इतस्ततः ।
काकाल्लौल्यं यमात्क्रौर्यं स्थपतेरथ कृन्तनम् ॥
आद्याक्षराणि संगृह्य कायस्थ इति निर्दिशेत् ॥
शूद्रायां विधिना विप्राज्जातः पारशवो मतः ।
भद्रकालीं समाश्रित्य जीवेयुः पूजकाः स्मृताः ॥
शिवाद्यागमविद्याद्यैस्तथा मर्दलवृत्तिभिः ।
तस्यां वै चौरसद्वृत्तो निषादो जात उच्यते ॥
वने दुष्टमृगान् हत्वा जीवनं मांसविक्रयम् ।
नृपाज्जातोऽथ गृह्यायां वैश्यायां विधिना सुतः ॥

वैश्यवृत्त्या तु जीवेत न चात्र धर्ममाचरेत् ।
तस्यां तस्यैव चौर्येण मणिकारः प्रजायते ॥
मणीनां राजतां कुर्यान्मुक्तानां वेधनक्रियाम् ।
प्रवालानां च सूत्रत्वं शङ्खानां वलनक्रियाम् ॥
शूद्रायां विप्रसंसर्गाज्जात उग्र इति स्मृतः ॥
नृपस्य दण्डधारः स्याद्दण्डं दण्ड्येषु सञ्चरेत् ।
तस्यां वै चौरसंवृत्त्या जातः शूलिक उच्यते ॥
जातदुष्टान् समारोप्य शूलकर्मणि योजयेत् ।
शूद्रायां वैश्यसंसर्गाद्विधिना सूचकः स्मृतः ॥
सूचकाद्विप्रकन्यायां जातस्तक्षक उच्यते ।
शिल्पकर्माणि चान्यानि प्रासादलक्षणं तथा ॥
नृपायामेव तस्यैव जातो यो मत्स्यबन्धकः ।
शूद्रायां वैश्यतश्चौर्यात्कटकार इति स्मृतः ॥
वसिष्ठशापात्त्रेतायां केचित्पारशवास्तथा ।
वैखानसेन केचित्तु केचिद्भागवतेन च ॥
वेदशास्त्रावलम्बास्ते भविष्यन्ति कलौ युगे ।
कटकारास्ततः पश्चान्नारायणगणाः स्मृताः ॥
शाखा वैखानसेनोक्ता तन्त्रमार्गविधिक्रियाः ।
निषेकाद्याः श्मशानान्ताः क्रियाः पूजाङ्गसूत्रधृक् ॥
पाञ्चरात्रेण वा कश्चित्तन्त्रोक्तं धर्ममाचरेत् ।
शूद्रादेव तु शूद्रायां जातः शूद्र इति स्मृतः ॥
द्विजशुश्रूषणपरः पाकयज्ञपरान्वितः ।
सच्छूद्रं तं विजानीयादसच्छूद्रस्ततोऽन्यथा ॥
चौर्यात्काकवचो ज्ञेया अश्वानां तृणवाहकाः ।

एतत्संक्षेपतः प्रोक्तं जातिवृत्तिविभागशः।
जात्यन्तराणि दृश्यन्ते संकल्पादित एव तत् ॥इति ॥

दक्षस्मृतौ प्रथमाध्याये—

जातमात्रः शिशुस्तावद्यावदष्टौ समा वयः।
सहि गर्भसमो ज्ञेयो जातिमात्रप्रदर्शकः ॥
भक्ष्याभक्ष्ये तथापेये वाच्यावाच्ये तथानृते।
अस्मिन्बाले न दोषः स्यात्स यावन्नोपनीयते ॥

षष्ठाध्याये—

वर्णानामानुलोम्येन स्त्रीणामेको यदा पतिः।
दशाहषट्त्र्यहैकाहं प्रसवे सूतकं भवेत् ॥

* देवलस्मृतौ—

[देवलवचनानि।] ब्राह्मणी क्षत्रिया वैश्या शूद्रा नीता यदाऽन्त्यजैः।
ब्राह्मण्याः कीदृशं न्याय्यं प्रायश्चित्तं विधीयते ॥
ब्राह्मणी भोजयेन्म्लेच्छमभक्ष्यं भक्षयेद्यदि।
पराकेण ततः शुद्धिः पादेनोत्तरतोत्तरा ॥
(पादोनेनोत्तरोत्तरा) इति साधुः ॥
स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्रिया तथा।
त्रिरात्रेण विशुद्धिः स्याद्देवलस्य वचो यथा ॥
स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी शूद्रजा तथा।
पञ्चरात्रं निराहारा पञ्चगव्येन शुद्ध्यति ॥
ब्राह्मण्यनशनं कुर्यात्क्षत्रिया स्नानमाचरेत्।
सचैलं वैश्यजातीनां नक्तं शूद्रे विनिर्दिशेत् ॥

प्रजापतिस्मृतौ—

* (१) देवलस्मृतिरियमानन्दाश्रममुद्रापिता, यस्याः प्रामाण्ये विप्रतिपत्तिरस्ति केषाञ्चित्।

ब्राह्मणः क्षत्रियविशां जीव्यवृत्तिं समाश्रयेत् ।
स्ववृत्ते रूपहानिः स्यान्न श्ववृत्तिं (त्त्या) कदाचन ॥
वर्णानां च त्रिधा वृत्तिरुत्तमा मध्यमाऽधमा ।
ह्रासपुण्यफलांशस्य क्रमात्तद्धनदानतः ॥ इति ॥

बृहद्यमस्मृतौ तृतीयाध्याये—

उच्छिष्टोच्छिष्टसंस्पृष्टो ब्राह्मणो ब्राह्मणेन हि ।
दशरुद्रीं जपेत्पश्चाद्गायत्र्या शोधनं परम् ॥
उच्छिष्टोच्छिष्टसंस्पृष्टः क्षत्रियो वैश्य एव च ।
प्रमादोच्छिष्टसंस्पृष्टः शूद्रेण तु यदा द्विजः ॥
उपोष्य रजनीमेकां पञ्चगव्येन शुद्ध्यति ।
श्वानकुक्कुटमार्जाराः काको वा स्पृशते यदि ॥
उच्छिष्टं तं द्विजं यस्तु अहोरात्रेण शुद्ध्यति ।
पञ्चगव्येन शुद्धिः स्यादित्याह भगवान्यमः ॥
स्त्रीणां रजस्वलानां च स्पर्शश्चैव भवेद्यदि ।
चतुर्णामपि वर्णानां प्रायश्चित्तं कथं भवेत् ॥
स्पृष्ट्वा रजस्वलाऽन्योन्य सगोत्रा चान्यगोत्रका ।
कामादकामतो वापि त्रिरात्राच्छुद्धिरिष्यते ॥
स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्रियी तथा ।
अर्धकृच्छ्रं चरेत्पूर्वा पादकृच्छ्रं तथोत्तरा ॥
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी वैश्यिनी तथा ।
पादहीनं चरेत्पूर्वा पादमेकं तथोत्तरा ॥
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी शूद्रिणी तथा ।
कृच्छ्रेण शुद्ध्यते शूद्री ब्राह्मी दानेन शुद्ध्यति ॥ इति ॥

बृहद्यमस्मृतौ चतुर्थाध्याये—

प्रेषितः पुरुषो वापि प्रायश्चित्तं च यत्स्मृतम् ।
[ तत्रबृहद्यम वचनानि ] आब्दिकं चैव शूद्रस्य वैश्यस्य द्विगुणं भवेत् ॥
त्रिगुणं क्षत्रियस्यैव विप्रस्यैव चतुर्गुणम् ।
गोष्ठे निवसनं कार्यं गोघ्नोऽहमिति वाचयेत् ॥
ब्राह्मणक्षत्रियविशां शूद्राणां चान्त्यजातिनाम् ।
तारतम्येन दातव्यमिति प्राह स्वयं यमः ॥
पतितानां च विप्राणां तथा स्त्रीणां विगर्हितम् ।
कथं शुद्धिर्भवेत्तासां तेषां चैव विशेषतः ॥
व्यभिचारादृतौ शुद्धिः स्त्रीणां चैव न संशयः ॥
गर्भे जाते परित्यागो नान्यथा मम भाषितम् ॥

तत्रैव पञ्चमाध्याये—

अतः परं प्रवक्ष्यामि शृणुध्वं मुनिपुंगवाः ।
सर्वेषामन्त्यजातीनां वर्णादीनां यथाक्रमम् ॥
स्त्रीसम्पर्कादिकं सर्वं जातमन्त्यजसंज्ञकम् ।
योनिसंकरजं सर्वं वर्णतश्चापि सर्वशः ॥
विप्रक्षत्रियविट्छूद्रा वर्णजात्येष्वनुक्रमात् ।
एते ब्राह्मणाकुत्साः स्युस्तस्माद्ब्राह्मण्यमुत्तमम् ॥

लघुविष्णुस्मृतौ प्रथमाध्याये—

ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव तथाऽपरः ।
एतेषां धर्मसारं यद्वक्ष्यमाणं निबोधत ॥
ऋतौ ऋतौ तु संयोगाद्ब्राह्मणो जायते स्वयम् ।
तस्माद्ब्राह्मणसंस्कारं गर्भादौ तु प्रयोजयेत् ॥
जातकर्म तथा कुर्यात्पुत्रे जाते यथोदितम् ।
बहिर्निष्क्रमणं चैव तस्य कुर्याच्छिशोः शुभम् ॥

षष्ठे मासे च सम्प्राप्ते अन्नप्राशनमाचरेत् ।
तृतीयेऽब्दे च सम्प्राप्ते केशकर्म च कारयेत् ॥
गर्भाष्टमे तथा कर्म ब्राह्मणस्योपनायनम् ।
द्विजत्वे त्वथ सम्प्राप्ते सावित्र्यामधिकारभाक् ॥
गर्भादेकादशे सैके कुर्यात्क्षत्रियवैश्ययोः ।
कारयेद् द्विजकर्माणि ब्राह्मणेन यथाक्रमम् ॥
शूद्रश्चतुर्थो वर्णस्तु सर्वसंस्कारवर्जितः ।
उक्तस्तस्य तु संस्कारो द्विजेष्वात्मनिवेदनम् ॥

पञ्चमाध्याये—

तेजः सत्यं धृतिर्दाक्ष्यं संग्रामेष्वनिवर्तिता ।
दानमीश्वरभावश्च क्षत्रधर्मः प्रकीर्तितः ॥
क्षत्रियस्य परो धर्मः प्रजानां परिपालनम् ।
तस्मात्सर्वप्रयत्नेन रक्षयेद्भूपतिः प्रजाः ॥
त्रीणि कर्माणि कुर्वीत राजन्यस्तु प्रयत्नतः ।
दानमध्ययनं यज्ञस्तपो योगनिषेवणम् ॥
ब्राह्मणानां च सन्तुष्टिमाचरेत्सततं तथा ।
तेषु तुष्टेषु नियतं राज्यं कोशश्च वर्धते ॥
वाणिज्यं कर्षणं चैव गवां च परिपालनम् ।
ब्राह्मणक्षत्रसेवा च वैश्यकर्म प्रकीर्तितम् ॥
खलयज्ञं कृषीणां च गोयज्ञं चैव यत्नतः ।
कुर्याद्वैश्यश्च सततं गवां च शरणं तथा ॥
ब्राह्मणक्षत्रवैश्यांश्च चरेन्नित्यममत्सरः ।
कुर्वंस्तु शूद्रः शुश्रूषां लोकाञ्जयति धर्मतः ॥
पञ्चयज्ञविधानं तु शूद्रस्य न विधीयते ।

तस्य प्रोक्तो नमस्कारः कुर्वन्नित्यं न हीयते॥
शूद्रोऽपि द्विविधो ज्ञेयः श्राद्धी चैवेतरस्तथा।
श्राद्धी भोज्यस्तयोरुक्तो ह्यभोज्यो हीतरो मतः॥
कुर्याच्छूद्रस्तु शुश्रूषां ब्रह्मक्षत्रविशां क्रमात्।
कुर्यादुत्तरयोर्वैश्यः क्षत्रियो ब्राह्मणस्य तु॥ इति।

लघ्वाश्वलायनस्मृतावुपनयनप्रकरणे—

ब्राह्मणस्याष्टमे वर्षे विहितं चोपनायनम्।
सप्तमे चाथ वा कुर्यात्सर्वाचार्यमतं भवेत्॥

तत्रैव वर्णधर्मप्रकरणे च—

सर्वेषां चैव वर्णानामुत्तमो ब्राह्मणो यतः।
क्षत्रस्तु पालयेद्विप्रं विप्राज्ञाप्रतिपालकः॥
सेवां चैव तु विप्रस्य शूद्रः कुर्याद्यथोदिताम्।
सर्वेषां चापि वै मान्यो वेदविद्द्विज एव हि॥
यजनादीनि कर्माणि कुर्यादहरहर्द्विजः।
धर्मोऽयं द्विजवर्यस्य परमानन्ददायकः॥
रणे धीरो भवेत्क्षत्रो जयाद्राज्यं च वैरिणः।
पालयेद्ब्राह्मणान् सम्यक् परं तेनैव जेष्यति॥
शूद्रः कुर्याद्द्विजस्यैव सेवामेव कृषिं तथा।
सुखं तेन लभेन्नूनं प्रवदन्ति महर्षयः॥
ब्राह्मणः क्षत्रियो वापि स्वधर्मेणानुवर्तयेत्।
नाचरेत्परधर्मं च धर्मनाशाय चात्मनः॥ इति।

वसिष्ठस्मृतौ प्रथमाध्याये—

त्रयो वर्णा ब्राह्मणस्य वशे वर्तेरन् तेषां ब्राह्मणो धर्मं ब्रूयात्।
[ वसिष्ठवचनानि ] तं राजा चानुशिष्यात्॥ राजा तु धर्मेणानुशा-

सत्षष्ठं षष्ठं धनस्य हरेत् । अन्यत्र ब्राह्मणात् । इष्टापूर्तस्य तु षष्ठमंशं भजति इति ह ब्राह्मणो वेदमाढ्यं करोति, ब्राह्मण आपदुद्धरति तस्माद्ब्राह्मणोऽनाद्यः । सोमोऽस्य राजा भवतीति ह प्रेत्य चाभ्युदयिकमिति ह विज्ञायते ॥

द्वितीयाध्याये—

चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्य शूद्राः । त्रयो वर्णा द्विजातयो ब्राह्मणक्षत्रियवैश्याः । तेषां मातुरग्रेऽधिजननं द्वितीयं मौञ्जीबन्धने तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥

षट् कर्माणि ब्राह्मणस्य स्वाध्यायाध्ययनमध्यापनं यजनं याजनं दानं प्रतिग्रहश्चेति, त्रीणि राजन्यस्य अध्ययनं यजनं दानं च शस्त्रेण च प्रजापलनं स्वधर्मस्तेन जीवेत् । एतान्येव त्रीणि वैश्यस्य कृषिर्वाणिज्यं पाशुपाल्यं कुसीदं च, एतेषां परिचर्या शूद्रस्य अनियता वृत्तिः । अनियतकेशवेशाः सर्वेषां मुखशिखावर्जम् । अजीवन्तः स्वधर्मेणानन्तरां पापीयसीं वृत्तिमातिष्ठेरन् , न तु कदाचिज्ज्यायसीम् ॥

तत्रैव तृतीयाध्याये—

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥
नानृक्ब्राह्मणो भवति न वणिङ् न कुशीलवः ।
न शूद्रप्रेषणं कुर्वन्न स्तेनो न चिकित्सकः ॥
अव्रता ह्यनधीयाना यत्र भैक्ष्यचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चोरभक्तप्रदो हि सः ॥

चतुर्थाध्याये—

प्रकृतिविशिष्टं चातुर्वर्ण्यं संस्कारविशेषाच्च ब्राह्मणोऽस्य मुख-

मासीद्बाहू राजन्यः कृतः। उरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत, इति निगमो भवति गायत्र्या छन्दसा ब्राह्मणमसृजत्त्रिष्टुभा राजन्यं जगत्या वैश्यं न केनचिच्छन्दसा शूद्रमित्यसंस्कार्यो विज्ञायते ॥

तत्रैवैकादशाध्याये—

गर्भाष्टमेषु ब्राह्मणमुपनयीत, गर्भादेकादशेषु राजन्यम्, गर्भाद्द्वादशेषु वैश्यम्। पालाशो बैल्वो वा दण्डो ब्राह्मणस्य नैयग्रोधः क्षत्रियस्य, औदुम्बरो वा वैश्यस्य केशसम्मितो ब्राह्मणस्य, ललाटसम्मितः क्षत्रियस्य, घ्राणसम्मितो वैश्यस्य। कृष्णाजिनमुत्तरीयं ब्राह्मणस्य, रौरवं क्षत्रियस्य गव्यं बस्ताजिनं वा वैश्यस्य। शुक्लमहतं वासो ब्राह्मणस्य, माञ्जिष्ठं क्षत्रियस्य, हारिद्रं कौशेयं वैश्यस्य सर्वेषां वा तान्तवमरक्तम्। भवत्पूर्वां ब्राह्मणो भिक्षां याचेत्, भवन्मध्यां राजन्यः, भवदन्तां वैश्यः, आषोडशाद्ब्राह्मणस्य नातीतः कालः, आद्वाविंशात्क्षत्रियस्य, आचतुर्विंशाद्वैश्यस्य। अत ऊर्ध्वं पतितसावित्रीका भवन्ति। नैतानुपनयेन्नाध्यापयेन्न याजयेन्नैभिर्विवाहयेयुः ॥

तत्रैवैकविंशाध्याये—

शूद्रश्चेद्ब्राह्मणीमभिगच्छेद्वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत्। ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषा समभ्यज्य नग्नां कृष्णां खरमारोप्य महापथमनुसंव्राजयेत्पूता भवतीति विज्ञायते। वैश्यश्चेद्ब्राह्मणीमभिगच्छेल्लोहितदर्भैर्वेष्टयित्वा वैश्यमग्नौ प्रास्येत्। ब्राह्मण्याः शिरसि वपनं कारयित्वा सर्पिषाऽभ्यज्य नग्नां गौरं खरमारोप्य महापथमनुसंव्राजयेत्पूता भवतीति विज्ञायते, राजन्यश्चेद्ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येत्। ब्राह्म-

सद्यः शिरसि वपनं कारयित्वा सर्पिषा समभ्यज्य नग्नां श्वेतं खरमारोप्य महापथमनुसंव्राजयेत्पूता भवतीति विज्ञायते, एवं वैश्यो राजन्यायां शूद्रश्च राजन्यावैश्ययोः । मनसा भर्तुरतिचारे त्रिरात्रं यावकं क्षारोदनं वा भुञ्जानाऽधःशयीतोर्ध्वं त्रिरात्रादप्सु निमग्नायाः सावित्र्यष्टशतेन शिरोभिर्जुहुयात्पूता भवतीति विज्ञायते ।

ब्राह्मणक्षत्रियविशां स्त्रियः शूद्रेण सङ्गताः ।
अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः ॥
प्रतिलोमं चरेयुस्ताः कृच्छ्रं चान्द्रायणोत्तरम् ॥

ब्राह्मणश्चेदप्रेक्षापूर्वं ब्राह्मणदारानभिगच्छेत् अनिवृत्तधर्मकर्मणः कृच्छ्रो निवृत्तधर्मकर्मणोऽतिकृच्छ्रः । एवं राजन्यवैश्योः ॥इति वृद्धहारीतस्मृतौ षष्ठाध्याये—

ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रास्तथेतराः ।
तस्याधिकारिणः सर्वे सत्त्वशीलगुणा यदि ॥

तत्रैव सप्तमाध्याये—

[बृहद्धारीतस्मृतिवचनानि ।] कृषिस्तु सर्ववर्णानां सामान्यो धर्म उच्यते ।
प्रतिग्रहस्तु विप्राणां राज्ञां क्ष्मापालनं तथा ॥
कुसीदं चैव वाणिज्यं विशामेव प्रकीर्तितम् ।
सेवावृत्तिस्तु शूद्राणां कृषिर्वा सम्प्रकीर्तिता ॥
अशक्तस्तु भवेद्राजा पृथिव्याः परिपालने ।
जीवेद्वापि विशां वृत्त्या शूद्राणां वा यथासुखम् ॥
कृषिर्भृतिः पाशुपाल्यं सर्वेषां न निषिद्ध्यते ।
स्तेयं परस्त्रीहरणं हिंसा कुहुककौतुके ।
स्त्रीमद्यमांसलवणविक्रयं पतितं स्मृतम् ।
अपकृष्टनिकृष्टानां जीवितं शिल्पकर्मभिः ॥

हीनं तु प्रतिलोमानामहीनमनुलोमिनाम् ॥
चर्मवैणववस्त्राणां हिंसाकर्म च नेजनम् ॥
गाणिक्यं यवनाद्यं च मधुमांसक्रिया तथा ।
सारथ्यं वाहकानां च रथानां भूभृतामपि ।
एवमादि निषिद्धं यत्प्रातिलोम्यं तदुच्यते ॥
यत्सौम्यशिल्पं लोकेऽस्मिन्सौम्यं तदनुलोमकम् ।
मृद्दारुशैललोहानां शिल्पं सौम्यमिहोच्यते ॥
न्यायेन पालयेद्राजा पृथिवीं शास्त्रमार्गतः ।
स्वराष्ट्रकृतधर्मस्य सदा षड्भागसिद्धये ॥
राज्ञां राष्ट्रकृतं पापमिति धर्मविदो विदुः ।
तस्मादपापसंयुक्तां यथा संरक्षयेद्भुवम् ॥ इति ॥

तत्रैव नवमाध्याये—

हीनवर्णाभिगमनं गर्भघ्नं भर्तृहिंसनम् ।
विशेषपतनीयानि स्त्रीणां पुंसां च यानि तु ॥
स्त्रीशूद्रविट्क्षत्रवधो गोबालहननं तथा ।
फलपुष्पद्रुमाणां च ओषधीनां च हिंसनम् ॥
शूद्रप्रेष्यं हीनसख्यमुच्छिष्टस्पर्शनादिकम् ।
स्त्रीभिर्हास्यं कामजल्पं मुक्तकेश्यादिवीक्षणम् ॥
इत्यादयो ये च दोषाः प्रकीर्णाः परिकीर्तिताः ।
महापापं पातकं च अनुपातकमेव च ॥ इति ॥

वेदव्यासस्मृतौ प्रथमाध्याये—

ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः ।
[वेदव्यासवचनानि ।] श्रुतिस्मृतिपुराणोक्तधर्मयोग्यास्तु ते नराः ॥
शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति ।

वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विना ॥
विप्रवद्विप्रविन्नासु क्षत्रविन्नासु क्षत्रवत् ।
जातकर्माणि कुर्वीत ततः शूद्रासु शूद्रवत् ॥
वैश्यासु विप्रक्षत्राभ्यां ततः शूद्रासु शूद्रवत् ।
अधमादुत्तमायां तु जातः शूद्राधमःस्मृतः ॥
ब्राह्मण्यां शूद्रजनितश्चण्डालो धर्मवर्जितः ।
कुमारीसम्भवस्त्वेकः सगोत्रायां द्वितीयकः ॥
ब्राह्मण्यां शूद्रजनितश्चण्डालस्त्रिविधः स्मृतः ।
वर्धकी नापितो गोप आशापः कुम्भकारकः ॥
वणिक्किरातकायस्थमालाकारकुटुम्बिनः ।
एते चान्ये च बहवः शूद्राभिन्नाः स्वकर्मभिः ॥
चर्मकारो भटो भिल्लो रजकः पुष्करो नटः ।
वराटो मेदचण्डालौ दाशः श्वपचकौलिकाः ॥
एतेऽन्त्यजाः समाख्याता ये चान्ये च गवाशनाः ।
एषां सम्भाषणात्स्नानं दर्शनादर्कवीक्षणम् ॥
विप्रो गर्भाष्टमे वर्षे क्षत्रमेकादशे तथा ।
द्वादशे वैश्यजातीनां व्रतोपनयनक्रियाः ॥
तस्य प्राप्तव्रतस्यायं कालः स्याद्द्विगुणाधिकः ।
वेदव्रतच्युतो व्रात्यः स व्रात्यस्तोममर्हति ॥
द्वे जन्मनी द्विजातीनां मातुः स्यात्प्रथमं तयोः ।
द्वितीयं छन्दसां मातुर्ग्रहणाद्विधिवद्गुरोः ॥
एवं द्विजातिमापन्नो विमुक्तो बाल्यदोषतः ।
श्रुतिस्मृतिपुराणानां भवेदध्ययनक्षमः ॥
उपनीतो गुरुकुले वसेन्नित्यं समाहितः ।

विभृयाद्दण्डकौपीनोपवीताजिनमेखलाः ॥

द्वितीयाध्याये—

ऊढायां हि सवर्णायामन्यां वा काममुद्वहेत्।
तस्यामुत्पादितः पुत्रो न सवर्णात्प्रहीयते ॥
उद्वहेत्क्षत्रियां वैश्यो वैश्यां च क्षत्रियोऽपि ताम्।
न तु शूद्रां द्विजः कश्चिन्नाधरः पूर्ववर्णजाम् ॥
नानावर्णासु भार्यासु सवर्णा सहचारिणी।
धर्मे धर्मेण धर्मिष्ठा ज्येष्ठता तु सजातिषु ॥

चतुर्थाध्याये—

ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते।
ज्वलन्तमग्निमुत्सृज्य नहि भस्मनि हूयते ॥
सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत्।
भोजने चैव दाने च हन्यात्त्रिपुरुषं कुलम् ॥
अमृतं ब्राह्मणान्नैस्तु दारिद्र्यं क्षत्रियस्य च।
वैश्यान्नेन तु शूद्रत्वं शूद्रान्ने नरकं व्रजेत् ॥
यस्तु भुञ्जति शूद्रान्नं मासमेकं निरन्तरम्।
इह जन्मनि शूद्रत्वं मृतः श्वा चोपजायते ॥

शङ्खस्मृतौ प्रथमाध्याये—

[शङ्खवचनानि।] स्वयम्भुवे नमस्कृत्य सृष्टिसंहारकारिणे।
चातुर्वर्ण्यहितार्थाय शङ्खः शास्त्रमकल्पयत् ॥
यजनं याजनं दानं तथैवाध्यापनक्रिया।
प्रतिग्रहं चाध्ययनं विप्रकर्माणि निर्दिशेत् ॥
दानं चाध्ययनं चैव यजनं च यथाविधि।
क्षत्रियस्य च वैश्यस्य कर्मेदं परिकीर्तितम् ॥

क्षत्रियस्य विशेषेण प्रजानां परिपालनम् ।
कृषिगोरक्षवाणिज्यं विशश्च परिकीर्तितम् ॥
शूद्रस्य द्विजशुश्रूषा सर्वशिल्पानि चाप्यथ ।
क्षमा सत्यं दमः शौचं सर्वेषामविशेषतः ॥
ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः ।
तेषां जन्म द्वितीयं तु विज्ञेयं मौञ्जीबन्धनम् ॥
आचार्यस्तु पिता प्रोक्तः सावित्री जननी तथा ।
ब्राह्मणक्षत्रियविशां मौञ्जीबन्धनजन्मनि ॥
वृत्त्या शूद्रसमास्तावद्विज्ञेयास्ते विचक्षणैः ।
यावद्वेदे न जायन्ते द्विजा ज्ञेयास्ततः परम् ॥

द्वितीयाध्याये—

नामधेयं च कर्तव्यं वर्णानां च समाक्षरम् ।
माङ्गल्यं ब्राह्मणस्योक्तं क्षत्रियस्य बलान्वितम् ॥
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम् ।
शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य तु ।
धनान्तं चैव वैश्यस्य दासान्तं चान्त्यजन्मनः ॥
गर्भाष्टमेऽब्दे कर्तव्यं ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ॥
षोडशाब्दानि विप्रस्य राजन्यस्य द्विविंशतिः ।
विंशतिः सचतुष्का तु वैश्यस्य परिकीर्तिता ॥
नातिवर्तेत सावित्रीमत ऊर्ध्वं निवर्तते ।

चतुर्थाध्याये—

तिस्रस्तु भार्या विप्रस्य द्वे भार्ये क्षत्रियस्य तु ।
एकैव भार्या वैश्यस्य तथा शूद्रस्य कीर्तिता ॥

ब्राह्मणी क्षत्रिया वैश्या विप्रभार्याः प्रकीर्तिताः ।
क्षत्रिया चैव वैश्या च क्षत्रियस्य विधीयते ॥
वैश्या च भार्या वैश्यस्य शूद्रा शूद्रस्य कीर्तिता ।
आपद्यपि न कर्तव्या शूद्रा भार्या द्विजन्मना ।
तस्यां तस्य प्रसूतस्य निष्कृतिर्न विधीयते ॥

पञ्चदशाध्याये—

जनने मरणे चैव सपिण्डानां द्विजोत्तमः ।
त्र्यहाच्छुद्धिमवाप्नोति योऽग्निवेदसमन्वितः ॥
सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।
नामधारकविप्रस्तु दशाहेन विशुध्यति ॥
क्षत्रियो द्वादशाहेन वैश्यः पक्षेण शुध्यति ।
मासेन तु तथा शूद्रः शुद्धिमाप्नोति नान्तरा ॥
हीनवर्णा तु या नारी प्रमादात्प्रसवं व्रजेत् ।
त्रिरात्रमथ षड्रात्रं पक्षं मासं तथैव च ॥
वैश्ये सपिण्डे वर्णानामाशौचं क्रमशः स्मृतम् ॥
सपिण्डे क्षत्रिये शुद्धिः षड्रात्रं ब्राह्मणस्य तु ।
वर्णानां परिशिष्टानां द्वादशाहं विनिर्दिशेत् ॥
सपिण्डे ब्राह्मणे वर्णाः सर्व एवाविशेषतः ।
दशरात्रेण शुध्येयुरित्याह भगवान्यमः ।

सप्तदशाध्याये—

शूद्रस्य सततं भुक्त्वा षण्मासान्व्रतमाचरेत् ।
वैश्यस्य तु तथा भुक्त्वा त्रीन्मासान्व्रतमाचरेत् ॥
क्षत्रियस्य तथा भुक्त्वा द्वौ मासौ व्रतमाचरेत् ।
ब्राह्मणस्य तथा भुक्त्वा मासमेकं व्रतं चरेत् ॥

भुक्तवान्नं ब्राह्मणः पश्चात्त्रिरात्रं तु व्रती भवेत् ।
क्षत्रियस्तु रणे दत्त्वा पृष्ठं प्राणपरायणः ।
संवत्सरव्रतं कुर्याच्छित्त्वा वृक्षं फलप्रदम् ॥ इति ॥

संवर्तस्मृतौ—

[संवर्तवचनानि] शूद्रः शुद्ध्यति हस्तेन वैश्यो दन्तेषु वारिभिः ।
कण्ठागतैः क्षत्रियस्तु आचान्तः शुचितामियात् ॥
विप्रो दशाहमासीत दानाध्ययनवर्जितः ।
क्षत्रियो द्वादशाहानि वैश्यः पञ्चदशैव तु ॥
शूद्रः शुद्ध्यति मासेन संवर्तवचनं यथा ।
प्रेतायान्नं जले देयं स्नात्वा तद्गोत्रजैः सह ।
प्रथमेऽह्नि तृतीये च सप्तमे नवमे तथा ॥
चतुर्थेऽहनि विप्रस्य षष्ठे वै क्षत्रियस्य च ।
अष्टमे दशमे चैव स्पर्शः स्याद्वैश्यशूद्रयोः ॥
जातस्यापि विधिर्दृष्ट एष एव मनीषिभिः ।
दशरात्रेण शुध्येत विप्रो वेदविवर्जितः ॥
जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते ।
क्षत्रियामथ वैश्यां वा गच्छेद्यः काममोहितः ॥
तस्य सान्तपनः कृच्छ्रो भवेत्पापापनोदकः ।
शूद्रां तु ब्राह्मणो गत्वा मासं मासार्धमेव वा ॥
गोमूत्रयावकाहारो मासार्धेन विशुद्ध्यति ।
विप्रस्तु ब्राह्मणीं गत्वा प्राजापत्येन शुद्ध्यति ॥
स्वजनां तु द्विजो गत्वा प्राजापत्यं समाचरेत् ।
क्षत्रियां क्षत्रियो गत्वा तदेव व्रतमाचरेत् ॥
नरो गोगमनं कृत्वा कुर्याच्चान्द्रायणव्रतम् ॥

वैश्यां तु ब्राह्मणो गत्वा कृच्छ्रमेकं समाचरेत्।
एवं शुद्धिः समाख्याता संवर्तस्य वचो यथा ॥
कथञ्चिद्ब्राह्मणीं गत्वा क्षत्रियो वैश्य एव च।
गोमूत्रयावकाहारो मासेनैकेन शुद्ध्यति ॥
शूद्रस्तु ब्राह्मणीं गच्छेत् कदाचित्काममोहितः।
गोमूत्रयावकाहारो मासेनैकेन शुद्ध्यति ॥
ब्राह्मणीं शूद्रसम्पर्के कदाचित्समुपागते।
कृच्छ्रचान्द्रायणं तस्याः पावनं परमं स्मृतम् ॥
चाण्डालं पुक्कसं चैव श्वपाकं पतितं तथा।
एतान् श्रेष्ठाः स्त्रियो गत्वा कुर्युश्चान्द्रायणव्रतम् ॥

बौधायनस्मृतौ प्रथमप्रश्ने द्वितीयाध्याये—

गर्भादिसंख्या वर्षाणाम्, तदष्टमेषु ब्राह्मणमुपनयीत त्र्यधिकेषु राजन्यम्। तस्मादेकाधिकेषु वैश्यम्। वसन्तो ग्रीष्मः शरदित्यृतवो वर्णानुपूर्व्येण। गायत्रीत्रिष्टुब्जगतीभिर्यथाक्रमम्। आषोडशादाद्वाविंशादाचतुर्विंशादित्यनत्यय एषां क्रमेण। मौञ्जी धनुर्ज्याशाणीतिमेखलाः। कृष्णरुरुबस्ताजिनान्यजिनानि। मूर्ध-ललाटनासाग्रप्रमाणा याज्ञिकस्य वृक्षस्य दण्डा विशेषाः पूर्वोक्ताः। भवत्पूर्वां भिक्षामध्यां याच्जान्तां भिक्षां चरेत्सप्ताक्षरां क्षां च हिं च न वर्धयेत्। भवत्पूर्वां ब्राह्मणो भिक्षेत, भवन्मध्यां राजन्यो भवदन्त्यां वैश्यः सर्वेषु वर्णेषु ॥

तत्रैवाष्टमाध्याये—

चत्वारो वर्णा ब्राह्मणक्षत्रियविट्छूद्राः। तेषां वर्णानुपूर्व्येण चतस्रो भार्या ब्राह्मणस्य, तिस्रो राजन्यस्य, द्वे वैश्यस्य, एका शूद्रस्य। तासु पुत्राः सवर्णानन्तरासु सवर्णाः। एकान्तरद्व्यन्तरा-

ऽम्बष्ठोग्रनिषादाः। प्रतिलोमास्त्वायोगवमागधवैणक्षत्तृपुल्कसकुक्कुटवैदेहकचण्डालाः अम्बष्ठात्प्रथमायां श्वपाकः, उग्रात् द्वितीयायां वेणः। निषादात्तृतीयायां पुल्कसः। विपर्यये कुक्कुटः। निषादेन निषाद्यामापञ्चमाज्जातोऽपहन्ति शूद्रताम्। तमुपनयेत् षष्ठं याजयेत्। सप्तमो विकृतबीजः समबीजः सम इत्येकेषां संज्ञाः क्रमेण निपठन्ति। त्रिषु वर्णेषु सादृश्यादव्रतो जनयेत्तु यान्। तान् सावित्रीपरिभ्रष्टान् व्रात्यानाहुर्मनीषिणो व्रात्यानाहुर्मनीषिण इति॥

तत्रैव नवमाध्याये—

रथकाराम्बष्ठसूतोग्रमागधायोगववैणक्षत्तृपुल्कसकुक्कुटवैदेहकचण्डालश्वपाकप्रभृतयः। तत्र सवर्णासु सवर्णाः। ब्राह्मणात्क्षत्रियायां ब्राह्मणो वैश्यायामम्बष्ठः शूद्रायां निषादः। पारशव इत्येके। क्षत्रियाद्वैश्यायां क्षत्रियः शूद्रायामुग्रः। वैश्याच्छूद्रायां रथकारः। शूद्राद्वैश्यायां मागधः क्षत्रियायां क्षत्ता ब्राह्मण्यां चण्डालः। वैश्यात्क्षत्रियायामायोगवो ब्राह्मण्यां वैदेहकः। क्षत्रियाद्ब्राह्मण्यां सूतः। तत्राम्बष्ठोग्रसंयोगे भवत्यनुलोमः। क्षत्तृवैदेहकयोः प्रतिलोमः। उग्राज्जातः क्षत्र्यां श्वपाकः। वैदेहकादम्बष्ठायां वैणः। निषादाच्छूद्रयां पुल्कसः। शूद्रान्निषाद्यां कुक्कुटः॥

तत्रैव दशमाध्याये—

षड्भागभृतो राजा रक्षेत्प्रजाम्। ब्रह्म वै स्वं महिमानं ब्राह्मणेष्वदधादध्ययनाध्यापनयजनयाजनदानप्रतिग्रहसंयुक्तं वेदानां गुप्त्यै। क्षत्रे बलमध्ययनयजनदानशस्त्रकोशभूतरक्षणसंयुक्तं क्षत्रस्य वृद्ध्यै। विट्स्वध्ययनयजनदानकृषिवाणिज्यपशुपालनसंयुक्तं कर्मणां वृद्ध्यै। शूद्रेषु पूर्वेषां परिचर्या।

ब्राह्मणस्य ब्रह्महत्यागुरुतल्पगमनसुवर्णस्तेयसुरापानेषु कुसि-

न्धभगश्वृगालसुराध्वजांस्तप्तेनायसा ललाटेऽङ्कयित्वा विषयान्निर्गमनम् । क्षत्रियादीनां ब्राह्मणवधे वधः सर्वस्वहरणं च । तेषामेव तुल्यापकृष्टवधे यथाबलमनुरूपान्दण्डान्प्रकल्पयेत् । क्षत्रियवधे गोसहस्रमृषभैकाधिकं राज्ञ उत्सृजेद्वैरनिर्यातनार्थम् । शतं वैश्ये दश शूद्रे ऋषभश्चात्राधिकः । शूद्रवधेन स्त्रीवधो गोवधश्च व्याख्यातोऽन्यथाऽऽत्रेय्या वधात् ॥

चत्वारो वर्णाः पुत्रिणः साक्षिणःस्युरन्यत्र श्रोत्रियराजन्यप्रव्रजितमानुष्यहीनेभ्यः ॥

तत्रैवैकादशाध्याये—

तेषां चत्वारः पूर्वे ब्राह्मणस्य । तेष्वपि पूर्वः पूर्वः श्रेयान् । उत्तरेषामुत्तरोत्तरः पापीयान् । अत्रापि षष्ठसप्तमौ क्षत्रियधर्मानुगतौ तत्प्रत्ययत्वात्क्षत्रस्य । पञ्चमाष्टमौ वैश्यशूद्राणाम् । अयन्त्रितकलत्रा हि वैश्यशूद्रा भवन्ति । कर्षणशुश्रूषाधिकृतत्वात् । गान्धर्वमप्येके प्रशंसन्ति । सर्वेषां स्नेहानुगतत्वात् यथा युक्तो विवाहः । यथायुक्तो विवाहस्तथा युक्ता प्रजा भवतीति विज्ञायते ।

बौधायनस्मृतौ द्वितीयप्रश्ने द्वितीयाध्याये—

[बौधायनवचनानि ।] चतुर्णां वर्णानां गोश्वाजावयो ज्येष्ठांशः । सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं पुत्रं विद्यात् ।

शूद्रे चान्द्रायणं चरेत् वैश्यादिषु प्रतिलोमं कृच्छ्रातिकृच्छ्रादींश्चरेत् पुंसां ब्राह्मणादीनां संवत्सरं ब्रह्मचर्यम् । शूद्रं कटाग्निना दहेत् । अथाप्युदाहरन्ति-अब्राह्मणस्य शारीरो दण्डः संग्रहणे भवेत् । सर्वेषामेव वर्णानां दारा रक्ष्यतमा धनात् ॥

अध्यापनयाजनप्रतिग्रहैरशक्तः क्षत्रधर्मेण जीवेत्प्रत्यन्तरत्वात्, नेति गौतमोऽत्युग्रो हि क्षत्रधर्मो ब्राह्मणस्य—अथाप्युदाहरन्ति ।

गवार्थे ब्राह्मणार्थे वा वर्णानां वापि संकरे ।
गृह्णीयातां विप्रविशौ शस्त्रं धर्मव्यपेक्षया ॥
वैश्यवृत्तिरनुष्ठेया प्रत्यन्तरत्वात् ॥

तत्रैव तृतीयप्रश्ने दशमाध्याये—

उक्तो वर्णधर्मश्चाश्रमधर्मश्चेति ॥ इति ॥

आपस्तम्बपरिभाषासूत्रे—

[ आपस्तम्बसूत्र वचनानि ] यज्ञं व्याख्यास्यामः । स त्रयाणां वर्णानां ब्राह्मणराजन्ययोर्वैश्यस्य च ॥ इति ।

बृहत्पाराशरसंहितायां प्रथमाध्याये—

[ बृहत्पाराशर वचनानि । ]
मनुष्याणां हितं धर्मं वर्तमाने कलौ युगे ।
वर्णानामाश्रमाणां च किञ्चित्साधारणं वद ॥
धर्मं तु त्रियुगाचारं न शक्यं हि कलौ युगे ।
वर्णानामाश्रमाणां च किञ्चित्साधारणं वद ॥
कृतं तु ब्राह्मणयुगं त्रेता तु क्षत्रियं युगम् ।
वैश्यं तु द्वापरयुगं कलिः शूद्रयुगं स्मृतम् ॥
पतिद्विजात्युपास्त्यापि धर्मर्द्धिर्महती कलौ ।
युगस्वरूपमाख्यातमन्यच्च गदतः शृणु ।
वर्णानामाश्रमाणां च सर्वेषां धर्मसाधनम् ॥

द्वितीयाध्याये—

चतुर्णामपि वर्णानामाचारो धर्मपालनम् ।
आचारभ्रष्टदेहानां भवेद्धर्मः पराङ्मुखः ॥
षट्कर्माभिरतो नित्यं देवतातिथिपूजकः ॥

षष्ठाध्याये—

आया आयस्य षट् प्रोक्ता धर्म्याश्चत्वार एव हि ।

चत्वारोऽन्ये द्वितीयस्य आद्यस्य च द्वयस्य च ॥
पञ्चमश्च तथा षष्ठः स्मृतौ तौ त्रिचतुर्थयोः ।
द्वितीयस्यापि ये प्रोक्ता एतयोस्ते न चाष्टमः ॥
जातिर्विद्या वयः शक्तिरारोग्यं बहुपक्षता ।
अर्थित्वं वित्तसम्पत्तिरष्टावेते वरे गुणाः ॥
जातिर्विद्या च रूपं च शीलं चैव नवं वयः ।
अरोगित्वं विशेषेण पुंस्त्वे सत्यपि लक्षयेत् ॥
जातिं रूपं च शीलं च वयो नवमरोगिताम् ।
स्वाचारत्वं विशेषेण संलक्ष्य वरमाश्रयेत् ॥
सज्जातिं रूपवित्तं च तथाप्रवयसं दृढम् ।
सन्तोषजननं स्त्रीणां प्रज्ञावानाश्रयेद्वरम् ॥
न जातिं न च विद्यां च वित्तं नाचरणं स्त्रियः ।
किन्तु ताः प्रीतिमिच्छन्ति तस्मात्प्रीतिकरं श्रयेत् ॥
स्वजातिमुद्वहेत्कन्यां सुरूपां लक्षणान्विताम् ।
अरोगिणीं सुशीलां च तथा भ्रातृमतीमपि ॥
विप्रः स्वामपरे द्वे तु राजा स्वामपरे तथा ।
वैश्यः स्वां च चतुर्थीं च क्रमेणैवं समुद्वहेत् ॥
मुञ्जमौर्णाशणानां तु त्रिवृत्ता रशना स्मृता ।
कार्पासशणमेषौर्णान्युपवीतानि वर्णशः ॥
पलाशवटपीलूनां दण्डाश्च क्रमशः स्मृताः ।
कार्ष्णं च रौरवं बास्तमजिनानि द्विजन्मनाम् ॥
शिरोललाटनासान्ताः क्रमाद्दण्डाः प्रकीर्तिताः ।
औपनायनिका मन्त्रा विप्रादीनामुदाहृताः ॥
ब्राह्मणो विप्रगेहेषु नृपस्तेषूत्तमेषु च ।

वैश्यो विप्रनृपेष्वेव कुर्याद्भिक्षां स्ववृत्तये ।
एकान्नं न द्विजोऽश्नीयाद्ब्रह्मचारिव्रते स्थितः ॥

तत्रैव सप्तमाध्याये—

क्षत्रियायां तु यो जातो वैश्यायां च तथा सुतः ।
ब्राह्मणस्य पितुस्तौ तु निर्वपेतां द्विजाग्र्यवत् ॥
क्षत्रियस्य सुतश्चैव तथा वैश्यसुतोऽपि च ।
शृतान्नेन द्विजांस्तर्प्य श्राद्धद्वयं च निर्वपेत् ॥
आमान्नेन तु शूद्रस्य तूष्णीं च द्विजपूजनम् ।
कृत्वा श्राद्धं तु निर्वाप्य सजातीनाशयेत्तथा ॥
सोमपाश्च तथा विद्धि स्तथैव च हविर्भुजः ।
आज्यपाश्च तथा वत्स तथाह्यन्ये सुकालिनः ॥
वैश्वश्राद्धं पितृश्राद्धं प्रतिलोमविधानतः ।
वर्णाश्रमबहिःस्थास्ते संकीर्णजन्मसम्भवाः ॥
मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशंसनात् ।
इतरेषु च वर्णेषु तपःपरममुच्यते ॥
शूद्रस्य दासिजः पुत्रः कामतस्तु सपिण्डदः ।
जात्या जातः सुतो मातुः पिण्डदः स्यात्सुतोऽपि च ॥
जनकस्य न किञ्चित्स्यादर्थात्कामप्रवर्तनात् ।
मया श्राद्धविधिः प्रोक्तो वर्णानां पितृतृप्तिकृत् ।
एवं दास्यति यः श्राद्धं वरांस्त्वं नवाप्स्यति ॥

तत्रैवाष्टमाध्याये—

राज्ञां तु द्वादशाहः स्यात्पक्षो वैश्यस्य पावनः ।
वृषलस्य तथा मासस्त्र्यहादेष्वपि धर्मतः ॥
प्रसवे च द्विजातीनां न कुर्यात्संकरं यदि ।

दशाहाच्छुध्यते माता अवगाह्य पिता शुचिः॥
ब्राह्मणः क्षत्रियं हत्वा गवां दद्यात्सहस्रकम्।
वृषेणैकेन संयुक्तं पापादस्मात्प्रमुच्यते॥
गां नृपं चैव वैश्यं च शूद्रं वाप्यनुलोमजम्।
क्षत्रियादिस्त्रियं गत्वा विप्रश्चान्द्रायणं चरेत्॥
ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददन्।
द्वावप्येतावभोज्यान्नौ चरेतां शशिनो व्रतम्॥
ब्राह्मणी क्षत्रियां स्पृष्ट्वा ब्राह्मणी व्रतमाचरेत्।
अपरा क्षत्रियायास्तु वक्तव्यमेवमन्ययोः॥
रजस्वला तु संस्पृष्टा श्वविट्छूद्रैश्च वायसैः।
स्नानं यावन्निराहारं पञ्चगव्येन शुद्ध्यति॥
शूद्रीं तु ब्राह्मणो गत्वा मासं मासार्धमेव वा।
गोमूत्रयावकाहारो मासार्धेन विशुध्यति॥
नृपोऽप्यस्वजनां गत्वा प्राजापत्यं सम चरेत्।
वैश्यपत्नीमसौ गत्वा कृत्वा सान्तपनं शुचिः॥
शूद्रीं तु क्षत्रियो गत्वा गोमूत्रयावकाशनः।
दशभिर्दिवसैः शुध्येद्वैश्यः सोऽप्येवमेव हि॥
क्षत्रियेण तु संस्पृष्टो ब्राह्मणो नक्तभोजनात्।
वैश्येन चैव संस्पृष्टो नक्ताशी पञ्चगव्यपः॥
शूद्रेण तु च संस्पृष्ट एकरात्रोपवासकृत्।
उच्छिष्टैः पुनरेतैस्तु प्रोक्तं द्विगुणमर्हति॥
ब्रह्मक्षत्रियविड्जाताःशूद्रास्तेऽनुक्रमेण तु।
क्रमातिक्रमतश्चान्ये म्लेच्छान्त्यवर्णसम्भवाः॥
ब्रह्मादिवर्णहा गोघ्नः पितृमातृसुहृद्वधात्।

॥अग्निदो गुरुहा चैव तथैव गुरुतल्पगः॥
यथावर्णं यथाकाष्ठं यथाकार्यं प्रमाणतः।
तथा यूपान्प्रवक्ष्यामि वर्णानां हितकाम्यया॥
पालाशो ब्रह्मणः प्रोक्तो न्यग्रोधो भुभूजः स्मृतः।
॥बैल्वो वैश्यस्य यूपः स्याच्छूद्रस्यौदुम्बरः स्मृतः॥
शिरःप्रमाणो विप्रस्य आकण्ठं क्षत्रियस्य च।
॥ उरःप्रमाणो वैश्यस्य शूद्रस्य नाभिमात्रकः॥ इति।

हारीतसंहितायां प्रथमाध्याये—

[हारीतवचनानि] ये वर्णाश्रमधर्मस्थास्ते भक्ताः केशवं प्रति॥
इति पूर्वं त्वया प्रोक्तं भूर्भुवःस्वर्द्विजोत्तमाः॥
वर्णानामाश्रमाणां च धर्मान्नो ब्रूहि सत्तम।
येन सन्तुष्यते देवो नारसिंहः सनातनः॥
भगवन् सर्वधर्मज्ञ सर्वधर्मप्रवर्तक।
वर्णानामाश्रमाणां च धर्मान्नो ब्रूहि भार्गव॥
वर्णानामाश्रमाणां च योगशास्त्रं च सत्तमाः।
सन्धार्य मुच्यते मर्त्यो जन्मसंसारबन्धनात्॥
यज्ञसिध्यर्थमनघान् ब्राह्मणान् मुखतोऽसृजत्।
असृजत्क्षत्रियान् बाह्वोर्वैश्यानप्यूरुदेशतः॥
शूद्रांश्च पादयोः सृष्ट्वा तेषां चैवानुपूर्वशः।
यथा प्रोवाच भगवान् ब्रह्मयोनिः पितामहः॥
ब्राह्मण्यां ब्राह्मणेनैवमुत्पन्नो ब्राह्मणःस्मृतः।
तस्य धर्मं प्रवक्ष्यामि तद्योग्यं देशमेव च॥
षट् कर्माणि निजान्याहुर्ब्राह्मणस्य महात्मनः।
तैरेव सततं यस्तु वर्तयेत्सुखमेधते॥

अध्यापनं चाध्ययनं याजनं यजनं तथा ।
दानं प्रतिग्रहश्चेति षट् कर्माणीति चोच्यते ॥

तत्रैव द्वितीयाध्याये—

क्षत्रादीनां प्रवक्ष्यामि यथावदनुपूर्वशः ।
येषु प्रवृत्ता विधिना सर्वे यान्ति परां गतिम् ॥
राज्यस्थः क्षत्रियश्चापि प्रजा धर्मेण पालयन् ।
कुर्यादध्ययनं सम्यग्यजेद्यज्ञान् यथाविधि ॥
दद्याद्दानं द्विजातिभ्यो धर्मबुद्धिसमन्वितः ।
स्वभार्यानिरतो नित्यं षड्भागार्हः सदा नृपः ॥
नीतिशास्त्रार्थकुशलः सन्धिविग्रहतत्त्ववित् ।
देवब्राह्मणभक्तश्च पितृकार्यपरस्तथा ॥
धर्मेण यजनं कार्यमधर्मपरिवर्तनम् ।
उत्तमां गतिमाप्नोति क्षत्रियोऽप्येवमाचरन् ॥
गोरक्षां कृषिवाणिज्यं कुर्याद्वैश्यो यथाविधि ।
दानं देयं यथाशक्त्या ब्राह्मणानां च भोजनम् ॥
दम्भमोहविनिर्मुक्तस्तथा वागनसूयकः ।
स्वदारनिरतो दान्तः परदारविवर्जितः ॥
धनैर्विप्रान् भोजयित्वा यज्ञकाले तु याजकान् ।
अप्रभुत्वं च वर्तेत धर्मेष्वादेहपालनात् ॥
यज्ञाध्ययनदानानि कुर्यान्नित्यमतन्द्रितः ।
पितृकार्यपरश्चैव नरसिंहार्चनापरः ॥
एतद्वैश्यस्य धर्मोऽयं स्वधर्ममनुतिष्ठति ।
एतदाचरते यो हि स स्वर्गी नात्र संशयः ॥
वर्णत्रयस्य शुश्रूषां कुर्याच्छूद्रः प्रयत्नतः ।

दासवद्ब्राह्मणानां च विशेषेण समाचरेत् ॥
अयाचितप्रदाता च कष्टं वृत्तार्थमाचरेत् ।
पाकयज्ञविधानेन यजेद्देवमतन्द्रितः ॥
शूद्राणामधिकं कुर्यादर्चनं न्यायवर्तिनाम् ।
धारणं जीर्णवस्त्रस्य विप्रस्योच्छिष्टभोजनम् ॥
स्वदारेषु रतिश्चैव परदारविवर्जनम् ।
इत्थं कुर्यात्सदा शूद्रो मनोवाक्कायकर्मभिः ॥
स्थानमैन्द्रमवाप्नोति नष्टपापः सुपुण्यकृत् ॥
वर्णेषु धर्मा विविधा मयोक्ता ।
यथा तथा ब्रह्ममुखेरिताः पुरा ॥
शृणुध्वमत्राश्रमधर्ममाद्यं ।
मयोच्यमानं क्रमशो मुनीन्द्राः ॥

तत्रैव सप्तमाध्याये—

वर्णानामाश्रमाणां च कथितं धर्मलक्षणम् ।
येन स्वर्गापवर्गश्च प्राप्नुवन्ति द्विजातयः ॥
ब्राह्मणस्य तु यत्कर्म कथितं बाहुजस्य च ।
ऊरुजस्यापि यत्कर्म कथितं पादजस्य च ॥
अन्यथा वर्तमानस्तु सद्यः पतति जातितः ।
यो यस्याभिहितो धर्मः स तु तस्य तथैव च ॥
तस्मात्स्वधर्मं कुर्वीत द्विजो नित्यमनापदि ।
वर्णाश्चत्वारो राजेन्द्र चत्वारश्चापि चाश्रमाः ॥इति॥

उशनःसंहितायां प्रथमाध्याये—

[ उशनःसंहिता ब्राह्मणं कुशलं पृच्छेत्क्षत्रियं चाप्यनामयम् ।
वचनानि । ] वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥

अभिवाद्याश्च पूर्वं तु शिरसावद्यशर्म च।
ब्राह्मणक्षत्रियाद्यैश्च श्रीकामैः सादरं सदा॥
नाभिवाद्यस्तु विप्राणां क्षत्रियाद्याः कथञ्चन।
ज्ञानकर्मगुणोपेता यद्यप्येते बहुश्रुताः॥
ब्राह्मणः सर्ववर्णानां स्वस्ति कुर्यादिति स्थितिः।
सवर्णोऽप्यसवर्णानां कार्यमेवाभिवादनम्॥
भवत्पूर्वं चरेद्भैक्ष्यमुपनीतो द्विजोत्तमः।
भवन्मध्यं तु राजन्यो वैश्यस्तु भवदुत्तरम्॥
मातरं वा स्वसारं वा मातुर्वा भगिनीं तथा।

तत्रैव षष्ठाध्याये—

शुध्येद् द्विजो दशाहेन द्वादशाहेन भूपतिः।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति॥
क्षत्रविट्छूद्रदायादा ये स्युर्विप्रस्य सेवकाः।
तेषामशेषं विप्रस्य दशाहाच्छुद्धिरिष्यते॥
राजन्यवैश्यावप्येवं हीनवर्णास्तु योनिषु।
षड्रात्रं वा त्रिरात्रं वाप्येकरात्रक्रमेण हि॥
वैश्यक्षत्रियविप्राणां शूद्रेष्वाशौचमेव तु।
अर्धमासोऽथ षड्रात्रं त्रिरात्रं द्विजपुङ्गवाः॥
शूद्रक्षत्रियविप्राणां वैश्येष्वाशौचमिष्यते।
षड्रात्रं द्वादशाहाश्च विप्राणां वैश्यशूद्रयोः॥
अशौचं क्षत्रिये प्रोक्तं क्रमेण द्विजपुंगवाः।
शूद्रविट्क्षत्रियाणां तु ब्राह्मणे संस्थिते यदि॥
एकरात्रेण शुद्धिः स्यादित्याह कमलोद्भवः।
असपिण्डं द्विजप्रेतं विप्रो निःसृत्य बन्धुवत्॥

अशित्वा वा सहोषित्वा दशरात्रेण शुध्यति ।
यदि निर्वहति क्षिप्रं प्रलोभाक्रान्तमानसः ॥
दशाहेन द्विजः शुध्येत् द्वादशाहेन भूमिपः ।
अर्धमासेन वैश्यस्तु शूद्रो मासेन शुध्यति ॥
षड्रात्रेणाथवा सप्त त्रिरात्रेणाथवा पुनः ।
अनाथं चैव निर्बन्धुं ब्राह्मणं धनवर्जितम् ॥
स्नात्वा सम्प्राश्य तु घृतं शुध्यन्ति ब्राह्मणादयः ।
अपरश्चेत्परं वर्णमपरं चापरो यदि ॥
अशौचे संस्पृशेत् स्नेहात् तदाशुच्येन शुध्यति ।
एकाहात्क्षत्रिये शुद्धिर्वैश्ये तु स्याद्द्व्यहे सति ॥
शूद्रेषु च त्र्यहं प्रोक्तं प्राणायामशतं पुनः ।
अनस्थिसञ्चिते शूद्रे रौति चेद्ब्राह्मणः स्वकैः ॥
त्रिरात्रं स्यात्तथाशौचमेकाहं क्षत्रवैश्ययोः ।
अन्यथा चैव सज्योतिर्ब्राह्मणे स्नानमेव च ॥

तत्रैव नवमाध्याये—

अन्यजातिविवाहे च स महापातकी भवेत् ।
तस्य पातकिसंसर्गात् पातकित्वमवाप्नुयात् ॥
चतुर्विंशतिकृच्छ्रं स्याद्विवाहे त्वन्यकन्यया ।
संसर्गस्य तदर्धं स्यात्प्रायश्चित्तं सुतेन हि ॥

अङ्गिरःसंहितायां प्रथमाध्याये—

[अङ्गिरःसंहिता वचनानि ।]

अन्त्यानामपि सिद्धान्नं भक्षयित्वा द्विजातयः ।
चान्द्रं कृच्छ्रं तदर्धं तु ब्रह्मक्षत्रविशो विदुः ॥
रजकश्चर्मकारश्च नटो बुरुड एव च ।
कैवर्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ॥

अन्त्यजानां गृहे तोयं भाण्डे पर्युषितं च यत्।
प्रायश्चित्तं यदा पीतं तदैव हि समाचरेत्॥
चाण्डालकूपभाण्डेषु त्वज्ञानात्पिबते यदि।
प्रायश्चित्तं कथं तेषां वर्णे वर्णे विधीयते॥
चरेत्सान्तपनं विप्रः प्राजापत्यं तु भूमिपः।
तदर्धं तु चरेद्वैश्यः पादं शूद्रेषु दापयेत्॥
अज्ञानात्पिबते तोयं ब्राह्मणस्त्वन्त्यजातिषु।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥
विप्रो विप्रेण संस्पृष्ट उच्छिष्टेन कदाचन।
आचान्त एव शुध्येत अङ्गिरा मुनिरब्रवीत्॥
क्षत्रियेण यदा स्पृष्ट उच्छिष्टेन कदाचन।
स्नानं जपं तु कुर्वीत दिनस्यार्धेन शुध्यति॥
वैश्येन तु यदा स्पृष्टः शुना शूद्रेण वा द्विजः।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति॥
दशाहाच्छुध्यते विप्रो द्वादशाहेन भूमिपः।
पाक्षिकं वैश्य एवाह शूद्रो मासेन शुध्यति॥
अग्निहोत्री च यो विप्रः शूद्रान्नं चैव भोजयेत्।
पञ्च तस्य प्रणश्यन्ति आत्मा वेदास्त्रयोऽग्नयः॥
शूद्रान्नेन तु भुक्तेन यो द्विजो जनयेत्सुतान्।
यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रं प्रवर्तते॥
शूद्रेण स्पृष्टमुच्छिष्टं प्रमादादथ पाणिना।
तद्द्विजेभ्यो न दातव्यमापस्तम्बोऽब्रवीन्मुनिः॥
ब्राह्मणस्य सदा भुङ्क्ते क्षत्रियस्य च पर्वसु।
वैश्यस्यापत्सु भुञ्जीत न शूद्रस्य कदाचन॥

ब्राह्मणान्ने दरिद्रत्वं क्षत्रियान्ने पशुस्तथा ।
वैश्यान्नेन तु शूद्रत्वं शूद्रान्ने नरकं ध्रुवम् ॥
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ।
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतमिति ॥

कात्यायनसंहितायामष्टमखण्डे—

[कात्यायनसंहितावचनानि ।] वर्णज्यैष्ठ्येन बह्वीभिः सवर्णाभिश्च जन्मतः ।
कार्यमग्निच्युतेराभिः साध्वीभिर्मथनं पुनः ॥

गोतमसंहितायां प्रथमाध्याये—

उपनयनं ब्राह्मणस्याष्टमे नवमे पञ्चमे वा काम्यम् । गर्भादिः संख्या वर्षाणाम् । तद्द्वितीयं जन्म । तद्यस्मात्स आचार्यो वेदानुवचनाच्च । एकादशद्वादशयोः क्षत्रियवैश्ययोः । आषोडशाद्ब्राह्मणस्यापतिता सावित्री, द्वाविंशते राजन्यस्य, द्व्यधिकाया वैश्यस्य । मौञ्जीज्यामौर्वीसौत्रीमेखलाः क्रमेण कृष्णरुरुबस्ताजिनानि वासांसि शाणक्षौमचीरकुतपाः सर्वेषां कार्पासं चाविकृतम् । काषायमप्येके । वार्क्षं ब्राह्मणस्य माञ्जिष्ठहारिद्रे इतरयोः । बैल्वपालाशौ ब्राह्मणस्य दण्डावश्वत्थपैलवौ शेषे ॥

तत्रैव द्वितीयाध्याये—

व्यवहारप्राप्तेन सार्ववर्णिकं भैक्ष्यचरणमभिशस्तपतितवर्जम् । आदिमध्यान्तेषु भवच्छब्दः प्रयोज्यो वर्णानुपूर्व्येण ।

तत्रैव चतुर्थाध्याये—

चत्वारो धर्म्याः प्रथमाः षडित्येके अनुलोमानन्तरैकान्तरद्व्यन्तरासु जाताः सवर्णाम्बष्ठोग्रनिषाददौष्मन्तपारशवाः । प्रतिलोमासु सूतमागधायोगवक्षत्तृवैदेहकचाण्डालाः । ब्राह्मण्यजीजनत् पुत्रान् वर्णेभ्य आनुपूर्व्याद्ब्राह्मणसूतमागधचण्डालान् । तेभ्य एव

क्षत्रिया मूर्धावसिक्तक्षत्रियधीवरपुल्कसान् तेभ्य एव वैश्या भृज्यकण्टकमाहिष्यवैश्यवैदेहान् तेभ्य एव पारशवयवनकरणशूद्रान् शूद्रे त्येके। वर्णान्तरगमनमुत्कर्षापकर्षाभ्यां सप्तमेन पञ्चमेन चाचार्याः। सृष्टान्तरजातानां च प्रतिलोमस्तु धर्महीनः। शूद्रायां चासमानायां च शूद्रात्पतितवृत्तिरन्त्यः पापिष्ठः। पुनन्ति साधवः पुत्रांस्त्रिपौरुषानार्षाद्दश दैवाद्दशप्राजापत्याद्दश पूर्वान् दशावरानात्मानं च ब्राह्मीपुत्रा ब्राह्मीपुत्राः॥

तत्रैव सप्तमाध्याये –

आपत्कल्पो ब्राह्मणस्याब्राह्मणाद्विद्योपयोगोऽनुगमनं शुश्रूषाऽसमाप्ते ब्राह्मणो गुरुर्याजनाध्यापनप्रतिग्रहाः सर्वेषां पूर्वः पूर्वो गुरुस्तदलाभे क्षत्रवृत्तिस्तदलाभे वैश्यवृत्तिः। तस्यापण्यं गन्धरसकृतान्नतिलशाणक्षौमाजिनानि रक्तनिर्णिक्ते वाससी क्षीरं च सविकारं मूलफलपुष्पौषधमधुमांसतृणोदकापथ्यानि पशवश्च हिंसासंयोगे पुरुषवयाः कुमारीहेतवश्च नित्यं भूमिव्रीहियवाजाव्यश्व वृषभधेन्वनडुहश्चैके। विनिमयस्तु रसानां रसैः पशूनां च न लवणकृतान्नस्य तिलानां च समेनामेन तु पक्वस्य सम्प्रत्यर्थे सर्वथातुवृत्तिः अशक्तावशूद्रेण, तदप्येके प्राणसंशये तद्वर्णसङ्कराभक्ष्यणीयमस्तु। प्राणसंशये ब्राह्मणोऽपि शस्त्रमाददीत राजन्यो वैश्यकर्म वैश्यकर्म।

तत्रैव दशमाध्याये—

द्विजातीनामध्ययनमिज्या दानं ब्राह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः पूर्वेषु नियमस्त्वाचार्यज्ञातिप्रियगुरुधनविद्याविनिमयेषु ब्रह्मणः सम्प्रदानमन्यत्र यथोक्तात्। कृषिवाणिज्ये चास्वयंकृते कुसीदं च। राज्ञोऽधिकं रक्षणं सर्वभूतानां न्यायदण्डत्वं बिभृयाद् ब्राह्मणान् श्रोत्रियान् निरुत्साहांश्चाब्राह्मणानकरांश्चोपकुर्वाणांश्च

योगश्च विभजे भये विशेषेण चर्या च रथधनुर्भ्यां सङ्ग्रामे संस्थानमनिवृत्तिश्च न दोषो हिंसायामाहवेऽन्यत्र व्यश्वसारथ्यायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षारूढदूत गोब्राह्मणवादिभ्यः। क्षत्रियश्चेदन्यस्तमुपजीवेत् । तद्वृत्तिः स्यात् जेता लभेत साङ्ग्रामिकवित्तं वाहनं तु राज्ञ उद्धारश्चापृथग्जयेऽन्यत्तु यथार्हं भावयेद्राजा। राज्ञे बलिदानं कृषकैर्दशममष्टमं षष्ठं वा । पशुहिरण्ययोरप्येके । पञ्चाशद्भागाद्विंशतिभागः शुल्कः। पण्ये मूलफलपुष्पौषधमधुमांसतृणेन्धनानां षष्ठं तद्रक्षणधर्मित्वात् । तेषु तु नित्ययुक्तः स्यादधिकेन वृत्तिः। शिल्पिनो मासि मास्येकैकं कर्म कुर्युः। एतेनात्मोपजीविनी व्याख्याताः नीचक्रीतवन्तश्च । भक्तं तेभ्यो दद्यात् । पण्यं वणिग्भिरर्घापचये न देयम् । प्रणष्टमस्वामिकमधिगम्य राज्ञे प्रब्रूयुः। विख्याप्य संवत्सरं राज्ञा रक्ष्यम् । ऊर्ध्वमधिगन्तुश्चतुर्थं राज्ञः शेषम् । स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोर्निध्यधिगमो राजधनं न ब्राह्मणस्याभिरुपास्या ब्राह्मणा व्याख्याताः। षष्ठं लभेतेत्येके । चोरहृतमुपजित्य यथास्थानं गमयेत् कोशाद्वा दद्यात् रक्ष्यं बालधनमाव्यवहारप्रापणात् समावृत्तोर्वा। वैश्यस्याधिकं कृषिवाणिज्यंपाशुपाल्यकुसीदम्। शूद्रश्चतुर्थो वर्ण एकजातिस्तस्यापि सत्यमक्रोधः शौचमाचमनार्थे पाणिपादप्रक्षालनमेवैके श्राद्धकर्म भृत्यशरणं स्वदारवृत्तिः परिचर्या चोत्तरेषां तेभ्यो वृत्तिं लिप्सेत जीर्णान्युपानच्छत्रवासःकूर्चान्युच्छिष्टाशनं शिल्पवृत्तिश्च यं चार्यमाश्रितो भर्तव्यस्तेन क्षीणोऽपि तेन चोत्तरस्तदर्थोऽस्य निश्चयः स्यादनुज्ञातोऽस्य नमस्कारो मन्त्रः पाकयज्ञैः स्वयं यजेतेत्येके। सर्वो चोत्तरोत्तरं परिचरेयुरार्यानार्ययोर्व्यतिक्षेपे कर्मणः साम्यं साम्यम्।

तत्रैवैकोनविंशाध्याये—

उक्तो वर्णधर्मश्चाश्रमधर्मश्च । इति ।

आपस्तम्बसंहितायां प्रथमाध्याये—

आपस्तम्बं प्रवक्ष्यामि प्रायश्चित्तविनिर्णयम् ।
दूषितानां हितार्थाय वर्णानामनुपूर्वशः ॥

तत्रैवाष्टमाध्याये—

ब्राह्मणस्य सदा भुङ्क्ते क्षत्रियस्य तु पर्वणि ।
वैश्यस्य यज्ञदीक्षायां शूद्रस्य न कदाचन ॥
अमृतं ब्राह्मणस्यान्नं क्षत्रियस्य पयः स्मृतम् ।
वैश्यस्याप्यन्नमेवान्नं शूद्रस्य रुधिरं स्मृतम् । इति ।

[सूतसंहिता वचनानि ।] सूतसंहितायां शिवमाहात्म्यखण्डे-
द्वादशाध्याये—

नैमिषीया ऊचुः--भगवन्सर्वशास्त्रार्थपरिज्ञानवतां वर ।
जातिनिर्णयमस्माकं वद वेदैकदर्शितम् ॥

सूत उवाच—

वक्ष्ये लोकोपकाराय जातिनिर्णयमादरात् ।
अगस्त्योऽपि पुराऽपृच्छत्प्रणम्य वृषवाहनम् ॥
पुरा सर्वे मुनिश्रेष्ठाः प्रलये विलयं गते ।
अन्धकारावृते लोके विष्णोरंशो महाद्युतिः ॥
सहस्रशीर्षा पुरुषो विष्णुर्नारायणाभिधः ।
क्षीराब्धौ चिन्तयन् रुद्रं सुष्वाप ब्रह्मवित्तमाः ॥
कदाचित्पङ्कजं विप्रास्तरुणादित्यसन्निभम् ।
तस्य सुप्तस्य देवस्य नाभ्यां जातं महत्तमम् ॥
हिरण्यगर्भो भगवान् ब्रह्मा विश्वजगत्पतिः ।

आस्थाय परमां मूर्तिं तस्मिन्पद्मे समुद्बभौ ॥
तस्य वेदविदां श्रेष्ठाः ब्रह्मणः परमेष्ठिनः ।
महादेवाज्ञया पूर्वं वासनासहितान् मुखात् ॥
ब्राह्मणा ब्राह्मणस्त्रीभिः सह जातास्तपोधनाः ।
तस्य हस्तात्सह स्त्रीभिर्जज्ञिरे पृथिवीभुजः ॥
ऊरुभ्यां सहिताः स्त्रीभिर्जाता वैश्याः शिवाज्ञया ।
पद्भ्यां शूद्राः सह स्त्रीभिर्जज्ञिरे वेदवित्तमाः ॥
स्वस्त्रीषु स्वस्य वेधेन मार्गेणोत्थः स्वयं भवेत् ।
अवरासूत्तमाज्जातस्त्वनुलोमः प्रकीतितः ॥
उत्तमास्ववराज्जातः प्रतिलोमः प्रकीर्तितः ।
वर्णास्त्रीष्वनुलोमेन जातः स्यादान्तरालिकः ॥
वर्णासु प्रतिलोमेन जातो व्रात्य इति स्मृतः ।
ब्राह्मण्यां सधवायां यो ब्राह्मणेन द्विजोत्तमाः ॥
जातश्चौर्येण कुण्डोऽसौ विधवायां तु गोलकः ।
नृपायां ब्राह्मणाज्जातः सवर्ण इति कीर्तित ॥
चौर्यादस्यामनेनोत्थो नाम्ना नक्षत्रजीवितः ।
वैश्यायां ब्राह्मणाज्जातो निषादो वेदवित्तमाः ॥
अस्यामनेन चौर्येण कुम्भकारोऽभिजायते ।
उर्ध्वनापित एवासौ नाम्ना वेदविदां वराः ॥
शूद्रायां ब्राह्मणेनोत्थो द्विजः पारशवः स्मृतः ।
चौर्येणास्यां निषादोऽभून्नाम्ना वेदार्थवित्तमाः ॥
दौष्यन्त्यां ब्राह्मणाज्जात आपीताख्यो भवेद् द्विजाः ।
आयोगव्यां तु विप्रेण पिङ्गलो नाम जायते ।
विप्रायां क्षत्रियाज्जातः सूत इत्युच्यते बुधैः ॥

चौर्येणास्यामनेनोत्थो रथकार इति स्मृतः ।
क्षत्रियस्त्रीषु वैश्यात्तु भोजश्चौर्याद्विजायते ॥
वैश्यायां क्षत्रियाज्जातो माहिष्योऽम्बष्ठसंज्ञितः ।
चौर्येणास्यामनेनोत्थो भवेदश्विकसंज्ञितः ॥
शूद्रायां क्षत्रियाज्जातो दौषन्त्याख्यो भवेद्द्विजाः ! ।
चौर्येणास्यामनेनोत्थः शूलिको भवति द्विजाः ! ॥
ब्राह्मण्यां वैश्यतो जातः क्षत्ता भवति नामतः ।
अस्यामनेन चौर्येण म्लेच्छो विप्राः प्रजायते ॥
जातो वैश्यान्नृपायां यः शालिको मागधश्च सः ।
अस्यामनेन चौर्येण पुलिन्दो जायते बुधाः !
मणिकारस्तु वैश्यायां चौर्याद्वैश्येन जायते ।
शूद्रायां वैश्यतो जात उग्र इत्युच्यते बुधैः ॥
अस्यामनेन चौर्येण कटकारः प्रकीर्तितः ।
शूद्राद्विप्राङ्गनायां तु चण्डालो नाम जायते ॥
अस्यामनेन चौर्येण बाह्यदासस्तु जायते ।
जातः शूद्रेण राजन्यां वैदेहाख्यश्च पुल्कसः ॥
अस्यामनेन चौर्येण बेल्लवाख्यो विजायते ।
जातः शूद्रेण वैश्यायां भवेत्पतनशालिकः ॥
अनेनास्यां भवेच्चक्री चौर्यात्ब्रह्मविदांवराः ! ।
चौर्याच्छूद्रेण शूद्रायां जातो मालविको भवेत् ॥
अम्बाष्ठायां समुत्पन्नः सवर्णेन द्विजोत्तमाः ! ।
आग्नेयनर्तकाख्यः स इति प्रोक्तो महात्मभिः ॥
करणायां तु विप्रेन्द्रा माहिषाद्यो विजायते ।
स तक्षा रथकारश्च प्रोक्तः शिल्पी च वर्धकी ॥

लोहकारश्च कर्मार इति वेदार्थवेदिभिः ।
विप्रायामुग्रतो जातस्तत्त्ववृत्तिः प्रकीर्तितः ॥
वैश्यायां तेन निष्पन्नः समुद्रो नाम जायते ।
ब्राह्मण्यां यो निषादेन जातो नापितसंज्ञितः ॥
नृपायां यो निषादेन जातोऽधोनापितः स्मृतः ।
विप्रायां नापिताज्जातो वेणुकः परिकीर्तितः ।
राज्ञ्यां यो जनितस्तेन चर्मकारः स उच्यते ॥
द्विजोत्तमायां दौष्यन्ताद्भागलब्धः प्रजायते ।
वैश्यायां तु निषादेन सुनिषादोऽभिजायते ॥
ब्राह्मण्यां यो मुनिश्रेष्ठा वैदेहेन प्रजायते ।
स नाम्ना रजको ज्ञेयः पण्डितैः पण्डितोत्तमाः ॥
द्विजोत्तमायां चाण्डालाद्यः पुमाञ्जायते भुवि ।
श्वपचः स तु विज्ञेयः सर्वशास्त्रविशारदैः ॥
श्वपचाद्विप्रकन्यायां गुहको जायते सुतः ।
वैश्यायां यस्तु चण्डालाज्जातो दन्तकपोलकः ॥
जनितोऽनेन शूद्रायां विप्रा आश्रयकः स्मृतः ।
प्रतिलोमनिषादाद्यः शूद्रायां स तु भैरवः ॥
शूद्रायां मागधाज्जातः कुकुन्दः प्रोच्यते बुधैः ।
नृपायां मागधाज्जातः खनकः परकीर्तितः ॥
खनकाद्राजकन्यायामुद्बन्धो नाम जायते ।
आयोगवेन ब्राह्मण्यां चर्मकारः प्रजायते ॥
विप्रव्रात्यात्तु विप्रायां बन्दिको नाम जायते ।
क्षत्रव्रात्यान्नृपायां तु जल्लो मल्लश्च मल्लकः ॥
मल्लात्तु पिच्छलस्तेन नटाख्यो जायते भुवि ।

नटात्करणसंज्ञस्तु करणात्त्वष्टसंज्ञितः ॥
तेन द्रमिल उत्पन्नो नृपायां वेदवित्तमाः।
वैश्यव्रात्यात्तु वैश्यायां सुधन्वा जायते द्विजाः ॥
अनेन चौर्यसंज्ञस्तु हारुषो हारुषादपि।
द्विजन्मा जायते तस्मान्मैत्रो मैत्रात्तु सात्वतः ॥
मैत्राद्वैदेहको जातः स मातङ्गश्च कीर्तितः।
मातङ्गाज्जायते सूतः सूताद्दस्युः प्रजायते ॥
दस्योर्जातो मुनिश्रेष्ठा मालाकारः समाख्यया।
प्रतिलोमनिषादेन कैवर्ताख्यो विजायते ॥
नीलकारिस्त्रियां जात आयोगेन द्विजोत्तमाः।
नीलादिवर्णविक्रेता नाम्ना वेदार्थवित्तमाः ॥
कारौ चारुसमाख्यायां निषादेन मुनीश्वराः।
चर्मजीवी समुत्पन्नः सर्वविज्ञानसागराः ॥
युष्माकं संग्रहेणैव मयोक्तो जातिनिर्णयः।
यथागस्त्याच्छ्रुतः पूर्वं सद्गुरोरनुशासनात् ॥
स्वजात्युक्तं यथाशक्ति कुरुते कर्म यः पुमान्।
मुक्तिस्तस्यैव संसारादिति वेदानुशासनम् ॥
सर्वेषां जन्मना जातिर्नान्यथा कर्मकोटिभिः।
पश्वादीनां यथा जातिर्जन्मनैव नचान्यथा ॥
सापि स्थूलस्य देहस्य भौतिकस्य न चात्मनः।
तथापि देहेऽहम्मानादात्मा विप्रादिसंज्ञितः ॥ इति ॥

[ व्यासादिजाति ब्रह्मर्षित्वप्रसिद्ध्या चातुर्वर्ण्यं गुणकर्मानुसार्येव युक्त-परीक्षणम्। ]

एतेन—व्यासपराशरादीनां कैवर्तीश्वपाक्यादिसमुत्पन्नानामपि ब्रह्मर्षित्वप्रसिद्ध्या चातुर्वर्ण्यं गुणकर्मानुसार्येव युक्तमिति शङ्कापि परास्ता; व्यासादीनां ब्रह्मर्षित्वं हि बीजप्र-

भावनिबन्धनमेव। उक्तं च पूर्वाचार्यैः--यस्माद्बीजप्रभावेण तिर्यग्जा ऋषयोऽभवन् । पूजिताश्च प्रशस्ताश्च तस्माद्बीजं प्रशस्यते ॥इति। तथाच योगसिद्धस्य स्ववशसर्वैश्वर्यस्य च कस्यचन महात्मनो यस्य स्वापत्ये स्वबीजशक्त्याधानसामर्थ्यं वर्तते, तत्संकल्पविशेषेण सञ्जातानां तदनुग्रहपात्राणां तत एव स्वयंप्रभातसर्वविद्यानां च ब्रह्मर्षित्वमित्येतावता नेदानीन्तनानां सङ्करजातानामपि ब्रह्मर्षित्वं गुणकर्मानुसारेण कथमपि भविष्यति। सर्वथा तु व्यासादिदृष्टान्तानुसारेण चण्डालानां तपोनिष्ठानामपि ब्राह्मण्यं साधयितुं न शक्यम् । व्यक्तं चैतन्महाभारते. इन्द्रमतङ्गसंवादे प्रतिपादितम् । तद्यथा—

युधिष्ठिर उवाच—

[एकस्मिन्नेव जन्मनि जात्यपरिवर्तं महाभारतगतेन्द्रमतङ्गसंवादोपष्टम्भः]

क्षत्रियो यदि वा वैश्यः शूद्रो वा राजसत्तमः ।
ब्राह्मण्यं प्राप्नुयाद्येन तन्मे व्याख्यातुमर्हसि ॥
ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्वर्णैर्नराधिप ।
तपसा वा सुमहता कर्मणा वा श्रुतेन वा ॥
ब्राह्मण्यमथ चेदिच्छेत् कथं शक्यं पितामह ।

भीष्म उवाच—

ब्राह्मण्यमतिदुष्प्रापं वर्णैः क्षत्रादिभिस्त्रिभिः ।
परं हि सर्ववर्णानां स्थानमेतद्युधिष्ठिर ; ॥
बह्वीस्तु संसरन्योनीः जायमानः पुनःपुनः ।
पर्याये तात कस्मिंश्चित् ब्राह्मणो नाम जायते ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मतङ्गस्य च संवादं गर्दभ्याश्च युधिष्ठिर ।
द्विजातेः कस्यचित्तातः तुल्यवर्णः सुतोऽभवत् ।
मतङ्गो नाम नाम्नासीत् सर्वैः समुदितो गुणैः ॥

स यज्ञकारः कौन्तेय ! पित्रोत्सृष्टः परन्तप ! ।
प्रायाद्गर्दभयुक्तेन रथेनाप्याशुगामिना ॥
सबालं गर्दभं राजन् ! वहन्तं मातुरन्तिके ।
निरवध्यत् प्रतोदेन नासिकायां पुनःपुनः ॥
तं दृष्ट्वा नासि निर्भिन्नं गर्दभी पुत्रगर्द्धिनी ।
उवाच माशुचः पुत्र ! चण्डालस्त्वाऽभिविध्यति ॥
ब्राह्मणो दारुणो नास्ति मैत्रो ब्राह्मण उच्यते ।
आचार्यः सर्वभूतानां शास्ता किं प्रहरिष्यति ॥
अयं तु पापप्रकृतिर्बाले न कुरुते दयाम् ।
स्वयोनिं मानयत्येष भावो भावं नियच्छति ॥
एतच्छ्रुत्वा मतङ्गस्तु दारुणं रासभीवचः ।
अवतीर्य रथात्तूर्णं रासभीं प्रत्यभाषत ॥
ब्रूहि रासभि कल्याणि ! माता मे येन दूषिता ।
केन मां वेत्सि चण्डालं ब्राह्मण्यं येन मेऽनशत् ॥

गर्दभ्युवाच—

ब्राह्मण्यां वृषलेन त्वं मत्तायां नापितेन हि ।
जातस्त्वमसि चण्डालो ब्राह्मण्यं तेन तेऽनशत् ।
एवमुक्तो मतङ्गस्तु प्रतियायाद्गृहं पुनः ।
तमागतमभिप्रेत्य पिता वाक्यमथाब्रवीत् ॥
कस्मात्प्रतिनिवृत्तोऽसि कच्चिन्न कुशलं तव ।

मतङ्ग उवाच—

अन्ययोनिरयोनिर्वा कथं स कुशलीभवेत् ।
कुशलं तु कुतस्तस्य यस्येयं जननी पितः ! ॥
ब्राह्मण्यां वृषलाज्जातं पितर्वेदयते हि माम् ।

अमानुषी गर्दभीयं तस्मात्तप्स्ये तपो महत् ॥
एवमुक्त्वा स पितरं प्रतस्थे कृतनिश्चयः ।
ततो गत्वा महारण्यमतपत्सुमहत्तपः ॥
ततः स तापयामास विबुधांस्तपसान्वितः ।
तं तथा तपसा युक्तमुवाच हरिवाहनः ॥
मतङ्ग तप्स्यसे किन्त्वं भोगानुत्सृज्य मानुषान् ।
वरं ददामि ते हन्त वृणीष्व त्वं यदीच्छसि ॥

मतङ्ग उवाच—

ब्राह्मण्यं कामयानोऽहमिदमारब्धवांस्तपः ।
गच्छेयं तदवाप्येह वर एष वृतो मया ॥

भीष्म उवाच—

एतच्छ्रुत्वा तु वचनं तमुवाच पुरन्दरः ।
मतङ्ग ! दुर्लभमिदं विप्रत्वं प्राप्यते त्वया ॥
ब्राह्मण्यं प्रार्थयानस्त्वमप्राप्यमकृतात्मभिः ।
विनशिष्यसि दुर्बुद्धे ! तदुपारम माचिरम् ॥
श्रेष्ठं यत्सर्वभूतेषु तपो यदतिवर्तते ।
तदग्र्यं प्रार्थयानस्त्वमचिराद्विनशिष्यसि ॥
देवतासुरमर्त्येषु यत्पवित्रं परं स्मृतम् ।
चाण्डालयोनौ जातेन न तत्प्राप्यं कथञ्चन ॥
एवमुक्तो मतङ्गस्तु संशितात्मा यतव्रतः ।
अतिष्ठदेकपादेन वर्षाणां शतमच्युतः ॥
तमुवाच ततः शक्रः पुनरेव महायशाः ।
ब्राह्मण्यं दुर्लभं तात ! प्रार्थयानो न लप्स्यसे ॥
माकृथाः साहसं तात नैष धर्मपथस्तव ।

विमार्गतो मार्गमाणः सर्वथा न भविष्यसि ॥
नहि शक्यं त्वया प्राप्तुं ब्राह्मण्यमिह दुर्मते ।
मातङ्ग परमं स्थानं वायमाणोऽसकृन्मया ॥
चिकीर्षस्येव तपसा सर्वथा न भविष्यसि ।
तिर्यग्योनिगतः सर्वो मानुष्यं यदि गच्छति ॥
स जायते पुल्कसो वा चण्डालो वाप्यसंशयम् ।
पुल्कसः पापयोनिर्वा यः कश्चिदिह कांद्यते ॥
स तस्यामेव सुचिरं मातङ्ग परिवर्तते ।
ततो दशशते काले लभते शूद्रतामपि ॥
शूद्रयोनावपि ततो बहुशः परिवर्तते ।
ततस्त्रिंशद्गुणे काले लभते वैश्यतामपि ॥
वैश्यतायामपि चिरं कालं तत्रैव वर्तते ।
सतः षष्टिगुणे काले लभते ब्रह्मबन्धुताम् ॥
ब्रह्मबन्धुश्चिरंकालं ततस्तु परिवर्तते ।
ततस्तु द्विशते काले लभते काण्डपृष्ठताम् ॥
काण्डपृष्ठश्चिरंकालं तत्रैव परिवर्तते ।
ततस्तु त्रिशते काले लभते ऽ.पतामपि ॥
तं च प्राप्य चिरंकालं तत्रैव परिवर्तते ।
ततश्चतुश्शते काले श्रोत्रियो नाम जायते ॥
श्रोत्रियत्वे चिरंकालं तत्रैव परिवर्तते ।
मतङ्ग सम्प्रधार्यैवं यदहं त्वमचूचुदम् ॥
वृणीष्व काममन्यं वै ब्राह्मण्यं हि सुदुर्लभम् ।
एवमुक्तो मतङ्गस्तु संशितात्मा धृतव्रतः ॥
सहस्रमेकपादेन ततो ध्याने व्यतिष्ठत ।
तं सहस्रावरे काले शक्रो द्रष्टुमथागमत् ॥
तदेव च पुनर्वाक्यमुवाच बलवृत्रहा ।

मतङ्ग उवाच—

इदं वर्षसहस्रं वै ब्रह्मचारी समाहितः ।
अतिष्ठमेकपादेन ब्राह्मण्यं नाप्नुयां कथम् ॥

शक्र उवाच—

चण्डालयोनौ जातेन नावाप्यं वै कथञ्चन ।
अन्यं कामं वृणीष्व त्वं मा वृथा तेऽस्त्वयं श्रमः ॥
एवमुक्तो मतङ्गस्तु भृशं शोकपरायणः ।
अध्यतिष्ठद्गयां गत्वा सोऽङ्गुष्ठेन शतं समाः ॥
तं तपन्तमभिद्रुत्य पाणिं जग्राह वासवः ।

शक्र उवाच—

मातङ्ग ब्राह्मणत्वं ते विरुद्धमिह दृश्यते ।
ब्राह्मण्यं दुर्लभतरं संवृत्तं परिपन्थिभिः ॥
बह्वीस्तु संसरन्योनीर्जायमानः पुनःपुनः ।
पर्याये तात कस्मिंश्चित् ब्राह्मण्यमिह विन्दति ॥
तदुत्सृज्येह दुष्प्रापं ब्राह्मण्यमकृतात्मभिः ।
अन्यं वरं वृणीष्व त्वं दुर्लभोऽयं हि ते वरः ॥
किं मां तुदसि दुःखार्तं मृतं मारयसेऽत्र माम् ।
त्वां तु शोचामि यो लब्ध्वा ब्राह्मण्यं न बुभूष्यसे ॥
ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्वर्णैर्दुरासदम् ।
सुदुर्लभं तदावाप्य नानुतिष्ठन्ति मानवाः ॥ इत्यादि ।

सर्वथा तु व्यासादिदृष्टान्तेनेदानीन्तनानामपि कर्मकृतं ब्राह्मण्यं साधयितुं न शक्यते । व्यक्तं चानुशासनिके पर्वणि सप्तदशोत्तरे द्विशततमेऽध्याये न कर्मकृतं ब्राह्मण्यम्, किन्तु स्वभावसिद्धमेवेति विवेचितम् । तद्यथा—

उमोवाच—

[ उक्तार्थे उमा-महेश्वर संवादोपष्टम्भः । ]

भगवन्भगनेत्रघ्न कालसूदन शङ्कर ।
इमे वर्णाश्च चत्वारो विहिताः स्वस्वभावतः ॥
उताहो क्रियया वर्णाः सम्भवन्ति महेश्वर ।
एवं मे संशयप्रश्नस्तमुच्छेत्तुं त्वमर्हसि ॥

महेश्वर उवाच—

स्वभावादेव विद्यन्ते चत्वारो ब्राह्मणादयः ।
एकजात्या सुदुष्प्रापमन्यवर्णत्वमागतम् ॥
तच्च कर्मविशेषेण पुनर्जन्मनि जायते ।
तस्मात्तेषां प्रवक्ष्यामि तत्सर्वं कर्मपाकजम् ॥
ब्राह्मणस्तु नरो भूत्वा स्वजातिमनुपालयन् ।
दृढं ब्राह्मणकर्माणि वेदोक्तानि समाचरेत् ॥
सत्यार्जवपरो भूत्वा दानयज्ञरतस्तथा ।
सत्यां जात्यां समुदितो जातिधर्मान्न हापयेत् ॥
एवं स वर्तमानस्तु कालधर्मं गतः पुनः ।
स्वर्गलोके हि जायेत स्वर्गभोगाय भामिनि ॥
तत्क्षये ब्राह्मणो भूत्वा तथैव नृषु जायते ।
एवं स्वकर्मणा मर्त्यः स्वजातिं लभते पुनः ॥
अपरस्तु तया कश्चिद्ब्रह्मयोनिसमुद्भवः ।
अवमत्यैव तां जातिमज्ञानतमसा वृतः ॥
अन्यथा वर्तमानस्तु जातिकर्माणि वर्जयेत् ।
शूद्रवद्विचरेल्लोके शूद्रकर्माभिलापवान् ॥
शूद्रैः सह चरन्नित्यं शौचमङ्गलवर्जितः ।
स चापि कालधर्मस्थो यमलोके सुदण्डितः ॥
यदि जायेत मर्त्येषु शूद्र एवाभिजायते ।

शूद्र एवं भवेद्देवि ब्राह्मणोऽपि स्वकर्मणा ॥
तथैव शूद्रस्त्वपरः शूद्रकर्माणि वर्जयेत् ।
सत्यार्जवपरो भूत्वा दानधर्मपरस्तथा ॥
मन्त्रब्राह्मणसत्कर्ता मनसा ब्राह्मणप्रियः ।
एवं युक्तसमाचारः शूद्रोऽपि मरणं गतः ॥
स्वर्गलोके हि जायेत तत्त्वये नृषु जायते ।
ब्राह्मणानां कुले मुख्ये वेदस्वाध्यायसंयुते ॥
एवमेव सदा लोके शूद्रो ब्राह्मण्यमाप्नुयात् ।
एवं क्षत्रियवैश्याश्च जातिधर्मेण संयुताः ॥
अन्यथा तु न शक्यं तत् लोकसंस्थितिकारणम् ।
तस्माज्जातिं विशिष्टां तु कथञ्चित्प्राप्य पण्डितः ॥
सर्वथा तां तथा रक्षेत् न पुनर्भ्रश्यते यथा ॥ इत्यादि ।

अनेन च सन्दर्भेण स्पष्टमेवेदमवगम्यते यत् कर्मकृतं ब्राह्मण्यमित्यादिवचनानामपि जन्मान्तरीयब्राह्मण्याभिप्रायतयैव योजनं युक्तमिति । एतेन—'शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्, इत्यादिवचनान्यपि--व्याख्यातानि ।

यत्तु शान्तिपर्वणि १८६-१८७ तमयोरध्याययोः—

भृगुरुवाच—

असृजद्ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतीन् ।
[महाभारतगत समालोचनम् आत्मतेजोभिनिर्वृत्तान् भास्कराग्निसमप्रभान् ॥
ततः सत्यं च धर्मं च तपो ब्रह्म च शाश्वतम् ।
आचारं चैव शौचं च सर्गादौ विदधे प्रभुः ॥
देवदानवगन्धर्वा दैत्यासुरमहोरगाः ।
यक्षराक्षसनागाश्च पिशाचा मनुजास्तथा ॥
ब्राह्मणाः क्षत्रिया वैश्या शूद्राश्च द्विजसत्तम ।

ये चान्ये भूतसंघानां संघातास्तांश्च निर्ममे ॥
ब्राह्मणानां सितो वर्णः क्षत्रियाणां तु लोहितः ।
वैश्यानां पीतको वर्णः शूद्राणामसितस्तथा ॥

भरद्वाज उवाच—

चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभिद्यते ।
सर्वेषां खलु वर्णानां दृश्यते वर्णसंकरः ॥
कामः क्रोधो भयं लोभः शोकश्चिन्ता क्षुधा श्रमः ।
सर्वेषां नः प्रभवति कस्माद्वर्णो विभिद्यते ॥
स्वेदमूत्रपुरीषाणि श्लेष्मा पित्तं सशोणितम् ।
तनुः क्षरति सर्वेषां कस्माद्वर्णो विभज्यते ॥
जङ्गमानामसंख्येयाः स्थावराणां च जातयः ।
तेषां विविधवर्णानां कुतो वर्णविनिश्चयः ॥

भृगुरुवाच—

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् ।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् ॥
कामभोगप्रियास्तीक्ष्णाः क्रोधना प्रियसाहसाः ।
युक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ॥
गोषु वृत्तिं समाधाय पीताः कृष्युपजीवनाः ।
स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः ॥
हिंसानृतप्रिया लुब्धा सर्वकर्मोपजीवनाः ।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः ॥
इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः ।
धर्मो यज्ञक्रिया चैषां नित्यं न प्रतिषिध्यते ॥
इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती ।
विहिता ब्रह्मणा पूर्वं लोभात्त्वज्ञानतां गताः ॥

भरद्वाज उवाच—

ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम ॥
वैश्यः शूद्रश्च विप्रर्षे तद्ब्रूहि वदतां वर ! ॥

भृगुरुवाच—

जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः ।
वेदाध्ययनसम्पन्नः षट्सु कर्मस्ववस्थितः ॥
शौचाचारस्थितः सम्यक् विघसाशी गुरुप्रियः ।
नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ॥
सत्यं दानमथाद्रोह आनृशंस्यं क्षमा घृणा ।
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥
क्षत्रजं सेवते कर्म वेदाध्ययनसङ्गतः ।
दानादानरतिर्यस्तु स वै क्षत्रिय उच्यते ॥
कृषिगोरक्षवाणिज्यं यो विशत्यनिशं शुचिः ।
वेदाध्ययनसम्पन्नः स वैश्य इति संज्ञितः ॥
सर्वभक्ष्यरतिर्नित्यं सर्वकर्मकरोऽशुचिः ।
त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः ॥
शूद्रे चैतद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रः ब्राह्मणो नच ब्राह्मणः ॥
सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः ।
एतत्पवित्रं ज्ञातव्यं तथा चैवात्मसंयमः ॥

इत्यादि वर्णितम्, तत्र प्रजापतीनां सर्वेषामीश्वरसंकल्पविशेषमात्रेण ब्राह्मण्यं ब्राह्मणमातापितृकत्वाभावेऽपि लोकविलक्षणमेव स्वीक्रियत इति न कोऽपि विरोधः ।

[ सर्गादौ चातुर्वर्ण्यव्यवस्थापनम् । ]

एतेन—सृष्ट्यादावपि चातुर्वर्ण्यसृष्टिराम्नायमानाऽप्यस्मत्सिद्धान्तस्यैवानुकूलेत्यपि व्याख्यातम् । यत्तु सृष्ट्यारम्भकाले सितादिवर्णा एव ब्राह्मणादय

आसन्निति विवेचितम् । तदिदमपि शमदमादिगुणविशेषसम्पन्ना एव तदानीं सर्वेऽपि ब्राह्मणादय आसन्, इत्येव गमयतीति कालभेदेनेन्द्रियनिग्रहाद्यकरणात् गुणासंकरेऽपि न विरोधः । अत्र हि भरद्वाजप्रश्नोत्तरमुखेन भृगुः सम्यगेवापेक्षितं प्रतिपादयतीति विशदमिदं सर्वेषाम् । अत एव कथं वर्णेन वर्णनिश्चय इतिप्रश्नोत्तरदानावसरे सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रह इतिक्रोधादिनिग्रहावश्यकता प्रतिपादितोपपद्यते । अयमाशयः—कामक्रोधादिपारवश्येन स्वजातिभ्रंशोऽपि यः सर्वेषां भवति तत्परिहारोपायः क इत्येव भरद्वाजः पृच्छति ब्राह्मणः केन भवतीति । अत एव पूर्वमेव द्विजाः क्षत्रतां वैश्यतां शूद्रतां गता इत्यादिना न पौनरुक्त्यम् । एवं चास्य सन्दर्भस्य कर्ममात्रेण ब्राह्मण्यादिव्यवस्थापने न तात्पर्यमित्येवोरीकर्तव्यम् । एतेन—ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गता इत्यपि—व्याख्यातम् । अनेन हि जातमात्रस्य ब्राह्मणादेवर्णत्वम् उपनयनाद्यनन्तरं तत्तत्कर्मानुष्ठानेनैव भवतीत्येव बोध्यते । अन्यथा हि पूर्वोक्तोमामहेश्वरसंवादोऽसङ्गत एव स्यात् । अत्र सन्दर्भद्वयमध्ये पश्चात्तनस्योमामहेश्वरसंवादस्यैव स्वभावतो ब्राह्मण्यादिकमुत कर्मत इति प्रश्नोत्तरलिङ्गोपष्टब्धस्य प्राबल्यमिति कर्मकृतं ब्राह्मण्यं न महाभारतसम्मतम् ।

एतेन वनपर्वणि १८२ तमेऽध्याये युधिष्ठिराजगरसंवादे—

[वनपर्वगत-युधिष्ठिराजगरसंवादपरीक्षणम् ।]

अजगरः—ब्राह्मणः को भवेद्राजन् वेद्यं किञ्च युधिष्ठिर ! ।
कृतब्रह्ममतिं त्वांहि वाक्यैरनुमिनोम्यहम् ॥
सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा ।
दृश्यन्ते यत्र नागेद्र स ब्राह्मण इति स्मृतः ॥
वेद्यं सर्प परं ब्रह्म निर्दुःखमसुखं च यत् ।
यत्र गत्वा न शोचन्ति भवतः किं विवक्षितम् ॥

सर्पः— शूद्रेष्वपि च सत्यं च दानमक्रोध एव च ।
आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर ! ॥
युधिष्ठिरः—शूद्रे षु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
नवै शूद्रो भवेच्छूद्रो ब्राह्मणो नच ब्राह्मणः ॥
यत्रैतल्लक्ष्यते सर्प ! वृत्तं स ब्राह्मणः स्मृतः ।
यत्रैतन्न भवेत्सर्प ! तं शूद्र इति निर्दिशेत् ॥
सर्पः— यदि ते वृत्ततो राजन् ! ब्राह्मणः प्रसमीक्षितः ।
वृथा जातिस्तदायुष्मन् ! कृतिर्यावन्न विद्यते ॥
युधिष्ठिरः- जातिरत्र महासर्प ! मनुष्यत्वे महामते !
संकरात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ॥
सर्वे सर्वास्वपत्यानि जनयन्ति यदा नराः ।
वाङ्मैथुनमथो जन्म मरणं च समं नृणाम् ॥
तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः ।
प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ॥
तथोपनयनं प्रोक्तं द्विजातीनां यथाक्रमम् ।
वृत्त्या शूद्रसमो ह्येष यावद्वेदे न जायते ॥
तस्मिन्नेवं मतिद्वैधे मनुः स्वायम्भुवोऽब्रवीत् ।
कृतकृत्याः सर्ववर्णा यदि वृत्तं न पश्यति ॥
संकरस्त्वत्र नागेन्द्र बलवान् प्रसमीक्षितः ।
यत्रेदानीं महासर्प संस्कृतं वृत्तमिष्यते ।
तं ब्राह्मणमहं पूर्वमुक्तवान्भुजगोत्तमः ॥

इति श्लोका अपि व्याख्याताः । अत्र यद्यपि वृत्तेनैव ब्राह्मण्यं प्रथमत उक्तम्, तथापि तस्माच्छीलं प्रधानेष्टमिति श्लोके स्वाभाविकापि जातिर्वर्तते, यदि न वृत्तं निष्प्रयोजना संकरेणासुविज्ञेया च । तथाच संकरसंशयकाले शीलेनैव ब्राह्मण्यनिर्णयः कर्तव्य इति न दोषः ॥

[ छान्दोग्यगतगौतमजाबालसंवादपरीक्षणम् ]

एतेन--छान्दोग्यगतगौतमजाबालसंवादोऽपि व्याख्यातः। तत्रापि हि पितृनिर्णयानवसर एव वृत्तेन जातिनिर्णयः कृतः। तथाच स्वाभाविकजात्यभावे नोक्तानि वचनानि प्रमाणानि, किन्तु यस्य स पितृविनिर्णयो नास्ति, तस्यैव शीलतो जातिनिर्णयः कर्तव्य इति न विरोधः। यथाच स्वाभाविकं शीलं पिहितमपि कथमपि प्रकाशत एव, तथा भारत एव वक्तव्यम्। यथा शान्तिपर्वणि तृतीयाध्याये—कर्णेन ब्राह्मणवेषधारिणा स्त्रीयं क्षात्रं शीलं पिधापितमपि कथमपि प्रकाशं प्रापदिति विवेचितम्। तदुक्तं तत्र—

अतिदुःखमिदं मूढ न जातु ब्राह्मणः सहेत्।
क्षत्रियस्येव ते धैर्यं कामया सत्यमुच्यताम्॥

इत्यादि। तथा च भारतपर्यालोचनमपि सम्यक्क्रियमाणं जातिस्वाभाविकतामेव गमयति। अत एव शान्तिपर्वणि द्विसप्ततितमे ७२ अध्याये—

कुतः स्वित् ब्राह्मणो जातो वर्णाश्चापि कुतस्त्रयः।
कश्चात्र भवति श्रेयान् तन्मे व्याख्यातुमर्हसि॥

पुरूरवाः—

ब्राह्मणो मुखतः सृष्टो ब्रह्मणो राजसत्तम।
बाहुभ्यां क्षत्रियः सृष्ट ऊरुभ्यां वैश्य एव च॥
वर्णानां परिचर्यार्थं त्रयाणां भरतर्षभ।
वर्णश्चतुर्थः पश्चात्तु पद्भ्यां शूद्रो विनिर्मितः॥

इति सृष्टिकाल एव ब्राह्मणोत्पत्तिराम्नायमानोपपद्यते। एतेन—ब्राह्मणोऽस्य मुखमासीदिति पुरुषसूक्तमपि—व्याख्यातम्। तथाच ब्राह्मण्यादिकं व्यवस्थितमेवोरीकर्तव्यम्। नहि मुखं

कदापि बाहू ऊरू पादौ वा भवितुमर्हति। अत एव शान्तिपर्वणि ६१ तमेऽध्याये—

ब्राह्मणस्य तु चत्वारस्त्वाश्रमा विहिताः प्रभो।
वर्णास्तान्नानुवर्तन्ते त्रयो भारतसत्तम॥

क्षात्राणि वैश्यानि च सेवमानः शौद्राणि कर्माणि च ब्राह्मणः सन्।
अस्मिंल्लोके निन्दितो मन्दचेताः परे च लोके निरयं प्रयाति॥

इति श्लोकावुपपद्येते। अत्र हि स्पष्टमेव वर्णानां चतुर्णामपि व्यवस्थितमेव कर्मविभागादिकमुपपाद्यते।

[जातिधर्मस्यपरिवर्तनायोगः]

तत्र यदि कर्मकृतमेव ब्राह्मण्यादिकमिति स्यात्, तर्हि कथं वा ब्राह्मणस्य क्षात्रधर्माचरणमत्र निन्दितं स्यात्। तथा च विकर्मस्थस्य ब्राह्मणस्य विशेषतो निन्दितत्वात्, अस्य चोपलक्षणत्वेन क्षत्रियादीनामपि विकर्मस्थत्वं निन्द्यमेवावगन्तव्यम्। अत एव ब्राह्मणधर्मभिक्षाचर्यार्थं प्रवृत्तस्याप्यर्जुनस्य 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' इति भगवद्गीतायां ब्राह्मणधर्मनिषेध उपपद्यते। विकर्मस्थश्च भारते दासकुक्कुरवृकादिपदव्यवहार्यतया निरूप्यते। तदुक्तम्—

या संज्ञा विहिता लोके दासे शुनि वृके पशौ।
विकर्मणि स्थिते विप्रे तां संज्ञां कुरु पाण्डव॥ शां०

६१—५ इति। ते च विकर्मस्थाः पृथक् संस्थाप्या इति च तत्रैवोक्तम्। शां० ६६-२३

विकर्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथञ्चन।
नियम्याः संविभज्याश्च धर्मानुग्रहकाम्यया॥

इति तदिदं सिद्धं यद्भारतपर्यालोचनेनापीदमेव सिद्धं

भवति यदव्यवस्थिता एव जातिधर्मा आश्रमधर्माश्च विद्यन्ते इति । अत एव—

स्वं स्वं धर्मं ये न चरन्ति वर्णाः तांस्तान् धर्माननयथार्थान् वदन्ति निर्मर्यादान्नित्यमर्थे निविष्टान् आहुस्तान्वै पशुभूतान् मनुष्यान् ॥

शां० ६४-७ इति यथेच्छमेव धर्माधर्मव्यवस्थापनासाङ्कर्यमुपाद्यमानमुपपद्यते । शान्तिपर्वणि ३५ तमेऽध्याये तु—

जातिश्रेण्यधिवासानां कुलधर्मांश्च शाश्वतान् ।
वर्जयन्ति च ये धर्मं तेषां धर्मो न विद्यते ॥

इति जातिभ्रष्टानां पुनः कथमपि न निर्हार इति बोध्यते । तथाच ब्राह्मण्यं जातिकृतं यत्तदेव कर्मणा श्रेष्ठतां ब्राह्मणानां सम्पादयतीति कर्मब्राह्मण्यवचनानामुपनयनादिसम्पादितद्वितीयब्राह्मण्यपरतयैव योजनं कर्तव्यम् । अतएवानुशासनपर्वणि ६८ तमेऽध्याये—

शका यवनकाम्बोजास्तास्ताः क्षत्रियजातयः ।
वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ॥ २१ ॥
द्राविडाश्च कलिङ्गाश्च पुलिन्दाश्चाप्युशीनराः ।
कोलिसर्पा महिषिकास्तास्ताः क्षत्रियजातयः ॥
वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ॥२२॥
मेकला द्राविडा हाटाः पौण्ड्राः कण्वशिरास्तथा ।
शौण्डिका दरदा दार्वाश्चोराश्शबरबर्वराः ॥
किराता यवनाश्चैव तास्ताः क्षत्रियजातयः ।
वृषलत्वमनुप्राप्ता ब्राह्मणानामदर्शनात् ॥

इति श्लोका उपपद्यन्ते । एभिर्हि श्लोकैरिदमवगम्यते—यद्ब्राह्मणादर्शनेन क्षत्रियाणामपि बहूनां वृषलत्वं सम्पन्नमिति ।

इदं च तदैवोपपद्येत, यदि जातिकृतं ब्राह्मण्यं व्यवस्थितं किमपि वर्तत इति। अन्यथा कथमेतेषामेव केषाञ्चित्सत्यादिसम्पन्नानां ब्राह्मणानामवस्थानसम्भवात् ब्राह्मणादर्शनादिकमुपपद्येत। तथा च जातिकृतं ब्राह्मण्यमित्यवश्यमूरीकर्तव्यमित्येव महाभारतस्याशयः। अत एव अनुशासनिके पर्वणि ६६ तमेऽध्याये विद्यमानौ—

ब्राह्मणं जातिसम्पन्नं धर्मज्ञं संशितव्रतम्।
भोजयीत गृहे राजन्न तस्मात्परमस्ति हि॥
ब्राह्मणं जातिसम्पन्नं धर्मज्ञं संशितं शुचिम्।
अपरेषां परेषाञ्च परेभ्यश्चैव ये परे॥ २३॥

इति श्लोकौ जात्यापि ब्राह्मणस्यैव पूज्यत्वं प्रतिपादयन्तावुपपद्येते। तत्र यदि जातिकृतं न ब्राह्मण्यमिति भारताशयस्तर्हि कथमिदमुपपद्यते जातिसम्पन्नमिति विशेषणम्। जन्मनैव ब्राह्मणस्य पूज्यत्वमपि महाभारत एव विवेचितमस्ति। तद्यथाऽऽनुशासनपर्वणि सप्ततितमे ७०अध्याये भीष्मः—

जन्मनैव महाभागो ब्राह्मणो नाम जायते।
नमस्यः सर्वभूतानामतिथिः प्रश्रिताग्रभुक्॥

इति। तथाच सृष्टिकाल एव चातुर्वर्ण्यमासीदित्येव भारताशयो वर्णनीयः। अत एवानुशासनपर्वणि ७०तमे अध्याये—

सृष्ट्वा द्विजातीन् धाता हि यथापूर्वं समादधत्।
नवाऽन्यदिह कर्तव्यं किञ्चिदूर्ध्वायनं विधिम्॥ ४॥

इति सृष्टिकाल एव द्विजातीनामपि सृष्टिरुपवर्णितोपपद्यते।

[ हिरण्यगर्भादिजातिविशेषोपपत्तिः ]

इयान् विशेषः—प्रथमसृष्टिसमयेऽदृष्टविशेषारब्धशरीरविशेषमात्रेण ब्राह्मणत्वादिकम्। अनन्तरन्तु ब्राह्मणमातापितृकत्वेनेति। अग्रेचैतत्सनातनधर्मोद्धार-

तो व्यक्तीकरिष्यते । तथाच जातिब्राह्मणानामपि उपनयनात्पूर्वं शूद्रसमत्वं यच्छास्त्रसिद्धं तदादायैव तत्र तत्र आदावेकवर्णत्वव्यवहारादिकम् । न तु जातिकृतवर्णविभागाभिप्रायम् । यत्र पुनर्ब्राह्मणस्यापि शूद्रत्वमुपवर्ण्यते, तत्रापि ब्राह्मश्रीविनाश एव बोध्यते, न तु वस्तुगत्या शूद्रत्वमिति कुमारिलपादादिभिरुपपादितमनन्तरमुपपादयिष्यत एव । महाभारतेऽपि तत्र तत्र शूद्रसमा इति समशब्दप्रयोगेणायमेवार्थः प्रतिपाद्यते । तदुक्तं महाभारतेऽनुशासनपर्वणि ७० तमेऽध्याये—

शौद्रं हि कुर्वतः कर्म ब्राह्मी श्रीरुपरुध्यते । इति ।

अन्यथा विद्यादिराहित्येऽपि ब्राह्मणस्य दैवतत्वं अनुशासनिकपर्वणि २५६ अध्याये—

अविद्वान् ब्राह्मणो देवः पात्रं वै पावनं महत् ।<br>
विद्वान् भूयस्तरो देवः पूर्णसागरसन्निभः ॥<br>
अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ।<br>
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥<br>
श्मशाने ह्यपि तेजस्वी पावको नैव दुष्यति ।<br>
हविर्यज्ञे च विधिवद्भूय एवाभिशोभते ॥<br>
एवं यद्यप्यनिष्टेषु वर्तते सर्वकर्मसु ।<br>
सर्वथा ब्राह्मणो मान्यो दैवतं विहितम्परम् ॥

इत्यादिवचनोपपादितं कथमुपपद्येत ।

[ महाभारताशयनिष्कर्षः ]

तथाच स्पष्टमेवेदमवगम्यते, यज्जातिकृतमेव ब्राह्मण्यम्, न कर्मकृतमित्येव महाभारताशयः । अत एव भारते आनुशासनपर्वणि २०८ तमेऽध्याये परमेश्वरेण पार्वतीं प्रति वर्णाश्रमधर्मकथनप्रसङ्गे स्वाभाविकत्वं वर्णानाम्—

ब्राह्मणाः क्षत्रिया वैश्या शूद्राश्चेति चतुर्विधम् ।
ब्राह्मणा विहिताः पूर्वं लोकतन्त्रमभीप्सता ॥
कर्माणि च तदर्हाणि शास्त्रेषु विहितानि वै ।
यदीदमेकवर्णं स्याज्जगत्सर्वं विनश्यति ॥
सहैव देवि वर्णानि चत्वारि विहितान्यतः ।
मुखतो ब्राह्मणाः सृष्टास्तस्मात्ते वाग्विशारदाः ॥
बाहुभ्यां क्षत्रियाः सृष्टास्तस्मात्ते बाहुगर्विताः ।
उरुभ्यामुद्गता वैश्यास्तस्माद्वार्तोपजीविनः ॥
शूद्राश्च पादतः सृष्टास्तस्मात्ते परिचारकाः ।

इत्यादिना विवेचितमिति चतुर्णामपि वर्णानां पृथक् पृथग्यथावदवस्थानेनैव लोकतन्त्रनिर्वाहो भवेदिति भारतपर्यालोचनेन कर्मकृतं मुख्यब्राह्मणत्वादिकं कदाप्यासीदिति कल्पना भारताशयविरुद्धा । अत एव वनपर्वणि १५१ तमेऽध्याये—

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च कृतलक्षणाः ।
कृते युगे समभवन् स्वकर्मनिरताः प्रजाः ॥

इति कृतयुगेऽपि चतुर्णां वर्णानामवस्थानं प्रतिपादितमुपपद्यते ।

[ ब्राह्मण्यादीनां विद्याकर्मयोनित्रितयप्रयुक्तत्वम् । ]

अयमत्र निष्कर्षः—ब्राह्मण्यं द्विविधं मुख्यं गौणञ्च । आद्यं जातिब्राह्मणस्य सतः पुरुषस्य जातकर्मादिसंस्काराधीनम्, येनोत्तरकर्मसु ब्राह्मणमात्राधिकारिकेष्वधिकारः । एतेन क्षत्रियत्वादिकमपि व्याख्यातम् । तत्र ज्ञानविज्ञानास्तिक्यादिस्वभाववत्त्वे सति यथावद्वृत्तसम्पन्नत्वे सति जातिब्राह्मणत्वं मुख्यम् । यदि तु न यथावद्वृत्तं जातिब्राह्मणस्यापि समस्ति । तथा तु केनचन वृत्तेन क्षत्रियतुल्यत्वं

केनचन वैश्यतुल्यत्वं केनचन शूद्रतुल्यत्वं च भवति। तत्र ये खलु क्षत्रियसमास्तेषां याजनाध्यापनप्रतिग्रहेष्वनधिकारः। एतेन वैश्य समा अपि व्याख्याताः। शूद्रसमानान्तु न षट्कर्मस्वप्यधिकारो विना प्रायश्चित्तमिति विशेषोऽनुसन्धेयः। तथाचेदं सिद्धं भवति विद्यातपोयोनित्रितयवैशिष्ट्यं मुख्यब्राह्मण्यप्रयोजकम्। अन्यतरैकवैशिष्ट्येन तद्वितयवैशिष्ट्येन वा गौणब्राह्मणत्वादिकम्। तथाच मुख्यब्राह्मण्यं न केवलजात्या न वा केवलकर्मणा भवतीति-सिद्धम्। तत्र चायं विशेषोऽनुसन्धेयः—यत् जातिब्राह्मणस्य कस्यचन प्रायश्चित्तादिना कर्माधिकारेण मुख्यब्राह्मण्यसम्पादनं कथमपि शक्यम्। कर्ममात्रब्राह्मणस्य तु शूद्रादेर्विज्ञानादिसम्पन्नस्यापि न कथमपि कदापि जातिब्राह्मण्यसिद्धिद्वारा मुख्यब्राह्मण्यसिद्धिर्भवितुमर्हति। कर्मब्राह्मण्यं हि कर्मानुष्ठानमात्रेण सम्भवति तच्च कर्म यदि न निषिद्धम्, स्वानधिकारिकतया निर्णीतं वा। जातिब्राह्मण्यन्तु केवलजन्माधीनं जन्मान्तर एव भवति। नहि शूद्रोत्पन्नस्यैतस्मिन्नेव जन्मनि ब्राह्मणोत्पन्नत्वमपि सम्भवति। नहि ब्राह्मणेन शूद्रो दत्तकतया स्वपुत्रतां नेतुमलम्। येन शास्त्रीयं जन्मास्मिन्नेव जन्मनि ब्राह्मण्यं शूद्रस्य भवेत्। अयमाशयः—जन्म द्विविधं शास्त्रीयं लौकिकं च तत्राद्यं दत्तकादीनाम्। द्वितीयमौरसादीनाम्। तत्र शास्त्रीयमपि जन्म लौकिकजन्माधीनमेव नतु तन्निरपेक्षम्। तपोविशेषेण मन्त्रशक्तिविशेषेण वा जन्मान्तर एव ब्राह्मणत्वं भवतीति मतङ्गोपाख्याने पूर्वतने निरूपितमेव। तथाच यत्र यत्र पुराणादिषु क्षत्रियादीनामपि तपोविशेषेण ब्राह्मणत्वमुपवर्णितम्, तदिदं जन्मान्तराभिप्रायमिति कल्पनैव पूर्वोक्तेन्द्रमतङ्गसंवादगतवाक्यैकवाक्यतार्थमूरीकर्तव्या। अत

एव पूर्वोक्तपार्वतीपरमेश्वरसंवादे परमेश्वरोक्तिरपि न कर्मकृता जातिः किन्तु स्वभावकृतेति सिद्धान्तपरोपपद्यते। तथाच वीतहव्यादीनां भृगुवचनादिना ब्रह्मर्षित्वादिकमपि श्रूयमाणं वीतहव्यादेः प्रजापालनादिक्षात्रधर्मनिवृत्तिमेव गमयतीति तत्पुत्रादीनामपि क्षात्रधर्मतो निवृत्तानां केवलतपोविशेषादिनिरतानां ब्राह्मणत्वेन व्यवहारो बहुकालपर्यन्तमासीदित्येव कल्पनं समुचितं पश्यामः। यत्तु पुनर्वाल्मीक्यादीनां तपोविशेषनिरतानां ब्राह्मणमातापितृकत्वरहितानां ब्राह्मण्यम्, तत्र निमित्तं सनातनधर्मोद्धारग्रन्थोक्तानां विषयाणामनुवादावसरे स्पष्टमेव भविष्यति। सर्वथा तु कर्मकृतं ब्राह्मण्यमित्ययं वादो निरालम्बन एव। व्यक्तीकरिष्यते चेदमुपरिष्टात् कुमारिलपादापादितान्योन्याश्रयादिप्रसङ्गनिरूपणपूर्वकं सनातधर्मोद्धारानुवादावसरे।

[ब्राह्मणोत्पत्तिमार्तण्डसमालोचनम्] यत्तु ब्राह्मत्पत्तिमार्तण्डे हरिकृष्णः—'कर्मणोत्तमतां यान्ति कर्महीनाः पतन्त्यधः' इति वर्णितवान्, न तत्र वयमपि विप्रतिपद्यामहे। यत्तु पुनस्तत्र कर्मभिरेव वर्णविभागे प्रमाणमाह श्रीभागवतम्—

आदौ कृतयुगे वर्णो नृणां हंस इतीरितः।
कृतकृत्याः प्रजा जात्या तस्मात् कृतयुगं विदुः।

भारते शान्तिपर्वणि—

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्॥

वसिष्ठस्मृतौ—

योगस्तपो दमो दानं सत्यं शौचं दया श्रुतम्।
विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम्॥

भगवद्गीतायाम्—

श्मो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥

सद्धर्मसूत्रे—

आचार्या अध्यापका याजकाः साधवो मुनयश्च ब्राह्मणाः ।

भारते मोक्षपर्वणि—

कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः ।
त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ॥

भगवद्गीतायाम्—

शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥

सद्धर्मसूत्रे—

राजानो राजकर्मचारिणो रक्षकाश्च क्षत्रियाः ॥

भारते मोक्षपर्वणि—

गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः ।
स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः ॥

भगवद्गीता—

कृषिगोरक्षवाणिज्यं वैश्यकर्म स्वभावजम् ।

सद्धर्मसूत्रे—वित्तोपार्जककृषिकशिल्पिवणिगादयो वैश्याः ॥

भारते मोक्षपर्वणि—

हिंसानृतक्रियालुब्धाः सर्वकर्मोपजीविनः ।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः ।

भगवद्गीतायाम्—परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ।

सद्धर्मसूत्रे—सेवकाः शूद्राः ॥

भगवद्गीतायाम्—

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ॥

शान्तिपर्वणि १८८ तमेऽध्याये—

चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभिद्यते ।
सर्वेषां खलु वर्णानां दृश्यते वर्णसंकरः ॥
कामः क्रोधो भयं लोभः शोकश्चिन्ता क्षुधा श्रमः।
सर्वेषाञ्च प्रभवति कस्माद्वर्णो विभज्यते ॥
जङ्गमानामसंख्येयाः स्थावराणां च जन्तवः ।
तेषां विविधवर्णानां कुतो वर्णविनिश्चयः ॥

भृगुरुवाच—

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् ।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् ॥

मनुसंहितायां दशमाध्याये—

शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ।
क्षत्रियाज्जातमेवन्तु विद्याद्वैश्यात्तथैव च ॥

युधिष्ठिरम्प्रति वैशम्पायनः—

क्षान्त्यादिभिर्गुणैर्युक्तस्त्यक्तदण्डो निरामिषः ।
नमन्ति सर्वभूतानि प्रथमं ब्रह्मलक्षणम् ॥
यदा सर्वं परद्रव्यं पथि वा यदि वा गृहे ।
अदत्तं नैव गृह्णाति द्वितीयं ब्रह्मलक्षणम् ॥
त्यक्त्वा क्रूरस्वभावन्तु निर्ममो निष्परिग्रहः ।
युक्तश्चरति यो नित्यं तृतीयं ब्रह्मलक्षणम् ॥
देवमानुषनारीणां तिर्यग्योनिगतेष्वपि ।
मैथुनं हि सदा त्यक्तं चतुर्थं ब्रह्मलक्षणम् ॥

सत्यं शौचं दया शौचं शौचमिन्द्रियनिग्रहः ।
सर्वभूतदया शौचं तपःशौचं च पञ्चमम् ॥
पञ्चलक्षणसम्पन्नो दुर्दर्शो यो भवेज्जनः ।
तमहं ब्राह्मणं ब्रूयां शेषाः शूद्रा युधिष्ठिर ॥
न कुलेन न जात्या वा क्रियाभिर्ब्राह्मणो भवेत् ।
चण्डालोऽपि हि वृत्तस्थो ब्राह्मणस्स युधिष्ठिर ॥
कर्मक्रियाविशेषेण चातुर्वर्ण्यं प्रतिष्ठितम् ।
सर्वे हि योनिजा मर्त्याः सर्वे मूत्रपुरीषिणः ॥
एकेन्द्रियेन्द्रियार्थाश्च तस्माच्छीलगुणो द्विजः ।
शूद्रोऽपि शीलसम्पन्नो गुणवान् ब्राह्मणो भवेत् ।
ब्राह्मणोऽपि क्रियाहीनः शूद्रात्प्रत्यवरो भवेत् ॥
पञ्चेन्द्रियार्णवं घोरं यदि शूद्रोऽपि तीर्णवान् ।
तस्मै दानं प्रदातव्यमप्रमेयं युधिष्ठिर ॥
न जातिर्दृश्यते राजन् गुणाः कल्याणकारकाः ।
जीवितं यस्य धर्मार्थे परार्थे यस्य जीवितम् ॥
अहोरात्रं चरेत् क्षान्तिं तं देवा ब्राह्मणं विदुः ।
परित्यज्य गृहावासं ये स्थिता मोक्षकांक्षिणः ॥
कामेष्वसक्ताः कौन्तेय ब्राह्मणास्ते युधिष्ठिर ।
अहिंसा निर्ममत्वं वा सतः कृत्यस्य वर्धनम् ॥
रागद्वेषनिवृत्तत्वमेतद्ब्राह्मणलक्षणम् ।
क्षमा दया दमो दानं सत्यं शौचं स्मृतिर्घृणा ॥
विद्याविज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम् ।
यदा न कुरुते पापं सर्वभूतेषु दारुणम् ॥
कायेन मनसा वाचा ब्रह्म सम्पद्यते तदा ॥

महाभारते वनपर्वण्यजगरोपाख्याने—

शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥

श्रीभागवते सप्तमस्कन्धे—

यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यञ्जकम् ।
यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत् ॥

आपस्तम्बधर्मसूत्रे 'अधर्मचर्यया पूर्वो वर्णो जघन्यवर्णमापद्यते जातिपरिवृत्तौ, धर्मचर्यया जघन्यो वर्णः पूर्वपूर्ववर्णमापद्यते जातिपरिवृत्तौ ।

मनुसंहितायाम्—

तपोबीजप्रभावैस्ते गच्छन्त्यनुयुगे युगे ।
उत्कर्षं चापकर्षं च मनुष्येष्विह जन्मतः ॥

इत्यादिवर्णितम् । तत्र वयम्पश्यामः—महाभारतवचननामत्रोदाहृतानां पूर्वोक्तरीत्या जातिकृतब्राह्मण्यादिव्यवस्थायामेव तात्पर्यात् श्रीभागवतादीनामपि तत्रैव तात्पर्यस्योरीकरणीयत्वाच्च नानुपपत्तिरिति । ब्राह्मणोत्पत्तिमार्तण्ड एव जातिकर्मसमुच्चयकृतमेव ब्राह्मण्यादिकमिति यदुत्तरत्र व्यवस्थापितम्, तत्पर्यालोचने तु न कस्या अप्याशंकाया अवसर इति बोध्यम् । सर्वथा तु जातिकृतमेव ब्राह्मण्यादिकम् । तच्चानादीत्येवोरीकर्तव्यम् ।

[ उक्तार्थंजातिविवेकोपष्टम्भः ] एतदेवाभिप्रेत्य कृष्णगोविन्दपण्डितकृते धर्मप्रदीपीयजातिविवेके—"वर्णभेद इदानीं निरूप्यते । तत्र चोक्तास्तोवदसवर्णाविवाहाः । अथैतेषूत्पन्नानां सवर्णानुलोम प्रतिलोमभेदप्रयोजको धर्मो निरूप्यते । तत्र चत्वारो मुख्या वर्णा ब्राह्मणक्षत्रियवैश्यशूद्राः । तत्प्रयोजकमाह याज्ञवल्क्यः—"सवर्णे-

भ्यः सवर्णासु जायन्ते हि सजातयः । अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः” इति । अत्र पुत्रा इत्यपत्योपलक्षणम् । सवर्णेभ्यो ब्राह्मणादिभ्यः सवर्णासु ब्राह्मण्यादिषु 'विन्नास्वेष विधिः स्मृतः' इत्यग्रिमोपसंहारानुरोधात् विन्नासु यथोक्तविधिनोढासु जाताः पुत्राः सन्तानवर्धना मातापितृसमानजातीया वा ब्राह्मणत्वादि-जातियोगिनो वा जायन्त इत्यर्थः । वर्णशब्दो ब्राह्मणादिजातिचतुष्टये रूढः । चातुर्वर्ण्यं चरेद्भैक्ष्यमित्यादिषु ततो नियमनेन तदुपस्थितेरन्यानुपस्थितेश्च ।

सवर्णेभ्यश्च तुल्यासु पत्नीष्वक्षतयोनिषु ।
आनुलोम्येन सञ्जाता जात्या ज्ञेयास्त एव ते ॥

इति मानवेऽपि तुल्यास्विति सवर्णानां पत्नीष्वित्यूढानां चाभिधानादेतत्समानार्थकतैव । आनुलोम्यग्रहणं तदर्थम् । यत्पुनः संकीर्णेष्वपि मूर्धावसिक्तादिषु सजातीयपरिणीतोत्पन्नानां तत्सजातीयत्वात् वर्णग्रहणं जात्युपलक्षणमिति सर्वज्ञाभिधानम्, तदसत् संकीर्णजातीनामत्रालक्ष्यत्वात्, नहि यावत्सजातीयं तत्सर्वमपीह लक्ष्यम्; गवादेरपि लक्ष्यत्वापत्तेः । यदि च वर्णत्वमेव तेषु विधीयते, ततो मूर्धावसिक्तादीनां वर्णत्वे चतुर्थानन्तवर्णापादनेनानन्तवर्णत्वापत्तौ चत्वार एव वर्णा इतिप्रसिद्धिविरोधः । तथा सवर्णान् लक्षयति देवलः—ब्राह्मण्यां ब्राह्मणाज्जातः संस्कृतो ब्राह्मणो भवेत् एवं क्षत्रियविट्शूद्रा ज्ञेयाः स्वेभ्यः स्वयोनिजा इति ॥ सवर्णेभ्यः सवर्णोत्पन्ना इत्यर्थः । अत्र संस्कृत इति संस्कारार्हो मुख्यो ब्राह्मणादिरित्यर्थः । अत्र सवर्णेतिविशेषणेनासवर्णोत्पन्नानां मूर्धावसिक्तादीनां न वर्णत्वम् । सवर्णोत्पन्नानामपि कुण्डगोलकादीनां वर्णत्वं मा भूदित्युक्तं विन्नास्विति । तेन गूढोत्पन्नानां कुण्डगो-

कादीनां पौनर्भवक्षेत्रजानाञ्च न वर्णत्वम् । तथाहि—अत्र सजातित्वं नाम मातापितृसमानजातीयत्वम् । विशिष्टं लक्ष्यमभिप्रेतम् । यथा व्याख्यातं मिताक्षरादिभिः । तत्प्रयोजकं च सवर्णात्सवर्णायां विन्नायां वेत्तुरुत्पन्नत्वम् । तदपाये तदपायः । अयश्च विशेषणतो विशेष्यतः समुदायतश्च । तद्यथा—विन्नायामप्यसवर्णायामुत्पन्ने मूर्धावसिक्ते सवर्णायामप्यविन्नायामुत्पन्ने गोलकेऽसवर्णायामविन्नायां चोत्पन्नायां प्रतिलोमसन्ततौ तथा सवर्णायामविन्नायामप्युत्पन्ने क्षेत्रजादौ विशिष्टं नेति न साजात्यम् । अत एवोक्तप्रयोजकवैकल्ये क्वचिदन्यतरजातीयतोच्यते यथा क्षेत्रजे । क्षेत्रप्राधान्यात् । शिष्टसमाचारात् । नियोगस्मरणाच्च । स्मरणलक्षणब्राह्मणत्वादिजातिगोत्रवत् । नचैवं मातृजातीयत्वे कथमस्याध्ययनं विरुद्धमिति ; तस्योपनयनजातीयत्वरूपत्वादित्यनन्तरमेवाभिधानात् । अत एव नारदवसिष्ठविश्वामित्रादेर्ब्राह्मणत्वेऽपि सवर्णविन्नानुत्पन्नत्वेनाऽशास्तिर्नाशंकनीया । न ह्यत्र साक्षाद्ब्राह्मणत्वादि लक्ष्यते, वाक्यभेदप्रसङ्गात् । अव्याप्तेश्च । किन्तु मातापितृजातीयत्वमेव । तच्च ब्राह्मणत्वादौ पर्यवस्यति । तत्र च प्रयोजकं सवर्णोत्पन्नत्वं वसिष्ठादेर्गोवृत्तं मातापितृजातीयत्वं निवर्तयति । न चैतद्विरुद्धम् । न ह्ययोनिजेषु मातापितृजायतीताप्याश्रीयते । ब्राह्मणत्वन्तु तेषां स्मरणलक्षणं ईश्वरानुग्रहप्रयोज्यत्वादाधुनिकविलक्षणमेव । सुवर्णकलशे घटत्वमिव । अत एव विन्नास्वेष विधिः स्मृत इत्युपसंहारः समञ्जसो भवति । नचैवं धृतराष्ट्रपाण्डवादीनां क्षत्रियत्वाभावे तद्धर्मानापत्तिः । शङ्खविष्णुवचनैस्तेषामपि क्षेत्रजातीयधर्मातिदेशात् । विन्नात्वादेर्विशेषणस्य तत्राश्रवणात् । व्यभिचारोत्पन्नेषु तु 'शूद्राणान्तु सधर्माणः सर्वेऽप-

ध्वंसजाः स्मृता' इति वचनेन शूद्रधर्मा एव भवन्ति। क्षत्रियत्वप्रसिद्धिस्तु तद्धर्मानुष्ठानात्तदुपपन्नेति। एतेन—पौनर्भवस्याप्यब्राह्मण्यादिकं व्याख्यातम्। इति विवेचितम्।

[ उक्तार्थे गागाभट्टी ]

व्यक्तं चैतद्गागाभट्ट्यामपि विवेचितम्। तद्यथा—"अथोपोद्घातेनादौ जातिनिर्णयः क्रियते। तत्र चातुर्वर्ण्यप्रयोजकमाह याज्ञवल्क्यः—

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः।
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः॥

सवर्णेभ्यो ब्राह्मणादिभ्यः। सवर्णासु ब्राह्मण्यादिषु विवाहेषु सत्सु जाताः पुत्राः अपत्यानि सजातयो मातापितृसमानजातीया भवन्तीत्यर्थः। अत्र वर्णत्वं ब्राह्मणत्वादिजातिचतुष्टयान्यतमत्वं जातिचतुष्कज्ञापकं जात्यन्तरं वा। चातुर्वर्ण्यभैक्ष्यमाचरेदित्यादिप्रयोगात्। तेन विन्नायां ब्राह्मण्यां ब्राह्मणादुत्पन्नत्वमेव ब्राह्मणत्वज्ञापकम्। एवं क्षत्रियादावपि। एवं च विन्नायामसवर्णायामुत्पन्ने मूर्धावसिक्तादौ सवर्णायामविन्दितायामुत्पन्ने कुण्डगोलजादौ असवर्णायामविन्दितायाञ्चोत्पन्ने प्रतिलोमजादौ ब्राह्मणत्वाद्यभावः। कथन्तर्हि सृष्ट्यादिब्राह्मणे विश्वामित्रे देवरोत्पन्ने च ब्राह्मण्यमिति चदत्राहुः। ब्राह्मणत्वजातिर्भेदचतुष्टयभिन्ना क्वचिदीश्वरमुखजन्यतावच्छेदिका सृष्ट्यादौ ब्राह्मणे। कर्मजन्यतावच्छेदिका विश्वामित्रे। ऊढब्राह्मणामूढब्राह्मणजन्यतावच्छेदिका सर्वेषु ब्राह्मणेषु। देवरोत्पन्ने तु शास्त्रबोध्यमिति। योगीश्वरस्तु देवरोत्पन्नेऽप्यूढायां देवरोत्पन्नत्वमेव ब्राह्मण्यम्। तत्रापि देवरः पुत्रकामश्चेत् घृताभ्यक्त ऋतावियादित्युक्त्वा—

"यस्या म्रियेत कन्याया वाचि सत्ये कृते पतिः।

तामनेन विधानेन निजो विन्देत देवरः ॥”

इति वाक्येऽनेन विधानेन विन्देतेति पूर्ववाक्योक्तघृताक्तत्वविशिष्टवेदनरूपविलक्षणविवाहस्योक्तत्वात्। एवं तत्रापि विलक्षणविवाहत्वेन चोत्पन्नत्वमव्याहतम्। श्राद्धे कुण्डगोलकनिषेधोऽप्येतद्विषय एव सङ्गच्छते। नात्र कुण्डत्वासम्भवः। म्रियेतेत्यस्य महारोगाद्युपलक्षणत्वम्। कुण्डत्वादिकं तु न जातिः, येन ब्राह्मणत्वादिना संकरः स्यात्। किन्त्वमृतपतिकस्त्रीजारोत्पन्नादिरूप उपाधिः। अतादृशदेवरोत्पन्ने तु व्यभिचारजन्यत्वेन न ब्राह्मण्यम्। अत एव वाग्दानोत्तरविवाहस्य युगान्तरविषयत्व।द्देवरोत्पन्नब्राह्मणोऽपि युगान्तरविषय एव। एतेन श्राद्धे कुण्डगोलकनिषेधो भ्रमप्रसक्तिविषय इति वदन् विज्ञानेश्वरो विज्ञापनीयः। एवं जात्युत्कर्षवति कर्मोत्कर्षवति च ब्राह्मणे ब्राह्मणत्वभेदो बोध्यः। “जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा। व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्” इति याज्ञवल्क्यवाक्यात्। एवं क्षत्रियत्वमपि बोध्यम्। न च “स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्। सदृशानेव तानाहु मातृदोषविवर्जितान्”। इति वचनेन मातृसदृशानित्यर्थः। तेन मूर्धावसिक्तादीनां मातृजातीयत्वबोधनात् कथं तत्र ब्राह्मणत्वादिजात्यभाव इति वाच्यम्? मातृधर्मप्राप्तिबोधनेन वचसस्तात्पर्यात्। न स्याच्चायोनिषु वसिष्ठादिषु ब्राह्मण्यमिति वाच्यम्। न च वाच्यं “ब्राह्मणानृत्विजो वृणीते पुत्रिकासहपरगोत्रजसहोढकानीनानुजावरद्विदेवरपरिहार्योऽपि” इति बौधायननिषेधानुपपत्त्या श्राद्धे च कुण्डगोलकादिनिषेधानुपपत्त्या तेषु ब्राह्मणत्वेन प्राप्तिनिषेधानुपपत्तेरिति; तेषां नित्यानुवादत्वात्। नान्तरिक्षे न दिवीतिवत्। एतच्च सर्वमभिस-

न्धायाह मनुः—सवर्णेभ्यः सवर्णासु पत्नीष्वक्षतयोनिषु । आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते ॥ इति देवलोऽपि—

ब्राह्मण्यां ब्राह्मणाज्जातः संस्कृतो ब्राह्मणो भवेत् ।
एवं क्षत्रियविट्शूद्रा ज्ञेयाः स्वेभ्यः स्वयोनिजाः ॥

इति । इदमपि याज्ञवल्क्यमनुभ्यामुपसंहारादि, नापरम् । अत एव संस्कृतपदमुक्तार्थकम् । अतो मूर्धावसिक्तादौ कुण्डगोलकादौ च ब्राह्मण्यं वर्णत्वं च नास्तीति सिद्धम् । अत एव नेषु न वर्णधर्मप्राप्तिः । तथा च यमः—अविवाह्या सुताश्चैषां बन्धुभ्यः पितृमातृतः । इति । अत एव सः—'कृच्छ्रं सान्तपनं कुर्याद्गत्वा संकरयोनिजामिति । एवं च यमोक्तं प्रायश्चित्ताल्पत्वमप्युपपन्नमिति दिक् । सवर्णोत्पन्नद्वादशभेदाः । अनुलोमषट्कप्रतिलोमषट्कभेदात् । तथाच मनुः—

विप्रान्मूर्धावसिक्तस्तु क्षत्रियायां विशः स्त्रियाम्
जातोऽम्बष्ठश्च शूद्रायां निषादः पारशवोऽपि च
माहिष्योग्रौ प्रजायेते विट्छूद्राङ्गनयोर्नृपात् ॥
शूद्रायां करणो वैश्याद्विन्नास्वेष विधिः स्मृतः ॥
इत्यनुलोमषट्कम् ॥
ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहिकः स्मृतः ।
शूद्राज्जातस्तु चाण्डालः सर्वधर्मबहिष्कृतः ॥
क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च ॥

शूद्रादायोगवं वैश्या जनयामास वै सुतमिति प्रतिलोमषट्कम् । अथैतेषां कर्माणि विश्वम्भरवास्तुशास्त्रे—

क्षत्रियाविप्रसंयोगाज्जातो मूर्धावसिक्तकः ।
राजन्यक्षत्रधर्मेणाभ्यधिकः सम्प्रकीर्तितः ॥

एतस्याग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादावप्यधिकारः। उभौ वर्णावृषिरुग्रः पुपोषेति लिङ्गात्। अनवार्हद्विराधिकरणे भीवृत्तौ ब्रह्मसामेति सामान्यवचसा मूर्धावसिक्तादिकर्तृविषयत्वं राणकोक्तम्।

"वैश्यस्त्रीद्विजसम्भूतोऽम्बष्ठः स्यादनुलोमतः।
अन्येभ्यो वैश्यजातिभ्यः षट्कर्मस्वधिकः स्मृतः॥"

इति। षट्कर्मान्तपातिकर्मत्रय इत्यर्थः। 'नरवाजिगजानां च चिकित्सा यस्य जीविका।' द्विजोत्र ब्राह्मणः। अयमम्बष्ठो गौडप्रसिद्धाम्बष्ठाद्भिन्नः।

शूद्रां शयनमारोप्य ब्राह्मणश्च कथञ्चन।
जनयेद्ग्राम्यधर्मेण तस्यां पारशवं सुतम्॥
महाशूद्र इतिख्यातः शूद्रेभ्यः किञ्चिदुत्तमः।
स्वर्णकारस्य तस्येह स्नानं धौत्रं पवित्रकम्॥
शौद्रशूद्रस्य धर्मेण वर्तनं तस्य च स्मृतम्॥

शयनारोपणं विवाहः। एतस्यैव संज्ञान्तरं निषादः। अस्य कर्मस्वधिकारः। यज्ञियासः पञ्चजना मम होत्रं जुषध्वमिति मन्त्रलिङ्गात्। तदद्येतिऋग्व्याख्याने पञ्चजनपदस्य चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यव इति यास्केन निषादस्यैव गणनात्। एवं पञ्चमशूद्रस्येति व्रतद्रव्यनियमोऽपि सङ्गच्छते।

वैश्यायां क्षत्रियाज्जातो माहिष्यस्त्वनुलोमतः।
अष्टाधिकारनिरतश्चतुःषष्टयङ्गको विधिः॥
व्रतबन्धादिका तस्य क्रियाः स्युः सकला विशः।
ज्यौतिषं शाकुनं शास्त्रं स्वरशास्त्रं च जीविका॥

अष्टाधिकाराः—

सुगन्धं वनितावस्त्रं गीतं ताम्बूलभोजनम् ।
शय्या च कुसुमं चैव भोगाष्टकमुदाहृतम् ॥

इति भोगाष्टकम् । चतुःषष्ट्यङ्गानि चतुःषष्टिकलाः । ताश्च—

वेदांशागमशास्त्रशिल्पकविताक्तृत्वतौर्यत्रिक-
द्यूतास्त्राद्भुतवादशिल्परचनाश्चित्रं पणे वैद्यकम् ।
नानारत्नपुरादिलेखपुरुषस्त्रीधातुजायालिपि-
प्रज्ञानाटककेलिदन्तितुरगप्रेक्षा च सामुद्रिकम् ॥
शय्या भोजनयुद्धमर्दनविभूषाबन्धसेवेङ्गित-
ज्ञानं राजतरासभा रथकृतिः सौख्येषु भोगेषु धीः ।
त्राणं वारिविषाग्निचारिषु यथास्वीयाङ्कशीर्षेषु च ।
दुर्गाशमकृतिः पशुद्विपचमत्कारः शिवाचाद्रयः ॥

इत्यधिकारवृत्तय इत्यर्थः ।

शूद्रायां क्षत्रियादुग्रः क्रूरकर्मा प्रजायते ।
शस्त्राद्यायासकुशलः सङ्ग्रामकुशलो भवेत् ॥
तया वृत्त्या स जीवन् सन् शूद्रधर्मा प्रजायते ॥

अयं रजपूत इति भाषाप्रसिद्धः ।

वैश्याद्धर्मेण शूद्रायां जातो वैतालिकाभिधः ।
करणोऽसावपि भवेन्न्यूनो वृषलधर्मतः ॥
राज्ञां च ब्राह्मणानां च गुणवर्णनतत्परः ।
सङ्गीतं कामशास्त्रं च जीविका तस्य विश्रुता ॥

अयमेव करणः नटवा इति भाषाप्रसिद्धः । अत्र विन्नास्वित्युक्ते रविन्नोत्पन्नानां नानुलोमत्वम्, किन्तु व्यभिचारोत्पन्नत्वात्कुण्डगोल इति । इत्यनुलोमषट्कर्माणि । अनेनैव प्रकारेणोत्प-

न्नानां स्त्रीणां अनुलोमजातानां सामान्येन षण्नामानि कर्माणि च। यथा मूर्धावसिक्ता, अम्बष्ठा, निषादी, पारशवा, माहिष्या, उग्रा, करणी चेति।

अथ प्रतिलोमषट्कर्माणि विश्वम्भरवास्तुशास्त्रे—

ब्राह्मण्यां क्षत्रियात्सूतः प्रातिलोम्येन जायते।
क्षत्रियाणामसौ कर्म कर्तुं महत्यशेषतः॥
किञ्चिच्च क्षत्रजातिभ्यो न्यूनता तस्य वर्तते।
गजबन्धनमश्वानां वाहकर्म समारभेत्॥
वैश्यधर्मेषु सूतस्य नाधिकारः क्वचिद्भवेत्।

क्षत्रियाणां वृत्तिं धर्मयुद्धं प्रजापालनादि। न तु वेदाध्ययनादि। प्रतिलोमा धर्महीना इति स्मरणात्।

ब्राह्मण्यां जायते वैश्याद्योऽसौ वैदेहिकाभिधः।
शुद्धान्तरक्षणं कुर्याद्राज्ञां मनुजसंहितः॥
सामान्यवनिता पोष्या तासां भाटी च जीविका।
तस्योक्तः शूद्रधर्माणां नाधिकारोऽस्ति कर्हिचित्॥
पण्याङ्गनानां राज्ञां च कुर्यात्सङ्गतमिच्छया।
रूपाज्जाताः सुतास्तेषां निशि यत्सङ्गतो विटः॥
स एव तासां प्राणेशो नान्यः कान्तोऽपि तत्परः।
चतुःषष्टिकलाः कामशास्त्रं तदुपजीवनम्॥
ब्राह्मण्यां शूद्रवीर्येण जातश्चण्डालसंज्ञकः।
सर्वेषामेव तत्स्पर्शात्सचैलं स्नानमिष्यते॥
स वसेन्नगराद्बाह्ये सर्वधर्मबहिष्कृतः।
ये वध्यास्तेन ते वध्या विविधैर्यातनाशतैः॥
तेषां वस्त्राद्यलङ्कारा जीविका तस्य च स्मृता।

क्षत्रिया मागधं वैश्याज्जनयामास वै सुतम् ॥
स बन्दीजन इत्युक्तो व्रतबन्धादिवर्जितः ।
शूद्रेभ्योऽभ्यधिकं किञ्चित्तस्य जीवनमुच्यते ॥
कथालङ्कारगद्यादिषड्भाषासुविशारदः ।
गद्यपद्यादिचित्राणि विरुदानि महीभुजाम् ॥
भाट इति भाषाप्रसिद्धः ।
क्षत्रिणी शूद्रसंयोगात्क्षत्तारं जनयेत्सुतम् ।
निषाद इति विख्यातः सर्वधर्मबहिष्कृतः ॥
शूद्राचारविहीनश्च पापर्द्धिनिरतः सदा ।
स सुरापाशपाणिश्च मृगबन्धनकोविदः ॥
आरण्यपशुजातीनामन्तकश्च वनेचरः
क्रोधोऽन्वितो मांसवृत्त्या तया जीवेत्सदैव हि ॥
घण्टां पापर्द्धिकां कुर्याद्रात्रौ विस्मयकारिणीम् ।
द्विधा पापर्द्धिरस्योक्ता व्योमभूचारिणामिह ॥
विक्रयं मधुनः कृत्वा धनमिच्छेत्स्ववृत्तये ।
पाटघीति महाराष्ट्रभाषायां कलवार इतिमध्यदेश-
भाषायां प्रसिद्धः ।
वैश्यस्त्रीशूद्रसंयोगात्स्यादायोगवसंज्ञकः ।
स शूद्राद्धीयते धर्मे पाषाणादीष्टकर्मकृत् ॥
स कुर्यात्कुट्टिमं भूमिं चूर्णेनास्येह जीविका ।
इतिप्रतिलोमषट्ककर्माणि ॥

अनेनैव प्रकारेणोत्पन्नानां प्रतिलोमजातीनां स्त्रीणामिमान्येव नामानि सूता, वैदेही चाण्डाली, मागधी क्षत्ता, आयोगवी ॥ विश्वम्भरवास्तुशास्त्रे—

यः संस्कारविहीनश्च व्रात्यतामुपगच्छति ।
ब्राह्मण्यां व्रात्यतः पुत्रो भृजुकण्टः स हि स्मृतः ॥
ब्राह्मण्यां भृजुकण्टाच्च सुतस्त्वावर्तको भवेत् ।
ब्राह्मण्यावर्तकाभ्यां यः पुत्रः स कटधानकः ॥
ब्राह्मण्यां कटधानेन सुतोऽसौ पोष्यशेखरः ।
भृजुकण्टादयः प्रोक्ताश्चत्वारः पूर्वतः क्रमात् ॥
तेषां वीर्याणि वक्ष्येऽहं जीवनाय विशेषतः ।
वर्ण्यौ हरिहरौ तैश्च गीतगाथाप्रबोधकैः ॥
चरितैर्देशभाषायां गानं तज्जीविका स्मृता ।
लोकाचाराः स्मृतास्तेषां शूद्राचारा न हि क्वचित् ॥

एते च नानुलोमजा न वा प्रतिलोमजाः। अपि तु ब्राह्मणा एव। मद्यपतितब्राह्मणादिवत् । दुर्ब्राह्मणो व्यभिचारज इति संप्रदायः ।

विप्रः स्वीकृत्य संन्यासमारूढपतितो भवेत् ।
ब्राह्मणीं कारयेद्दण्डी यं तस्यां जनयेत्सुतम् ॥
सदोक्तः कर्मचाण्डालस्तत्स्पर्शात्पातकं महत् ।
वापीकूपतडागानां प्रपादीनां च सर्वशः ॥
खननं जीविकार्थाय तस्य प्रोक्तं विशेषतः ॥
कोहरीतिभाषाप्रसिद्धः । तथा—
शुद्धा या क्षत्रिया सूते व्रात्यक्षत्रियमैथुनात् ।
पुत्रः स लल्ल इत्युक्तः शूद्रधर्मविधायकः ॥
स कुर्याद्राजपुत्राच्च शस्त्रास्त्रकुशलं धनम् ।
लब्ध्वा तेभ्यः स्ववृत्त्यर्थं स्वधर्ममनुपालयेत् ॥
ब्राह्मणीलल्लसंयोगाज्जातो मल्लाभिधः परः ।
लब्ध्वा योऽसौ वर्णसाम्यं बलदर्पेण दर्पितः ॥

राज्ञां कौतुकमुत्पाद्य नियुद्धेन धनार्जनम् ।
कुर्यात्स्ववृत्तिनिरतः शूद्रधर्मानशेषतः ॥
क्षत्रिणीमल्लसंयोगाच्छीलीन्ध्र इति जायते ।
स हीनः शूद्रधर्मेभ्यो जीविकास्याङ्गमर्दनम् ॥
नापित इतिभेदो मर्दनीति भाषाप्रसिद्धः ।
शिलीन्ध्रः क्षत्रिणी चैव जनयेद्‌भटसंज्ञकम् ।
हीनोऽसौ शूद्रधर्मेभ्यः नाटकानि समभ्यसेत् ॥
कोलाटिकः स एवोक्तो बहुरूपीति विश्रुतः ।
अत्रापि दुष्टक्षत्रियत्वमनुलोमजा इत्यादि ॥
शूद्रकन्यासमुत्पन्नो ब्राह्मणेन च संस्कृतः ।
अपरो नापितः प्रोक्तः शूद्रधर्माधिकोऽपि सः ॥
अत्रापि दुष्टशूद्रत्वमत एवाधिक इति विशेष इति संक्षेपः । अथावान्तरभेदाः—
माहिषस्त्री ब्राह्मणेन सङ्गता जनयेत्सुतम् ।
आभीरपत्न्यामाभीर इति तं विधिरब्रवीत् ॥
तेषां स घोषो यद्येष बहुशष्पजलाकुले ।
अर्जितं गोमहिष्यादिपालनं वन्यवारिणा ॥
दुग्धं दधि घृतं तक्रं विक्रीणीते धनाय च ।
शूद्रेभ्यो न्यूनता धर्मे तस्य सर्वस्य विश्रुता ॥
अत्र महिष्यायां वैश्यक्षत्रियतो जातत्वेनानुलोमत्वात्तस्यां ब्राह्मणादुत्पन्नत्वेनाभीरोऽप्यनुलोमः ।
वैश्यस्त्रीद्विजसम्भूता कन्याम्बष्ठाभिधानका ।
सा वाऽम्बष्ठा द्विजाश्लिष्टा जनयेत्तनयं रहः ॥
स कासार इति प्रोक्तः कालिकां सन्ततं यजेत् ।

कांस्यपात्राणि चित्राणि रचयेज्जीवनाय च ॥
शूद्रधर्मेण सर्वत्र स्थितिरस्य विधीयते ।
द्विजाश्लिष्टा ब्राह्मणाश्लेष इत्यर्थः । अयं कासारोऽप्यनुलोमः ।
द्विजशूद्रसमायोगान्निषादी वनिता भवेत् ।
निषादी द्विजतोऽसूत तनयं मोष्टिकाभिधम् ॥
ते दोलावाहकाराद्या विशेषाद्भुतवादिनः ।
गलबाहुलकास्ते स्युः कावडीवाहकाश्च ते ॥
विक्रयश्चेन्धनानां च तेषां धर्मो न किञ्चन ।
अयमनुलोमः ।
ब्राह्मण्यां वैश्यजनिता वैदेहीति निगद्यते ।
सा चेद्गता ब्राह्मणेन छत्रयो जनयेत्सुतम् ॥
तस्माच्छत्रधरो राज्ञां लोके वाहीति कथ्यते ।
समस्तेषु च लोकेषु कुर्यात्पानीयविक्रयम् ॥
तस्यैवं जीविका प्रोक्ता शूद्रधर्मा न हि क्वचित् ।
वैदेहानां प्रतिलोमत्वादयं प्रतिलोमः इति केचित् । तस्याः प्रतिलोमत्वेऽपि ब्राह्मणजन्मत्वादनुलोम इत्यन्ये ।
वैश्यास्त्रीशूद्रसंयोगाज्जातायोगविकाभिधा ।
आयोगवीब्राह्मणाभ्यां धिग्वणस्य समुद्भवः ॥
स चर्मणाऽश्वपर्याणं यथाशोभं प्रकल्पयेत् ।
अश्वानां वा खरस्याऽपि कर्तुं चित्रास्तथार्हति ।
तद्द्रव्यं जीविका तस्य विहिता लोकविश्रुता ॥
अयं मोचीति प्रसिद्धः ।

शूद्रक्षत्रिययोः पारशवी संज्ञा प्रजायते ।
सा सूते क्षत्रियात्पुत्रं विद्यात्तं ताम्रकुट्टकम् ॥
संसर्गः सह कासारैः कुर्यात्सं तु विशेषतः ।
घट्टनं ताम्रपात्राणां तत्पर्यावर्तजीवनम् ॥
योऽयोगवीक्षत्रिययोर्जात ऊलकसंज्ञकः ।
स लोहकारो विख्यातो लोहकर्मास्य विश्रुतम् ॥
तेषान्तु गणसंयोगो राज्ञां शस्त्रविधायकः ।
अयमनुलोमः ।
वैश्यवीर्येण शूद्रिण्यां जाता सा करिणी स्मृता ।
करणीवैश्यसंयोगाज्जातो वत्सरसंज्ञकः ॥
हीनः स शूद्रधर्मेण शाद्वलं गाश्च पालयेत् ।
अयमनुलोमः ॥
माहिष्येण करण्यान्तु रथकारः प्रजायते ।
नैवोपनयनं तस्य शूद्रधर्मबहिष्कृतः ॥
वर्तनं शिल्पवृत्त्यात्र लोके शिल्पस्य शास्त्रवित् ।

अयमनुलोमः—

एतस्यैव रथकारस्याधानेऽधिकार इति कर्काचार्याः । मीमांसकास्तु नायं रथकार आधानेऽधिकारी, किन्तु "सौधन्वना सम्भव" इति मन्त्रवत्सामानाधिकरण्येन सौधन्वनाख्यस्य क्रतुविशेषस्यैवाधिकारः—इत्याहुः ।

माहिष्यवनिता सूनुं वैदेहाद्यं प्रसूयते ।
लिपीनां देशजातानां लेखनं स समाचरेत् ॥
गणिकत्वं लेखकत्वं बीजपाटीविभेदतः ।

वृत्त्या तया वर्तनं स्यात्कायस्थस्य विशेषतः
अधमः शूद्रजातिभ्यः पञ्चसंस्कारवानसौ ॥

अयम्प्रतिलोमः। पञ्चसंस्काराः—

जातकर्म तथा चात्र वपनं कर्णवेधनम्।
उद्वाहश्चेति विज्ञेया कायस्थस्योपसत्क्रियाः ॥

इति छागलेयोक्ताः।

पद्मपुराणे रेणुकामाहात्म्ये कायस्थास्त्रिविधाः चित्रगुप्ताश्चान्द्रसेनीयाः संकरजाताश्च। तत्र चित्रगुप्तः सागरमन्थनकाले कालीशरीरोत्पन्नस्तस्यैव दाक्षायण्यां विचित्रगुप्ते सुते जाते तस्यापि मनुकन्यायां धर्मगुप्तो नाम पुत्रः। सोऽपि गन्धर्वकन्यायां रुद्रगुप्तनामानं जनयामास। तस्य च पुत्रचतुष्टयमासीत्। ते च माथुर—गौड—नागर—नैगमा—इतिप्रसिद्धाः। जामदग्न्यकर्तृकक्षत्रियवधकाले चन्द्रस्य राज्ञो भार्याया दाल्भ्याश्रमं गताया गर्भवधार्थमागतस्य जामदग्न्यमुनिप्रार्थितस्य शापेन क्षत्रियत्वमुत्सृज्य कायस्थस्य प्राप्तस्य गर्भस्य सन्ततिः। सा च दक्षिणादेशे प्रभुनामकत्वेन प्रसिद्धा। संकरजातास्तूक्ता एव। विचारयिष्यते चोपरिष्टात्।

वैश्याक्षत्रिययोर्जातो माहिष्य इति गीयते।
स माहिष्यो निषादस्त्रीसंगमाज्जनयेत्सुतम् ॥
मालाकारमसौ लोके मालाकारः प्रकीर्तितः।
कुसुमानि सशाकानि वर्धयेद्धनलब्धये ॥
स हीनः शुद्रधर्मेभ्यः संस्कारे सप्तके प्रभुः ॥
अयमनुलोमः ॥
द्विजवैश्यासमायोगाज्जाताम्बष्ठा पुरन्ध्रिका।

ब्राह्मण्यां जायते वैश्यादेषो वैदेहकाभिधः ॥
साऽम्बष्ठा जनयेत्पुत्रं वैदेहाद्वेनसंज्ञितम् ।
स शूद्रधर्मरहितो ऽभ्यसन्नाट्यं सलाघवम् ॥
जीविका तस्य विहिता हरिमेखनलेखनम् ।
अयम्प्रतिलोमः—
वैश्यात्क्षत्रियसंयोगान्माहिष्या जायते सुता ।
क्षत्रिणीवैश्यसंयोगाज्जातोऽसौ मागधाभिधः ॥
माहिष्यान्मागधाच्चैव शुद्धं मर्दनसंज्ञकम् ॥
जनयेत्तनयं सोऽपि शूद्रधर्मविनाकृतः ॥
गीतं चतुर्विधं वाद्यमभ्यसेज्जीवनाय च ॥
अयम्प्रतिलोमो मृदङ्गवाद्यकारः ॥
शूद्रादायोगवी जाता वैश्यकन्यासमुद्भवा ॥
आयोगवी सा सैरन्ध्री कायस्थाज्जनयेत्सुतम् ।
स हीनः शूद्रजातिभ्यः सेवां कुर्याद्द्विजातिषु ॥
पादयोः क्षालनं तेषां धम्मिल्लानां प्रसाधनम् ॥
अभ्यङ्गं मर्दनं चैव चन्दनेनानुलेपनम् ।
मृगनाभेश्चन्द्रयोगं शृङ्गाररचनं नवम् ॥
आजीवस्तस्य सम्प्रोक्तः स्त्री च सैरन्ध्रिका स्मृता
प्रसाधनाय चतुरा सैरन्ध्रीति प्रकीर्तिता ॥
अयमनुलोमपुंजन्यत्वादनुलोमः ॥
विप्राच्छूद्रासमुत्पन्नो नरः पारशवाभिधः ।
स एव स्यान्निषादोऽत्र लोके व्यापारविश्रुतः ॥
उग्रा शूद्रासमुत्पन्ना क्षत्रियादेव केवलात् ।
सोग्रा निषादसंयोगाज्जाधिकं जनयेत्सुतम् ॥

स शूद्रधर्मरहितो द्विजानां लेखहारकः ।
देशाद्देशान्तरं गच्छेत्स शीघ्रं चरवेगतः ॥
अयमनुलोमः मेवडा इतिमध्यदेशे भाषाप्रसिद्धः ।
क्षत्रिणी शूद्रसंयोगात्क्षत्तारं जनयेत्सुतम् ।
क्षत्तुरुग्रा च जनयेत्क्षेमकं तनयं क्षितौ ॥
स हीनः शूद्रधर्मेभ्यो द्वाररक्षाऽस्य जीवनम् ।
अयम्प्रतिलोमः । दरवाण इति भाषाप्रसिद्धः ॥
ब्राह्मण्यां वैश्यजनिता जाता वैदेहिकाभिधा ॥
विप्राद्वैश्याङ्गनाजातोऽम्बष्ठ इत्यभिधीयते ।
सा वैदेही च सोम्बष्ठस्तयोर्जातः कुशीलवः ॥
नृत्यगीतासंगीतज्ञो देशाद्देशान्तरं व्रजेत् ।
सास्य वार्ता च कथिता चारणस्य स्वयंभुवा ॥
अयमनुलोमः—
शैवाः पाशुपाताश्चैव योगधर्मपरायणाः ॥
आरूढपतिताः स्युश्च शूद्रपण्याङ्गनारताः ॥
तेभ्यस्ताभ्यश्च सम्भूतो भस्माङ्कुर इतिस्मृतः ।
स जटाभस्मधारी च शिवलिङ्गं प्रपूजयेत् ॥
ताम्बूलमक्षता द्रव्यं गावः क्षेत्राणि शाखिनः ।
शिवाय प्राणिभिर्दत्तमन्यत्किमपि भक्तितः ॥
चण्डीशं चेदिति ख्यातं तेन सस्येन जीविका ॥
आरूढपतिताः शूद्राः शुद्धाः शुद्धा अपीत्यर्थः ॥
अयमनुलोमः, गुरव इति महाराष्ट्रभाषाप्रसिद्धः ।
शूद्रोदायोगवी जाता वैश्यायामिति विश्रुतम् ॥
ब्राह्मण्यां वैश्यजनितः स च वैदेहकः स्मृतः ।

आयोगवी सा वैदेहान्मैत्रेयं जनयेत् सुतम् ॥
स्यादुषःसमये नित्यं घण्टावादनतत्परः ।
प्रबोधनं नराणां च कुर्यान्मङ्गलगायकः ॥
ललितां भैरवीं गायन् धनं सा तस्य जीविका ।
अयम्प्रतिलोमः । टोङ्गणार इति भाषाप्रसिद्धः ।
ब्राह्मण्यां क्षत्रियात्सूतः सञ्जात इति कीर्तितः ।
ब्राह्मण्यामपि वैदेही वैश्याज्जातेन विश्रुता ॥
वैदेही सूतसंयोगात्सूदं सूते सुतं स च ।
लेह्यादीनां चतुर्णां च पाकं कुर्याद्यथाविधि ॥
अन्नानामनुयोगेन मांसस्नानकभेदनः ।
रसैः स्वाद्वम्ललवणतिक्तोषणकषायकैः ॥
वातपित्तकफादीनां क्षयोपचयकारकैः ॥
शूद्रधर्मानधिकृतः सूपशास्त्रविशारदः ।
पार्वतीबलभीमानां मतेन परिनिष्ठितः ।
अयं प्रतिलोमः सूपकः ।
क्षत्रिणी वैश्यसंयोगाज्जाता मागधिका सुता ।
वैश्याशूद्रसमायोगाद्भवेदायोगवाभिधः ॥
मागधायोगवाभ्यां च भृकुंस इति जायते ।
स वर्णबाह्यो लोकेषु सम्यक्सङ्गीतकोविदः ॥
कान्तानां नृत्यशालासु नृत्यगीतं च शिक्षयेत् ।
अयमनुलोमः—
कायस्थजातेर्वनितां मालाकारोऽभिकामयेत् ।
तस्यां यो ग्राम्यधर्मेण जायते तनयस्तथा ॥
शराणां कङ्कपक्षैश्च रचना तस्य जीविका ॥

अयम्प्रतिलोमः। शिकलीगर इति मध्यदेश—
भाषाप्रसिद्धः।

क्षत्रिणीतनया वैश्याज्जनयामास बन्दिनीम्।
सा बन्दिनी द्विजात्सूते तनयं मद्गुसंज्ञकम्॥
तं मद्गुं कुम्भकारस्य महिषी यदि कामयेत्।
तस्यां स जनयेत्पुत्रं छलेन चण्डालमल्लाभिधम्॥
स हीनः शूद्रवर्णेभ्यः पर्णवल्लीविधायकः।
ताम्बूलवल्लीसम्भूतं धनं तस्यैव जीवनम्॥
अयमनुलोमः। ताम्बोलीति मध्यप्रदेशभाषा
प्रसिद्धः।

ब्राह्मण्यां वैश्यसहितो जातो वैदेहकाभिधः।
तस्य शूद्राङ्गनासुनुर्धातुसंधायिकाभिधः॥
कुर्यादन्नानि चत्वारि विक्रयार्थं समन्ततः।
अन्नविक्रयतो लब्धं तद्धनं तस्य जीविका॥
अयम्प्रतिलोमः। भटिहारा ( भडभुंजा ) इति
भाषा प्रसिद्धः।

कटधानस्तु मद्गुं तां कामतो यदि गच्छति।
तयोर्यो जायते पुत्रः स छागलिकसंज्ञकः॥
स हीनः शूद्रजातिभ्यः (छागलो न त्यमेच्च सः।)
छागलेभ्यो धनं जातं तस्य तज्जीवनं स्मृतम्॥
अयम्प्रतिलोमःगडेरिया इति मध्यदेशभाषाप्रसिद्धः
मद्गुसैरन्ध्रयोर्जातः शय्यापालकसंज्ञकः।
जातस्तं सततं राजा शय्याकर्मणि योजयेत्॥
अयम्प्रतिलोमः।

कर्मचाण्डालवनिता पुष्पशेखरसंज्ञितात् ।
जनयेद्यं सुतं सोऽपि जातो मण्डलकाभिधः ॥
युगुलं शुनकानां स धर्तुं योज्यो महीभुजा ।
आखेटकपरोभ्यश्च शुना जीवनमुच्यते ॥

अयम्प्रतिलोमः—

बन्दिनी शूद्रसंयोगाज्जातः स्यन्दोलिकाभिधः ।
चतुर्धर्मविहीनश्च मञ्जिष्ठारङ्गकारकः ॥
तेन रङ्गेन वासांसि चित्राणि रचयेत्सदा ।
स एव सूचिकः ख्यातः कर्तरीसूचिकाङ्कः ॥

अयमनुलोमः । रङ्गारी शिम्पीतिमध्यदेशभाषाप्रसिद्धः ।

निषादकन्यका शूद्रसंयोगाज्जनयेत्सुतम् ।
क्रोधकः कुक्कुटकेति स प्रोक्तो द्विजसंज्ञकः ॥
टङ्कशालासुवर्णासु नाणकानां विधायकः ।
जीवनायाष्टधातूनामन्त्यजैः समतां व्रजेत् ॥

अयम्प्रतिलोमः—

उग्रवैदेहिकायोगाज्जातो मण्डुषसंज्ञकः ।
रजको वर्णहीनः स प्रथमश्चान्त्यजेषु च ॥
वस्त्रनिर्णेजनं कुर्यादात्मवृत्त्यर्थमेव सः ।

अयमनुलोमः—

उग्रपारशवाभ्यां यो जातो मौछलिकाभिधः ।
विध्येदसौ तैलयन्त्रमुत्तमस्त्वन्त्यजातितः ॥
जीविकास्य समुद्दिष्टा शुद्धतैलस्य विक्रयः ।
तिलहिंसा यत्र खाकर्णनात्पापसम्भवः ॥

अतो मोष्कलिको नित्यं निवास्यो नगराद्बहिः ।

अयमनुलोमः—

रथकारस्य वनिता आयोगवसमागता ।
सूते यं तनयं सोऽपि सूत्रधार इतीरितः ॥
जायाजीवश्च शैलूषो नाट्यशास्त्रविशारदः ।
जलमण्डलकादीनि सूत्राणि रचयेत्सदा ॥
लोकविस्मयकारीणि वसेत्स नगराद्बहिः ॥

गारुडीतिप्रसिद्धः ।

कुक्कुटस्यैव वनिता कुम्भकारेण सङ्गता ।
तस्याः सुनुः स विख्यातः कुरुविन्द इति स्मृतः ।

प्रतिलोमः । जुलुहा इति भाषाप्रसिद्धः ॥

सङ्गता वेनवनिता वर्तकेण यदा रहः ।
स्यात्स शाम्बरकालाख्यः पुत्रोऽसौ लोकसम्मतः ॥
स हीनस्त्वन्त्यजातिभ्यः शिशुत्रासोविधायकः ।

अयं सातीति प्रसिद्धः ॥

आभीरकुक्कुटाभ्यां यो जातः सोशीरसंज्ञकः ।
स कुर्या (त्तसरीणां) च वसनान्यात्मवृत्तये ॥
तद्वैपरीत्याद्यो जातो नीलीकर्ता स उच्यते ।

कोशटा इति बङ्गलाभाषा प्रसिद्धः—

(मार्गा) नापितयोर्जातः स हि सांखिलयसंज्ञकः ।
हीनः समूह्य केशानां कुर्याद्वपनमञ्जसा ॥
जलूकास्तु च शृङ्गाणि रक्ताकृष्टौ प्रयोजयेत् ।

मार्गा मार्दलिका 'तेरिव' इति भाषाप्रसिद्धः ॥

जातो मैत्रेयशुक्रेण जाङ्घिकायान्तु यः सुतः ।

असौ बन्धुलसंशोद्धा धर्मः सर्वासु जातिषु ॥
सुवर्णाकारविधिना धूलया होमं स पश्यति ।
मैत्रेयो नटः । जाङ्घिको मेवडा । अयं ज्ञारा
इति प्रसिद्धः ।
निषादनारीसंयोगान्मौष्टिको जनयेत्सुतम् ।
स पांसुलकसंज्ञो हि ॥ भाषाप्रसिद्धः ॥
औरभ्रं छागली सूते द्विजसङ्गाद्धि यं तु सः ।
कुर्यादूर्णापटांश्चित्रान्मेषाणां चैव पालनम् ॥
अयं धनगर इति भाषाप्रसिद्धः ॥
आवर्तवनिता सूते क्षेमकादत्र पुत्रकम् ।
स महाङ्गुरिति ख्यात उष्ट्रवाहनतत्परः ॥
क्षेमको द्वारपालकः ॥
आवर्तवनिता सूते क्षेमकाद्रिमिसंज्ञकम् ।
स क्षारोदकमादाय बध्वा केदारखण्डकम् ॥
तज्जातं लवणं तस्य जीवनं भुवि विश्रुतम् ।
कारावारी यदा नारी वैदेहाज्जनयेत् सुतम् ॥
स मोदसंज्ञः कथितस्तुल्यान्त्यैः समजीवनः ।
वातण्डवेषः स चरेदरण्ये वृक्षपर्वते ।
कारावारी कोरस्त्री ॥
आयोगव्यां पारशवाज्जातः कैवर्तकाभिधः ।
स हीनस्त्वन्त्यजातिभ्यो जीविका तस्य चोच्यते ॥
उपानदङ्गत्राणानि कुर्यादश्वस्य पाखरः ।
(गवानां)च महिष्याश्च चर्मणा तस्य जीवनम् ॥
वाग्वाणी मोचिका । अयं चांभार इति प्रसिद्धः ।

आभीरी वेनसंयोगाद्दौष्कलं जनयेत्सुतम् ।
असावधम इत्युक्तः सर्वधर्मबहिष्कृतः ॥
सुरां सदा विक्रीणीत कुर्यात्तद्धनबन्धनम् ॥
कलवार इति प्रसिद्धः ॥
कैवर्तजाडिघकाभ्यां यो जातो मङ्गुष्ठसंज्ञकः ।
स स्फोटयेच्च कटकान् चूर्णं कृत्वा विशेषतः ॥
तद्धनं जीवनाथालं सोऽपि कुर्यान्निरन्तरम् ।
न स्पर्शस्तस्य कर्तव्यः कदाचिदपि मानवैः ॥
भिग्वर्णीकुम्भकाराभ्यां जातोऽसौ चित्रकारकः ।
स चित्राणि विचित्राणि लेखयेदात्मवृत्तये ॥
अयं चित्रकारः ॥
कुरुविन्दाङ्गजात् सूते धीवरान् किंशुकाभिधान् ।
असावन्त्यज इत्युक्तो वंशपात्रानुजीवकः ॥
बुरुड इति भाषाप्रसिद्धः ॥
वैदेही तनयं सूते निषादाद्धितुण्डकम् ।
महान् सर्पान् करण्डेषु क्षिप्त्वा विषधरान् बहून् ॥
तैः खेलनं जीविकास्य सेवकस्येव भूभुजाम् ॥
गारुडीति प्रसिद्धः ॥
सौनिकं कर्मचण्डालात्सूते दासवधूः सुतम् ।
स कुर्यादजमेषाणां वधं तन्मांसविक्रयी ॥
तद्धनं जीविका तस्य स हीनस्त्वन्त्यजातितः ।
खाटिक इति भाषाप्रसिद्धः ॥
व्याधाहितुण्डिकाभ्यां यो जातस्त्वेषोऽवीकसंज्ञकः ।
स कुर्यान्मूषिकादीनां हननं भूमिवासिनाम् ॥

जनेभ्यो याचयेद्वित्तं तेन तद्वर्तनं स्मृतम् ॥
मेदस्य राजवनिता तथा वेनेन सङ्गता ।
सा सूते यवनं पुत्रं तुरुष्कः सम्प्रकीर्तितः ॥
तस्माद्गरिष्ठश्चाण्डालो दयावान् सोऽतिनिष्ठुरः ।
गोगर्दभशुनां कुर्याद्ग्रामनिःसारणं बहिः ॥
सा जीविकास्य कथिता सर्वतो लोकविश्रुता ।
महार इति प्रसिद्धः ॥
निषादवनिता सूते चाण्डालाड्डोमसंज्ञकम् ।
असावल्पावसायी च श्मशाननिलये वसेत् ।
तत्र रक्षां प्रकुर्वीत प्रेतानां वस्त्रजीवनः ॥
डोंब इति भाषाप्रसिद्धः ॥
आन्ध्रस्य वनितासङ्गाच्चाण्डालो जनयेत्सुतम् ।
स्वसंज्ञं महाडोति लोके सर्वत्र विश्रुतः ॥
अश्वोष्ट्रगर्दभानां च मृतानां कालयोगतः ।
कुर्यान्निर्हरणं सोऽपि मांसभक्षणजीवकः ॥
मेदजायुवतीसङ्गाच्चाण्डालो जनयेत्सुतम् ।
स मांगः श्वपचो लोकेऽस्पृश्यः साहसकारकः ॥
जीविका तस्य कथिता चार्द्रगोचर्मरज्जुभिः ।
एवं चाण्डालपर्यन्ता ब्राह्मणाद्याः प्रकीर्तिताः ॥
प्रातिलोम्यानुलोम्येन स्फुटा संकरजातयः ॥
उशनःस्मृतौ नामान्तराण्युक्तानि । निषादपार-
शववन्नामकृतो भेदो न वृत्तिकृत इत्यवधेयम् ।
गौरवाद्विह नोक्तम् । मनुः—
रजकश्चर्मकारश्च नटो बुरुड एव च ॥

कैवर्तमेदभिल्लाश्च सप्तैते अन्त्यजाः स्मृताः ॥

इतिजातिभेदनिरूपणमिति,, ॥ इति ॥

[ उक्तार्थस्मृतिकौमुदी । ] एतेन स्मार्तकौमुद्यपि व्याख्याता ॥ तद्यथा— "तत्र तावद्वर्णानामुत्पत्तिरुपवर्ण्यते । तदधीनत्वादाचाराणाम् । तत्र सृष्टिक्रममनुक्रम्य श्रुतिः—

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽभ्यजायत ॥

इति । मनुः—लोकानान्तु विशुध्यर्थं मुखबाहूरुपादतः ।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत् " ॥ इति ॥

विष्णुपुराणे— :

ब्राह्मणाः क्षत्रिया वैश्या शूद्राश्च द्विजसत्तम ।
पादोरुवक्षस्थलतो मुखतश्च समुद्गताः ॥

इति । अत्र पादोरुवक्षस्थलतः शूद्रादयः समुद्गता इति क्रमो विवक्षितः । ननु पादोरुवक्षस्थलतः शूद्रादीनामुत्पत्तिवर्णनं नोपपन्नम् ; अनादित्वात्संसारस्य । मैवम् ; द्विविधं ह्यनादित्वम् , उत्पत्त्यभावादेकम् । अपरन्तु सत्यामप्युत्पत्तौ प्रवाहस्याविच्छित्तेः । आद्यमपि द्विविधम् , वस्तुत्वे सत्यपि उत्पत्त्यभावादनादित्वम् , अवस्तुत्वे सत्यप्युत्पत्त्यभावादनादित्वमिति । अत्राब्रह्मनिष्ठम् । अत्र प्रागभावनिष्ठम् । यदुक्तम्—सत्यमप्युत्पत्तौ प्रवाहस्याविच्छित्तेरनादित्वमिति । तच्च कार्यात्मके संसारे, तदुक्तं वेदान्तकल्पतरौ—

तदाकृत्युपरक्तानां व्यक्तीनामेकया विना ।
अनादिकालावृत्तिर्या सा कार्याऽनादिता मतेति ॥

प्रवाहरूपेणापि स्थितिरयुक्तेतिचेन्नेति ब्रूमः ॥ द्विविधो हि

प्रलयः, अवान्तरप्रलयो महाप्रलयश्चेति। तत्रावान्तरप्रलये लोकान्तराणां विद्यमानत्वात्तत्तज्जात्यच्छिन्नव्यक्तीनां मध्ये एकस्या अपि व्यक्तेरवस्थानसम्भवात्प्रवाहस्याविच्छेदः। महाप्रलये तु वासनारूपेणावस्थानमस्त्येव। तस्मान्न काचिदनुपपत्तिः प्रवाहनित्यतायाः। अत्र नामैवमुत्पत्तिः। कथं नाम ब्राह्मणत्वादिजातिभेदपरिकल्पनम्। तथा चोक्तम्—

अनादाविह संसारे दुर्वारे मकरध्वजे।
कुले च कामिनीमूले का जातिपरिकल्पना॥ इति॥

किञ्च—विप्रादिषु मनुष्येषु विप्रत्वादेर्न लक्षणम्।
सास्नादिरिव गोत्वादेर्गवादिषु पशुष्विव॥

गवि यथा गोत्वव्यञ्जकं सास्नादिमत्त्वं, यथा च महिषे गवलादिमत्त्वम्, तद्वन्मनुष्यत्वे ब्राह्मणादिष्वविशिष्टे विप्रत्वादेर्लक्षणं व्यञ्जकं किमपि नास्तीत्यर्थः। अत्रोच्यते—

'भवेदेवं स्थितिर्यत्र लिङ्गं प्रत्यक्षगोचरम्।
शब्दैकगम्येष्वर्थेषु प्रमाणं शब्द एव नः॥ इति॥

गोत्वादिजातिर्हि प्रत्यक्षा; तल्लिङ्गानां तज्जातिव्यञ्जकानां सास्नादीनां प्रत्यक्षत्वात्। न च तथा ब्राह्मणत्वादिजातीनां प्रत्यक्षत्वम्; तल्लिङ्गानामप्रत्यक्षत्वात्। अपि तु शब्दैकसमधिगम्यत्वं ब्राह्मणत्वादेः। शब्दश्च श्रुतिस्मृत्यादिर्न लौकिकः। स च शब्दो नः प्रमाणं वैदिकानाम्, नावैदिकानां वेदः प्रमाणमिति पञ्चप्रमाणलक्षणे निरूपितम्। अत्र तु ग्रन्थविस्तरभयादस्माभिर्न प्रदर्शितम्। सिद्धे च वेदप्रामाण्ये तन्मूलानामपि स्मृत्यादीनां सिद्धमेव प्रामाण्यम्। तस्माच्छब्दो नः प्रमाणमित्युक्तम्। तथा चाहुः—

यच्छन्द आह तदस्माकं प्रमाणमिति । तस्मात्परमेश्वरस्य मुखादिभ्य उत्पत्तेर्ब्राह्मणत्वादिजातिरवतिष्ठते। यदुक्तम्—

कुलञ्च कामिनीमूलं का जातिपरिकल्पना ॥ इति ॥

तदवैदिकमतानुसारेणेति न दोषः । अथवाऽवश्यं व्यभिचारात् स्त्रियो रक्षणीया इत्यस्य तात्पर्यार्थः ॥ अनेनैवाभिप्रायेण व्यासोऽप्याह—

रहो नास्ति क्षणो नास्ति नास्ति प्रेरयिता जनः ।
तेन नारद नारीणां सतीत्वमुपजायते ॥ इति ॥

तस्मादव्यभिचरितासु सवर्णासु सवर्णेभ्य उत्पन्नास्तत्तद्वर्णव्यपदेशं तत्तज्जातिव्यपदेशं च लभन्ते । तथाच याज्ञवल्क्यः—

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ॥ इति ॥

एवं शब्दैकसमधिगम्येषु ब्राह्मणत्वादिषु न व्यञ्जकापेक्षा ।
किञ्च—समाने सति विप्रत्वे कुशिका कुण्डिना इति ॥

गोत्रभेदो यथा तद्वद्विप्रत्वादिविनिर्णयः ।
भिदाभावेऽपि गोत्रस्य प्रवराणां यथा भिदा ॥
अवशिष्टे मनुष्यत्वे विप्रत्वाद्यपि तत्तथा ।
गोत्रप्रवरसम्बन्धो येषां नास्ति कथञ्चन ॥
उपदेशातिदेशाभ्यां शूद्रवर्णास्तु ते स्मृताः ॥

कानि गोत्राणि के ते प्रवराः; येषां सम्बन्धाभावात् पद्भ्यांजातस्य शूद्रत्वव्यपदेशः? उच्यते कल्पसूत्रकारैः स्वस्वसूत्रेषु निर्दिष्टानि 'अथातः प्रवराध्यायं व्याख्यास्यामः, इत्युपक्रम्य तथा पुराणेष्वपि । तत्र ग्रन्थविस्तरभयादेकग्रन्थोक्तान्येवेयन्ति निर्दिश्यन्ते । मत्स्यपुराणे मनुवाक्यम्—

ऋषीणां नाम गोत्राणि वंशावतरणं तथा ।
प्रवराणां तथा साम्यासाम्यं विस्तरतो वद ॥ इति
मनुप्रश्ने वर्तमाने मत्स्य उवाच—
भृगुश्च लोम्नश्च सुतां दिव्याभां यामविन्दत ।
तस्यां सप्त सुता जाता देवा द्वादश याज्ञिकाः ॥
भवनो भावनश्चैव वसुजन्यः सुजनस्तथा ।
क्रतुश्च विश्वमूर्धा च (त्यजश्च वसुवश्च हे) ॥
अभवश्चाव्ययश्चैव दक्षो द्वादशकस्तथा ।
इत्येते भृगवो नाम देवा द्वादश कीर्तिताः ।
पौलस्त्योऽजनयच्छिप्रं देवानान्तु कनीयसम् ॥

च्यवनस्तु महाभागं नन्दश्यानं तथाप्यसावित्यादि । अत्र सर्वत्र द्विजानामेव गोत्रप्रवर्तकत्वात् तेषामेव गोत्रप्रवरो यदेष कल्पसूत्रकारादिभिरुपन्यस्तः । एवं गोत्रप्रवरसम्बन्धो द्विजानामेवोपदेशतः सिद्धः । क्षत्रियवैश्ययोर्यजनादिषु प्रवरानतिदिशति स्म भगवानाश्वलायनः । "पौरोहित्यान् राजविशां प्रवृणीत" इति त्रैवर्णिका एव यज्ञसम्बन्धिनः ; द्विजत्वात्तेषाम् । शूद्रस्याद्विजत्वेन यज्ञसंयोगाभावान्नातिदेशतोऽपि प्रवरसम्बन्धः । यत्सम्बन्धात्प्रवरद्वारा वा गोत्रप्राप्तिः । यतोऽमुकगोत्राणाममुकप्रवरा इति गोत्रमुपलक्षणीकृत्य प्रवरा भवन्ति । एवमुपदेशातिदेशाभ्यां शूद्रस्य गोत्रप्रवरसम्बन्धाभावः ; अद्विजत्वात्तस्य । अद्विजत्वञ्चोपनयनाभावात् । यज्ञसंयोगाभावश्च कूर्मपुराणे दर्शितः ।

ससर्ज ब्राह्मणान् वक्त्रात् क्षत्रियांश्च भुजाद्विभुः ।
वैश्यानूरुद्वयाद्दे सः पद्भ्यां शूद्रान् पितामहः ॥
यज्ञनिष्पत्तये ब्रह्मा शूद्रवर्जं ससर्ज ह ॥ इति ।

ननु तर्हि कथं शूद्राणां गोत्रव्यवहारः ? उच्यते ; कमपि स्वकुलोत्पन्नमूलपुरुषं प्रसिद्धमुपलक्षणीकृत्य तन्नाम्ना गोत्रव्यवहारः। ये च परिणीतायां शूद्रायां द्विजातिभ्य उत्पन्नास्तेषां च यावत्पिण्डनिवृत्ति तत्तज्जनकगोत्रेणैव व्यवहारात् तत्परम्परायामपि तद्गोत्रेणैव ते व्यवहरन्तीति लोके गोत्रव्यवहारः शूद्राणाम्। अनेनैवाभिप्रायेण बौधायनं 'चतुर्णामपि वर्णानां पितृणां पितृगोत्रतः, इति। तस्मात्परमपुरुषपादपद्मजातत्वे सति पूर्वोक्तप्रकारेण गोत्रप्रवररहिताः शूद्रा इति व्यपदिश्यन्ते। एतच्च लक्षणं विप्रेष्विव स्वकुलपरम्परयाऽत्रसेयम्। अथ शूद्रवर्णभेदाः।

अत्र पूर्वोक्तप्रकारेण परमपुरुषस्य चरणजातः केवलशूद्रः। अपरे द्विजातिभ्यः परिणीतशूद्रायामुत्पन्नाः। एतेषु केचन केवलशूद्राद्विशिष्टाः। तत्र मनुः—ब्राह्मणादित्यनुवृत्तौ 'निषादः शूद्रकन्यायां स पारशव उच्यते। क्षत्रियाच्छूद्रकन्यायां क्रूराचारविहारवान्। क्षत्रशूद्रवपुर्जन्तुरुग्रो नाम प्रजायते॥ पारशव निषाद इति चैकस्यैव द्वे नामनी।

देवलः—वैश्यात्तु शूद्रकन्यायां शूद्र एवाभिजायते।

याज्ञवल्क्यः—सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः।
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः॥

इत्युपक्रम्य—वैश्यात्तु करणः शूद्रायां विन्नास्वेष विधिः स्मृतः।

बौधायनः—वैश्याच्छूद्रायां रथकारः। अत्र वैश्यनाम। क्षत्रियाद्वैश्यायामुत्पन्नो माहिष्यः। वैश्याच्छूद्रायामुत्पन्ना करणीति। शूद्रेति व्यपदिश्यते। अत एव याज्ञवल्क्यः 'माहिष्येण करण्यान्तु रथकारः प्रजायते। येन शूद्रायां वैश्यः। अत्र शूद्रायां वैश्यादुत्पन्नस्य वैश्यत्वनिर्देशस्तस्य शूद्रापेक्षयोत्कर्षद्योतनार्थः। यच्चोक्तं

देवलेन—वैश्याद्वै शूद्रकन्यायां शूद्र एवाभिजायत इति । तद्वश्यापेक्षया तस्यापकर्षप्रतिपादनार्थम् । एते त्रयोऽप्यनुलोमजाः । पारशवापरपर्यायो निषादनामा ब्राह्मणाच्छूद्रकन्यायां जात एक एव । क्षत्रियाज्जात उग्रनामा द्वितीयः । वैश्यादुत्पन्नो रथकारापरपर्यायः करणनामा तृतीयः । आवृतसंज्ञकोऽन्योऽप्यनुलोमजोऽस्ति । तथाच मनुः—ब्राह्मणादुग्रकन्यायामावृतो नाम जायत इति । क्षत्रियाच्छूद्रायां जातोग्रा तस्यां ब्राह्मणाज्जात आवृतः । अयमत्र तात्पर्यार्थः—द्विजातिभ्य एवोत्पन्नास्तथा क्षत्रियवैश्यधर्माधिकारिभ्यो मूर्धावसिक्तादिभ्यश्चोढायां शूद्रायामुत्पन्नास्तथा मूर्धावसिक्तादिभ्य एवोढासु शूद्रादिषु समुत्पन्नश्च शूद्रशब्दाभिधेया इति । अत एव शूद्रसमानधर्मास्ते सर्वे । अथ प्रतिलोमजाः । तत्र सूतादयोऽप्यतिदेशतः शूद्रसमानधर्माण इति ते न निरूप्यन्ते । तथा कुण्डगोलकोऽपि शूद्रसमानधर्मा । तथा देवलः—द्विजातीयेन यः पित्रा सवर्णायां प्रजायते । अवर्णोढ इति ज्ञेयः शूद्रधर्मा च जातित इति । जातिर्जननं तस्मादनिन्दितधर्मा न शूद्रधर्मा जातित इत्यर्थः । यथा—व्रतहीनास्त्वसंस्कार्या सवर्णास्वपि ये सुताः । उत्पादिता सवर्णेन व्रात्या इति बहिष्कृताः ॥ सवर्णास्वपि सवर्णैर्विवाहमन्तरेण व्यभिचारादुत्पादिता इत्यर्थः । ते च सुता व्रतहीना उपनयनव्रतरहिता अत एवासंस्कार्याः । मनुः—द्विजातयः सवर्णासु जनयन्त्यव्रतांस्तु यान् । तान् सावित्री परिभ्रष्टान् व्रात्यानित्यभिनिर्दिशेत् ॥ द्विजातयः सवर्णासु यान् जनयन्ति ते चेत्सावित्रीपतितास्तदाऽव्रता भवन्ति, ततश्च व्रात्या इतिसंज्ञा भवन्तीत्यर्थः । व्रात्यस्तोमरूपं प्रायश्चित्तं कृत्वोपनयनसंस्कारेण संस्कृता यदि न भवेयुस्तदा ते शूद्रसदृशाः । तथा च याज्ञवल्क्यः—

सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः। इति।

मनुः—व्यभिचारेण वर्णानामवेद्यावेदनेन च।
स्वकर्मणां च त्यागेन जायते वर्णसंकर॥

अवेद्यावेदनमविवाह्याविवाहः। याज्ञवल्क्यः—

ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा।
शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः॥

अङ्गिराः—

यस्तु प्रव्रजितापुत्रो ब्राह्मण्यां चैव शूद्रजः।
तावुभौ विद्धि चण्डालौ सगोत्राद्यस्तु जायते॥

मनुः—ब्राह्मणादित्यनुवर्तमाने—आभीरोऽम्बष्ठकन्यायामायोगव्यान्तु धिग्वणः। ब्राह्मणाद्वैश्यकन्यायामुत्पन्नाऽम्बष्ठी तस्यां ब्राह्मणादुत्पन्न आभीरः। अयं शूद्रसदृशः। अनुलोमजानुलोमजात्युत्पन्नत्वात्। प्रसङ्गादस्य प्रतिलोमजेष्वनुवर्णनम्। शूद्राद्वैश्यायामुत्पन्नाऽऽयोगवी तस्यां ब्राह्मणादुत्पन्नो धिग्वणः। व्यासः—शूद्रान्निषादो मत्स्यघ्नः क्षत्रियायां व्यतिक्रमात्। क्षत्रियायां शूद्राद्व्यतिक्रमादुत्पन्नो निषादः प्रतिलोमजः। असावेव कर्मणा मत्स्यघ्न इति व्यपदेशभाक्। एवंविधान्निषादाच्छूद्रायां जातः पुल्कसः। तथा च मनुः—

जातो निषादाच्छूद्रायां जात्या भवति पुल्कसः।
शूद्राज्जातो निषाद्यान्तु स वै कुक्कटकः स्मृतः॥

हारीतः—क्षत्रियायां वैश्यशूद्रौ बन्दिनिषादौ जनयतः। वैश्यायां शूद्रः पुल्कसो जनयतीति। मनुः—

क्षत्तुर्जातस्तथोग्र्यान्तु श्वपाक इति चोच्यते।
वैदेहकेन त्वम्बष्ठ्यां उत्पन्नो वेन उच्यते॥

शूद्रात्क्षत्रियायामुत्पन्नः क्षत्ता । अयं च मत्स्यघ्न इति योऽयं प्रतिलोमनिषादस्तदपरपर्यायः । क्षत्रियाच्छूद्रकन्यायामुत्पन्नोग्रा । ब्राह्मण्यां वैश्याज्जातो वैदेहकः, ब्राह्मणाद्वैश्यायामुत्पन्नाऽम्बष्ठी । सावित्रीपतिता व्रात्या इति पूर्वं व्रात्या दर्शिताः । तदुत्पन्नान् दर्शयति मनुः—

व्रात्यात्तु जायते विप्रात् पापात्मा भूर्जकण्टकः ।
आवन्त्यवाटधानौ च पुष्पशेखर एव च ॥

अत्र मेधातिथिमतम् । सवर्णास्वितिपूर्वश्लोकादनुवर्तते । कुतः ? इह स्त्रीजातेरनुपादानात् । अवश्यंभावाच्च तदपेक्षायाः । वैश्यायां ब्राह्मणाज्जातो यो भूर्जकण्टकसंज्ञः, स नेह विवक्षितः । अयन्तु भूर्जकण्टकस्य नामान्तरमिति देशभेदाच्चैवंसंज्ञो भवतीति च । एवमुत्तरत्रापि अन्यैरेवं व्याख्यातम् । भूर्जकण्टकाद्ब्राह्मण्यां जात आवन्त्यः । आवन्त्याद्ब्राह्मण्यामेव वाटधानः । वाटधानोद्ब्राह्मण्यामेव पुष्पशेखर इति । एवमुत्तरत्रापि द्रष्टव्यम् ।

झल्लो मल्लश्च राजन्याद्व्रात्याल्लिच्छिविरेव च ।
नटश्च करणश्चैव खसो द्रविड एव च ॥
असौ प्रतिलोमजोऽन्यः करणो नानुलोमजः ।
वैश्यात्तु जायते व्रात्यात्सुधन्वाचार्य एव च ॥
कारूषश्च विजन्मा च मैत्रः सात्वत एव च ।

राजन्याद्व्रात्यान्मल्लादयो जायन्ते । वैश्याद्व्रात्यात्सुधन्वाचार्यादयः । एते च पूर्वोक्ता भूर्जकण्टकादयो ब्राह्मणादिवर्णव्यपदेशरहिता मूर्धावसिक्तादिजातिरहिताश्च । अत एव शुद्धजातिवर्णबहिर्भूतत्वेन बाह्यव्यपदेशभाजस्ते च व्रात्याः परस्परसंकरेण स्वतोऽपि निकृष्टान् प्रसुवते । तथा च मनुः—

यथैव शूद्रो ब्राह्मण्यां बाह्यं जन्तुं प्रसूयते ।
तथा बाह्यान्तरं बाह्यश्चातुर्वर्ण्यात् प्रसूयते ॥
प्रतिकूलं वर्तमाना बाह्या बाह्यतरान् पुनः ।
हीना हीनान् प्रसूयन्ते वर्णान्यांश्च दशैव तु ॥

अस्यार्थः—बाह्याश्चण्डालादयः प्रतिकूलं वर्तमानाश्चातुर्वर्ण्यस्त्रियः प्रातिलोम्येन गच्छन्तः आत्मनः सकाशात् बाह्यान्तरान् जनयन्ति। ते च पुनः परस्परापेक्षयाऽसदृशस्त्रियं सदृशस्त्रीं च गच्छन्तो हीनानहीनांश्च वर्णान् जनयन्ति । एषु वर्णशब्दप्रयोग औपचारिकः । चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः; । इति वर्णप्रकारेण मनुनैव पञ्चमवर्णाभावस्य प्रतिपादितत्वात् । चतुर्थः शूद्र एकजातिः । उपनयनात्मकस्य द्वितीयजन्मन अभावात् । ब्राह्मणादिषु चतुर्षु वर्णेषु प्रत्येकं संकीर्णयोनयो भवन्ति । तत्र कस्यचिदनुलोमाः, कस्यचित् प्रतिलोमाः । तत्रायं विभागः । ब्राह्मणस्यानुलोमा एव, शूद्रस्य प्रतिलोमा एव, क्षत्रियवैश्ययोस्त्वनुलोमाः प्रतिलोमाश्च । क्षत्रियस्य द्वावनुलोमावेकः प्रतिलोमः । वैश्यस्यैकोऽनुलोमो द्वौ प्रतिलोमौ । शूद्राद्ब्राह्मण्यां क्षत्रियायां वैश्यायां चोत्पन्ना यथाक्रमं चण्डालक्षत्तायोगवसंज्ञकास्त्रयो भवन्ति । तेषु चाण्डालात् ब्राह्मण्यां क्षत्रियायां वैश्यायां शूद्रायां चोत्पन्ना यथाक्रमं चत्वारः पुत्रा जायन्ते । तथा क्षत्तुः सकाशादपि ब्राह्मण्यादिषु चत्वारः । आयोगवादपि ब्राह्मण्यादिषु चत्वारः । एवमेते द्वादश । चाण्डालक्षत्तायोगवाश्चेति त्रयो मिलित्वा पञ्चदश जनयन्ति प्रातिलोम्येन शूद्राः । एतेषां च परस्परं संकरात् बहवो भेदा जायन्ते । तेषां संज्ञाः शास्त्रतो लोकतश्चावगन्तव्याः । आनन्त्यात् वक्तुमशक्यत्वात् । वैश्यप्रभवौ द्वौ प्रतिलोमौ वैश्या-

त्क्षत्रियायां मागधो ब्राह्मण्यां वैदेहक इति । मागधस्य बन्दीति संज्ञान्तरम् । यश्च वैश्यात् शूद्रायामुत्पन्नः स करणसंज्ञोऽनुलोमजः । यदा स करणः शूद्रायां सुतमुत्पादयति । स चानुलोमजत्वात् शूद्रसदृश एव । यद्यप्यनुलोमजोऽयं तथापि संकरजात्युदाहरणप्रकरणत्वान्निर्दिष्टः । एवंविधेन करणेन शूद्रायामुत्पादित एकः । करणेन वैश्याक्षत्रियाब्राह्मणीषूत्पादितास्त्रयः प्रतिलोमजाः । एवं च करणस्य चत्वारः । तथा वैदेहकेन ब्राह्मण्यादिषूत्पादिताश्चत्वारः । तथा मागधेन ब्राह्मण्यादिषूत्पादिताश्चत्वारः । एवं द्वादश । करणमागधवैदेहकास्त्रयो मिलित्वा वैश्यसंकरजाताः पञ्चदश । क्षत्रियस्य द्वावनुलोमजौ । राजन्यात् ब्राह्मण्यां जातः सूतः प्रतिलोमज इत्येते त्रयोऽपि मिलित्वा पञ्चदश । ब्राह्मणस्यानुलोमजाः पुत्रास्त्रयः । ते च मूर्धावसिक्ताम्बष्ठपारशवसंज्ञाः । एवमेभ्यस्त्रिभ्यो ब्राह्मण्यादिषु चत्वारश्चत्वारः पुत्रा जायन्ते । एते द्वादश मूर्धावसिक्तादयस्त्रयो मिलित्वा चतुःषष्टिर्भवन्ति ।

प्रतिकूलं वर्तमाना बाह्या बाह्यान्तरात्पुनः ।
हीना हीनान् प्रसूयन्ते वर्णान् पञ्चदशैव तु ॥

इत्यस्य श्लोकस्यार्थः ।

प्रसाधनोपचारज्ञमदासं दासजीवनम् ।
सैरन्ध्रं वागुरावृत्तिं सूते दस्युरयोगवे ॥

अयोगवे अयोगवजातौ समष्ट्या व्यक्तिर्गम्यते । शूद्राद्वैश्यायामुत्पन्नाऽयोगवी । दस्युशब्देन च पौण्ड्रकादयो वर्णसंकरजाता उच्यन्ते । तथा च मनुः—

पौण्ड्रकाश्चौण्ड्रद्रविडा काम्बोजा यवनाः शकाः ।
पारदाः पह्लवाश्चीनाः किराता दरदाः खशाः ॥

मुखबाहूरुपज्जानां या लोके जातयो बहिः ।
म्लेच्छवाचश्चार्यवाचः सर्वे ते दस्यवः स्मृताः ॥

एभ्योऽन्यतमाद्दस्यवान्नाम्ना । योऽयोगव्यामुत्पन्नः स सैरन्ध्रनामा । अस्य वृत्तिर्जीवनोपायः प्रसाधनोपचारादि । प्रसाधनं मण्डनादि । तच्च केशरचना कुंकुमचन्दनाद्यनुलेपनं पाणिपादविमर्दनमित्यादि । तस्य प्रसाधनस्योपचारोऽनुवृत्तिः । तज्जानातीति तज्ज्ञः । वागुरावृत्तिरिति । वागुरावृत्तिर्जीवनोपायो यस्य स तादृशः । अनेन च वृत्त्यन्तरं कथ्यते । आर्याणां देवपित्रर्थमौषधार्थं चारण्ये वागुरया मृगबन्धनसाधनेन मृगादिहिंसनं वागुरावृत्तित्वम् । राजनियोगाद्वा हिंस्रजन्तुवधः । न तु व्याधवत् पशून् हत्वा मांसविक्रयेण जीवनम् । अदासं दासजीवनमिति । विक्रयादिना कस्यापि दासो न भवति । अपि तु संवत्सरवृत्त्या षण्मासादिभृत्या वा कं न सेवेत । प्रसाधनाद्यर्थमित्यर्थः । वसिष्ठस्तु वृत्त्यन्तरमाह । सैरन्ध्राणां सुरामद्यसीधुकरणं तद्विक्रयः पुष्पफलशाकविक्रयश्चेति ।

मैत्रेयकन्तु वैदेहो माधुकं सम्प्रसूयते ।
नॄन् प्रशंसत्यजस्रं यो घण्टाताडेऽरुणोदये ॥

अस्यार्थः—

भवन्त्यायोगवीष्वेते जातिहीनाः पृथक् क्रियाः ॥ इति वक्ष्यति मनुः । तत्रायोगवीष्वेते इत्येतत्पदे शूद्राद्वैश्यायामुत्पन्नाऽऽयोगवी, ब्राह्मण्यां वैश्याज्जातो वैदेहिकः; स आयोगव्यां मैत्रेयनामानं जनयति, तस्यैव माधूक इति गुणनाम । मधुकसुमतुल्यं मधुरं भाषत इति मधुकः । नॄन् प्रशंसतीत्यादिवृत्तिः । असौ लोके बन्दीति कथ्यते ।

निषादो मार्गवं सूते दासं नौकर्मजीविनम्।
कैवर्तमिति यं प्राहुरार्यावर्तनिवासिनः ॥

क्षत्रियायां शूद्रादुत्पन्नाः प्रतिलोमजा निषादाः। अयं शूद्राद्वैश्यायामुत्पन्नायामायोगव्यामेव मार्गवनामानं सूते। अस्यैवापरं नाम दासः कैवर्त इति। कारावारो निषादात्तु चर्मकारं प्रसूयते। वैदेहकादन्ध्रमेदौ बहिर्ग्रामप्रतिश्रयौ। निषादः शूद्रात् क्षत्रियायां समुत्पन्नः। तस्माद्वैदेह्यां वैश्याद्ब्राह्मण्यामुत्पन्नायां कारावारनामा जायते। असावेव चर्मकरणवृत्तिश्चर्मकारः। वैदेहकादन्ध्रमेदसंज्ञकौ जायेते। कस्यां स्त्रियाम्? कारावर्यां प्रतिलोमनिषाद्यां च; तयोरत्र कारावारनिषादशब्दाभ्यां सन्निधानात्। वैदेह्यां वैदेहाद्भिन्नवर्णासम्भवात् एवं व्याख्यायत इति मेधातिथिः। बहिर्ग्रामप्रतिश्रयः, प्रतिश्रयो निवासः।

चण्डालात्पाण्डुसोपाकस्त्वक्सारव्यवहारवान्॥
आहिण्डको निषादेन वैदेह्यामेव जायते॥

चण्डालाद्वैदेह्यामेव पाण्डुसोपाकनामा जायते। त्वक्सारो वंशवेणुरिति यावत्। वंशक्रयविक्रयादिना कटादिकरणेन व्यवहारवानिति वृत्तिनिर्देशः। वैश्याद्ब्राह्मण्यामुत्पन्ना वैदेही, शूद्रात् क्षत्रियायामुत्पन्नो निषादः, ताभ्यामुत्पन्न आहिण्डकसंज्ञकः। अस्यापि वंशविक्रयादिवृत्तिः। चाण्डालेन तु सोपाको मूलव्यसनवृत्तिमान्। पुष्कस्यां जायते पापः सदा सज्जनगर्हितः॥ व्यसनं दुःखं मूलं प्रधानं मुख्यमिति यावत्। तच्च वध्यमारणेन राजादेशात्। मूलं च तद्व्यसनं च मूलव्यसनं तद्वृत्तिर्यः स तद्वान्। अथवा मूलं प्राणाः, तद्वियोगरूपं दुःखं मूलव्यसनम्। चाण्डा-

त्तः प्रसिद्धः। क्षत्रियायां शूद्रादुत्पन्नो निषादः। निषादाच्छूद्रायामुत्पन्ना पुष्कसी तस्यां चण्डालाज्जातः सोपाकः।

निषादस्त्री तु चण्डालात्पुत्रमन्त्यावसायिकम्।
श्मशानगोचरं सूते बाह्यानामपि गर्हितम्॥

क्षत्रियायां शूद्रादुत्पन्ना निषादी। अन्त्यावसायीति संज्ञा। श्मशानगोचरस्तद्वृत्तिस्तन्निवासश्च। बाह्यानामपि चण्डालानामपि गर्हितः॥

संकरे जातयस्त्वेताः पितृमातृप्रदर्शिताः।
प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्मभिः॥

स्वकर्माणि प्रोक्तानि रथसारथ्यव्यवहारादीनि। कर्मभिरप्रसिद्धाः सोपाकादिनामयुक्ततया तत्तज्जातीया वेदितव्याः। पितृमातृप्रदर्शिताः पित्रा मात्रा च विभागेन दर्शिताः। तद्यथा—आयोगव्यां निषादात्कारावरनामा चर्मकार इति मात्रा विभागः। वैदेहकादन्ध्रमेदाविति पित्रा दर्शितो विभागः। सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सितम्। वैदेहकानां स्त्रीकार्यं मागधानां वणिक्पथः॥ सूतादय प्रागुक्तलक्षणाः। स्त्रीकार्यमन्तःपुररक्षणम्। वणिक्त्वम् वणिक्पथः स्थलपथो वारिपथश्च। एतयोर्मार्गयो रक्षा कार्या राजादेशात्।

मत्स्यघातो निषादानां तष्टिस्त्वायोगवस्य च।
मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुहिंसनम्॥

तष्टिर्वर्धकिकर्म दारुतक्षणम्। आयोगवस्यैव कर्मनामनी तक्षा स्थपतिरिति। अयं विशेषः—स्थपतिः पाषाणतक्षो, तक्षा तु दारुतक्षणनिरत इति। मेदान्ध्रावुक्तलक्षणौ। चुञ्चुमद्गू चपनामा तथा च यमः—

क्षत्रियायान्तु वैश्येन सूचपो नाम जायते।
शूद्रेण जायते मद्गुः क्षत्रिया यत्र मुह्यति॥

मुह्यति मिथुनीभवति शूद्रेण सहेत्यर्थः। अस्यैव सूचपस्य बन्दिमागधाविति नामान्तरे। मनुः—क्षत्रादीनां (क्षत्रियश्च) पुष्कसानां बिलौकोवधबन्धनम् धिग्वणानां चर्मकार्यं वेनानां भाण्डवादनम्॥ बिलौकसोऽहिनकुलादयः। तेषां वधो बन्धश्च क्षत्तृप्रभृतीनां जीविका। चर्मकार्यमुपानद्ग्रथनं कवचादिसीवनं च। भाण्डवादनं मृदङ्गमुरजादीनां वादनम्। क्षत्त्रुग्रपुष्कसानामिति प्रतिलोममध्यपाठादुग्रः प्रतिलोमजो वेदितव्य इति स्मृतिमञ्जरीकारः।

चैत्यद्रुमश्मशानेषु शैलेषूपवनेषु च।
वसेयुश्चैते विज्ञाता वर्तयन्तः स्वकर्मभिः॥

चैत्यद्रुमो ग्रामाभ्याश आलक्षितो द्रुमः। विज्ञाता वसेयुर्जातिचिन्हं विघुष्य वसेयुरित्यर्थः—

चाण्डालश्वपचानान्तु निर्ग्रामः स्यात्प्रतिश्रयः।
अवपात्राश्च कर्तव्या धनमेषां श्वगर्दभम्॥

निर्ग्रामो ग्रामाद्बहिरित्यर्थः। अवपात्रा बहिः पात्रो बहिः कृता इत्यर्थः। अथ अवपात्रा एतदीयेष्वन्यदीयेषु वा पात्रेष्वेतद्धस्तादिसंसक्तेषु सकृत् भक्तपानादि न दातव्यमपि तु भूमिष्ठे पात्रेऽन्यहस्तस्थिते भक्तादि दत्त्वा तत्पात्रे भूमौ स्थापिते ते गृह्णीयुरतोऽवपात्रा इत्युच्यते। अथवा अवपात्रं भिन्नपात्रम्। धनमेषां श्वगर्दभम्। गवाश्वादिसुवर्णरजतादिधनसंचयं न कुर्युरित्यर्थः।

वासांसि प्रेतचैलानि भिन्नभाण्डे च भोजनम्।
कार्ष्णायसमलंकारः परिव्रज्या च नित्यशः॥

परिव्रज्यैकत्रानवस्थितिः ।

न तैः समयमन्विच्छेत् पुरुषो धर्ममाचरन् ।
व्यवहारो मिथस्तेषां विवाहः सदृशैः सह ॥

समयः संकेतः एकस्मिन् कार्ये संमतिरित्यर्थः । एकत्र स्थानासनविहारास्तैः सह न कर्तव्या इत्युक्तं भवति ।

अन्नमेषां पराधीनं देयं स्याद्भिन्नभाजने ।
रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च ॥

अन्नमेषां पराधीनमित्येतदपपात्राश्च कर्तव्या इत्यत्रोक्तस्यैव विवरणम् । रात्रौ ग्रामादिषु चरणाभावः स्पर्शशङ्कायाम् ।

दिवा चरेयुः कार्यार्थं चिन्हिता राजशासनैः ।
अबान्धवं शवं चैव निर्हरेयुरिति स्थितिः ॥

राजशासनै राजादिष्टै वध्यवधशासनद्योतकैः ध्वजपरशुकुठारादिचिन्हैः ।

वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया ।
वध्यवासांसि गृह्णीयुः शिल्पाश्चाभरणानि च ॥

ब्राह्मणार्थे गवार्थे वा देहत्यागोऽनुपस्कृतः ।
स्त्रीबालाभ्यवपत्तौ च बाह्यानां सिद्धिकारणम् ॥

स्त्रीबालाभ्यवपत्तौ च देहत्याग इत्यन्वयः । अनुपस्कृतः क्लैव्यादिरहितः देहत्यागशब्दस्य विशेषणमनुपस्कृत इति । धनमगृहीत्वाऽभ्यवपत्तिरनुपस्कृतत्वमिति मेधातिथिः । आदिपुराणे ब्रह्मपुराणसंज्ञके—ब्राह्मण्यां ब्राह्मणाद्व्रात्याज्जायते भृज्जकण्टकः । आवन्त्यपुष्पशेखरवाटधानाश्च जातयः । आभिचारिककर्माणि भृज्जकण्टकिनोऽशनम् । मंत्रौषधीशामवारणं सुमुखीकरणानृते कुर्वन्ति राज्ञां हि ततस्तेनैवाविकृताः । परं भृज्जकण्टकिनोऽशनमि-

त्यत्र वृत्तिर्जीवनोपाय इति यावत्। संमुखीकरणं तदर्थमेवानृतवचनाभ्यनुज्ञानम्। आवन्त्यादीनामपीयमेव वृत्तिः। देशभेदात्संज्ञाविशेषः।

राज्ञीनां क्षत्रियाद्व्रात्याज्जल्लमल्लरुषा नटाः।
लिच्छिवीकाश्च करणा द्रामिडाः सन्ति भूरिशः॥

देशभेदान्मल्लादिनामभेदः। एवं सर्वत्र ज्ञेयम्। करणोत्र प्रतिलोमजः। नानुलोमजो विज्ञेयः।

विज्ञेया परराष्ट्राणां तैश्च राजाज्ञया सदा।
खसा मल्लास्तथा वृत्तं मित्रामित्रत्वमेव च॥

परराष्ट्राणां विज्ञेया इति परराष्ट्रसंबन्धिनः कार्यविशेषा ज्ञेया इत्यर्थः। एतेन वृत्तिर्दर्शिता। मित्रामित्रत्वमेव च वृत्तम्। मित्रत्वं मैत्रीकरणम्। अमित्रत्वं विरोधकरणम्। वृत्त्यन्तरकथनमेतत्।

वैश्यस्त्रीणां तथा व्रात्याद्वैश्यात्करुषको भवेत्।
चतुष्पथे श्मशाने च स भवेन्मित्रमण्डलः॥

मित्रमण्डल इति चतुष्पथश्मशानयोर्मित्राणां मण्डलं समुदायो यस्य स तथोक्तः। चतुष्पथादिषु लोकवार्ता बह्व्यो भवन्तीति लोकवृत्तज्ञानार्थं राज्ञा नियुक्तः सह तत्रत्यैर्मैत्रीं कुर्यादित्यर्थः।

चतुष्पथे श्शशाने च स भवेन्मातृमण्डनः॥

इति पाठान्तरम्। मातृमण्डनं चतुष्पथे श्मशाने च या देवता मातरस्तासां मण्डनं पूजां कुर्यादित्यर्थः।

सुधन्वाचार्यस्त्वपरो भवेद्रुद्रस्य पूजकः।
तृतीयश्च विजन्माख्यः सूतिकावेश्मनित्यशः॥
भूतप्रेतपिशाचांश्च पूजयेद्राजशासनात्।
साध्यानां पूजको मेवश्चैत्यादीनां चतुर्थकः॥

पञ्चमः सात्वतो नाम विष्णोरायतनान्यपि ।
पूजयेदाज्ञया राज्ञां यदि स्यात्स जितेन्द्रियः ॥

कारुषादीनि सात्वतान्तानि नामानि वैश्याद्व्रात्याद्वैश्यायामुत्पन्नस्यैव । देशभेदादेष्वेव नामस्वन्यतमं नाम अन्यतमा च वृत्तिर्भवतीति केचन व्याचक्षते । अस्याग्रे तु कारुषाद्वैश्यायां जातः सुधन्वाचार्यस्ततो वैश्यायां जातो विजन्माख्य इति । एवमुत्तरत्रापि द्रष्टव्यमिति । सूतिकावेश्मनित्यश इति सूतिकाया वेश्म गृहं निवासस्थानं रक्षार्थमित्यर्थः । साध्या देवताविशेषाः । मूचुप इति यस्य संज्ञान्तरं स एव मेव इति व्यपदिश्यते ।

सवर्णासु सवर्णैस्तु ये जायन्ते परैरपि ।
अवरोटकसंज्ञास्ते व्रतसंस्कारवर्जिताः ॥

परैरिति पत्युः सकाशादन्यैरित्यर्थः । अवरोटकस्यैव वर्णाद इति संज्ञान्तरम् । एतच्च कुण्डगोलकयोः साधारणं नाम । व्रतसंस्कारवर्जिता इति ब्राह्मणाद्ब्राह्मण्यामुत्पन्ना येऽवरोटकास्तद्व्यतिरिक्ता अवरोटका उपनयनसंस्कारवर्जिता इत्यर्थः ।

चतुर्णामपि वर्णानां जीवतामन्यसम्भवः ।
कुण्डस्तु संकरो ज्ञेयो मृतानामथ गोलकः ॥
जातिहीनः स मातॄणां ग्राहयेत्कर्मनामनी ।
योज्यो देवपुरे राज्ञा वर्णसंकरभीरुणा ॥

स मातॄणां ग्राहयेदिति स कुण्डो गोलश्च स्वमातॄणां कर्मनामनी ग्राहयेत् । कर्मग्रहणे नामग्रहणे च प्रयोजको भवतीत्यर्थः । एतदुक्तं भवति। कुण्डगोलकानां यत्कर्म यथा वृत्तिः, सैव तन्मातॄणामपि वृत्तिः। कुण्डो गोल इति च यन्नाम तान्नाम्ना तन्मातरोऽ-

पि यथायोगं व्यपदेश्या इति । विष्णोरायतनान्यपीत्यपिशब्दात् चैत्यादीन्यपि पूजयतीत्युक्तम्भवति । देवपुरे द्वारे ।

कुण्डश्च गोलको विप्रः सन्ध्योपासनमात्रवित् ।
स्नानभोजनसन्ध्यासु देवेषु च पठेच्च तत् ॥
एकान्तकुटपे भुक्त्वा सदृशैः सह सङ्गतः ॥

विप्राद्विप्रायामुत्पन्नयोः सन्ध्यावन्दनमात्राधिकारः । अत एव यथार्हमुपनयनमपि विद्यते । तथा च कुण्डगोलकावपि यथार्हं संस्कार्याविति स्मृत्यन्तरं मिताक्षरायामुदाहृतम् । स्नानभोजनसन्ध्यास्तु पठेदिति स्नानादीनां पठितुमशक्यत्वादिति निर्देशः कृतः । तत्प्रतिपादकवाक्यजातं लौकिकं पठेद्देवतादिसमये बन्दिवदित्यर्थः । स्नानभोजनसन्ध्यासु पठेदित्यपि पाठः । स्नानभोजनसन्ध्यासु पठेदित्यन्वयः । सन्ध्यास्विति विषयसप्तमी निमित्तसप्तमी वा । कुटपः कुटी । प्रसङ्गादनुलोमानाह—

मूर्धावसिक्तं ब्राह्मणात् क्षत्रियायां प्रसूयते ।
स करोति .. ... ... ...
ब्राह्मणाच्छूद्रकन्यायां भवेत्पारशवस्तु सः ।
निषादो मत्स्यघातित्वं चक्रे राजाज्ञया सदा ॥

प्रतिलोमनिषादवदयं न स्वेच्छया मत्स्यघाती । अपि तु राजाज्ञया द्विजानां श्राद्धाद्यर्थमुदितानां मत्स्यान् हन्ति ।

ब्राह्मणेनोग्रकन्यायामम्बष्ठो नाम जायते ।
स करोति मनुष्याणां चिकित्सा रोगिणामपि ॥

उग्रा क्षत्रियाच्छूद्रायामुत्पन्ना । ब्राह्मणाद्वैश्यायामुत्पन्नोऽम्बष्ठः ।

ब्राह्मणेन तथाम्बष्ठ्यामाभीरो जायते सुतः ।
गोऽजाऽविरक्षां कुरुते स तु राजगृहेष्वपि ॥

आयोगव्यां ब्राह्मणात्तु जायते त्रिगुणो नरः
स च कर्मकरो ज्ञेयो गर्हितश्चर्मजीवनः ॥

शूद्राद्वैश्यायामुत्पन्नाऽऽयोगवी । एते मातृसधर्माणो न पितुः । पुत्रकास्तु अवरोटकमूर्धावसिक्तपारशवाम्बष्ठाभीरचर्मकाराः षट् ।

मूर्धावसिक्तोऽम्बष्ठश्च निषादश्च तथा त्रयः ।
विप्रक्षत्रियविट्छूद्रानारीणां गमनादिह ॥
एकैकशस्तु चतुरो जनयन्ति सुतानपि ।
एते द्वादश विद्यन्ते मूलप्रकृतिभिर्युताः ॥
भवन्ति पञ्चदशैव विप्रः षोडशको भवेत् ।
दस्युसंज्ञा भवन्त्येते मातृवत्कर्मकारिणः ॥

मूर्धावसिक्ताम्बष्ठनिषादा मूलप्रकृतयः । एता मूलप्रकृतयो विप्रक्षत्रियविट्छूद्रनारीगमनाद्यानि स्त्र्यपत्यान्युत्पादयन्ति, तत्रापत्योत्पादकश्च तैः सहैकशयनादिभिः सततं यो व्यवहरति, स विप्रोऽत्र षोडशकः । एते सर्वे दस्युनामानो भवन्ति । मातृवत्कर्मकारिणो निन्दितापत्यमातृवदेते । निन्दितकर्मकरत्वं जीवनोपाय इत्युक्तं भवति ।

राज्ञो ब्राह्मणकन्यायां सूतो वर्णस्तु जायते ।
स राजाज्ञया रथ्यं चक्रे दत्तुश्च नित्यशः ॥
... प्रजापतिस्त्वन्यो .. रूपी जनार्दनः ।
वक्ताऽवेत्तादिशास्त्राणां तुपाराशिरिति स्मृतः ॥
राज्ञस्तु वैश्यकन्यायां माहिष्यो नाम जायते ।
नक्षत्री गीतनृत्यज्ञो धनानां परिरक्षिता ॥

धनानां राजधनानां तदाज्ञया ।

राजा तु शूद्रकन्यायामुग्राख्यः कुरुते सुतः ।

दुर्गान्तःपुरकोशानां रक्षां विप्रेषु चार्चनम् ॥
उग्रो दुष्टश्च दुष्टानां कश्चिन्नदन्योऽपि विद्यते ।
सूतमागध्यकोग्रास्तु त्रया वर्णचतुष्टयात् ॥
एकैकशस्तु चतुरो जनयन्ति सुतानपि ।
आत्मना सह राज्ञा तु तत्र षोडश संज्ञिते ॥
देवब्राह्मणबालस्त्रीदीनान्धकृपणैस्तु यत् ।
उपार्जितं धनं तस्य परित्यागात्तु दस्यवः ॥
कदर्यधनभोक्तारः सिध्यन्ति चत्रसम्भवाः ॥

दस्यव इत्येनेषां संज्ञा सामान्यतः । आत्मना राज्ञा सह ये षोडश परिगणितास्ते दस्युशब्दवाच्या इत्यर्थः । तत्र राज्ञा सहेति क्षत्रियोपलक्षणम् ।

स च क्षत्रिय एतैर्निन्दितैः शयनाशनादिभिरसकृद्व्यवहरन् तेष्वपत्योत्पादनं वा कुर्वन् दस्युशब्दनिर्देश्यो भवति । एते देवधनं तथा ब्राह्मणाद्युपार्जितं धनं परित्यज्यैतद्व्यतिरिक्ता ये कदर्यास्तेषां धनं तत्सन्तत्यभावे राजाज्ञया भुञ्जते इति कदर्यधनभोक्तारः । अथवा देवब्राह्मणादिभ्योऽन्यत्र कदर्यं कुत्सितं धनं मन्त्रं वा स्वकर्मकरणादिद्वारा याचित्वा भुञ्जत इति कदर्यधनभोक्तारः ।

ब्राह्मण्यामथ वैश्येन वैदेहो नाम जायते ।
रक्षिता राजदुर्गाणां तद्वृत्तिपरसंयतः ॥
अन्यो विगतदेहत्वाद्वैदेहो मिथिलानृपः ।
विद्यते मानुषे लोके राज्यस्थश्चापि मोक्षभाक् ॥
क्षत्रियायान्तु वैश्येन चूचुको नाम जायते ।
स्थले जले च यो मार्गस्तत्र रक्षां करोति सः ॥
राजदूतो यावजीवो भवेत्कीर्तिप्रकाशकः ।

चूचुकश्चूचुपो मूधुबन्दी मागध इत्यनर्थान्तरम् ।
पुनश्च शूद्र्यां करणो वर्णः स्यात्प्रकरोति सः ।
दुष्टतत्पुरगञ्जानां रक्षां ब्राह्मणसंग्रहम् ॥

तुरगञ्जानां रक्षामिति पाठान्तरे । अत्र रक्षाविधानात् पराशरवचने मद्यविक्रयनिषेधाच्च गञ्जारक्षणमेव न विक्रयः । पराशरवचनन्तु द्वितीयकल्लोलल्लासे प्रदश्यते । दुष्टतत्पुरगञ्जानामिति दुष्टाश्च तत्पुराणि च गञ्जा च तेषाम् । गञ्जा मदिरागृहम् । ब्राह्मणसंग्रहमिति । दुष्टस्थानेषु स्वाधिकृतेषु यदि ब्राह्मणसेवा । यद्वा राजाज्ञया ब्राह्मणसेवा । यद्वा राजाज्ञया ब्राह्मणानामेकत्र स्थापन ब्राह्मणसंग्रहम् ।

वैदेहमागधावेतौ करणश्चापि ते त्रयः ।
वर्णेभ्यः पूर्ववत्पुत्राञ्जनयन्ति विमोहिताः ॥
ते च षोडश जायन्ते मूलप्रकृतिभिः सह ।

मूलप्रकृतयो वैदेहमागधकरणाः ।

दुष्टानि वैश्यकर्माणि तेऽपि कुर्वन्ति दस्यवः ॥

अत्रापि वैश्यः करणायां निन्दितापत्यजननात् तैः सहैकशयनादिभिर्दुष्टत्वात्सोऽपि दस्युशब्दवाच्यत्वं लभते ।

ब्राह्मण्यामथ शूद्रेण चण्डालः स्याज्जुगुप्सितः ।
स चक्रे राजमार्गादिशोधनं च कुकर्म च ॥
राजस्त्रीणां च शूद्रेण क्षत्ता मेदश्च जायते ।
.... ... स्वाविध्यमथ गोधनम् ॥
... .... स चक्रे वधबन्धने ॥
क्षपणो राजदोषाणां क्षत्ता चान्यो महामतिः ।
सप्तप्रकृतिमुख्यश्च भवेदधिपतिप्रियः ॥

राजदोषाणां क्षपणो विनाशकः । असावन्यो महामतिः । सप्त-प्रकृतयः सप्ताङ्गानि ।

आयोगवस्तु शूद्रेण वैश्यस्त्रीणां भवेच्च सः ।
तक्षा स्थपतिरित्युक्तो राज्ञां वेश्मकरः सदा ॥

तक्षा स्थपतिरित्येकस्य द्वे नामनी यद्यपि, तथापि पाषाणतक्षकः स्थपतिर्दारुतक्षकस्तक्षेति लोकभेदेऽवगन्तव्यम् । एवमन्यत्रापि पर्यायनाम्नस्तु लोकतोऽवगन्तव्यो भेदः । लोकाश्च देशभेदेन भिन्नाः ।

आयोगवस्तथा क्षत्ता चण्डालश्चाथ वै त्रयः ।
चतुर्वर्णेषु तनयाञ्जनयन्त्यथ पूर्ववत् ॥

शूद्रात्मसहिताः । शूद्रसहिताः । अत्र शूद्रस्य दस्युपदवाच्यत्वं निन्दितापत्यजननात् ।

एते विप्रादयो ज्ञेयाश्चतुःषष्टिस्तु योनिषु ।
उत्पादयन्ति सदृशान् संकीर्णानन्ययोनिषु ॥
निषाद्यामथ शूद्रेण कुक्कुटः स्यात्परोऽपि सः ।
चक्र (मोगत) शूलासिलांगूलपाशतोमरान् ।
चर्माणि....जालानि भिण्डमालांश्च भूभुजाम् ।
कुक्कुटानां प्रहर्ता च राज्ञां कुक्कुटखेलनः ॥
अम्बष्ठाज्जायते वेनो वैदेहेन करोति सः ।
पटहं वादयन् स्फीतं राजादेशं प्रजास्वपि ॥

राजादेशं करोतीत्यन्वयः । वेनः प्रजापतिसुतो राजा कश्चित् पृथोः पिता । दुराचारा....विप्रशापात्क्षयं गतः ।

पुष्कसः कुक्कुटो वेनस्त्रय आरण्यवासिनः ।
आयोगव्यां दस्युवाचः सरन्ध्रो नाम जायते ॥

मृगादिवधजीवी च पाशबन्धेन नित्यशः ।
राजस्त्रीणां सूतिकानां द्वारि रक्षां करोति सः ॥
काचिदन्या च सैरन्ध्री गन्धर्वमहितेन तत्
दस्यवः पौण्ड्रकेद्रु काद्याः प्रागुक्ताः—
आयोगव्यान्तु मैत्रेयो वैदेहादपि जायते ।
प्रभाते वादयेद्घण्टां यशो राज्ञां ब्रवीति सः ॥
आयोगव्यां निषादात्तु धीवरो नाम जायते ।
नावां नदीनां कर्ता सः पुंसः संवाहयेत्सदा ॥
नावः कर्तेत्यन्वयः ।
निषादादथ वैदेह्यां कावाचारः करोति सः ।
चर्मणां छेदनं नित्यं सीवनं क्रयविक्रयम् ॥
निषाद्यामथ वैदेहाज्जायते चाकमेचकः ।
आरण्यानां पशूनां स करोति च वधं सदा ॥
तस्य स्त्रीगमनात्क्षत्ता श्वपाकं जनयेत्सुतम् ।
श्वमांसाहमरण्यस्थं पापं सूर्पोपजीवनम् ॥
चण्डालादपि वैदेह्यां पाण्डुसोपाकसंज्ञकः ।
उपान्तचर्मवेणूनां विक्रयं हि करोति सः ॥
आहिण्डको निषाद्याञ्च वैदेहादपि जायते ।
वोदस्यानां च वध्यानां परिरक्षां करोति च ॥
अन्त्यावसायी चण्डालान्निषाद्यां जायते नरः ।
स्मशानवासी तद्वृत्तिश्चण्डालेष्वपि गर्हितः ॥
तद्वृत्तिः स्मशानोपजीवी ।
अनाथं नगराच्छावं दूरं तेऽपि नयन्त्यपि ।
शय्याभरणवस्त्राणि वध्यानां राजशासनात् ॥

निर्दिष्टं वधदण्डन्तु कृत्वा गृह्णन्ति नित्यशः ।
विवाहादि प्रकुर्वन्ति समाने वर्णसंकरे ॥
मृता गोब्राह्मणार्थन्तु कदाचिन्मां तरन्ति ते ॥

वसिष्ठः—मूर्धावसिक्तस्य हस्त्यश्वरथशस्त्रास्त्रधारणं च मणिमन्त्रौषधैः प्राणिरक्षणम् । अपुष्टानां माहिष्याणां गीतनृत्यनक्षत्रजीवनम् सस्य रक्षा च । पारशवोग्रकरणानां द्विजातिशुश्रूषा धनाध्यक्षतो राजसेवा । दुर्गान्तःपुररक्षा च । रथकारस्य निधिज्ञानं प्रश्नज्ञानं चेति । हस्तिसारथ्यवर्धनपोषणदमनानि सूतानाम् । मन्त्री कायस्थः । कायस्थो नाम लेखको लोकप्रसिद्धः । मन्त्रीत्वमथवा कायस्थत्वं चेति मन्त्रिकायस्थत्वम् । क्षत्तुः स्त्रीभृतिजीवनं वस्त्रपूरणं च । मन्त्रिकायस्थत्वमिति मन्त्रिणः कायस्थो मन्त्रिकायस्थः । कायस्थो नाम लेखको लोकप्रसिद्धः । अथवा मन्त्रित्वं कायस्थत्वं चेति मन्त्रिकायस्थत्वम् । स्त्रीभृतिजीवनं नाम राजादिस्त्रीरक्षार्थं भृतिं गृहीत्वा बहिस्तिष्ठेत् । वस्त्रे पूर्णपदसूत्रादिभिः पूरणं वस्त्रपूरणम् । वैदेहकानां नटवृत्ती रङ्गावतरणे । वेनानां व्यङ्गच्छेदनं भ्रमरोपणं मणिमुक्ताप्रवालवेधनं च । मणयादीनां यन्त्रारोपणेन सज्जीकरणं भ्रमरोपणम् । अयस्त्रपुसीसायुधकरणयोजननगरकरणपत्रछेदलेपपवित्रकरणमायोगवानाम् । सैरन्ध्राणां सुगामद्यसीधुकरणं तद्विक्रयः पुष्पफलशाकविक्रयश्चेति । नौजीविका च निषादानाम् । कैवर्तानां मृगपशुपक्षिघातो मांसविक्रयश्च । आवृतानां हस्त्यश्वाधिकारः । आभीराणां गोजातिरक्षा । धिग्वणानां चर्मकरणं तद्विक्रयजीवनं च । कारवाणां चर्मच्छेदनं दीपासनरक्षणं छत्रधारणं नराणां वहनं च । तन्तुवायत्वब्रुवच्छेदनरोपणानि कुक्कुटानाम् । आन्ध्रमेदानां

गृहद्वारसुविशोधनं गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणे चक्रवृत्तिता च।——चक्रमिति स्मृतिमञ्जर्याम्। मधुकानां सायंप्रातर्नृपतिसंस्तवाख्यानप्रबोधनं चेति। ... प्रव्रज्यावसितानि। यावज्जीवदासवृत्तित्वं प्रव्रज्या संन्यासः। आहिण्डकानां धनस्थाने बाह्यसंरक्षणम्। बाह्यसंरक्षणं नाम भाण्डागारादिभ्यो बहिस्त्र दस्युसंरक्षणं न तु तत्राधिपतित्वम्। अनुक्ताऽगर्हिता वृत्तिः क्षत्रुग्रमाधूकैः कार्या। गर्हिता चान्ध्रमेदैः। भृज्जकण्टकानामभिचारं मूलकर्म। द्विषतां मन्त्रौषधैश्चाभिमुखीकरणं नाशनं वा मूलकर्म। वशीकरणमिति स्मृतिमञ्जरीकारः। मूलकर्म तु कर्मणामत्यन्तं वशीकरणोच्चाटनादिटोटकविद्यामूलकं कर्म न केवलं वशीकरणमात्रमेव। अभिमुखीकरणं वशीकरणम्। आवन्त्यवाटधानैः स्वसैन्यानां चित्तचर्या। व्रात्योत्पन्नैः परराष्ट्राणां कोशमन्त्रवृत्तज्ञानं मित्रामित्रता च। आचार्यसात्वतैर्देवपूजनम्। आचार्योऽत्र सुधन्वाचार्यनामा पूर्वोक्तः। खसद्राविडानामुदकाहरणं प्रपावेश्मदानं च। प्रपादानं भृतिपूर्वकमुदकदानं वेश्मदानं च पथिकेभ्यो धनमादाय। नटचारणानां चारवृत्तिः प्रपारक्षणमूलत्वक्सारवृत्तिता। छत्रसूर्पकटादिकरणं च पुष्कसानां मूलवृत्तित्वं वृक्षादिस्थलोत्पाटनविक्रयादिना विज्ञेयम्। चण्डालान्त्यावसायिनां च श्मशानरक्षणं गरादिविप्रयोगोऽग्निविप्रयोगश्च। स्त्रीणां भर्तृषु शुश्रूषा साधारणो धर्मः। तत्पुरुषाणां यो व्यापारोऽन्नव्यञ्जनादिसंस्कारात्मकः, स एव व्यापारस्तासाम्, न तु सर्वासां प्रतिलोमजस्त्रीणाम्। चारणादीनां विशेषतो नृत्यगीतकामैस्तत्राध्ययनं च कर्तव्यमित्यर्थः॥ वैश्यानां परदेशचर्या नित्यं द्विषतां च हृदयज्ञानमिति। सर्वबाह्याः सर्वधर्मबहिष्कृता। अन्यत्र प्राणिसंरक्ष-

णादिति। क्षत्रियवैश्याऽनुलोमजातो रथकार इत्येके। तस्याध्ययनेज्यादानोपनयनसंस्काराश्च प्रतिषिद्धाः। रथसूत्रवास्तुविद्याध्ययनवृत्तिता चेति। रथसूत्रे रथविद्या संस्कारक्रिया। केशश्मश्रुरोमनखवापनस्नानविलेपनालङ्करणाश्वादीनामसूयया ऽध्यापनपोषणानि कर्माणि। योग्याशनमित्यश्वादीनां यवादिदानमिति स्मृतिमञ्जर्याम्। क्षत्तुः प्रतिहारदौत्ये। मागधानां मृदङ्गवेणुवीणावादननृत्यगीतसिद्धिकोपस्थानगाथालोकं प्रत्यूषे प्रबोधनानि कर्माणि। सिद्धिरिति मंगलं जय जीवेत्येवमाद्यभिधानेन राजाद्याराधनं सिद्धिरित्युच्यते। कोपस्थाने कोपसमये यथोचितं तदुद्बोधकशामकगाथादिपाठः कार्य इत्यर्थः। अम्बष्ठानां जातिविशेषात् कायविशेषात् कायशल्यशलाकाविमोचनोन्मादक्लीबज्वरापस्मारकुमारचिकित्सापोषणानि कर्माणि। जातिविशेषात् कायविशेषात् राजहस्त्यादिशरीरविशेषात् शल्यं कण्टकादि शलाका शरादि जातिविशेषशरीरविशेषापेक्षया च यत्र यदुचितं च भेषजं तत्र तत्कर्तव्यमिति तात्पर्यार्थः। वैदेहकानां वस्त्रच्छेदनसीवनरञ्जनानिर्णेजनवापीतडागोदपानारामावकरशोधनानि कर्माणि। उग्राणां कुरङ्गग्रहणराजछत्रधारणपुरत्रधारणबन्धनागारसंयमनानि कर्माणि। वेनानां लङ्घनप्लवनक्रीडानियुद्धमायाशम्बरेन्द्रजालप्रस्वापनानि कर्माणि॥ प्लवनमुच्चवृक्षाद्यारोहणमिति स्मृतिमञ्जरीकारः॥ नियुद्धं बाहुयुद्धम्। मायाशम्बरं हस्तसंचरणलाघवादिना द्रव्यपरिवर्तनम्। इन्द्रजालमसद्वस्तुदर्शनादि। कुकुटानां प्रहरणचक्रतोमरभिण्डमालाप्रासासिपरशुलगुडलोहजालिकासन्धानानि कर्माणि। प्रहरणान्यायुधानि। लोहजालिकासन्धानं नाम वमकरणम्। आयोगवानामयस्करणतक्षणकुम्भकरणानि सुवर्णरज-

तल्लोहासिचर्मवृत्तिता चेति। अयो लोहविशेषः। लोहासिचर्मवृत्तिता चेति। लोहताम्रमग्निसहचरितम्। चर्मासि चर्मायुधं प्रहारवारणचर्मेत्यर्थः। सुवर्णरजतताम्राणां विकारान् कृत्वा जीवनं तद्वृत्तिता॥ पुष्कसानां नगरवीथिसंरक्षणजागरणानाथमृतनिर्हरणलेख्यपत्रच्छेदनानि कर्माणि। मधुपातनं माक्षिकोद्धरणं बिलकर्तनं कूपादिखननम्। चाण्डालानामेकान्तवासस्मशानसंरक्षणं च शूलपरिवापनवध्यघातनानि कर्माणि। श्वपचानां चैतत्। मनुः—

वर्णापेतमविज्ञातं नरं कलुषयोनिजम्॥
आर्यरूपमिवानार्यं कर्मभिः स्वैर्विभावयेत्॥

वर्णापेतं चातुर्वर्ण्यादपेतमविज्ञातं जारजातत्वशङ्कायां सत्यां जनकविशेषापरिज्ञानादविज्ञातमित्युच्यते। स्वैः कर्मभिर्विभावयेदित्युक्तम्। तानि कर्माण्याह—

अनार्यता निष्ठुरता क्रूरता निष्क्रियात्मता।
पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम्॥

अनार्यता द्वेषो मत्सराधानता निष्ठुरता स्वार्थपरता क्रूरता लोभहिंसापरता निष्क्रियात्मता विहितक्रियाराहित्यम्। एतानि कलुषयोनिजं जारजातं व्यञ्जयन्ति।

कुले मुख्येऽपि जातस्य यस्य स्याद्योनिसंकरः।
संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु॥

तस्य शीलं तच्छीलं यस्माज्जातस्तस्य शीलम्।

शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते।
अश्रेयान् श्रेयसीं जातिं गच्छत्यासप्तमाद्युगात्॥

ब्राह्मणाज्जात इत्यत्र जात इति पुंलिङ्गनिर्देशेऽपि योग्यतया

स्त्री विज्ञेया। अत इदमुक्तं भवति। शूद्रायां ब्राह्मणात्कुमारी जाता, सा चेत् श्रेयसा जात्युत्कर्षवता ब्राह्मणेनैव प्रजायते, विवाहादिसंस्कृताऽपत्योत्पत्तिसम्बन्धं प्राप्नोति, तस्यामपि यदि कुमारी जायते, सापि ब्राह्मणेन परिणीता। एवमनया परम्परया सप्तमे युगे सप्तमे जन्मन्युत्पन्नो ब्राह्मणो भवति। अतः श्रेयसीं जातिं गच्छति। एवं क्षत्रियायां वैश्यायां च ब्राह्मणेनोढायां षष्ठे पञ्चमे च श्रेयसीं जातिं ब्राह्मणत्वं गच्छतीत्युक्तम्। एवं क्षत्रियवैश्ययोरप्यूह्यम्।

शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्।
क्षत्रियाज्जातमेवन्तु विद्याद्वैश्यात्तथैव च॥

शूद्रायामूढायां ब्राह्मणाज्जातो यः पारशवो निषादापरनामा स इह शूद्रशब्देन निर्दिश्यते। अत्र पुंलिङ्गमविवक्षितम्। अतः शूद्रा ब्राह्मणोढा सती कन्यामुत्पादयति, सा च ब्राह्मणेनैवोढा कन्या भवतीत्येवंपरम्परया ब्राह्मणतामेतीति पूर्वश्लोकोक्तानुवादः। शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रतामित्यस्य स्वयमर्थः—पूर्वोक्त एव पारशवोऽत्र ब्राह्मणशब्देन निर्दिश्यते; ब्राह्मणजातत्वात्। स च शूद्रां यदि परिणयेत्, तदा ततोऽपि निकृष्टं जनयतीत्यनेन प्रकारेण शूद्रतां गच्छतीति। एवं क्षत्रियोऽपि वैश्योऽपि शूद्रतामेति। निवृत्तः प्रासङ्गिकः संकीर्णसंकरजातिनिर्णयः। अधुना प्राकृताः शूद्रास्तत्समानधर्माश्च निरुच्यन्ते तद्धर्मकथनाय। तत्र ये विराड्रूपस्य स्रष्टुश्चरणाज्जातास्ते सत्युपदेशातिदेशाभ्यां गोत्रप्रवरसम्बन्धरहिता द्विजशूद्रसमानधर्माणः। यद्यप्येते द्विजातिभ्य उत्पन्नास्तथापि उपनयाभावाच्छूद्रेभ्य उत्कृष्टा अपि तत्समानधर्माणः। यथाच मनुः—

शूद्राणान्तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ।

इति । अत्रानुलोमेन शूद्रायामुत्पन्ना अपध्वंसजा गृह्यन्ते । सवर्णविवाहो द्विजातीनां न्याय्यः । असवर्णविवाहस्त्वपध्वंसो न्यायादपेतः । अत एव याज्ञवल्क्यः—नैतन्मम मते यस्मात्तत्रात्मा जायते स्वयमिति । ये च पूर्वोक्तरीत्या व्रात्यादुत्पन्नास्तेऽपि शूद्रसदृशाः । ये द्विजातिस्त्रीषु द्विजातिभ्य एव व्यभिचारजाताः कुण्डगोलकास्तेऽपि शूद्रसदृशाः । तथाच देवलः—

द्वितीयेन तु पित्रा च सवर्णायां प्रजायते ।
अवर्णोढ इति ज्ञेयः शूद्रधर्मा च जातित इति ॥

एतच्च शास्त्राभ्यनुज्ञातक्षेत्रजादिव्यतिरिक्तविषयम् । एवमन्येपि शूद्रसदृशाः स्मृत्यन्तरतोऽवगन्तव्याः॥ इति ॥

[ पूर्वोक्तार्थनिष्कर्षः ] तदयं निष्कर्षः—वर्णत्वं ब्राह्मणत्वादिजातिचतुष्टयान्यमतत्वम् । तज्जातिचतुष्टयव्यापकं जात्यन्तरं वा । 'चातुर्वर्ण्यार्द्धैचयमाचरेत्' इत्यादिप्रयोगात् । अत एव याज्ञवल्क्यस्मृतौ—'वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः' इति श्लोकव्याख्यावसरे "इतरेऽनुलोमप्रतिलोमजाता मूर्धावसिक्तादयः" इति मिताक्षरायामुक्तं सङ्गच्छते । तेन विप्रायां विप्रात् क्षत्रियात्क्षत्रियायां वैश्याद्वैश्यायां शूद्राच्छूद्रायां वेत्तुरुत्पन्नत्वमेव ब्राह्मणत्वक्षत्रियत्ववैश्यत्वशूद्रत्वानां क्रमेण प्रयोजकानि । तदुच्यते—ब्राह्मणत्वक्षत्रियत्ववैश्यत्वशूद्रत्वजातिरूढतत्तज्जातीयमातापितृजन्यत्वव्याप्या, न तु तदुद्देशेन विहितकर्मणामनुष्ठानमात्रेण साध्येति । तदुक्तं मनुना—

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ २६ ॥

गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः ।

बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ २७ । २॥

इति । स एव—निषेकादिः श्मशानान्तो मन्त्रैर्यस्योदितो विधिः । तस्य शास्त्रे (स्यैवात्रा) धिकारोऽस्ति ज्ञेयो नान्यस्य कस्यचित् ॥ २ । १६ ॥ इति । अत्र मानवधर्मशास्त्राध्ययने श्रवणे चेत्यर्थः ।

[जातिप्रत्यक्षत्वे कुमारिलाद्युपष्टम्भः ]

एतेन—एतच्छास्त्राध्ययने श्रवणे च द्विजानामेवाधिकारो न शूद्रस्य—इति सिद्धम् । इदञ्च ब्राह्मणत्वादिकं प्रत्यक्षमिति कुमारिलादयः । तद्यथा—"कथं पुनरयं दृष्टविरोधो यदा समानाकारेषु पिण्डेषु ब्राह्मणत्वादिविभागः शास्त्रेणैव निश्चीयते । नायं शास्त्रविषयो लोकप्रसिद्धत्वाद् वृक्षत्वादिवत् । कथं पुनरिदं लोकस्य प्रसिद्धम् । प्रत्यक्षेणेति ब्रूमः । कस्मात्पुनर्मातापितृसम्बन्धानभिज्ञाश्चक्षुःसंनिकृष्टेषु मनुष्येष्वनाख्यातं न प्रतिपद्यन्ते । शक्त्यभावात् । यथा वृक्षत्वं प्रागभिधानव्युत्पत्तेः । नैतत्तुल्यम् । वृक्षत्वं प्रागभिधायकव्यापाराज्जात्यन्तरव्यवच्छिन्नं स्वव्यक्तिष्वनुगतं शाखादिमद्रूपेण दृश्यते, नतु ब्राह्मणत्वम् । अपि च व्युत्पन्नशब्दोऽपि निमित्तान्तरादृते नैव प्रतिपाद्यते । न चोपवीताध्ययनादिनिमित्तम् । वर्णत्रयसाधारणत्वात् । अध्यापनाद्यपि भिन्नाचारक्षत्रियवैश्यप्रतियोगित्वात्सन्दिग्धम् । सर्वञ्च दुष्टशूद्रेषु सम्भाव्यमानत्वादनिश्चितम् । यस्त्वविचारितसिद्धमेव प्रतिपद्येत, स शुक्तिकामपि रजतं मन्यमानः क्रीणीयात् । नैष दोषः । क्वचिद्धि काचिज्जातिग्रहणे इतिकर्तव्यता भवतीति वर्णितमेतत् । तेन यथैवालोकेन्द्रियानेकपिण्डानुस्यूतिस्मरणव्यक्तिमहत्त्वसन्निकर्षाकारविशेषादयोऽन्यजातिग्रह-

णे कारणम्। तथैवात्रोत्पादकजातिस्मरणम्। अयञ्चोत्पाद्योत्पादकसम्बन्धो मातुरेव प्रत्यक्षः। अन्येषां त्वनुमानाप्तोपदेशाद्यवगतः कारणं भवति। न चावश्यं प्रत्यक्षावगतमेव प्रत्यक्षनिमित्तं भवति; चक्षुरादेरनवगतस्यापि निमित्तत्वदर्शनात्। आन्तरालिकस्मृतिव्यवहितमपि चेन्द्रियसम्बन्धानुसारि प्रत्यक्षमित्येतत्साधितम्। नच यत्सहसा सर्वस्य प्रत्यक्षं न भवति तन्निपुणतोऽपि पश्यतां न प्रत्यक्षमित्येतदप्युक्तमेव। स्त्र्यपराधात्तु दुर्ज्ञानोऽयं सम्बन्ध इति स्वयमेव वक्ष्यति। न च तावन्मात्रेण प्रत्यक्षता हीयते न हि यद्गिरिशृङ्गमारुह्य गृह्यते तदप्रत्यक्षम्। न च स्त्रीणां क्वचिद्व्यभिचारदर्शनात्सर्वत्रैव कल्पना युक्ता। लोकविरुद्धानुमानासम्भवात्। विशिष्टेन हि प्रयत्नेन महाकुलीनाः परिरक्षन्त्यात्मानम्। अनेनैव हेतुना राजभिर्ब्राह्मणैश्च स्वपितृपितामहादिपारम्पर्याविस्मरणार्थं समूहलेख्यानि प्रवर्तितानि। तथा च प्रतिकुलं गुणदोषस्मरणात् तदनुरूपाः प्रवृत्तिनिवृत्तयो दृश्यन्ते। न च भर्तृव्यतिरेककृतेन वर्णसंकरोऽपराधेन जायते। दृश्यते ह्यपराधिनीनामपि स्वभर्तृनिमित्तः प्रसवः। तदपराधनिमित्तस्तु तासामशुभफलोपयोगी भवेत्। न त्वपत्यानां वर्णसंकरः। न च नियोगतो वर्णान्तरैरेव सह प्रमादः। सवर्णेन चोत्पादितस्य नैव वर्णान्तरत्वापत्तिः। संकरजातानामपि च पुनरुत्कर्षापकर्षाभ्यां सप्तमे पञ्चमे वाऽन्यतरवर्णापत्तिः स्मर्यते। तत्र त्वेतावन्मात्रमागमिकं प्रत्येतव्यम्। नह्ययं पुरुषेयत्तानियमो लौकिकप्रमाणगम्यः। तस्मात्सत्यपि सारूप्ये यथा केनचिन्निमित्तेन स्त्रीपुंस्कोकिलादिज्ञानम्, तथैव दर्शनस्मरणपारम्पर्यानुगृहीतप्रत्यक्षगम्यानि ब्राह्मणत्वादीनि इति भवत्यज्ञानवचनस्य प्रत्यक्षविरोधः। येषामप्याचारनिमित्ता ब्राह्म-

णत्वादयस्तेषामपि दृष्टविरोधस्तावदस्त्येव । न त्वाचारनिमित्त-वर्णविभागे प्रमाणं किञ्चित् । सिद्धानां हि ब्राह्मणादीनामाचारा विधीयन्ते । तत्रेतरेतराश्रयता भवेत् । ब्राह्मणादीनामाचारास्तद्व-शेन ब्राह्मणादय इति स एव शुभाचारकाले ब्राह्मणः पुनरशुभाचार काले शूद्र इत्यनवस्थितत्वम् । तथैकेनैव प्रयत्नेन परपीडानुग्रहादि कुर्वतां युगपद्ब्राह्मणत्वाब्राह्मणत्वविरोधः । एताभिरुपपत्तिभि-स्त्विदं प्रतिपाद्यते न तपआदीनां समुदायो ब्राह्मण्यम् । न तज्ज-नितः संस्कारः । न तदभिव्यङ्ग्या जातिः । किन्तर्हि मातापितृजा-तिज्ञानाभिव्यङ्ग्या प्रत्यक्षसमधिगम्या । तस्मात्पूर्वेणैव न्यायेन वर्णविभागे व्यवस्थिते मासेन शूद्रो भवतीत्येवमादीनि कर्मनिन्दा-वचनान्यथवा वर्णत्रयकर्महानिप्रतिपादनार्थानीति वक्तव्यम्'' इति ।

[ उक्तार्थं कन्दली ] तथैव कन्दलयामपि—"व्यक्तिग्रहणमिव समय-ग्रहणमपि तस्य प्रतीतिकारणम् । ब्राह्मणत्वस्यैव योनिसम्बन्धज्ञा-नम् । तत्रापि विशुद्धब्राह्मणसन्ततिजस्योत्पत्तिमात्रानुबद्धमपि ब्रा-ह्मणत्वमिन्द्रियापातमात्रेण क्षत्रियादिविलक्षणतया न गृह्यते । अत्यन्तं व्यक्तिसादृश्येनानुद्भूतत्वात् । यदा तु मातापित्रोस्तत्पू-र्वेषां च वृद्धपरम्परया विशुद्धं ब्राह्मणत्वमवसितम्, तदा ब्राह्मणो-ऽयमिति प्रत्यक्षेणैव प्रतीयते । तथाहि सुविदितरत्नपरीक्षाशास्त्रो रत्नजातिभेदं प्रत्यक्षतः प्रत्येति नापरः । नच तावता रत्नजाति-भेदो नास्ति । नच तत्प्रत्यक्षमप्रत्यक्षम् । यच्चोक्तं स्त्रीणां स्वभाव-चपलानां विशुद्धिदुरवबोधेति । तदसत् । अभियुक्तैः सुरक्षितानां सुकरस्तदवबोधः । कथितश्च तासां बहुविधो रक्षणोपाय इत्यास्तां तावत्प्रसक्तानुप्रसङ्गः''—इति वर्णितम् ।

[ उक्तार्थेद्रव्यसार-संग्रहः । एवमेव द्रव्यसारसङ्ग्रहेऽपि—"ननु भवतु हिरण्यगर्भ एव परमेश्वरो वा ब्रह्मा । तथाप्यदृष्टविशेषसहकृतावयवेभ्यो ब्राह्मणाद्युत्पत्तिरित्युक्तं न सम्यक् । ब्राह्मणत्वावच्छिन्नम्प्रति ब्राह्मणत्वादिना हेतुतया ब्राह्मणं विना ब्राह्मणोत्पत्तेरशक्यत्वात् इति चेन्न ; यतो ब्राह्मणत्वं द्विविधम् । एकमदृष्टविशेषजन्यतावच्छेदकं सर्वब्राह्मणसाधारणम् । अपरं च ब्राह्मणजन्यतावच्छेदकं अदृष्टविशेषजन्याद्यब्राह्मणव्यावृत्तं ब्राह्मणजन्यसर्वब्राह्मणसाधारणम् । एवं च ब्राह्मणं विनाप्यदृष्टविशेषरूपसहकृतपार्थिवावयवेभ्योऽदृष्टविशेषजन्यतावच्छेदकब्राह्मणत्वावच्छिन्नोत्पत्तौ बाधकाभाव इति । एवमन्यत्रापि यथायथमूह्यम्" इति वर्णितम् ॥

[ उक्तार्थेमिताक्षरा ] यत्तु मिताक्षरायाम्—"ब्राह्मणस्य चतस्रो भार्या भवन्ति क्षत्रियस्य तिस्रो वैश्यस्य द्वे शूद्रस्यैकेत्युक्त्वा तासु च पुत्रा उत्पादयितव्या इत्युक्तम् । इदानीं कस्यां कस्मात्कः पुत्रो भवतीति विवेक्तुमाह—

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः ॥

सवर्णेभ्यो ब्राह्मणादिभ्यः सवर्णासु ब्राह्मण्यादिषु सजातयो मातापितृसमानजातीया पुत्रा भवन्ति । 'विन्नास्वेष विधिः स्मृतः' इति सर्वशेषत्वेनोपसंहाराद्विन्नासु सवर्णास्विति सम्बध्यते । विन्नाशब्दस्य सम्बन्धिशब्दत्वाद्वेत्तृभ्यः सवर्णेभ्य इति लभ्यते । एकः सवर्णशब्दः स्पष्टार्थः । अतश्चायमर्थः संवृत्तः । उक्तेन विधिनोढायां सवर्णायां वोढुः सवर्णादुत्पन्नास्तस्मात्समानजातीया भवन्ति । अतश्च कुण्डगोलककानीनसहोढजादीनामसवर्ण-

त्वमुक्तं भवति। ते च सवर्णेभ्योऽनुलोमप्रतिलोमेभ्यश्च भिद्यमानाः साधारणधर्मैरहिंसादिभिरधिक्रियन्ते। "शूद्राणान्तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः॥" इति स्मरणात्। अपध्वंसजा व्यभिचारजाताः शूद्रधर्मैरपि द्विजशुश्रूषादिभिरधिक्रियन्ते। ननु कुण्डगोलकयोरब्राह्मणत्वात् श्राद्धे प्रतिषेधोऽनुपपन्नो न्यायविरोधश्च। यो यज्जातीयाद्यज्जातीयायामुत्पन्नः स तज्जातीय एव भवति। यथा गोर्गवि गौः, अश्वाद्वडवायामश्वः। तस्माद्ब्राह्मणाद्ब्राह्मण्यामुत्पन्नो ब्राह्मण इति न विरुद्धम्। तथा कानीनपौनर्भवादीननुक्रम्य 'सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः' इति वक्ष्यमाणवचनविरोधश्च। नैतत्सारम्। ब्राह्मणेन ब्राह्मण्यामुत्पन्नो ब्राह्मण इति भ्रमनिवृत्त्यर्थः श्राद्धे प्रतिषेधः। यथाऽत्यन्तमप्राप्तस्य पतितस्य श्राद्धे प्रतिषेधः। न च न्यायविरोधः। यत्र प्रत्यक्षगम्या जातिर्भवति, तत्र तथा, ब्राह्मणादिजातिस्तु स्मृतिलक्षणा यथोस्मरणं भवति। यथा समानेऽपि ब्राह्मण्ये कुण्डिनो वसिष्ठोऽत्रिर्गौतम इति स्मरणलक्षणं गोत्रम्, तथा मनुष्यत्वे समानेऽपि ब्राह्मण्यादिजातिः स्मरणलक्षणा। मातापित्रोश्चैतदेव जातिलक्षणम्। नचानवस्था; अनादित्वात्संसारस्य शब्दार्थव्यवहारवत्। 'सजातीयेष्वयम्प्रोक्तस्तनयेषु मया विधिः' इति तूक्तानुवादत्वाद्यथासम्भवं व्याख्यास्यते। क्षेत्रजस्तु मातृसमानजातीयो नियोगस्मरणात् शिष्टसमाचाराच्च। यथा धृतराष्ट्रपाण्डुविदुराः क्षेत्रजाः सन्तो मातृसमानजातीया इत्यलमतिप्रसङ्गेन। किञ्चानिन्द्येषु ब्राह्मादिविवाहेषु पुत्राः सन्तानवर्धना अरोगिणो दीर्घायुषो धर्मप्रजासम्पन्ना भवन्ति।

सवर्णानुक्त्वेदानीमनुलोमानाह—

विप्रान्मूर्धावसिक्तो हि क्षत्रियायां विशः स्त्रियाम् ।
अम्बष्ठः शूद्र्यां निषादो जातः पारशवोऽपि वा ॥

ब्राह्मणात्क्षत्रियायां विन्नायामुत्पन्नो मूर्धावसिक्तो नाम पुत्रो भवति। वैश्यकन्यायां विन्नायामुत्पन्नोऽम्बष्ठो नाम भवति। शूद्रायां विन्नायां निषादो नाम पुत्रो भवति। निषादो नाम कश्चिन्मत्स्यघातजीवी प्रतिलोमजः, स मा भूदिति पारशवोऽयं निषाद इति संज्ञाविकल्पः। विप्रादिति सर्वत्रानुवर्तते। यत्तु ब्राह्मणेन क्षत्रियायामुत्पादितः क्षत्रिय एव भवति। क्षत्रियेण वैश्यायामुत्पादितो वैश्य एव भवति। वैश्येन शूद्रायामुत्पादितः शूद्र एव भवतीति शङ्खस्मरणम्, तत्क्षत्रियादिधर्मप्राप्त्यर्थम्। न पुनर्मूर्धावसिक्तादिजातिनिराकरणार्थं क्षत्रियादिजातिप्राप्त्यर्थं वा। अतश्च मूर्धावसिक्तादीनां क्षत्रियादेरुक्तैरेव दण्डाजिनोपवीतादिभिरुपनयनादिकं कार्यम्। प्रागुपनयनात्कामचारादि पूर्ववदेव वेदितव्यम्।

वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः ॥

वैश्यायां शूद्रायां च विन्नायां राजन्यान्माहिष्योग्रौ यथाक्रमं पुत्रौ भवतः। वैश्येन शूद्रायां विन्नायां करणो नाम पुत्रो भवति। एष सवर्णामूर्धावसिक्तादिसंज्ञाविधिः विन्नासूढासु स्मृत उक्तो वेदितव्यः। एते च मूर्धावसिक्ताम्बष्ठनिषादमाहिष्योग्रकरणाः षडनुलोमजाः पुत्रा वेदितव्याः ॥ ९२ ॥

प्रतिलोमजानाह—

ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा ।
शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः ॥ ९३ ॥

ब्राह्मण्यां क्षत्रियवैश्यशूद्रैरुत्पादिता यथाक्रमं सूतवैदेहकचण्डालाख्याः पुत्रा भवन्ति। तत्र च चण्डालः सर्वधर्मबहिष्कृतः ॥६३॥

क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च।
शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥

किञ्च क्षत्रिया योषित् वैश्यान्मागधं नाम पुत्रं जनयति। सैव शूद्रात्क्षत्तारं पुत्रं जनयति। एते च सूतवैदेहकचण्डालमागधक्षत्रायोगवाः षट् प्रतिलोमजाः। एतेषाञ्च वृत्तय औशनसे मानवे च द्रष्टव्याः ॥ ६४ ॥

संकीर्णसंकरजात्यन्तरमाह—

माहिष्येण करण्यां तु रथकारः प्रजायते।
असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजाः ॥

क्षत्रियेण वैश्यायामुत्पादितो माहिष्यः। वैश्येन शूद्रायामुत्पादिता करणी। तस्यां माहिष्येणोत्पादितो रथकारो नाम जात्या भवति। तस्य चोपनयनादि सर्वं कार्यं वचनात्।

यथाह शङ्खः—"क्षत्रियवैश्यानुलोमान्तरोत्पन्नो यो रथकारस्तस्येज्यादानोपनयनसंस्कारादिक्रिया अश्वप्रतिष्ठारथसूत्रवास्तुविद्याध्ययनवृत्तिता च, इति। एवं ब्राह्मणक्षत्रियोत्पन्नमूर्धावसिक्तमाहिष्याद्यनुलोमसंकरे जात्यन्तरतोपनयनादिप्राप्तिश्च वेदितव्या। तयोर्द्विजातित्वात्। संज्ञास्तु स्मृत्यन्तरोक्ता द्रष्टव्याः। एतच्च प्रदर्शनमात्रमुक्तम्। संकीर्णसंकरजातीनामानन्त्याद्वक्तुमशक्यत्वात्। अत एतावदत्र विवक्षितम्—असन्तः प्रतिलोमजाः सन्तश्चानुलोमजा ज्ञातव्या इति ॥ ६५ ॥

सवर्णेभ्यः सवर्णासु जायन्त इत्यादिना वर्णप्राप्तौ कारणमुक्तम्। इदानीं करणान्तरमाह—

जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा ।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम् ॥ ६६ ॥

जातयो मूर्धावसिक्ताद्यास्तासामुत्कर्षो ब्राह्मणत्वादिजातिप्राप्तिर्जात्युत्कर्षो युगे जन्मनि सप्तमे पञ्चमे अपिशब्दात्षष्ठे वा बोद्धव्या । व्यवस्थितश्चायं विकल्पः । व्यवस्था च ब्राह्मणेन शूद्रायामुत्पादिता निषादी । सा ब्राह्मणेनोढा दुहितरं काञ्चिज्जनयति सापि ब्राह्मणेनोढाऽन्यां जनयति । अनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति । ब्राह्मणेन वैश्यायामुत्पादिताऽम्बष्ठा । साप्यनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति । मूर्धावसिक्ताप्यनेन प्रकारेण चतुर्थी पञ्चमं ब्राह्मणमेव जनयति । एवमुग्रा क्षत्रियेणोढा माहिष्या च षष्ठं पञ्चमं च क्षत्रियं जनयति । तथा करणी वैश्योढा पञ्चमं वैश्यमित्येवमन्यत्राप्यूहनीयम् । किञ्च कर्मणां व्यत्यये वृत्त्यर्थानां कर्मणां विपर्यासे यथा ब्राह्मणो मुख्यया वृत्त्या अजीवन् क्षात्रेण कर्मणा जीवेदित्यनुकल्पः । तेनाप्यजीवन् वैश्यवृत्त्या तयाप्यजीवन् शूद्रवृत्त्या । क्षत्रियोऽपि स्वकर्मणा जीवनार्थेनाजीवन् वैश्यवृत्त्या । तयाप्यजीवन् शूद्रवृत्त्या वा । वैश्योऽपि स्ववृत्त्याऽजीवन् शूद्रवृत्त्येति कर्मणां व्यत्ययः । तस्मिन् व्यत्यये सति यद्यापद्विमोक्षेऽपि तां वृत्तिं न परित्यजति । तदा सप्तमे षष्ठे पञ्चमे वा जन्मनि साम्यं यस्य हीनवर्णस्य कर्मणा जीवति तत्समानजातित्वं भवति । तद्यथा—ब्राह्मणः शूद्रवृत्त्या जीवंस्तामपरित्यजन्यदि पुत्रमुत्पादयति । सोऽपि तयैव वृत्त्या जीवन् पुत्रोन्तरमित्येवम्परम्परया सप्तमे जन्मनि शूद्रमेव जनयति । वैश्यवृत्त्या जीवन् षष्ठे वैश्यम् । क्षत्रियवृत्त्या जीवन् पञ्चमे क्षत्रियम् । क्षत्रियोऽपि शूद्रवृत्त्या जीवन् षष्ठे शूद्रम् । वैश्यवृत्त्या जीवन् पञ्चमे

वैश्यम्। वैश्योऽपि शूद्रवृत्त्या जीवन् तामपरित्यजन् पुत्रपरम्परया पञ्चमे जन्मनि शूद्रं जनयति इति। पूर्ववच्चाधरोत्तरम्। अस्यार्थः वर्णसंकरे प्रतिलोमजा अनुलोमजाश्च दर्शिताः। संकीर्णसंकरजाताश्च रथकारनिदर्शनेन दर्शिताः। इदनीं वर्णसंकरजाताः प्रदर्श्यन्ते। अधरे उत्तरे चाधरोत्तरम्, यथा मूर्धावसिक्तायां क्षत्रियवैश्यशूद्रैरुत्पादितास्तथाऽम्बष्ठायां वैश्यशूद्राभ्यां निषाद्यां शूद्रेणोत्पादिता अधराः प्रतिलोमजास्तथा मूर्धावसिक्ताम्बष्ठानिषादीषु ब्राह्मणेनोत्पादिता माहिष्योग्रयोर्ब्राह्मणेन क्षत्रियेण चोत्पादिताः करण्यां ब्राह्मणेन क्षत्रियेण वैश्येन चोत्पादिता उत्तरेऽनुलोमजाः। एवमन्यत्राप्यूहनीयम्। एतदधरोत्तरं पूर्ववदसत्सदिति बोध्यम्"॥ इत्यादिविवेचितम्; तदपि व्यवस्थितं चातुर्वर्ण्यं जातित इत्येव गमयति।

[ कुण्डादिब्राह्मणत्वपरीक्षणम् ] यत्त्वत्र कुण्डगोलकयोर्न ब्राह्मणत्वमित्यादिकं निरूपितम्। तत्र परं केचिद्विप्रतिपद्यन्ते।

अत्रेदमवधेयम्—विन्नासु सवर्णास्विति सम्बन्धेपि स्ववेत्तृभ्यः सवर्णेभ्य इत्यर्थो न शक्यते लब्धुम्; तथासत्येकस्य स्मार्तस्य सवर्णशब्दस्य वैयर्थ्यापत्तेः। अत एव एकः सवर्णशब्दः स्पष्टार्थः इति वैयर्थ्यापरपर्यायं स्पष्टार्थत्वं कण्ठत उक्तम्। विन्नाशब्दस्य कन्याव्यावृत्तितात्पर्यकतयोपक्षयेण वेत्तृरूपसम्बन्धाक्षेपकतायामक्षमत्वात्। एतदभिप्रायेणैवोक्तवार्त्तिके "सवर्णेन चोत्पादितस्य नैव वर्णान्तरत्वापत्ति" रिति स्पष्टमेवोक्तम्। भट्टसोमेश्वरेण च। "ननु विन्नास्वेष विधि स्मृत" इत्यादिवचनाद्भर्तृव्यतिरिक्तसवर्णोत्पन्नस्यापि वर्णान्तरत्वापत्तिः स्यादित्याशङ्क्याह" त्युक्तवार्तिकमवतार्य गवादावुत्पादकसजातीयापत्योत्पादकत्वदर्शनेनेहापि तु-

थाऽनुमानान्न वर्णान्तरत्वापत्तिः संभवतीति" व्याख्यातम्। किञ्च विन्नास्त्विति वचनस्य कुण्डगोलकयोर्ब्राह्मणत्वेऽपि ब्राह्मणादिविहितकर्मानधिकारप्रतिपादनरूपं कन्याव्यावृत्त्यतिरिक्तमपि प्रयोजनं तदनन्तरमेव तेनोक्तम्। तदनन्तरमपि च—

"अमृते जारजः कुण्डो मृते भर्तरि गोलकः"

इति वचनमनुसन्धाय "कुण्डगोलकवचनमपि सत्येव ब्राह्मण्येऽवान्तरसंज्ञाप्रतिपादनपरमि" त्यपि तेनोक्तम्। एतेन—अतश्च कुण्डगोलकेत्यादि अभिक्रियन्ते इत्यन्तं—निरस्तं वेदितव्यम्। अपि च मिताक्षरायां नन्वित्यादिना विरोधश्चेत्यन्तेन श्राद्धे प्रतिषेधानुपपत्तिः, न्यायविरोधः, सजातीयेष्वयं प्रोक्त इत्यादिवचनविरोधश्चेति, यानि त्रीणि दूषणानि कुण्डगोलकयोर—ब्राह्मणत्वपक्षे शङ्कितानि तानि तत्र दुरुद्धराण्येव। यत्तु नैतत्सारमित्युपक्रम्य ब्राह्मणेनेत्यादिना पूर्वदूषणमुद्धृतम्। तदसत्; ब्राह्मणेन ब्राह्मण्यामुत्पन्नो ब्राह्मण इति प्रत्ययस्य भ्रमत्वे मानाभावात्। किञ्च ब्राह्मणत्वप्रयुक्तायामेव प्राप्तौ श्राद्धे तयोः प्रतिषेधस्य सार्थकता सूपपादैव। अपि च यथेति दृष्टान्तोऽपि विषमः; तत्र ब्राह्मणत्वप्रयुक्तायां प्राप्तौ सत्यामेव पातित्यमूलकप्रतिषेधस्य सार्थकताया अभ्युपगमात्। यदपि न चेत्यादिना व्यवहारवदित्यन्तेन मध्यमं दूषणं निराकृतम्। तदत्यन्तमयुक्तम्; ब्राह्मणत्वादेः शास्त्रैकसमधिगम्यत्वे मानाभावात्। प्रत्युत पूर्वमुपन्यस्ताभिर्वार्त्तिकन्यायसुधोक्तयुक्तिभिस्तत्प्रत्यक्षताया निर्विचिकित्सत्वात्। किञ्च प्रत्यक्षैकप्रमाणवादिनां चार्वाकाणां जातिमुद्दिश्य पूर्वपक्षे समाधिदुर्भिक्षप्रसङ्गः। एवं श्रुतिस्मृतिप्रामाण्यानभ्युपगन्तृणां बौद्धादीनां तादृशि पूर्वपक्षेऽपि। सजातीयेष्वित्यादि-

वचनविरोधपरिहारस्त्वतिफल्गुत्वादेवोपेक्षणीयः। अपिच प्रत्यक्षसिद्धेऽपि कुण्डगोलकयोर्ब्राह्मणादित्वे योगीश्वरवचने सवर्णपदद्वयमपि मानम्। मिताक्षरोक्तरीत्या योजने तदन्यतरवैयर्थ्यापत्तेः पूर्वमापादिताया दुष्परिहरत्वात्। इति।

ननु मूलब्राह्मणक्षत्रियादिषु प्रकृतवार्त्तिकोक्तस्य मातापितृजातिस्मरणादेरभिव्यञ्जकस्याभावाद्ब्राह्मणत्वादेर्दुर्ग्रहतया तत्पुत्रादावपि तज्जातिस्मरणासम्भवेन तस्य दुर्ग्रहत्वमेवेत्यद्यथावदपि ब्राह्मणत्वादेः कस्याञ्चिदपि व्यक्तौ ग्रहणं न स्यात्। मूलब्राह्मणादौ मातापितृजातिस्मरणं विना व्यञ्जकान्तरेण ब्राह्मणत्वादिग्रहाङ्गीकारे तु तेनैव सर्वासु व्यक्तिषु ब्राह्मणत्वादेर्ग्रहसम्भवात् अलं मातापितृजातिस्मरणस्य व्यञ्जकत्वाभ्युपगमेनेति चेन्न; आदिगवादावपि तुल्यत्वात्। कथं तावदादिगवे गोत्वग्रहस्तद्व्यवहारो वा। अथ सर्गान्तरीयगोत्वग्रहशालिनो हिरण्यगर्भादेरुपदेशात्तद्ग्रहः। गोत्वस्य तत्सम्बन्धस्य च नित्यतया गवान्तरवदादिगवेऽपि हि तत्सत्त्वं निराबाधमेव। अथवा गोपदशक्तिग्रह एव तत्र हिरण्यगर्भादेरुपदेशाद्भवति। गोत्वप्रत्यक्षन्तु प्रकृतसामग्रीवशादेव; न चैतन्मूलब्राह्मणादौ सम्भवति। प्रकृतसामग्रीघटकस्य मातापितृजातिस्मरणस्य तत्र दुर्वचत्वादिति चेन्न; यथाहि मातापितृजातिस्मरणं गोत्वादिप्रत्यक्षकारणातिरिक्तमधुनातनीषु ब्राह्मणादिव्यक्तिषु ब्राह्मणत्वादिप्रत्यक्षं प्रति कारणतया फलबलात्कल्प्यते, तथा हिरण्यगर्भादीनां मूलब्राह्मणादिकाले ध्रियमाणानामन्येषाञ्च मूलब्राह्मणादिषु ब्राह्मणत्वादिप्रत्यक्षं प्रति मुखादिजन्यत्वज्ञानमेव कारणतयाऽभ्युपगम्यते। फलबलात्। तथाच हारीतस्मृतौ प्रथमाध्याये—

पुरा देवो जगत्सृष्ट्वा परमात्मा जलोपरि ।
सुष्वाप भोगिपर्यङ्के शयने तु श्रिया सह ॥
तस्य सुप्तस्य नाभौ तु महत्पद्ममभूत्किल ।
पद्ममध्येऽभवद्ब्रह्मा वेदवेदाङ्गभूषणः ॥ १० ॥
स चोक्तो देवदेवेन जगत्सृज पुनः पुनः ।
सोऽपि सृष्ट्वा जगत्सर्वं सदेवासुरमानुषम् ॥ ११ ॥
यज्ञसिद्ध्यर्थमनघान् ब्राह्मणान्मुखतोऽसृजत् ।
असृजत् क्षत्रियान्बाह्वोर्वैश्यानप्यूरुदेशतः ॥ १२ ॥
शूद्रांश्च पादयोः सृष्ट्वा तेषां चैवानुपर्वशः ।
यथा प्रोवाच भगवान् ब्रह्मयोनिः पितामहः ॥ १३ ॥
तद्वचः सम्प्रवक्ष्यामि शृणुत द्विजसत्तमाः ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं मोक्षफलप्रदम् ॥ १४ ॥
ब्राह्मण्यां ब्राह्मणेनैवमुत्पन्नो ब्राह्मणः स्मृतः ।
तस्य धर्मं प्रवक्ष्यामि तद्योग्यं देशमेव च ॥ १५ ॥
कृष्णसारो मृगो यत्र स्वभावेन प्रवर्तते ।
तस्मिन्देशे वसेद्धर्मः सिद्ध्यन्ति द्विजसत्तमाः ॥

इति । अत्र हि हारीतेनानूदिते—

"ब्राह्मण्यां ब्राह्मणेनैवमुत्पन्नो ब्राह्मणः स्मृतः" ॥

इति भगवत्पितामहवाक्ये "एवम्" इति शब्दोपादानात् यथा मूलब्राह्मणेषु मन्मुखजन्यत्वज्ञानं ब्राह्मणत्वव्यञ्जकम्, तथा ब्राह्मण्यां ब्राह्मणेनोत्पन्नेषु शाखाब्राह्मणेषु मातापितृजातिस्मरणं ब्राह्मणत्वव्यञ्जकमित्यस्मदुक्तं मूलशाखयोर्ब्राह्मणत्वादिव्यञ्जकद्वयं करतलामलकवत्स्पष्टतरमेव प्रतीयते ।

उदयनाचार्यैस्तु न्यायकुसुमाञ्जलौ २ स्तवके २ श्लोकस्य ३ पादम् "उद्भिद्वृश्चिकवद्वर्णाः" इति व्याचक्षाणैः—वृश्चिकतण्डुलीयकादिवद्वर्णादिव्यवस्थाऽप्युपपद्यते। यथाहि वृश्चिकपूर्वकत्वेऽपि वृश्चिकस्य गोमयाद्याद्यः, तण्डुलीयकपूर्वकत्वेऽपि तण्डुलीयकस्य तण्डुलकणाद्याद्यो, वह्निपूर्वकत्वेऽपि वह्नेररणेराद्यः, एवं क्षीरदधिघृततैलकदलीकाण्डादयः, तथा मानुषपशुगोब्राह्मणपूर्वकत्वेऽपि तेषां प्राथमिकास्तत्तत्कर्मोपनिबद्धभूतभेदहेतुका एव, स एव हेतुः सर्वत्रानुगतः इति सर्वेषां तत्सान्तानिकानां समानजातीयत्वमिति किमसङ्गतम्। गतं तर्हि गोपूर्वकोऽयं गोत्वादित्यादिना। न गतम्; योनिजेष्वेव व्यवस्थापनात्, मानसास्त्वन्यथाऽपीति। गोमयवृश्चिकादिवदिदानीमपि किं न स्यादितिचेन्न; कालविशेषनियतत्वात्कार्यविशेषाणाम्। नहि वर्षासु गोमयाच्छालूक इति हेमन्ते किं न स्यात्" इत्युक्तम्।

[ जातिव्यवस्थायां कुसुमाञ्जलिः। ]

व्याख्यातं च वर्धमानोपाध्यायेन तत्रैव प्रकाशे—तण्डुलीयकमुद्भिद्दृष्टान्तः। एवमिति। क्षीरादक्षीराच्च परमाणोः क्षीरम्, एवं दध्याद्यपीत्यर्थः। नन्विदानीं ब्राह्मणत्वादिव्यवस्थापकं विशुद्धमातापितृजत्वादिकम्, सर्गादौ तु कर्मत्यननुगम इत्यत आह स एवेति। इदानीमप्यदृष्टविशेषोपगृहीतभूतजनितत्वेनैव त—द्व्यवस्थेत्यर्थः। गतमिति। सर्गाद्यगोव्यक्तौ व्यभिचारादित्यर्थः। योनिजेष्विति। योनिजमात्रवृत्तिगोत्वादिजातेस्तत्र हेतुत्वादित्यर्थः। तन्निश्चयश्च कालविशेषवृत्त्येति भाव इति॥

[ उक्तार्थे निष्कर्षः ]

अत्रायमाशयः—अदृष्टविशेषोपगृहीतभूतजनितत्वमेव मूलशाखाब्राह्मणाद्यनुगतमितरव्यावृत्तं च ब्राह्मणत्वादि-

जातिव्यञ्जकम्। व्यञ्जकत्वमात्रं तु तस्य द्विविधम्। मूलब्राह्मणादिषु तात्कालिकानां सूक्ष्मव्यवहितविप्रकृष्टदर्शिनामतीन्द्रियापूर्वविशेषघटिततादृशधर्मविषयकं यदलौकिकं प्रत्यक्षं तद्द्वारकमेकम्। शाखाब्राह्मणादिषु तु मातापितृजातिस्मरणद्वारकं द्वितीयमिति। परममूलब्राह्मणस्तु भगवान् ब्रह्मैव। तथात्र श्रुतिः—सैषा क्षत्रस्य योनिर्यद्ब्रह्म (बृ० उ० अध्या० ३ ब्रा० ४—वा० ११) इति। ध्वनितश्चायमर्थो मनुना—क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणान् प्रति सर्वशः। ब्रह्मैव संनियन्तृ स्यात् क्षत्रं हि ब्रह्मसम्भवम् ३२०। इति। मनुः अ० ६।

स्पष्टीकृतं च हिरण्यगर्भस्य ब्राह्मणत्वमत्रैव मन्वर्थमुक्तावल्यां कुल्लूकेन "क्षत्रियो ब्राह्मणात्प्रसूतः, ब्राह्मणबाहुप्रसूतत्वात्" इति।

कार्तवीर्यार्जुनम्प्रति देवदूतो वायुरपि—

अथवा ब्राह्मणश्रेष्ठमनुभूतानुपालकम्।
कर्तारं जीवलोकस्य कस्माज्जानन् विमुह्यसे॥ १४॥
तथा प्रजापतिर्ब्रह्मा अव्यक्तः प्रभुरव्ययः।
येनेदं निखिलं विश्वं जनितं स्थावरं चरम्॥ १५॥

इति। म० भा० अ० प० अ० १५३।

तथा च हिरण्यगर्भे गत्यन्तरविरहादवश्याङ्गीकरणीयमदृष्टविशेषोपगृहीतत्वमेव ब्राह्मणत्वस्य व्यञ्जकमिति मुखजेषु तज्जेष्वपि च तदेव तद्व्यञ्जकमस्त्विति ध्येयम्" इति॥

अत्र प्रसङ्गे विचारत्रय्यामेवं निरूपितम्। तद्यथा—रागद्वेषाभ्यां न धर्मनिर्णयः पारयितुं शक्यत इति सत्यं विज्ञेयम्।

हंसः श्वेतो बकः श्वेतः को भेदो बकहंसयोः।
नीरक्षीरविवेके तु हंसो हंसो बको बकः॥ इति॥

[ चातुर्वर्ण्यव्यवस्थायांविशेषपर्यालोचनम् ]

एतेन—ब्राह्मणकर्मणां ब्राह्मणेतरैः क्षत्रियकर्मणां क्षत्रियेतरैर्वैश्यकर्मणां वैश्येतरैः शूद्रकर्मणां शूद्रेतरैश्चानुष्ठाने तस्य तस्य तत्त्वं न्याय्यमेवेत्यपास्तम्। "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत" ( ऋ० सं० १०-९०-१२ ) ( तैति० सं० ७-१-१ ) तै० आ० ३।१२ इति श्रुतौ स्वस्य मुखं ब्राह्मणः स्वस्य बाहू राजन्यः स्वेन कृतः स्वस्योरू वैश्यः स्वेन कृतः स्वपादौ शूद्रः स्वेन कृत इत्युक्तैतदर्थानुवादिकायां "लोकानान्तु विवृद्ध्यर्थं मुखबाहूरुपादतः। ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत् ( १।३१ ) इति मनुना स्मृतौ "धृता तनूरुशती मे पुराणी येनेह सत्त्वं परमं पवित्रम्। शमो दमः सत्यमनुग्रहश्च तपस्तितिक्षानुभवश्च यत्र" ( श्रीमद्भाग० ५ स्कं० ५ अ० २४ श्लो० ) इति भगवतो वचने च भगवतो मुखजत्वेन ब्राह्मणस्य बाहुत्वेन क्षत्रियस्य ऊरुत्वेन वैश्यस्य पादत्वेन शूद्रस्य च सृष्टिः प्रतिपादिता। तत्रान्येन कर्तव्यस्य कर्मणोऽन्येन शास्त्रीयस्य कर्तुमशक्यत्वात्तद्योग्यत्वात्तत्र विध्यभावाच्च तदप्राप्तावन्यस्य ततोऽन्यत्वं ( ब्राह्मणत्वादिकं ) सर्वथैव दुर्वचनमित्यर्थस्य सिद्धेः। शिष्टमग्रे स्फुटीभविष्यति।

अत एव "सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते" ॥५॥
स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्।
सदृशानेव तानाहुर्मातृदोषविगर्हितान् ( मनुः १०।६ )

इति मनुना तत्तद्वर्णेन तत्तद्वर्णासु यथाशास्त्रं परिणीतास्वक्षतयोनिषु आनुलोम्येनोत्पन्नास्तत्तन्मातापितृजातीया इत्यनेनान्य-

पत्नीजातानां ब्राह्मणेनोढायां क्षत्रियायां वैश्यायां शूद्रायां वा क्षत्रियेणोढायां वैश्यायां शूद्रायां वा जातानां न ब्राह्मणत्वादिकं तत्तन्मातापितृजातीयत्वम् किन्तु पितृतो निकृष्टा मातृत उत्कृष्टा इति पितृसजातीया मूर्धावसिक्तमाहिष्यकरणाख्या इत्याशयेन तेषामुपपादनं सङ्गच्छते ।

तत्र सजातीयोढमातापितृजन्यत्वं सजातीयोढमातापित्रिच्छाविशेषविषयत्वस्याप्युपलक्षणम् । तेन कुन्त्युक्तार्थविषयकपाण्डुसम्मत्या मन्त्रबलेन पाण्डोः कुन्तीमाद्र्योरुत्पन्नानां धर्मराजभीमार्जुननकुलसहदेवानां यमानिलेन्द्राश्विजातानामपि क्षत्रियत्वं न तु कर्णस्य । ऊढमातापित्रोरभावात् । तथा द्रुपदेन कृते यज्ञे देवतानुग्रहेणाग्नावुत्पादितयोर्द्रौपदीधृष्टद्युम्नयोरग्निजन्यत्वेऽपि क्षत्रियत्वमेव । सपत्नीकस्यैव द्रुपदस्य तदर्थं प्रवृत्तेः । तथा दत्तकस्यापि स्वतस्सजातीयोढमातापित्रुत्पादितत्वात्तन्मातापितृसजातीयत्वमेव । प्रतिग्रहीतृसजातीयमातापित्रिच्छाविशेषविषयत्वाच्च । न च चन्द्राद्बृहस्पतेः पत्न्यां तारायामुत्पन्नस्य बुधस्य कथं क्षत्रियत्वम् । तथा शुक्राचार्यस्य ब्राह्मणस्य पुत्र्यां देवयान्यां क्षत्रियाद्ययातेरुत्पन्नयोर्यदुतुर्वस्वोः कथं क्षत्रियत्वमिति वाच्यम् ,

हिरण्यगर्भस्यैव दैवसंकल्पविशेषेण तदुपपत्तेः ।

तत्र 'ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत, इति प्रागुक्तश्रुतावुक्तस्य वर्णचतुष्टयस्य मध्ये आद्यानां त्रयाणामेवोपनयने कालादिभेदः प्रतिपादितः । न तु शूद्रस्य । तथा च सूत्रम्—गर्भाष्टमे ब्राह्मणमुपनयीत, अष्टवर्षं ब्राह्मणमुपनयेद्गर्भाष्टमे वा, एकादशे क्षत्रियं द्वादशे वैश्यम् । आषोडशाद्ब्राह्मणस्यानतीतः कालः, आद्वाविंशात्

क्षत्रियस्य आचतुर्विंशाद्वैश्यस्य। अत ऊर्ध्वं पतितसावित्रीका भवन्ति—इति। तथैव मनुः—गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम्। गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः, इति (८।१६) 'ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे। राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे, इति(८।१७) ब्राह्मणक्षत्रियविशामुपनयनयोग्यवयोभेदः प्रतिपादितवान्। सूत्रकारेणापि "वसन्ते ब्राह्मणमुपनयेत्, ग्रीष्मे राजन्यम्, शरदि वैश्यम्" इत्युपनयनयोग्यतु भेदः प्रतिपादितः। तथा—गायत्री ब्राह्मणस्यादध्यात्। गायत्रीच्छन्दा वै ब्राह्मणः। त्रिष्टुभी राजन्यस्य। त्रिष्टुप्छन्दा वै राजन्यः। जगतीभिर्वैश्यस्य। जगतीछन्दा वै वैश्यः—इति (तै० ब्रा० १।१। ६।७) ब्राह्मणे तेषामुपनये उपदेष्टव्यच्छन्दोभेदः, तथा—शर्मवद्ब्राह्मणस्य स्याद्राज्ञो रक्षासमन्वितम्। वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम्, इति (मनुः ८।३२) तेषां नामविशेषः। तथा मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला। क्षत्रियस्य च मौर्वी ज्या वैश्यस्य शणतान्तवी। (मनुः ८।४३) इति तेषामुपनयने मेखलाभेदः। तथा—कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत्। शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् (म० २,४४) इति तेषामुपवीतभेदः। तथा—ब्राह्मणो बैल्वपालाशौ क्षत्रियो वाटखादिरौ पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति धर्मतः। (मनुः ८।४५) इति तेषां दण्डभेदः। तथा—केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः। ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विशः (म० ८।४६) इति दण्डप्रमाणभेदः। तथा—भवत्पूर्वं चरेद्भैक्ष्यमुपनीतो द्विजोत्तमः। भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम् (म० ८।४९) इत्युपनयनोत्तरं भिक्षायां भवतीशब्दप्रयोगभेदः। तथा—हृद्गा-

भिः पूयते विप्रः कण्ठगाभिस्तु भूमिपः । वैश्योऽद्भिः प्राशिताभिस्तु शूद्रः स्पृष्टाभिरन्ततः ( मनुः ८।६२ ) इति तेषामाचमनीयजलस्थानभेदात्पवित्रताभेदः । तथा चत्वारो ब्राह्मणस्योक्ता आश्रमा श्रुतिचोदिताः । क्षत्रियस्य त्रयः प्रोक्ता द्वावेको वैश्यशूद्रयोः ( याज्ञवल्क्ये तेषामाश्रमभेदाः । तथा—माङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम् । वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम्, ( मनुः ८।३१ ) इति क्रमेण तेषां नामभेदः । तथा यज्ञविशेषेषु "पयोव्रतो ब्राह्मणो यवागूव्रतो राजन्य आमिक्षाव्रतो वैश्यः" इति तेषां क्रमेणाहारभेदः । तथा यज्ञविशेषेषु—बार्हदिरं ब्राह्मणस्य ब्रह्म साम कुर्यात् पार्थुरस्यं राजन्यस्य रायोराजीवं वैश्यस्य—इति तेषां क्रमेण सामभेदश्चोक्तः । एवञ्चोपनयने वर्णेऽप्याद्यानां त्रयाणामेव यथा स स विशेषः पृथक् पृथगुक्तस्तथा शूद्रस्य न कोऽपि विशेष उक्त इति तस्योपनयनाभावोऽर्थातिसद्ध इति ज्ञेयम् ।

एवं च "निषेकादिः श्मशानान्तो मन्त्रैर्यस्योदितो विधिः । तस्यैवात्राधिकारोऽस्ति ज्ञेयो नान्यस्य कस्यचित्" इति(मनुः८।१६) "विदुषा ब्राह्मणेनेदमध्येतव्यं प्रयत्नतः । शिष्येभ्यश्च प्रवक्तव्यं सम्यङ् नान्येन केनचित्" इति ( मनुः १।१०३ ) च मनुवचनाभ्यां वेदाध्ययनाध्यापनयोरधिकारस्त्रयाणामेवेत्यर्थे निर्णीते तत्साध्योपनयनाद्यधिकारो ब्राह्मणादिवर्णत्रयातिरिक्तस्य शूद्रस्य नेति सिद्धम् । अत एव—'स्त्रीशूद्रद्विजबन्धूनां न वेदश्रवणं मतम् । तेषामेव हितार्थाय पुराणं मुनिना कृतम् । इति व्यासोक्तिः सङ्गच्छते । शिष्टमग्रे स्फुटीभविष्यति । अत एव—'ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः । चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः, (मनुः १०।४ ) इति मनुना 'मातुर्यदग्रे जननं द्वितीयं

मौञ्जीबन्धनात् । ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजातयः” इति (या० १।३९ ) याज्ञवल्क्येनैषामेव द्विजत्वमुक्तं नान्यस्य ( शूद्रस्य ) अयमाशयः—येषामुपनयनं तेषां द्विजातित्वम् । येषां तदभावस्तेषामेकजातित्वमेव । पञ्चमवर्णस्तु नास्त्येव । संकीर्णजातीनां त्वश्वतरवन्मातापितृजातिव्यतिरिक्तजात्यन्तरत्वमिति । अत एव शूद्रमेकजातिमेवाहापस्तम्बः “शूद्र एकजातिः” (आ० ध० सू० ) इति ।

एतेन —

स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया स्तुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ( मनुः २।२८ )

इति मनुना ब्राह्मणशरीरोत्पत्तिं प्रति स्वाध्यायादीनामपि कारणत्वोक्तेर्ब्राह्मणस्येव क्षत्रियवैश्यशूद्राणामपि स्वाध्यायादिसम्बन्धानिराकरणात् शूद्रस्य तदभावः कथं सिध्येत् ? ‘स्वाध्यायेन’ वेदाध्ययनेन । व्रतैर्मधुमांसवर्जनादिनियमैः । होमैः सावित्रचरुहोमादिभिः सायम्प्रातर्होमैः । त्रैविद्येन त्रैविद्याख्येन चत्वारिंशद्वर्षपर्यन्तं गुरुकुलवासरूपव्रतेनेत्यर्थः । व्रतेष्वप्राधान्यादस्य पृथगुपन्यासः । इज्यया ब्रह्मचर्यावस्थायां देवर्षिपितृतर्पणरूपया, गृहस्थावस्थायां पुत्रोत्पादनरूपया । महायज्ञैः पञ्चभिर्ब्रह्मयज्ञादिभिः । यज्ञैर्ज्योतिष्टोमादिभिः । ब्राह्मी ब्रह्मप्राप्तियोग्या । इयं तनुस्तन्ववच्छिन्न आत्मा । क्रियते कर्मज्ञानसहकृतेन ब्रह्मज्ञानेन मोक्षावाप्तेरिति कुल्लूकभट्टेन व्याख्यातत्वात्तेन विशेषान्तरानुक्तेश्च शूद्रस्याप्यध्ययनादिना ब्राह्मण्यप्राप्तिर्दुर्निवारा । अत एव—

‘जन्मना जायते शूद्रः संस्काराद् द्विज उच्यते’ ॥इति॥

वचनेनोत्पत्तिकालावच्छेदेन सर्वेषां शूद्रत्वावगमेन जन्मना शू-

द्रभूतेन 'स्वाध्यायेन व्रतैर्होमैः, इत्युक्तरीत्याध्ययनादौ कृते ब्राह्मण्यं भवतीत्याशयेनैव 'ब्राह्मणमुपनयीत' इत्यादिवचनानि प्रवृत्तानीत्यस्मन्मते न विरोधो वचनान्तरैरिति—परास्तम् ।

सवर्णेभ्यः सवर्णासु पत्नीष्वक्षतयोनिषु ।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते ॥

( मनुः १० । ५ ) इति मनुना तथा 'विनास्वेष विधिःस्मृतः' इत्यधिकृत्य —

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः ।
अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः' ॥

( याज्ञ० १ । ९० ) इति याज्ञवल्क्येन स्वसवर्णासु यथाविध्यूढासु ऊढेन यथाविध्युत्पन्नानां मातापितृजातिमत्त्वोक्तेः जन्मना जायते शूद्र इत्यस्याप्रामाणिकत्वात् । यद्वा तत्र शूद्रशब्दस्तत्तुल्यार्थक इति न दोषः । अत एव—

न ह्यस्मिन्विद्यते कर्म किञ्चिदामौञ्जिबन्धनात् (१७१)
नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते ॥
शूद्रेण हि समस्तावद्यावद्वेदे न जायते ( १७२ )
कृतोपनयनस्यास्य व्रतादेशनमिष्यते ।
ब्रह्मणो ग्रहणं चैव क्रमेण विधिपूर्वकम् ( १७३ )
यद्यस्य विहितं कर्म यत्सूत्रं या च मेखला ।
यो दण्डो यच्च वसनं तत्तस्य व्रतेष्वपि ( १७४ )

इति मनुना द्वितीयाध्याये उक्तमातापित्रोर्जातस्योपनयनात्प्राक् शूद्रसमत्वं मन्त्राद्यनधिकारश्चेति चोक्तं सङ्गच्छते । अत एव—

"जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते ।
ब्रह्मचर्यणर्षिभ्यो यज्ञेन देवेभ्यः । स्वधया पितृभ्यः'

इति ( तै० सं० ६ । ३ १० ) श्रुत्या तथा—

ब्राह्मणो जायमानो वै पृथिव्यामधिजायते ( १ )

ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये, ( म० १ ६६)

इति मनुना चोत्पत्तिकालावच्छिन्नब्राह्मणत्वादिकमाश्रित्य तदुद्देशेन ऋणत्रयापाकरणोक्तिः सङ्गच्छते । अन्यथा त्वदुक्तरीत्या जायमानस्य ब्राह्मणत्वाद्ययोगात्तदसङ्गतिः । ( १ ) अधि—उपरि भवति श्रेष्ठ इत्यर्थः । सर्वभूतानां धर्मरक्षायै प्रभुः । ब्राह्मणोपदिष्टत्वात्सर्वधर्माणाम्—इति कुल्लूकभट्टो व्याचख्यौ । अत एवाग्रे—

सर्वस्वं ब्राह्मणस्येदं यत्किञ्चिज्जगतीगतम् ।

श्रैष्ठ्येनाभिजनेनेदं सर्वं वै ब्राह्मणोऽर्हति, ( १०० )

'स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च ॥

आनृशंस्याद्ब्राह्मणस्य भुञ्जते हीतरे जनाः, ।

( १०१ ) इति मनुना प्रथमाध्याये उक्तं सङ्गच्छते । अन्यथोत्पत्तिकाल एव सर्वस्य शूद्रत्वब्राह्मणत्वादिकेऽङ्गीकृते उक्तरीत्याऽस्यैव श्रैष्ठ्योक्तिरयुक्ता स्यात् ।

अत एव—

"उत्तमाङ्गोद्भवात् ज्यैष्ठ्याद्ब्रह्मणश्चैव धारणात् ।

सर्वस्यैवास्य सर्गस्य धर्मतो ब्राह्मणः प्रभुः" ॥

( मनु० १ । ९३ ) इति मनुवचने उत्तमाङ्गोद्भवादिति—

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।

ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥ इति ॥

श्रुत्युक्ता मुखजत्वेनास्य शूद्रवैश्यक्षत्रियेभ्यः श्रेष्ठत्वोक्तिः सङ्गच्छते । अत एव—

ब्राह्मणः सम्भवेच्चैव देवानामपि दैवतम् ।
प्रत्यक्षं चैव लोकस्य ब्रह्मतेजो हि कारणम् ॥

इति व्यासोक्तिः ( व्या० स्मृ० अ० ४ ) सङ्गच्छते। एतेन—जायमानो वै ब्राह्मण इति श्रुतौ 'ब्राह्मणो जायमानो हि, इत्युक्तस्मृतौ च ब्राह्मणपदं वर्गचतुष्टयस्याप्युपलक्षणमिति—परास्तम् ।

नच 'स्वाध्यायेन व्रतैर्होमैः, इति मनूक्तवचनानुरोधेन ब्राह्मणो यदि स्वाध्यायादिकमनुतिष्ठेत्तदा ब्राह्मण्यं लभत इतिवत् ब्राह्मणः क्षत्रियकर्मणा क्षत्रियत्वं वैश्यकर्मणा वैश्यत्वं शूद्रकर्मणा शूद्रत्वं प्राप्नोतीति, क्षत्रियो ब्राह्मणकर्मणा ब्राह्मणत्वं क्षत्रियकर्मणा क्षत्रियत्वं वैश्यकर्मणा वैश्यत्वं शूद्रकर्मणा शूद्रत्वं प्राप्नोतीति, वैश्यो ब्राह्मणकर्मणा ब्राह्मणत्वं क्षत्रियकर्मणा क्षत्रियत्वं वैश्यकर्मणा वैश्यत्वं शूद्रकर्मणा शूद्रत्वं प्राप्नोतीति, शूद्रो ब्राह्मणकर्मणा ब्राह्मणत्वं क्षत्रियकर्मणा क्षत्रियत्वं वैश्यकर्मणा वैश्यत्वं शूद्रकर्मणा शूद्रत्वं प्राप्नोत्येव । उक्तमातापितृजन्यत्वमुक्तमातापितृगृहीतत्वं संस्काराश्च तत्तद्धर्मे प्रयोजकं नेति ब्राह्मणादिषु सर्वेषु वक्तव्यम् । अत एव महाभारते व्यासेन—

"न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् ।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम् ॥"

इति उक्तम् । तथा स एवाह भारते आनुशासनिके पर्वणि—

एभिस्तु कर्मभिर्देवि शुभैराचरितैस्तथा ।
शूद्रो ब्राह्मणतां याति वैश्यः क्षत्रियतां व्रजेत् ॥
एतैः कर्मफलैर्देवि न्यूनजातिकुलोद्भवः ।
शूद्रोऽप्यागमसम्पन्नो द्विजो भवति संस्कृतः ॥
ब्राह्मणो वा ह्यसद्वृत्तः सर्वसङ्करभोजनः ।

ब्राह्मणान् समनुसृज्य शूद्रो भवति तादृशः ॥
कर्मभिश्च शुभैर्देवि शुद्धात्मा विजितेन्द्रियः ।
शूद्रोऽपि द्विजवत्सेव्य इति ब्रह्मानुशासनम् ॥
स्वभावः कर्म च शुभं यत्र शूद्रेऽपि तिष्ठति ।
विशिष्टः स द्विजातेर्वै विज्ञेय इति मे मतिः ॥
न योनिर्नापि संस्कारो न श्रुतं न च सन्ततिः ।
कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ॥
सर्वोऽयं ब्राह्मणो लोके वृत्तेन च विधीयते ।
वृत्ते स्थितस्तु शूद्रोऽपि ब्राह्मणत्वं नियच्छति ॥
ब्रह्मस्वभावः कल्याणी समः सर्वत्र मे मतिः ।
निर्गुणं निर्मलं ब्राह्मं यत्र तिष्ठति स द्विजः ॥
एतत्ते गुह्यमाख्यातं यथा शूद्रो भवेद्द्विजः ।
ब्राह्मणो वा च्युतो धर्मात्तथा शूद्रत्वमाप्नुते ॥
इति वाच्यम् ;
ब्राह्मणक्षत्रियविशां शूद्राणां च परन्तप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥४१॥
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥४२॥
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्मस्वभावजम् ॥४३॥
कृषिगोरक्षवाणिज्यं वैश्यकर्मस्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥४४॥
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥४५॥

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥४६॥
श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम्॥४७॥
सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः॥४८॥

इति भगवद्गीतायामष्टादशाध्याये भगवता ईश्वरप्रकृतिगतसत्त्वरजस्तमोगुणेष्वन्यतमप्राधान्यानुरोधेनैव त्रिगुणात्मकेश्वरप्रकृत्यनुरोधेनैव वेदानीं स्वकर्माभिमुखजन्मान्तरीयसंस्कारेणाभिव्यक्तगुणानुरोधेनैव वा वर्णचतुष्टयसम्बन्धित्वेन धर्मशास्त्रेषु विहितानामन्तःकरणोपशमबाह्यकरणोपशमतपोबाह्यान्तरशौचक्षमार्जुताशास्त्रीयपदार्थज्ञानस्वानुभवायत्तीकृतशास्त्रार्थागमोक्तार्थप्रामाण्यरूपशमदमतपःशौचक्षान्त्यार्जवज्ञानविज्ञानास्तिक्याख्यकर्मणां ब्राह्मणकर्मत्वमिति, बलवत्तरनिग्रहार्थकप्रवृत्तिप्रागल्भ्यधृत्युपस्थितकार्यविषयकव्यामोहशून्यप्रवृत्तियुद्धविषयकापराङ्मुखतादेयविषयकमुक्तहस्तत्वेशितव्यविषयकप्रभुशक्तिप्रकरणरूपशौर्यतेजोधृतिदाक्ष्ययुद्धाधिकरणापलायनदानेश्वरभावाख्यकर्मणां क्षात्रकर्मत्वमिति, भूविलेखनपाशुपाल्यवस्तुविषयकक्रयविक्रयादिरूपकर्मणां वैश्यकर्मत्वमिति, शुश्रूषा शूद्रकर्मेति च व्यवस्थापितत्वेनोक्तस्वस्वकर्मानुष्ठानमात्रतत्पराणां स्वस्वकर्मानुष्ठानेनेश्वरमन्तर्यामिणमभ्यर्च्य शुद्धान्तःकरणः सन् मुक्तो भवति, न तु सम्यगनुष्ठितेनापि स्वधर्मातिरिक्तान्यधर्मेण शुद्धान्तःकरणः सन्मुक्तिमधिगच्छति। एवं च यस्य यो धर्मो वर्णाश्रमसम्बन्धी तस्य दुष्टत्वेऽदुष्टत्वेऽपि तदतिरिक्तधर्मानुष्ठाने प्रत्यवाय इति स्वभावनियतस्व-

वर्णधर्मातिरिक्तो नानुष्ठेय इति सिद्धेऽन्यवर्णधर्मानुष्ठाने स्ववर्णातिरिक्तं क्षत्रियत्वादिकं स्वयं प्राप्नोतीत्यस्यायुक्तत्वात् । यत्तु—

न योनिर्नापि संस्कारो न श्रुतं न च सन्ततिः ।
कारणानि द्विजत्वस्य वृत्तमेव हि कारणम् ॥
'सर्वोऽयं ब्राह्मणो लोके वृत्तेन च विधीयते'

इति ब्राह्मण्यादेर्वृत्तमेव कारणमिति । तन्न ; वृत्तस्याप्यत्यावश्यकत्वप्रदर्शनार्थं तथोक्तेः । यदपि—वृत्ते स्थितस्तु शूद्रोऽपि ब्राह्मणत्वं नियच्छति, इति तथा—ब्राह्मणो वा च्युतो धर्मात्तथा शूद्रत्वमाप्नुते, इति शूद्रस्य ब्राह्मणत्वप्राप्तिकथनम्, तदपि न ; अत्र शूद्रत्वं ब्राह्मणत्वमित्यनयोः ब्राह्मणसादृश्यं शूद्रसादृश्यं च लभते, न तु तमेव धर्मं लभते इत्यर्थात् । अत एव तत्रैव शूद्रोऽपि द्विजवत्सेव्य इत्युक्तम् । सेव्य आदरणीय इत्यर्थः । अत एव—

ब्राह्मणः पतनीयेषु वर्तमानो विकर्मसु ।
दाम्भिको दुष्कृतप्रज्ञः शूद्रेण सदृशो भवेत्—

इति म० भा० वनप० २१६ तमेऽध्याये १३ श्लोके व्यासेन दुष्कर्मकृतो ब्राह्मणस्य शूद्रतुल्यत्वोक्तिः सङ्गता । अत एव—न ह्यस्मिन् विद्यते कर्म किञ्चिदामौञ्जिबन्धनात् (१७१) नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते । शूद्रेण हि समस्तावद्यावद्वेदे न जायते (१७२) इति द्वितीयाध्याये मनुना—ब्राह्मणस्योपनयनात् प्राक् शूद्रसमत्वोक्तिः सङ्गच्छते । तदेतदुक्तं गौतमेन—प्रागुपनयात्कामचारकामवादकामभक्षाः—इति । अयमेव ब्राह्मणक्षत्रियवैश्यानां बालानां शूद्रसादृश्यप्रबोधकः साधारणधर्मो न तु निषिद्धमांसभक्षणादिकम् । अत एवाग्रे गौतमेन निषिद्धवर्जमित्युक्तम् ।

नचैवं "धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ। अधर्मचर्यया पूर्वः पूर्वो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ" इति (आप० सू० २ प्र० ५ पट०) आपस्तम्बोक्ता जघन्यवर्णस्योत्तमवर्णप्राप्ते रुत्तमवर्णस्याधमवर्णप्राप्ते श्चासांगत्यापत्तिः। तथा "शूद्रो विद्यासौशील्यादिसम्पन्नश्चे द्ब्राह्मणभावं (सत्यव्यवहार्यत्वाद्दरणीयत्वादिलक्षणमुत्तमत्वं) प्राप्नोति। योऽस्ति ब्राह्मणस्याधिकारस्तं प्राप्नोति। ब्राह्मणोऽधर्माचरणकुबुद्धिमूर्खत्वपराधीनतादिशूद्रधर्मयुक्तश्चे त् शूद्रतामाप्नोति=शूद्राधिकारं प्राप्नोति। स्वस्वधर्माद्बहिर्भूतश्च भवतीति यावत्। सत्यधर्माचरणेनैव वैश्यं (श्यत्वं) क्षत्रियं (यत्वं) ब्राह्मणं (णत्वं) वर्णमापद्यते। समन्तात् प्राप्नोति सर्वाधिकारमित्यर्थः। जातेः=वर्णस्य परितः सर्वतो वा वृत्तिः=आचरणं तत्सर्वं प्राप्नोति। एवं चोत्तमधर्माचरणमुत्तमवर्णप्राप्तावधर्माचरणमधमवर्णाधिकारे कारणमिति तद्व्याख्यात्रुक्तेश्चासाङ्गत्यापत्तिरिति वाच्यम्; जातिपरिवृत्तावित्यस्य जातीनां जन्मनां परिवृत्तौ जन्मान्तराणां परिवर्तने विनिमये जायमानायां पञ्चमे सप्तमे वा जन्मनि ब्राह्मणत्वादिकीं शौद्रत्वादिकीं वा जातिं (तं तं वर्णं) प्राप्नोतीति तदर्थात्। तदुक्तं याज्ञवल्क्येन (१।९६)

"जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्" इति

त्वन्मते तत्तज्जन्मन्येव जातिपरिवृत्तिसम्भवे पञ्चमजन्मपर्यन्तानुधावनं सप्तमजन्मपर्यन्तानुधावनञ्च व्यर्थमेव स्यात्। मम त्वेकस्मिन् द्वयोस्त्रिषु चतुर्षु च जन्मसु तथा पञ्चसु षट्सु च जन्मसु तत्सम्भव इति तथोक्तिः सङ्गता। अत एव "तपो विद्या-

प्रभावैस्तु ते गच्छन्ति युगे युगे । उत्कर्षं चापकर्षं मनुष्येष्विह जन्मतः" इति (मनुः १०।४२) मनुनोक्तं सङ्गच्छते । अत एव "जात्या कुलेन वृत्तेन स्वाध्यायेन श्रुतेन च । एभिर्युक्तो हि यस्तिष्ठेन् नित्यं स द्विजउच्यते" इत्यात्रेयोक्तं सङ्गच्छते । अत एव—

विद्या तपश्च योनिश्च एतद्ब्राह्मणकारकम् ।
विद्यातपोभ्यां हीनो यो जातिब्राह्मण एव सः"

इति (पाणिनि सू० ५।१।११५) पतञ्जलिनोक्तं सङ्गच्छते ।

इदं महाभाष्यप्रदीपे कैयटेनेत्थं व्याख्यातम्—तपश्चान्द्रायणादि, श्रुतं वेदवेदाङ्गादि । योनिः—ब्राह्मणाद्ब्राह्मण्यां जन्म ब्राह्मणकारकं ब्राह्मणव्यपदेशस्य निमित्तम्, शेषषष्ठ्या समासः । तपःश्रुताभ्यामिति । नासौ परिपूर्णो ब्राह्मणः । जातिलक्षणैकदेशाश्रयस्तु तत्र ब्राह्मणशब्दप्रयोगः । अत एव तस्य सर्वासु ब्राह्मणक्रियासु नाधिकार इति ।

अत एव "विद्या योनिः कर्म चेति त्रयं ब्राह्मणकारकम् । सेवा सङ्ग्रहबुद्धिश्च कालयापश्च पातनम्" इति पिङ्गलसूत्रव्याख्याया अमृतसञ्जीविन्या उपोद्घाते उक्तं वचनं सङ्गच्छते । अत एव "जन्मशारीरविद्याभिराचारेण श्रुतेन च । धर्मेण च यथोक्तेन ब्राह्मणत्वं विधीयते । चित्रकर्म यथानेकै रङ्गैरुन्मीलयते शनैः । ब्राह्मण्यमपि तद्वत्स्यात्संस्कारैर्विधिपूर्वकैः" इति पराशरमाधवीये (८।१६) अङ्गिरस उक्तिः सङ्गच्छते । अत एव "वर्णान्तरगमनमुत्कर्षापकर्षाभ्यां सप्तमेन पञ्चमेन चाचार्याः" इति (४।८) गौतमस्मृतौ गौतमोक्तं सङ्गच्छते । एवं च स्वसजातीयबीजका च योनिस्तपःश्रुतादिसहिता ब्राह्मण्य सम्पादिका द्विजत्वसम्पादिका, विजातीयोत्कृष्टबीजपरम्परा कुलपरम्परागता योनिस्तु पञ्चमे सप्तमे वा

जन्मनि बीजजातीयमानुलोम्ये उक्तबीजजातीयं जनयति। अन्यथाऽपकृष्टमिति निष्कर्षः।

एतेन "न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णता गतम्॥ कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः। त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः ( ब्राह्मणाः ) क्षत्रतां गताः। गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः। स्वधर्मान्नानुतिष्ठन्ति ते द्विजाः ( ब्राह्मणाः क्षत्रियाश्च ) वैश्यतां (वैश्यतुल्यतां) गताः। हिंसारतप्रिया लुब्धाः सर्वकर्मोपजीविनः। कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः ( ब्राह्मणाः क्षत्रिया वैश्याः ) शूद्रतां ( शूद्रतुल्यतां गताः। इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः। शौचाचाररतःसम्यग्विघसाशी गुरुप्रियः। नित्यव्रती सत्य ( रत ) परः स वै ब्राह्मण उच्यते। शूद्रे चैतद्भवेल्लक्ष्म द्विजे चैतन्न विद्यते। न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः" इति भारते, तथा—

"एकवर्णमिदं पूर्वं विश्वमासीद्युधिष्ठिर।
कर्मक्रियाविभेदेन चातुर्वर्ण्यं प्रतिष्ठितम्॥
सर्वे वै योनिजा मर्त्याः सर्वे मूत्रपुरीषिणः।
एकेन्द्रियेन्द्रियार्थाश्च तस्माच्छीलगुणैर्द्विजः॥"

इति च भारते वनप० १३५ तमेऽध्याये व्यासवचनैः प्राग् ब्रह्मणा सृष्टं जगद्ब्रह्ममयमेव ( ब्राह्मणस्वरूपमेव ) बभूव। ततस्तद्रूपे जगति केचित् ब्रह्मकर्म=यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूपं षट्कर्म=नित्यनैमित्तिककाम्यरूपं कर्म च परित्यज्य क्षत्रियधर्ममाश्रित्य यद्वा वैश्यधर्ममाश्रित्य यद्वा शूद्रधर्ममाश्रित्य क्षत्रियत्वं वैश्यत्वं शूद्रत्वं च स्वस्वकर्मानुरोधेन लब्धवन्तः। ये

तु स्वधर्ममपरित्यज्यैव स्थितास्ते ब्राह्मणा एवासन्। तथाच कार्यस्य कारणानुगुणत्वेऽपि मुखबाहूरुपादरूपोपाधिभेदेन तत्तद्धर्माश्रयणात् श्रुत्युक्तां तां तां जातिं प्राप्ताः। तत्रापि वैपरीत्यमाश्रितास्तु यस्य धर्ममाश्रितास्तत्तुल्या अभूवन्नित्याशयेनैव व्यासेनापि उक्तार्थ एव प्रकाशित इति बोध्यम्। तदुक्तं महाभारते शान्तिपर्वणि १८९ तमेऽध्याये व्यासेन—

"भरद्वाज उवाच—

ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम।
वैश्यः शूद्रश्च विप्रर्षे तद्ब्रूहि वदतां वर॥

भृगुरुवाच—

जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः।
वेदाध्ययनसम्पन्नः षट्सु कर्मस्ववस्थितः॥२॥
शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः।
नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते॥ ३॥
सत्यं दानमथाद्रोह आनृशंस्यं त्रपा घृणा।
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः॥ ४॥
क्षत्रजं सेवते कर्म वेदाध्ययनसङ्गतः।
दानादानरतिर्यस्तु स वै क्षत्रिय उच्यते॥ ५॥
विशत्याशु पशुभ्यश्च कृष्यादानरतिः शुचिः।
वेदाध्ययनसम्पन्नः स वैश्य इति संज्ञितः॥ ६॥
सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः।
त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः॥७॥
शूद्रे चैतद्भवेल्लक्ष्म द्विजे तच्च न विद्यते।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः॥८॥ इति"

शूद्रः शूद्रो न भवेदित्यस्य शूद्र एव न भवेत्, किन्तु शूद्रो यत्कर्माचरति तत्तुल्योऽपि भवेदित्यर्थः। ब्राह्मणो ब्राह्मणो न भवेदित्यस्य ब्राह्मण एव न भवेत्। यस्य कर्मानुतिष्ठति तत्तुल्यो भवेदित्यर्थः। तेन नीचः स्वोत्तमतादरणीयत्वादिकं धर्ममाप्नोति।

अन्यत्रापि म० भा० वनप० २१६ तमेऽध्याये व्यासः—

यस्तु शूद्रो दमे सत्ये धर्मे च सततोत्थितः।
तं ब्राह्मणमहं मन्ये वृत्तेन हि भवेद्द्विजः॥ इति॥

एवञ्च ब्राह्मणत्वादिजातिः कर्मप्राप्येति सिद्धमिति—परास्तम्। न द्विज इत्युक्त्या तेषां स्वधर्मतो भ्रंशं तथा भ्रष्टानां जीविकार्थं वृत्त्यन्तराश्रयणं चोच्यत इत्यदोषाच्च।

ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स्यान्न संशयः।
क्षत्रियायां तथैव स्याद्वैश्यायामपि चैव हि॥" इति

(भा० आ० ४७। २८) स्वोक्तिविरोधाच्च। अत्र 'व्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजा क्षत्रतां गताः' इति, तथा 'स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः' इति, तथा 'कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः' इति च त्वदुत्पन्यस्तप्रमाणवचनेष्वसकृद्विरोधाच्च। न च क्षत्रियस्य ब्राह्मणत्वं भवतीत्यस्य वैश्यत्वं भवतीत्यस्य शूद्रत्वं भवतीत्यस्य वैश्यस्य शूद्रत्वं क्षत्रियत्वं ब्राह्मणत्वं वा भवतीत्यस्य शूद्रस्य ब्राह्मणत्वं क्षत्रियत्वं वैश्यत्वं वा भवतीत्यस्य ब्राह्मणस्य शूद्रत्वं भवतीत्यस्य च तत्तद्धर्मप्रयोज्यकर्मणामधिकारी भवतीत्यर्थो वाच्यः। स च त्रयाणां ब्राह्मणत्वादिविशेषधर्मेष्वेव षट्कर्मसु क्षत्रियत्वे वैश्यत्वे च यजनाध्ययनदानादिरूपकर्मविशेषेष्वेव शूद्रत्वे सेवादिविशेषधर्मेषु चाधिकार एव न्याय्यतया भवतीति वाच्यम्।

"निषेकादिः श्मशानान्तो मन्त्रैर्यस्योदितो विधिः ।
तस्यैवात्राधिकारोऽस्ति ज्ञेयो नान्यस्य कस्यचित् ॥"

इति ( मनु० २ । १६ ) तथा—

वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥ २६ ॥
गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ २७ ॥
स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेतरेण वा ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥२७॥
प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।
मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम् ॥ २६ ॥
नामधेयं दशम्यान्तु द्वादश्यां वास्य कारयेत् ।
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥ ३० ॥
मङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम् ।
वैश्यस्य धनसंयुक्तं शूद्रस्य च जुगुप्सितम् ॥ ३१ ॥
शर्मवद्ब्राह्मणस्योक्तं राज्ञो रक्षासमन्वितम् ।
वैश्यस्य पुष्टिसंयुक्तं शूद्रस्य प्रेष्यसंयुतम् ॥ ३२ ॥

( मनु० २ ऽध्याये ) इति निषेकादिश्मशानान्तकर्माणि येषामुक्तानि तेषामेवात्राधिकारो भवति नान्यस्येत्युक्त्वा केषां तान्युक्तानि कुतो वेति शङ्कायां द्विजन्मनां पुण्यैर्वैदिकैः कर्मभिर्निषेकादिरूपशरीरसंस्कार इह पावनो भवति प्रेत्य परत्र च पावन इति तत्रोत्तरमुक्त्वा तच्च पावनत्वं ( पारिशुध्यं—अशुचित्वव्यपोहनम् ) केन केन कर्मणा किंकिन्निष्ठमशुचित्वं निवर्तते एवमन्योऽपि विशेषः को वा भवति इत्याशङ्कायां बैजिकं

गार्भिकं चैनो गार्भहोमादिकैर्मौञ्ज्यन्तैः कर्मभिर्निवर्तते । तथा स्वाध्यायादिभिर्ब्राह्मयास्तन्वाः प्राप्तिश्च भवतीत्युत्तरस्योक्तया जन्मतो ब्राह्मणस्य सर्वमिदमुपपद्यते मन्त्रैर्निषेकादिकमध्ययनाध्यापनादिकञ्च । क्षत्रियवैश्ययोस्तु स्वतो यजनाध्ययनदानेष्वधिकाराद्ध्यापनादिषु त्रिष्वधिकारो युक्त एव निषेधाभावात् । शूद्रस्यातिदेशेन ब्राह्मणत्वे पूर्वमीमांसाकृदुत्तरमीमांसाकृद्भ्यां जैमिनिव्यासाभ्यां वेदाधिकाराभावप्रतिपादनेन 'निषेकादिः श्मशानान्तः, इत्यादिना निषेधाच्च वेदाध्ययनायोगेन षट्कर्माधिकारादिकं दूरत एवावतिष्ठत इति शूद्रस्य तत्तदतिदेशविधानान्यथाऽनुपपत्या

"शुचिः सद्भक्तिदीप्ताग्निदग्धदुर्जातिकल्मषः ।
श्वपाकोऽपि बुधैः श्लाघ्यो न वेदज्ञोऽपि नास्तिकः"

इति महाभारते व्यासोक्तेस्तस्य ब्राह्मणवदादरणीयत्वम् , मणिमुक्तालोहवस्त्रविद्रुमगन्धकर्पूरादिकानामुत्कर्षापकर्षमुत्तममध्यमाधमानां देशकालानुसारेण मूल्यकल्पनाधिकारं, क्षेत्रादिगुणदोषवक्तृत्वेऽधिकारम् , बीजोप्तिक्रमवेदनम् , भाण्डानां सारासारज्ञताम्, विविधभाषापरिचयाधिकारं तत्तद्देशगुणदोषज्ञानसम्पादनाधिकारं (मनुः ९ ध्याये ) कुसीदकृषिगोरक्षवाणिज्याधिकारम्,

"अष्टापाद्यन्तु शूद्रस्य स्तेये भवति किल्बिषम् ।
षोडशैव तु वैश्यस्य द्वात्रिंशत्क्षत्रियस्य च ॥
ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतं भवेत् ।
द्विगुणा वा चतुःषष्टिस्तद्दोषगुणविद्धि सः ॥ ३३७- ३३८ ॥

इति [ मनुः ८ ध्याये ] वचनोक्तं स्तेयप्रकरणोक्तं क्षत्रियत्वादौ स स तं तमधिकारं नाम शूद्रस्य स्तेयगुणदोषस्याष्टाभिरापाद्यते गुणयत इत्यष्टगुणो दण्डः स्तेये भवति, वैश्यस्य तज्ज्ञस्य

स्तेये षोडशगुणो दण्डः क्षत्रियस्य तादृशस्य स्तेये द्वात्रिंशद्गुणो दण्डः, तादृशस्य ब्राह्मणस्य स्तेये चतुःषष्टिगुणः शतगुणोऽष्टाविंशत्यधिकशतगुणो वा दण्ड इत्येवं स्तेये तत्तज्जातिप्रवेशे तत्तज्जात्युक्तदण्डदानाधिकारं, क्षत्रियस्य दुष्टनिग्रहाद्यधिकारं, ततोऽन्यस्वेऽन्यधर्माधिकारम्, "न ब्राह्मणस्य त्वतिथिर्गृहे राजन्य उच्यते। वैश्यशूद्रौ सखा चैव ज्ञातयो गुरुरेव च ( ११० ) यदि त्वतिथिधर्मेण क्षत्रियो गृहमाव्रजेत्। भुक्तवत्सु च विप्रेषु कामं तमपि भोजयेत् ( १११ ) वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्मिणौ। भोजयेत्सह भृत्यैस्तावानृशंस्यं प्रयोजयन् ( ११२ ) अ० ३ ) इति मनूक्तरीत्या भोजनादिक्रमे तारतम्यं च तान्तां जातिं तन्तं धर्मं वा प्राप्तः प्राप्नुयात्, न तु साक्षात्तत्तज्जात्यवच्छिन्नोद्देशेनोक्तं सामान्यं वेदाध्ययनादिकं तथा स्वस्वविरुद्धनिषिद्धादिधर्मान्। अयमाशयः—शूद्रस्यैकजातित्वेन द्विजातित्वं विद्यावंशजत्वेन वाच्यम्। तच्च दुष्प्रापम्। व्यासजैमिनिभ्यां निषिद्धत्वात्। तदधिकरणद्वयमनुपदमेव सभाष्यं स्फुटीकरिष्यते। किञ्च—वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम्। कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च। ( २।२६ ) इति मनुना वेदमूलत्वाद्वैदिकैः पुण्यैः शुभैर्मन्त्रयोगादिकर्मभिर्विन्नासु 'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः, इत्युक्तद्विजातीनां संस्कारः पापक्षयहेतुः। संस्कारोत्तरं संस्कृतस्य प्रेत्य परलोके यागादिफलसम्बन्धात्, इह लोके च वेदाध्ययनसम्बन्धाच्च गर्भाधानादिशरीरसंस्कारः कर्तव्य" इति तद्व्याख्यातृकुल्लूकभट्टोक्त्यनुरोधेन शूद्रस्योपनयनाद्यभावेन वेदाधिकाराभावो यथा, तथा येन शूद्रेण ब्राह्मणत्वं क्षत्रियत्वं वैश्यत्वं वा कर्मणा प्राप्यते इत्यस्य "जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमे-

ऽपि वा । व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्” (१।९६)
इति याज्ञवल्क्येन पञ्चमे सप्तमे वा जन्मन्येव ब्राह्मणत्वादिजाति-
प्राप्त्युक्तेस्तदा वेदाधिकारादिर्न्याय्यो न तु शमदमादिसम्पत्ति
मात्रेण । अत एव 'एष सर्वः समुद्दिष्टः कर्मणां वः फलोदयः,
इत्युक्त्वा 'नैःश्रेयस्करं कर्म विप्रस्येदं निबोधत (८२) इति विप्र-
मधिकारिणं प्रकृत्य—

'वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणां च संयमः ।
अहिंसा गुरुसेवा च निःश्रेयसकरं परम् (८३)
षण्णामेषान्तु सर्वेषां कर्मणां प्रेत्य चेह च ।
श्रेयस्करतरं ज्ञेयं सर्वदा कर्म वैदिकम् (८६), इति, तथा—
सुखाभ्युदयिकं चैव नैःश्रेयसिकमेव च ।
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् (८८)
इह चामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते ।
निष्कामं ज्ञानपूर्वन्तु निवृत्तमुपदिश्यते (८९)

(मनुः १८ ध्याये) इति च प्रवृत्तनिवृत्तभेदेन द्विविधमव्यव-
श्यानुष्ठेयं वैदिकं वेदाभ्यासादिरूपं षड्विधं कर्म तत्फलं चोक्त्वा
न्ते 'यथोक्तान्यपि कर्माणि परिहाय द्विजोत्तमः । आत्मज्ञाने शमे
च स्याद्वेदाभ्यासे च यत्नवान् (९२) एतद्धि जन्मसाफल्यं ब्राह्म-
णस्य विशेषतः । प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा ९३
इति ब्राह्मणस्यैव द्विजस्यैव वाऽऽत्मज्ञानवेदाभ्यासादिकं कृतकृत्य-
तासम्पादकं प्रतिपादितं मनुना (अ०१८) ॥ अन्यथा 'एतद्धि
जन्मसाफल्यं मनुष्यस्य विशेषतः, इति तथा 'नैःश्रेयसकरं कर्म
नरस्येदं निबोधत, इति तथा "प्राप्यैतत्कृतकृत्यो हि जनो भवति
नान्यथा, इति च ब्रूयात् । नतु 'विप्रस्यैतन्निबोधत, इति 'ब्राह्म-

णस्य विशेषतः, इति तथा 'द्विजो भवति नान्यथा, इति च ब्रूयात्। अत एव—विद्या तपश्च योनिश्च त्रयं ब्राह्मणकारकमित्युक्तं संगच्छते। अत एव 'तपः श्रुतं च योनिश्च एतद्ब्राह्मणकारकम्। तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः, इति (पाणि० ५।१।११५) तेन तुल्यमिति सूत्रे महाभाष्यकृतोक्तं सङ्गच्छते।

"जन्मना ब्राह्मणो ज्ञेयः संस्काराद्द्विज उच्यते।
विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते"

इति प्राय० विवेके वाचस्पतेरुक्तिर्विधिवद्ब्राह्मणोढब्राह्मण्यामुत्पन्नविषया। अत एव—

ब्राह्मणा ब्रह्मयोनिस्था ये स्वकर्मण्यवस्थिताः।
ते सम्यगुपजीवेयुः षट्कर्माणि यथाक्रमम्॥७४॥
अध्यापनं चाध्ययनं यजनं याजनं तथा।
दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः॥७५॥
षण्णान्तु कर्मणामस्य त्रीणि कर्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥७६॥
त्रयो धर्मा निवर्तन्ते ब्राह्मणात्क्षत्रियम्प्रति।
अध्यापनं याजनंच तृतीयश्च प्रतिग्रहः॥७७॥
वैश्यम्प्रति तथैवैते निवर्तेरन्निति स्थितिः।
न तौ प्रति हि तान्धर्मान्मनुराह प्रजापतिः॥७८॥
शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषीर्विशः।
आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः॥७९॥
वेदाभ्यासो ब्राह्मणस्य क्षत्रियस्य च रक्षणम्।
वार्ताकर्मैव वैश्यस्य विशिष्टानि स्वकर्मसु॥८०॥
अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा।

जीवेत्क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः ॥८१॥
उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत् ।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम् ॥८२॥
वैश्यवृत्त्यापि जीवंस्तु ब्राह्मणः क्षत्रियोपि वा ।
हिंसाप्रायां पराधीनां कृषिं यत्नेन वर्जयेत् ॥८३॥

इति मनुना जन्मत एव ब्राह्मणस्य क्षत्रियस्य वैश्यस्य च वेदाध्ययनादिकं कर्मोक्तम् । नत्वतिदिष्टब्राह्मणत्वादेः । तथा तेषामेव प्रतिपादितो जीविकाभेदश्च संगच्छते । अत एव तपश्चरतः शम्बूकस्य सशरीरस्वर्गार्थं यागमनुतिष्ठतस्त्रिशङ्कोश्च निग्रह उपपद्यते ।

ननु शूद्रादीनां ब्राह्मणत्वादिनैरपेक्ष्येणैव साक्षादेव "अथेमां वाचं कल्याणीमावदानि जनेभ्यः । ब्रह्मराजन्याभ्यां शूद्राय चार्याय स्वाय चारणाय च । प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृध्यतामुपमादो नमतु" इति ( वाज०शुक्लय० सं० २६ । २) वेदरूपा कल्याणी वागुपदेष्टव्येति कण्ठरवेणोक्ते वेदाध्ययनेऽधिकारे प्राप्तेऽपि तदध्यापनेऽधिकारस्य केनाप्यनुक्तेस्तदधिकाराप्राप्तौ तेषु यजनयाजनदानप्रतिग्रहेषु चाधिकारार्थं ब्राह्मणातिदेशः । एतदाशयेनैव व्यास आह—

"न मे भक्तश्चतुर्वेदी मद्भक्तः श्वपचः प्रियः ।
तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम्"इति म०भा० ।

न च "शूद्रोऽप्येवंविधः कार्यो विनामन्त्रेण संस्कृतः ।
न केनचित्समसृजच्छन्दसा तं प्रजापतिः" इति

मनूक्त्या व्यासजैमिन्याचार्याभ्यां शूद्रस्य वेदाधिकारो नेत्युक्त्येदं विरुध्यत इति वाच्यम्; विकल्पापत्तेः । नच विकल्पस्याष्टदोषदु-

ष्टत्वाद्विकल्पापत्तिर्न युक्तेति वाच्यम्; अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे इत्यत्रेव तस्य सोढव्यत्वात्। अत एव 'अध्यापनं चाध्ययनं यजनं याजनं तथा। दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत्' इति (मनुः १।७७) मनुना ब्राह्मणमात्रस्य (अतिदिष्टब्राह्मणत्वस्यानतिदिष्ट ब्राह्मणस्य चाविशेषेण) षट्कर्माधिकारोक्तिः संगच्छते। संकोचे मानाभावात् फलाभावाच्च। शम्बूकत्रिशंकोर्निग्रहस्तु वेदाध्ययनाभावेन तपोयोगयोः प्रवृत्त्यनधिकारनिबन्धन इति चेन्न; अत्र श्रुतौ शूद्रायेत्यस्य शूद्रतुल्याय ब्राह्मणाय क्षत्रियाय वैश्याय वेत्यर्थेनादोषात्। अत एव तत्रैवोवटाचार्येण महीधराचार्येण च तद्भाष्ययोर्न तु वेदरूपां वाचमित्यर्थ उक्तः। अत एव इमां कल्याणीं वाचमित्यस्य प्रियां वाचमित्येवार्थ उक्तः। एवं च शूद्रोत्पन्नशूद्रादेर्नैव वेदाधिकारः श्रुत्यैव प्रतिपाद्यत इत्युक्तिः शिष्टव्याख्याऽविरुद्धेति सिद्धम्।

[जातिव्यवस्थायां ब्रह्ममीमांसोपष्टम्भः।] अत एवोत्तरमीमांसायाम्—

क्षात्रयत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् (२।३। ३३ व्या०सू०)

शूद्रपदेन प्रकरणे सम्बोधितोऽपि जानश्रुतिर्नाम राजा क्षत्रियः। उत्तरप्रकरणे तस्योपनिषदि क्षत्रियत्वसिद्धेः स्पष्टत्वात्।

संस्कारपरामर्शात्तदभावाभिलापाच्च (२।३।३६) व्या०सू०

ब्रह्मविद्यास्वस्यानधिकारः। यतस्तत्रोपनयनादयः संस्काराः परामृश्यन्ते। तं होपनिन्ये, अधीहि भगव इति होपससाद, इति। शूद्रस्य चैकजातित्वेनोपनयनादिवैदिकसंस्कारशून्यत्वस्याभिधानाच्च।

तदभावनिर्द्धारणे च प्रवृत्तेः (१।३।३७ व्या०सू०)

शूद्रत्वाभावनिर्द्धारण एव तत्र वेदे आख्यायिकासु ऋषीणामुपनयनाख्यसंस्कारकर्मणि प्रवृत्तेरभिधानात्।

श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ( २ । ३ । ३८ व्या० सू० )

तस्याध्ययनश्रवणप्रतिषेधात्। यथा—पद्यु हवा एतत् स्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्। यदि नाम वेदस्यानधिकृतः श्रवणे शूद्रस्तह्य ध्ययनाधिकारस्तस्य दूरे पराकृत।

शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ( व्या०सू० )

इति बादरायणाचार्य्याणां तत्सूत्रभाष्यकृतामेतदर्थमेतदधिकरणारम्भणं तत्समर्थनं च संगच्छते।

[ उक्तार्थपूर्वमीमांसोपष्टम्भः ] अत एव पूर्वमीमांसायाम्—चातुर्वर्ण्यमविशेषात् ( ६ । १ । २५ जै० सू० ) जुहुयात्, यजेतेत्यविशेषेणोक्तेश्चातुर्वर्ण्यस्य यज्ञेष्वधिकारः स्यात्।

निर्देशाद्वा त्रयाणां स्यादग्न्याधेये ह्यसम्बन्धः क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः ( ६ । १ । २६ जै० सू० ) वसन्ते ब्राह्मणोऽग्नीनादधीत, 'ग्रीष्मे राजन्यः' 'शरदि वैश्यः' इति त्रयाणामेवाग्न्याधेये निर्देशात् न शूद्रोऽत्राधिक्रियते। ब्राह्मणादीनेव त्रीनधिकृत्य श्रुतिः प्रवर्तत इत्यात्रेयो मन्यते।

निमित्तार्थेन बादरिस्तस्मात्सर्वाधिकारं स्यात् ( ६ । १।२७जै०सू० )

अर्थिजातमधिकृत्य यजेतेति शृणुमः। स चासति प्रतिषेधवचने न शूद्रान् व्यावर्तयतीति शूद्रा अप्यधिकुर्यु रत्रे ति बादरिर्मन्यते।

अपि वाऽन्यार्थदर्शनाद्यथाश्रु ति प्रतीयेत ( ६ । १। २८ जै० सू० )

अपि वा = न। ब्राह्मणादित्रितयस्य कर्तृ त्वेन वसन्तादिकालत्रितयस्याधिकरणत्वेन श्रवणाद्ब्राह्मणादित्रयस्यैवात्राधिकारः। बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थु रश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य, इति 'पयोव्रतं ब्राह्मणस्य, यवागू राजन्यस्य,

आमिक्षा वैश्यस्य, इति 'अष्टसु प्रक्रमेषु ब्राह्मणोऽग्निमादधीत, एकादशसु राजन्यः, द्वादशसु वैश्यः, इति । एवं चाब्रह्मसामक-मव्रतमप्रक्रमञ्च कर्म शूद्रस्य प्रयुक्तमपि निष्फलं स्यात् ।

निर्देशात्तु पक्षे स्यात् (६ । १ । २९ जै० सू०)

सम्भवति शूद्रस्याधानम्—'य एवंविद्वानग्निमाधत्ते' इति श्रुतिशास्त्रं सामान्येन सर्वाधिकारं स्यादिति शूद्रोऽधिक्रियत एवात्र ।

वैगुण्यान्नेति चेत् (६ । १ । ३० जै० सू०)

किञ्चाब्रह्मसामकमव्रतकमप्रक्रमं च कर्म सफलं न स्यादिति यदुक्तम् । तत्परिहर्तव्यम् ।

न काम्यत्वात् (६ । १ । ३१ जै० सू०)

नैष युक्तः परिहारः । शूद्रस्तं कामयिष्यत इति तस्य काम्यत्वात् । अभीवर्तं नाम ब्रह्मसाम । तद्धि अनारभ्य किञ्चिदाम्नातमविशेषेण 'चतुर्विंमित आदध्यात्' इत्यनियतप्रक्रमेषु शूद्रस्य नियम्यते । 'मस्तु शूद्रस्य' इति सम्बन्धदर्शनादध्यवसीयते मस्त्वेव शूद्रस्य । तस्माच्चातुर्वर्ण्यमधिक्रियते ।

संस्कारे च तत्प्रधानत्वात् ( ६।१।३२ जै० सू० )

व्रतारब्धः संस्कारः शूद्रस्य न श्रूयत इति स व्यावर्तमानः शूद्रस्याधिकारं न व्यावर्तयति याज्ञिके कर्मणि । पुरुषप्रधानो ह संस्कारः पुरुषं संस्करिष्यति । यस्य च यः संस्कारः कर्तव्यत्वेनाभिहितः, स तस्यैवावश्यको नान्यस्येति शूद्रस्य व्रताश्रवणान्नानधिकारसिद्धिस्तस्येति ।

अपि वा वेदनिर्देशादपशूद्राणां प्रतीयेत ( ६।१।३३ )

न । वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यम्,

इति वेदे निर्देशात्तेषामुपनयनं तदुत्तरं यज्ञकर्मण्यधिकारोऽस्तु। शूद्रस्य तदनुक्तेरुपनयनं विनापि यज्ञेऽधिकारः स्यात्।

गुणार्थित्वान्नेति चेत् (६।१।३४ जै० सू०)

गुणेनाध्ययनेनार्थः प्रयोजनम्। तच्चाध्ययनं शूद्रस्योपनयनाभावेऽपि भवति। न ह्यनुपनीतो वेदाक्षरग्रहणापटुरिति सम्भवः। ततश्च शूद्रः स्वयमध्येष्यत इति।

संस्कारस्य तदर्थत्वाद्विद्यायां पुरुषश्रुतिः (६।१।३५ जै०)

विद्यायामेवैषा पुरुषश्रुतिरुपनयनस्य। संस्कारस्य तदर्थत्वात्। विद्यार्थमुपाध्यायस्य समीपमानीयते शिष्यो नादृष्टार्थं न वाऽन्यदृष्टार्थम्। उपनयनं चाचार्यकरणप्रयुक्तम्। वेदाध्यापनेन ह्याचार्यो भवति। अध्यापनं चाध्येतारमपेक्षमाणं श्रुतिश्रुतं ब्राह्मणादित्रयमेवाधिकरिष्यति, न शूद्रमित्यसमर्थो वेदग्रहणे स भवति।

विद्यानिर्देशान्नेति चेत् (६।१।३५ जै० सू०)

गुरुकृतविद्यानिर्देशस्यावश्यकतया नाधिकारी शूद्र इति चेन्न; विद्यानिर्देशात्। स्वतोऽपि शूद्रस्य विद्याप्रयुक्तिसम्भवात्। नह्यध्यापितैवाधीयत इति नियमः। अतोऽप्यध्ययनसम्भवाच्छूद्रोऽप्यधिकारीति।

अवैधत्वादभावः कर्मणि स्यात् (६।१।३७ जै० सू०)

वेदाक्षरोच्चारणानुकूलताल्वोष्ठपुटव्यापाररूपमध्ययनं शूद्रस्य स्वरूपतो नापलप्यते। ततः स्वनो यतमानोऽधिकुर्वीत। परं त्वदृष्टविशेषसंस्कारविशेषोभयाहिताधिकारिता तत्रापेक्षिता। सा च 'पद्यु ह वा एतत्स्मशानम्, इत्यादिश्रुत्या व्यावर्तते। तदिदमुक्तमाचार्येण—अवैधत्वादभावः कर्मणि स्यात्।

तथान्यार्थत्वात् (६।१।३८ जै० सू०)

शूद्रस्य सर्वथाऽनधिकारो वेदोच्चारणे "पद्यु ह वा एतत्स्मशानं यच्छूद्रः, तस्माच्छूद्रसमीपे नाध्येतव्यम्" इति हि पुनरामनन्ति यस्य समीपे नाध्येतव्यं कथमधिकारस्तस्य पुनरध्ययने। इति। तथा

फलार्थत्वात्कर्मणः शास्त्रं सर्वाधिकारं स्यात् (६ । १ । ४)

कर्तुर्वा श्रुतिसंयोगाद्विधिः कार्त्स्न्येन (६ । १ । ५)

स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् (६ । १ । ६)

इति जैमिन्याचार्याणां तद्भाष्यकृतामेतदर्थमारम्भणं तत्समर्थनं च सङ्गच्छते।

[शूद्रस्यानुष्टुप्छन्दोवचनोपपत्तिः] नच "गायत्रीच्छन्दसो ब्राह्मणास्त्रिष्टुप्छन्दसः क्षत्रिया जगतीछन्दसो वैश्या अनुष्टुप्छन्दसः शूद्राः" इति सांख्यायनगृह्यसूत्रे शूद्रस्यानुष्टुप्छन्द उक्तिः कथं सङ्गच्छताम्। तस्य त्वन्मते वेदाधिकाराभावादिति वाच्यम्; संस्कारानुक्त्वा—

"शूद्रोऽप्येवंविधः कार्यो विना मन्त्रेण संस्कृतः।
न केनचित्समसृजच्छन्दसा तं प्रजापतिः"

इति (मनुः) तथा—

"शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति।
वेदमन्त्रं स्वधास्वाहावषट्कारादिभिर्विना॥"

इति कात्यायनगृह्ये द्वितीयाध्याये प्रथमकण्डिकायां तथा शूद्रस्य मन्त्रान्तराऽविधानान्नमस्कारमन्त्रेण होम इति कात्या० सू० ८। १ मदनपारिजाते उक्तेश्च वेदाधिकाराभावे नमोमन्त्रे च सिद्धे तद्योगात्। पुराणमन्त्रस्यानुष्टुब्रूपस्यान्यत्रोक्तेश्च।

[शूद्रस्योपनयनाद्यनधिकारः] न च निषेकादिकर्मणां जननोत्तरं कालातिक्रमप्रायश्चित्तानुष्ठानपूर्वकमनुष्ठाने सति शूद्रा

अपि वेदाध्ययनादावधिकारिणो भवेयुरेवेति वाच्यम्, गर्भाधानात् पूर्वं तत्पित्रोरसंस्कृतत्वेनासंस्कृताभ्यामत एव वेदाधिकारशून्याभ्यां पितृभ्यामसंस्कृतेन पित्रा तादृशमात्रा वा वैदिकमन्त्रैस्तेषां तदकरणे प्रत्यवायानुक्तेश्च ब्राह्मणाद्युद्देशेनोक्तस्य प्रायश्चित्तस्य दुःशकत्वेन वैदिकमन्त्रैः शूद्राणां संस्कारस्य सुतरां दूरापास्तत्वात्। न च सृष्ट्यादावुत्पन्नस्य संस्कृतपित्रभावेन तेन स्वजन्यपुत्रादीनां वैदिकमन्त्रैः संस्कारस्य कर्तुमशक्यत्वेन कथमादिमब्राह्मणस्य ब्राह्मण्यसिद्धिरिति वाच्यम्; तस्यादिस्रष्टुस्तत्पित्रा नारायणेन संस्कृतत्वात्। अत एव—

"तपस्तप्त्वाऽसृजद्ब्रह्मा ब्राह्मणान् वेदगुप्तये।
तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च॥"

इति (या० १। १९८) वचनेन तेषां वेदाधिकारनिरूपणं सङ्गच्छते। न च नारायणस्य पित्रभावेन तस्य संस्कृतपित्रसंस्कृतत्वेन वेदाधिकाराभावाद्ब्रह्मणस्तेन वैदिकसंस्कारायोग इति वाच्यम्; भगवत आदिपुरुषस्य श्रीमत आदिनारायणस्य परब्रह्मणो नित्यशुद्धबुद्धमुक्तस्वभावत्वेन वैदिकसंस्कारमन्तरापि तत्कृतवैदिकसंस्काराणां परमश्रेयःसाधनत्वात्। एवं क्षत्रियादिष्वप्येषु क्षत्रियत्वादिकमव्याहतमिति दिक्।

[दत्तकादिजातिनिर्णयः] ननु दत्तकस्य सजातीयोढमातापितृगृहीतुकुलानुत्पन्नत्वेन ब्राह्मण्यां ब्राह्मणाज्जात इत्युक्तलक्षणलक्षितत्वाभावेन कथं ब्राह्मण्यमिति चेन्न; जनककुलगतयथाविधिसजातीयोढमातापितृजन्यत्वेन मातापितृजातीयत्वस्य तत्रापतेः। न च ब्राह्मणेन क्षत्रियजन्यस्य वैश्यजन्यस्य शूद्रजन्यस्य वा परिग्रहे तस्य किम्ब्राह्मण्यमुत क्षत्रियत्वमुताहो वैश्यत्वं

किमुत शूद्रत्वमिति वाच्यम् , सजातीयोढमातापितृजन्यस्यैव परिग्रहेण तयोर्या जातिस्तज्जातिमत्त्वस्यैव वाच्यत्वात् ।

नच देवरेण विवाहाभावेन सजातीयोढमातापितृजन्यत्वस्य देवराज्जातेऽभावेन तत्र कथं ब्राह्मण्यादिकमिति वाच्यम् ;

"यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
तामनेन विधानेन निजो विन्देत देवरः ॥"

इति वचनेन तस्मिन्नप्यातिदेशिकघृताभ्यक्तत्वादिविशिष्टवेदनरूपतन्मात्रप्रयोजकविलक्षणनवमविवाहाभ्युपगमेनादोषात् । श्राद्धादिगतब्राह्मणेषु पितृत्वादिवदिति दिक् ।

किञ्च सजातीयायां विधिवत्परिणीतायां विधिविहितगर्भाधानादिसंस्कारेणोत्पन्नस्य स्वस्य ब्राह्मणस्य क्षत्रियस्य वैश्यस्य वा तथा तत्पित्रोः तथा तत्पितामहानां च व्रात्यत्वे ब्राह्मण्यादिकमुद्दालकव्रतेन व्रात्यसंस्कारेण वा यथा साधितं तथाऽभक्ष्यभक्षकस्यापेयपातुरलसस्याधीतग्रन्थधारणासमर्थस्य सेवाधर्मकत्वेन परायत्तस्य जडस्य शूद्रस्य ब्राह्मण्यसम्पत्त्यर्थं धर्मशास्त्रकृद्भिः किमपि प्रायश्चित्तं क्वापि नोक्तं यतस्ततो जातिर्नित्यैव ।

[ शूद्राणांगोत्रव्यवस्थाद्यनुपपत्तिः ]

किञ्च शूद्रस्य द्विजत्वेऽभ्युपगम्यमाने गोत्रव्यवस्था कथं कार्या । न च सर्वमनुष्याणां काश्यपवंशोत्पन्नत्वात्काश्यपगोत्रं स्यादिति वाच्यम् ; प्रवरव्यवस्थायाः सर्वथा कर्तुमशक्यत्वात् । एवं च 'असमानार्षगोत्रजाम्' इति ( याज्ञ०-१।५३ ) वचनोक्तरीत्या विवाह्यकन्यानिर्णयायोगः । न चास्य गोत्रप्रवराभावात्सर्वा अपि कन्या असमानार्षगोत्रजा इति न तदनुपपत्तिरिति वाच्यम् ; विवाहे कन्यावरयोः प्रवरगोत्रयोः सूत्रकृद्भि-

वक्तव्यत्वोक्तेस्तदनुपपत्तिः । अगोत्रस्याप्रवरस्येति तत्स्थाने वर-विषये वक्तव्यं स्यात् ।

किञ्च शूद्रस्य ब्राह्मणत्वेऽभ्युपगते तस्य मरणे तस्यान्त्येष्टि-कर्ता कः ? न पुत्रो न पिता न पत्नी वा ; तस्य शूद्रत्वात् , तस्याश्च तत्त्वात् । तस्य खननं दाहो वा ।

किञ्च तत्सपिण्डानां शूद्राणां मरणे तस्य सापिण्ड्यमोशौचं वा कथम् ? (द्रष्टव्या चाब्धिनौयानमीमांसा पृ० १८१ )

किञ्च ब्राह्मणस्य शूद्रीभूतस्य मरणे तत्पत्न्या मुण्डनं कार्यं न वा ? सा किं विधवोत सधवा या शूद्रैव ? तस्यान्त्येष्टिकर्ता कः ? न पुत्रः पिता पत्नी वा । तेषां ब्राह्मणत्वात् । तस्य दाह खननं वा ?

किञ्च व्यत्यस्तजातिकस्य मातापितृमृतौ श्राद्धमनेन व्यत्य-स्तजातिना कार्यं न वा ? तथैवाशौचानुष्ठनमपि , इत्यादिपर्यनु-योगा असमाधेया भवेयुः ।

किञ्च 'शूद्रा चामहत्पूर्वा जातिः' इति ( वा०४।१।३ ) वा-र्तिके जातिग्रहणं व्यर्थम् । नित्याया जातेरनभ्युपगमात् ।

किञ्च 'शूद्राणा ❀ मनिरवसितानाम्' इति (वा०४) समाहार द्वन्द्वे एकवद्भावविधायके यैर्भुक्तं पात्रं संस्कारेण शुध्यति तेऽनि-रवसितास्तेषां शूद्राणामिति चण्डालमृतपा इत्यत्र व्यावृत्त्यर्थं तन्त्रायस्कारमिति सिध्यर्थं चोक्तं त्वन्मते व्यर्थमेव स्यात् । चण्डा-लादिजातेस्त्वन्मतेऽभावात्तस्याः शूद्रत्वेन त्वदभिमतजात्यपेक्षया-नीचकर्मकर्तुस्त्वन्मतेचण्डालत्वस्य शूद्रत्वाद्भिन्नत्वात् ।

तथाच नित्या जातिरिति सिद्धम् । अत एव मनुना शान्ति-शीलादिमत्त्यास्तदभिव्यञ्जिकाया वा स्थिराया ब्राह्मणत्वादिजाते-

( ❀ ) ६७ पृष्ठगताऽब्धिनौयानमीमांसा द्रष्टव्या ।

रभ्युपगमद्वारा दण्डोक्तिः संगच्छते। अन्यथा त्वन्मते मूर्खत्वपराधीनस्वाभक्ष्यभक्षकत्वापेयपातृत्वविद्याग्रहणधारणासमर्थत्वकुत्सिताचरणादिमतः पशुतुल्यस्य शूद्रस्य 'शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति। वैश्योऽप्यर्धशतं द्वे वा शूद्रस्तु वधमर्हति,। मनुः ८।२६७। इति वाचनिकापराधे वधदण्डाभिधानस्य सर्वथैवासांगत्योपत्तिः। यदि तद्युक्तमिति ब्रूषे, तर्हि बालोन्मत्तरोगिमहाभीतिग्रस्तग्रहग्रस्तादीनामपि तत्तदपराधेषूक्तदण्डापत्तिः।

किञ्च 'पञ्चाशद्ब्राह्मणो दण्डयः क्षत्रियस्याभिशंसने। वैश्ये स्यादर्धपञ्चाशच्छूद्रे द्वादशको दमः" इति। मनुः ८।२६८। वर्णानुपूर्वीमाश्रित्य दण्डह्रासाभिधानं सङ्गच्छते। अन्यथा त्वन्मतेऽस्याकृत्यस्य करणे ब्राह्मणस्य स्वतेजसो भ्रष्टत्वेन शूद्रत्वाद् द्वादशदण्डं त्यक्त्वा पञ्चाशद्दण्डदानमसङ्गतमेव स्यात्।

किञ्च "एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन्।
जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः"

इति। मनु॰ ८।२७०। वचने एकजातिद्विजातिपदाभ्यां व्यवहारासंगतिः। त्वन्मते द्विजातेरेवाभावात्। सूत्राद्ब्राह्मणादेरपेक्षयैकजातेः शूद्रस्य परं मूर्खत्वेन सामान्यतः किञ्चिद्दण्डं विधाय जिह्वाछेदविधानस्यात्यन्तासंगतिश्च।

किञ्च "नामजातिग्रहं त्वेषामभिद्रोहेण कुर्वतः।
निक्षेप्योऽयोमयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः॥"

इति। मनुः ८।२७, परा॰ माध॰ २३६।२३८।२३७ पृष्ठानि। वचने द्विजातीनां तुच्छत्वं सूचयितुं तदीयजातिनामग्रहणादिनाऽनादरे प्रबलदण्डाभिधानमयुक्तमेव। त्वन्मते द्विजातेरेवाभावात्।

त्वया सर्वस्य पराधीनस्याविवेकिन एव शूद्रत्वाभ्युपगमाच्च। मम तु तज्जातेर्ब्राह्मणत्वादिवद्भिन्नत्वेन न दोषः।

किञ्च "धर्मोपदेशं दर्पेण विप्राणामस्य कुर्वतः।
तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः॥"

इति। मनुः ८।२७२। वचनेन विहितो दण्डोऽस्मन्मते स्वरसत उपपद्यते। गुणमात्रनिबन्धना जातिरित्यभ्युपगच्छतस्त्वन्मते दर्पेण धर्मोपदेशको ब्राह्मण एव स्यान्न शूद्र इति तस्य दण्डपातनं सर्वथा न युक्तमिति स्पष्टमेव।

अत एव 'स वै न सर्वेणेव संवदेत। देवान्वा एष उपावर्तते यो दीक्षते। स देवानामेको भवति। न वै देवाः सर्वेणेव संवदन्ते ब्राह्मणेन वैव राजन्येन वा वैश्येन वा। ते हि यज्ञियास्तस्माद्यद्येनं शूद्रेण संवादो विन्देदेतेषामेवैकं ब्रूयादिमम्, इति (शतप॰ ब्राह्म॰) शूद्रस्य वेदाध्ययनानधिकारनिमित्तकायज्ञियत्वप्रतिपादनं सङ्गच्छते।

नच संस्कारैः संस्कृताः शूद्रा वेदाध्ययनाध्यापनाधिकारिणो भवेयुरेवेति वाच्यम्, गर्भाधानात्पूर्वं तत्पित्रोस्तत्पित्रोरित्येवं शूद्रपरम्परायामादिमं यं कमारभ्य कस्यापि केनाप्यसंस्कृतत्वेनासंस्कृतपितृभ्यां वैदिकसंस्कारद्वारा गर्भाधानादेः कर्तुमशक्यत्वेन स्वस्मिन् (पुत्रे) वैदिकोपनयनादिसंस्कारायोगात्। तदुक्तम्—"निषेकादिः श्मशानान्तो मन्त्रैर्यस्योदितो विधिः। तस्यैवात्राधिकारोऽस्ति ज्ञेयो नान्यस्य कस्यचित्" इति। एवं च शूद्रस्य सर्वथाऽध्ययनाध्यापनाधिकारादिकं नेति सिद्धम्।

नच "विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रमम्।
एतैः प्रभूतैः शूद्रोऽपि वार्धके मानमर्हति"

इति ( या० १।११६ ) वचनेन शूद्रस्य विद्यासम्बन्धो ज्ञायत इति वाच्यम्; तत्र विद्यापदेन शिल्पविद्यादेर्ग्रहणं न तु वेदविद्यादेस्तिद्दोषात्। "प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्। कुसीदकृषिवाणिज्यपाशुपाल्यं विशः स्मृतम्। शूद्रस्य द्विजशुश्रूषा तयाजीवन्वणिग्भवेत्। शिल्पैर्वा विविधैर्जीवेद्द्विजातिहितमाचरन्" इति याज्ञवल्क्योक्तेः। वेदविद्याश्रवणे श्रुत्योत्रपुजतुपूरणोक्तेश्च।

किञ्च "ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः।
चतुर्थ एकजातिस्तु शूद्रो नास्ति तु पञ्चमः"
"सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते"

इति मनुना ब्राह्मणादीनां द्वितीयजन्मरूपोपनयनसंस्कारविधानेन द्विजातित्वम्। शूद्रस्य तदभावेनैकजातित्वं चेति चत्वार एव वर्णा न पञ्चमः कोऽपि वर्णः। सङ्करजातिस्त्वश्वतरवन्मातापितृव्यतिरिक्तजात्यन्तरत्वान्न निर्दिष्टजात्यन्यतमवान्। ब्राह्मणादिषु चतुर्षु वर्णेषु सजातीयायामक्षतयोन्यां यथाविधि परिणीतायां ब्राह्मणेन ब्राह्मण्यां क्षत्रियेण क्षत्रियायां वैश्येन वैश्यायां शूद्रेण शूद्रायामुत्पन्ना मातापितृगतजातियुक्ता एव ज्ञातव्याः, न त्वपरिणीतायां सजातीयायामप्युत्पन्नास्तज्जातिमन्त इति प्रतीतेर्न जातिः कर्मणेति ज्ञायते। अत एव—द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते। अवावट इतिख्यातः शूद्रधर्मा स जातितः। व्रतहीना न संस्कार्याः स्वतन्त्रा अपि ये सुताः। उत्पादिताः सवर्णेन व्रात्या इव बहिष्कृताः—इति देवलोक्तं सङ्गच्छते। नच तेषां बहिष्करणे "सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः" इति याज्ञवल्क्येन तत्र सर्वत्र मातापितृजातित्वोक्तिः कथं सङ्गच्छतामिति

वाच्यम्; 'विन्नास्वेष विधिः स्मृतः, इति (याज्ञ० १।६२) सव-शेषत्वेनोपसंहारात्। विन्नासु सवर्णास्विति सम्बध्यते। विन्नाश-ब्दस्य संबन्धिशब्दत्वाद्वेत्तृभ्यः सवर्णेभ्य इति तत्रैव मिताक्षराख्या-ख्यायां व्याख्यातम्। तस्मादारम्भे उक्तं ब्राह्मण्यादिलक्षणमेव समञ्जसमिति सिद्धम्।

एवं च विप्रायामसवर्णायामुत्पन्ने मूर्धावसिक्तादौ, सवर्णाया मविप्रायामुत्पन्ने कुण्डगोलके क्षेत्रजादौ असवर्णायामविप्रायां चोत्पन्ने प्रतिलोमजादौ न ब्राह्मणत्वमिति सिद्धम्।

[ब्राह्मणत्वादिव्य-वस्था, तन्नियामकधर्माश्च।] ननु सृष्टेरादिमे ब्राह्मणे विश्वामित्रे देवरोत्पन्ने च ब्राह्मणत्वम्, आदिमे क्षत्रिये क्षत्रियत्वम्, आदिमे वैश्ये वैश्यत्वम्, आदिमे शूद्रे शूद्रत्वं च न स्यादिति चेन्न, ब्राह्मणत्वादिभेदचतुष्टयभिन्ना क्वचिदीश्वरमु-खजन्यतावच्छेदिका सृष्ट्यादिब्राह्मणे तद्बाहुजन्यतावच्छेदिका क्षत्रिये तदुरुजन्यतावच्छेदिका वैश्ये तत्पादजन्यतावच्छेदिका शूद्रे तथा कर्मजन्यतावच्छेदिका विश्वामित्रे ऊढायां ब्राह्मण्यां क्षत्रियायां वैश्यायां शूद्रायां च क्रमेण वोढुर्ब्राह्मणात् क्षत्रियाद्वै-श्याच्छूद्राच्च क्रमेणोत्पन्नेषु सर्वेषु ब्राह्मणेषु क्षत्रियेषु वैश्येषु शूद्रेषु च क्रमेण ब्राह्मणत्वं क्षत्रियत्वं वैश्यत्वं शूद्रत्वं चेति तथा ब्राह्मण-देवरोत्पन्नेषु क्षत्रियदेवरोत्पन्नेषु वैश्यदेवरोत्पन्नेषु शूद्रदेवरोत्पन्नेषु च क्रमेण शास्त्रबोध्यं ब्राह्मणत्वं क्षत्रियत्वं वैश्यत्वं शूद्रत्वं चेति न काप्यनुपपत्तिः। श्राद्धे कुण्डगोलकनिषेधोऽप्येतद्विषय एव। नच तत्र कुण्डत्वासम्भवः इति वाच्यम्; म्रियेतेत्यस्य महारोगाक्रमणो-पलक्षणत्वात्।

कुण्डत्वादिकं तु न जातिः, येन ब्राह्मणत्वादिना संकरः स्यात्। किन्त्वमृतपतिकस्त्रीजारोत्पन्नत्वादिरूप उपाधिः। अतादृशदेवरोत्पन्ने तु व्यभिचारजन्यत्वेन न ब्राह्मण्यम्। अत एव वाग्दानोत्तरविवाहस्य युगान्तरविषयत्वाद् देवरोत्पन्नब्राह्मणो युगान्तरविषय एवेति। एतेन—श्राद्धे कुण्डगोलकनिषेधो भ्रमप्रयुक्तिविषय इति वदन् विज्ञानेश्वरो न विकथनीयः।

एवं जात्युत्कर्षवति कर्मोत्कर्षवति च ब्राह्मणे ब्राह्मणत्वभेदो बोध्यः।

"जात्युत्कर्षो युगे ज्ञेयः पञ्चमे सप्तमेऽपि वा।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्॥"

इति याज्ञवल्क्योक्तेः। एवं क्षत्रियत्वादिकमपि बोध्यम्।

नच 'स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितान् सुतान्।
सदृशानेव तानाहुर्मातृदोषविवर्जितान्॥"

इति वचनेन मातृसदृशानित्यर्थः। तेन मूर्धावसिक्तादीनां मातृजातीयत्वबोधनात् कथं तत्र ब्राह्मणत्वादिजात्यभाव इति वाच्यम्; मातृधर्मप्राप्तिमात्रबोधने वचसस्तात्पर्यात्। नचैवं पाण्डवेषु क्षत्रियत्वं न स्यात्। न स्याच्चायोनिजेषु वसिष्ठादिषु ब्राह्मण्यमिति वाच्यम्। इष्टापत्तेः। न च षट्कर्मप्रयोजकीभूतादृष्टविशेषवचनब्राह्मण्यादिपदप्रयोगसम्भवादिति वाच्यम्; 'ब्राह्मणानृत्विजो वृणीते पुत्रिकापुत्रपरगोत्रजसहोढजकानीनानुजानुजद्विप्रवरान् परिहाय' इति—बौधायनोक्तनिषेधानुपपत्त्या श्राद्धे च कुण्डगोलकनिषेधानुपपत्तेरिति तेषां नित्यानुवादत्वात्। नान्तरिक्षे न दिवीतिवत्।

एतच्च सर्वमभिसन्धायाह मनुः—

"सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु ।
आनुलोम्येन सम्भूता जात्या ज्ञेयास्त एव ते ॥"

इति । देवलोऽपि—

ब्राह्मण्यां ब्राह्मणाज्जातः संस्कृतो ब्राह्मणो भवेत् ।
एवं क्षत्रियविट्छूद्रा ज्ञेयाः स्वेभ्यः स्वयोनिजाः" इति ।

इदमपि मनुयाज्ञवल्क्याभ्यामुपसंहाराद्विप्रपरम् । अत एव संस्कृतपदमुच्चार्यम् । अतो मूर्धावसिक्तादौ कुण्डगोलकादौ च ब्राह्मण्यं वर्णत्वं च नास्तीति निषिद्धम् । अत एव तेषु न वर्णधर्मप्राप्तिः । किन्त्वाश्रमादिधर्मप्राप्तिः । तथाच यमः—

"असवर्णासु नारीषु द्विजैरुत्पादिताश्च ये ।
परपत्नीषु सर्वासु कुण्डास्ते गोलकाः स्मृताः ॥
अविवाह्याः सुताश्चैषां बन्धुभ्यः पितृमातृतः ।"

इति । अत एव 'कृच्छ्रं सान्तपनं कुर्याद्दत्त्वा संकीर्णयोनिजाम्' इति यमेनोक्तं प्रायश्चित्तात्पत्वमप्युपपन्नमिति दिक् ।

[अनुलोमप्रतिलोमाविनिष्कर्षः]

असवर्णोत्पन्ना द्वादश । अनुलोमषट्कप्रतिलोमषट्कभेदात् । तथा च मनुः—

विप्रान्मूर्धावसिक्तस्तु क्षत्रियायां विशः स्त्रियाम् ।
जातोऽम्बष्ठश्च शूद्रायां निषादः पारशवोऽपि च ॥
माहिष्योग्रौ प्रजायेते विट्छूद्राङ्गनयोर्नृपात् ।
शूद्रायां करणो वैश्याद्विन्नास्वेष विधिः स्मृतः ॥ इति ।

अनुलोमषट्कम्—

"ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकः स्मृतः ।
शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः ॥

क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेव च ।
शूद्रादायोगवं वैश्या जनयामास वै सुतम् ॥

इति प्रतिलोमषट्कम् । अथ तेषां कर्माणि विश्वम्भरवास्तुशास्त्रे—

"क्षात्रेय्यां विप्रसंयोगाज्जातो मूर्धावसिक्तकः । राजन्यः क्षत्रधर्मेणाप्यधिकः सम्प्रकीर्तितः" इति । एतस्य चाग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादावप्यधिकारः । "उभौ वर्णावृषिरुग्रः पुपोष' इति लिङ्गात् । अत एवाऽभीवर्तो ब्रह्मसामेति सामान्यवचसो मूर्धावसिक्तादिकर्तृकप्रयोगविषयत्वं राणककारेणोक्तम् ।

"वैश्यस्त्रीद्विजसम्भूतोऽम्बष्ठः स्यादनुलोमतः ।
अन्त्येभ्यो वैश्यजातिभ्यः षट्कर्मस्वधिकः स्मृतः ॥"

इति षट्कर्मान्तःपातिकर्मत्रय इत्यर्थः । 'नरवाजिगवानां च स्याच्चिकित्सास्य जीविका' इति वचनोक्तास्य जीविका भवति । अयमम्बष्ठो गौडप्रसिद्धाम्बष्ठाद्धीनः ।

'शूद्रां शयनमारोप्य ब्राह्मणश्च कथञ्चन ।
जनयेद्ग्राम्यधर्मेण तस्यां पारशवं सुतम् ॥

महाशूद्र इति ख्यातः शूद्रेभ्यः किञ्चिदुत्तमः ।
स्वर्णाकारस्थ तस्येह स्नानं धोत्रं पवित्रकम् ।
शौचं शूद्रस्य धर्मेण वर्तनं तस्य च स्मृतम् ॥'

इति । शयनारोपणं विवाहः । अस्यैव संज्ञान्तरं निषादः । अस्य कर्मस्वधिकारः । 'यज्ञियासः पञ्चजना मे होत्रं जुषध्वम्' इति मन्त्रलिङ्गात् । अदितिर्द्यौरिति ऋग्व्याख्याने पञ्चजनपदस्य चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यव इति यास्केन निषा-

द्रस्य गणनात् । एवं च 'मस्तु शूद्रस्य' इति अन्नद्रव्यनियमोऽपि सङ्गच्छते ।

"वैश्यायां क्षत्रियाज्जातो माहिष्यस्त्वनुलोमतः ।
अष्टाधिकारनिरतश्चतुष्षष्ट्यङ्गकोविदः ॥
व्रतबन्धादिकास्तस्य क्रियाः स्युः सकला विशः ।
ज्यौतिषं शाकुनं शास्त्रं स्वरशास्त्रं च जीविका ॥" इति
"सुगन्धं वनितावस्त्रं गीतताम्बूलभोजनम् ।
शय्यां च कुसुमं चैव भोगाष्टकमुदाहृतम् ॥"

इति वचनोक्तं भोगाष्टकम् । चतुःषष्ट्यङ्गानि चतुःषष्टिकलाः । ताश्च—

"वेदाङ्गागमशास्त्रवित्त्वकवितावक्तृत्वतौर्यत्रिक-
द्यूतास्त्राद्भुतवादसूपरचनाश्चित्रं पणो वैद्यकम् ।
नानारत्नपुरादिलेखपुरुषस्त्रीधातुभाषालिपि-
प्रज्ञानाटककेलिदन्तितुरगप्रेक्षा च सामुद्रिकम् ॥ १ ॥

शय्याभोजनयुद्धमर्दनविभूषाबन्धसर्वेङ्गित-
ज्ञानं राजतरासभारतकृतिः सौख्येषु भोगेषु धीः ।
त्राणं चारिविषाग्निवारिषु रथाखेटाङ्गशीर्षेषु य-
द्दुर्गारामकृतिः पशुद्विपचमत्कारः शिवार्चादयः ॥ २ ॥

इति वचनोक्ताश्चतुःषष्टिकलाः । अधिकारा वृत्तय इत्यर्थः ।

"शूद्रायां क्षत्रियादुग्रः क्रूरकर्मा प्रजायते ।
शस्त्रास्त्राभ्यासकुशलः सङ्ग्रामकुशलो भवेत् ॥
तया वृत्त्या स जीवेत्सच्छूद्रधर्मा च जायते" इति ।

अयं च रजपूत इति हिन्दीभाषया प्रसिद्धः ।

"वैश्याद्धर्मेण शूद्रायां जातो वैतालिकाभिधः ।
चारणोऽसावपि भवेन्न्यूनो वृषलधर्मतः ॥
राज्ञां च ब्राह्मणानां च गुणवर्णनतत्परः ।
सङ्गीतं कामशास्त्रं च जीविका तस्य विश्रुता ॥"

इति । अयमेव करणः । नटवा इति हिन्दीभाषायां प्रसिद्धः ।

अत्र सर्वत्र विन्नास्वेष इत्युक्तेरविन्नाभ्य उत्पन्नानां नानुलोमत्वम् । किन्तु व्यभिचारोत्पन्नत्वेन कुण्डगोलकान्यतरत्वमिति तदाशयः । इत्यनुलोमषट्कर्माणि ।

अनेनैव प्रकारेणोत्पन्नानां स्त्रीणामनुलोमजातानामिमान्येव नामानि । यथा—मूर्धावसिक्ता, अम्बष्ठा, निषादी, पारशवी, माहिष्या, उग्रा, करणी, इति । कर्माण्यपि पुंसामिव तदीयानां भवन्ति ।

अथ प्रतिलोमषट्कर्माणि विश्वम्भरवास्तुशास्त्रे—

ब्राह्मण्यां क्षत्रियात्सूतः प्रातिलोम्येन जायते ।
क्षत्रियाणामसौ धर्मं कर्तुमर्हत्यशेषतः ॥
किञ्चित्क्षत्रियजातिभ्यो न्यूनता तस्य विद्यते ।
गजबन्धनमश्वानां वाहनं कर्म सारथेः ॥
वैश्यधर्मेषु सूतस्य नाधिकारः क्वचिद्भवेत् ।

इति । क्षत्रियाणां धर्मं युद्धप्रजापालनादिवृत्तिर्न तु वेदाध्ययनादि । 'प्रतिलोमा धर्माधर्महीनाः' इति स्मरणात् ।

ब्राह्मण्यां जायते वैश्याद्योऽसौ वैदेहकाभिधः ।
शुद्धान्तरक्षणं कुर्याद्राज्ञामनुपसंहितः ॥
सामान्यवनितां पोष्य तासां चोक्ता च जीविका ।
तस्योक्तशूद्रधर्माणां नाधिकारोऽस्ति कर्हिचित् ॥

पण्याङ्गनानां राज्ञां च कुर्यात्सङ्गं तदिच्छया।
रूपाजीवासुतास्तेषां निशि यः सङ्गतो विटः।
स एव तासां प्राणेशो नान्यः कान्तोऽपि तत्पतिः।
चतुःषष्टिकलाः कामशास्त्रं तस्योपजीवनम्' इति॥
'ब्राह्मण्यां शूद्रवीर्येण जातश्चण्डालसंज्ञकः।
सर्वेषामेव तत्स्पर्शात्सचेलं स्नानमिष्यते॥
स वसेन्नगराद्बाह्ये सर्वधर्मबहिष्कृतः।
ये वध्यास्तेन ते वध्या विविधैर्यातनाशतैः॥
तेषां वस्त्राद्यलङ्कारा जीविका तस्य च स्मृता, इति।
क्षत्रिया मागधं वैश्याज्जनयामास वै सुतम्।
स बन्दीजन इत्युक्तो व्रतबन्धादिवर्जितः॥
शूद्रेभ्योऽभ्यधिकं किञ्चित्तस्य जीवनमुच्यते।
कथालङ्कारगन्धादिषड्भाषासु विशारदः॥
गद्यपद्यादिचित्राणि विरूढानि महीभुजाम्॥ इति।
भाट इति हिन्दीभाषया प्रसिद्धः।
'क्षत्रिया शूद्रसंयोगात्क्षत्तारं जनयेत्सुतम्।
निषाद इति विख्यातः सर्ववर्णबहिष्कृतः॥
शूद्राचारविहीनश्च पापधीनिरतः सदा।
वागुरापाशपाणिस्तु मृगबन्धनकोविदः॥
आरण्यपशुजातीनामन्तकश्च वनेचरः।
क्रोधान्वितो मांसवृत्त्या तया जीवेत्सदैव हि॥
घण्टां पापर्धिकां कुर्याद्रात्रौ विस्मयकारिणीम्।
द्विधास्य पापधीरुक्ता व्योमभूचारिणी त्विह॥
विक्रयं मधुनः कृत्वा धनमिच्छेत्स्ववृत्तये, इति॥

पारधी इति माहाराष्ट्रभाषया कवल इति मध्यदेशभाषा च प्रसिद्धः ।

'वैश्यस्त्रीशूद्रसंयोगादायोगवकसंज्ञकः ।
स शूद्राद्धीयते धर्मे पापाय तदकर्मकृत् ॥
स कुर्यात्कुट्टिमां भूमिं चूर्णेनास्येह जीवनम्,

इति । अनेनैव प्रकारेण प्रतिलोमजातानां स्त्रीणां नामानि कर्माणि च ज्ञेयानि ।

विप्रः संस्कारहीनश्च व्रात्यतामधिगच्छति ।
ब्राह्मण्यां तस्य यः पुत्रो भृज्जुकण्टः स हि स्मृतः ॥
ब्राह्मण्यां भृज्जुकण्टाच्च सुतस्त्वावर्तको भवेत् ।
ब्राह्मण्यावर्तकाभ्यां यः पुत्रः स कटधानकः ॥
ब्राह्मण्यां कटधानेन सुतोऽसौ पुष्पशेखरः ।
भृज्जुकण्टादयः प्रोक्ता चत्वारः पूर्वतः क्रमात् ॥
तेषां कर्माणि वक्ष्येऽहं जीवनाय विशेषतः ।
वर्ण्यौ हरिहरौ तैश्च गीतगाथाप्रबन्धकैः ॥
चरितैर्देशभाषाभिर्गानं तज्जीविका स्मृता ।
लोकाचाराः स्मृतास्तेषां शूद्रधर्मो न हि क्वचित् ॥

इति विश्वम्भरवास्तुशास्त्रे । एते च नानुलोमजा न प्रतिलोमजा वा । किन्तु ब्राह्मणा एव मद्यपपतितब्राह्मणवत् 'दुर्ब्राह्मणा व्यभिचारजा इति सम्प्रदायः ॥

विप्रः स्वीकृत्य सन्न्यासमारूढपतितो भवेत् ।
ब्राह्मणीं कारयेद्रण्डां यं तस्यां जनयेत्सुतम् ॥
स दोलः कर्मचण्डालस्तत्स्पर्शात्पातकं महत् ।
वापीकूपतडागानां प्रवाहाणां च सर्वशः ॥

खननं जीविकार्थं स्यात्तस्य प्रोक्तं विशेषतः । इति
विश्वम्भरवास्तुशास्त्रे । कोईरीति भाषया प्रसिद्धः ॥

शूद्रा या क्षत्रिया सूते व्रात्यक्षत्रियमैथुनात् ।
पुत्रः स जल इत्युक्तः शूद्रधर्मविधायकः ॥
स कुर्याद्राजपुत्रांश्च शस्त्रास्त्रकुशलान् धनम् ।
तेभ्यो लब्ध्वा स वृत्त्यर्थं स्वधर्ममनुपालयेत् ॥
क्षत्रियामल्लसंयोगाज्जातो मल्लाभिधः परः
लब्ध्वासावरणां सम्यग्बलदर्पेण गर्वितः ।
राज्ञां कौतुकमुत्पाद्य नियुद्धेन धनार्जनम् ॥
कुर्यात्स्ववृत्तिनिपुणः शूद्रधर्मविशेषतः ।
क्षत्रियाल्लसंयोगाच्छीलीन्ध्र इति जायते ॥
स हीनः शूद्रधर्मेभ्यो जीविकाऽस्याङ्गमर्दनम् ।

इति विश्वम्भरवास्तुशास्त्रे । नापितभेदो मर्दनीति भाषया प्रसिद्धः ।

शीलीन्ध्रः क्षत्रियां गच्छन् जनयेन्नटसंज्ञकम् ।
हीनोऽसौ शूद्रधर्मेभ्यो नाटकानि समभ्यसेत् ॥
कोल्हारिकः स एवोक्तो बहुरूपेण विश्रुतः ॥ इति

विश्वम्भरवास्तुशास्त्रे । एतेषामपि दुष्टक्षत्रियत्वमेव नानुलोमजत्वं न प्रतिलोमजत्वं वा ।

शूद्रायां यः समुत्पन्नो ब्राह्मणेन तु संस्कृतः ।
अपरो नापितः प्रोक्तः शूद्रधर्माधिकोऽपि सः ॥

इति विश्वम्भरवास्तुशास्त्रे । अस्यापि दुष्टशूद्रत्वम् । अत एवाधिक इत्युक्तम् ।

[ महाभारताद्यर्थनिष्कर्षः । ] ननु 'राजन् कुलेन वृत्तेन स्वाध्यायेन श्रुतेन वा । ब्राह्मण्यं केन भवति प्रब्रूह्येतत्सुनिश्चितम्, इति युधिष्ठिरम्प्रति यक्षप्रश्ने 'शृणु यक्ष कुलं तात न स्वाध्यायो न च श्रुतम् । कारणं हि द्विजत्वे च वृत्तमेवं न संशयः, (८) इति म० भा० वन० १३शेऽध्याये युधिष्ठिरेण वृत्तस्यैव ब्राह्मण्ये हेतुत्वप्रतिपादनात् कुलस्वाध्यायादीनां कारणत्वाभावेन ब्राह्मणेन विधिवदूढायां ब्राह्मण्यां विधिवदुत्पन्नो ब्राह्मण इति प्रागुक्तं युक्तम् । अत एव 'सत्यं दानं क्षमा शीलमानृशस्यं तपो घृणा। दृश्यन्ते यत्र राजेन्द्र स ब्राह्मण इति स्मृतः, इति म० भा० वन०, ...... तथा 'सत्यं दानं तथाऽद्रोह आनृशंस्यं कृपा (त्रपा) घृणा । तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः, इति पाद्मे स्वर्गखण्डे २६ शेऽध्याये च वचनाभ्यां कुलातिरिक्तस्य वृत्तसमुदायस्यैव ब्राह्मण्ये कारणत्वोक्तिः सङ्गच्छत इति चेन्न ; 'शृणु यक्ष कुलं तात न स्वाध्यायो न च श्रुतम् । कारणं हि द्विजत्वे च वृत्तमेव न संशयः, इति युधिष्ठिरवचने एवोऽप्यर्थकः । कुलमपि च वृत्तं द्विजत्वे कारणमित्यर्थस्य वाच्यमर्यादया प्रतीत्या त्वदुक्तार्थस्याप्रामाणिकत्वात् । अत एवात्रैवाग्रे 'वृत्तं यत्नेन संरक्ष्यं ब्राह्मणेन विशेषतः । अक्षीणवृत्तो न क्षीणो वृत्ततस्तु हतो हतः ( ९ ) पाठकाः पाचकाश्चैव ये चान्ये शास्त्रचिन्तकाः । सर्वे व्यसनिनो मूर्खा यः क्रियावान् स पण्डितः॥ चतुर्वेदोऽपि दुर्वृत्तः स शूद्रादतिरिच्यते । योऽग्निहोत्रपरो दान्तः स ब्राह्मण इति स्मृतः, इति म० भा० वन० १३शेऽध्याये युधिष्ठिरेण ब्राह्मण्यं प्रकृत्यैव वृत्तस्यावश्यकत्वप्रतिपादनं सङ्गच्छते । अत एव 'तेन तुल्यं क्रिया चेद्वतिः, इति ५।१।११५ पाणिनिसूत्रे महाभाष्ये 'सर्व एते शब्दा गुणसमुदायेषु वर्तन्ते ब्राह्मणः क्षत्रियो-

वैश्यः शूद्र इति । अतश्च गुणसमुदाये एवं ह्याह—तपः श्रुतं च योनिश्च एतद्ब्राह्मणकारकम् । तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥ तथा गौरः शुच्याचारः पिङ्गलः कपिलकेश इत्येतानभ्यन्तरान् ब्राह्मण्ये गुणान् कुर्वन्ति, इत्यनेन ग्रन्थेन तपःश्रुतयोनिसमुदायस्य ब्राह्मण्ये मुख्यत्वं सति सम्भवे गौरवर्णात्मकगुणस्यापीति सिद्धान्तं प्रदर्श्य मुख्यगुणशून्यानामब्राह्मण्यमेव न ब्राह्मण्यमित्यर्थदर्शनाय 'समुदाये प्रवृत्ताः शब्दाश्चावयवेष्वपि वर्तन्ते । तद्यथा पूर्वे पञ्चालाः, तैलं भुक्तम्, घृतं भुक्तम्, शुक्लो नीलः कपिलः कृष्ण इत्येवमयं समुदायेऽपि ब्राह्मणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते जातिहीने गुणहीने च । गुणहीने तावत्—स ब्राह्मणोऽयं यस्तिष्ठन् मूत्रयति । अब्राह्मणोऽयं यस्तिष्ठन् भक्षयति । जातिहीने सन्देहाद् दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते । सन्देहे तावत् गौरं शुच्याचारं पिङ्गलं कपिलकेशं दृष्ट्वाऽध्यवस्यति ब्राह्मणोऽयमिति । ततः पश्चादुपलभते नायं ब्राह्मण इति । अब्राह्मणोऽयमिति । अमुष्मिन्नवकाशे ब्राह्मणोऽयमिति । तत्र सन्देहाद्ब्राह्मणशब्दो वर्तते । जातिकृता चार्थस्य निवृत्तिः । दुरुपदेशाच्च । दुरुपदिष्टमस्य भवति । अमुष्मिन्नवकाशे ब्राह्मणस्तमानयेति । स तत्र गत्वा यं पश्यति तमध्यवस्यति ब्राह्मणोऽयमिति । ततः पश्चादुपलभते नायं ब्राह्मणः, अब्राह्मणोऽयमिति निर्ज्ञातमस्य भवति । तत्र दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते । जातिकृता चार्थस्य निवृत्तिः । अतश्च सन्देहाद् दुरुपदेशाच्च न ह्ययं कालं (कृष्णम्) माषराशिवर्णमापणे आसीनं दृष्ट्वाऽध्यवस्यति ब्राह्मणोऽयमिति निर्ज्ञातं तस्य भवति" इति जाते मुख्यकोटिप्रविष्टत्वस्य नामस्वरूपसम्पादकत्वस्य निरूपणं

शब्दार्थरहस्याभिज्ञस्य पतञ्जलेर्महाभाष्यकृतः संगच्छते । अत एव—

"ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम ।
वैश्यः शूद्रश्च विप्रर्षे तद्ब्रूहि वदतां वर ॥" (१)

इति भृगुं प्रति भरद्वाजेन प्रश्ने कृते—

"जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः ।
वेदाध्ययनसम्पन्नः षट्सु कर्मस्ववस्थित ॥ २ ॥
शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः ।
नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ॥ ३ ॥
सत्यं दानमथाद्रोह आनृशंस्यं त्रपा घृणा ।
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥ ४ ॥
क्षत्रजं सेवते कर्म वेदाध्ययनसङ्गतः ।
दानादानरतिर्यस्तु स वै क्षत्रिय उच्यते ॥५ ॥
विशत्याशु पशुभ्यश्च कृष्यादानरतिः शुचिः ।
वेदाध्ययनसम्पन्नः स वैश्य इति संज्ञितः ॥६॥
सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः ।
त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः ॥" (७)

इति म० भा० शान्ति० १८८ तमेऽध्याये भृगुमहर्षिणोक्तमुत्तरं सङ्गच्छते । अत्र 'जातिकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः' इति ब्राह्मणलक्षणवत् क्षत्रियवैश्यलक्षणयोरपि सम्बध्यते । एवञ्चात्रादिपदेन गर्भाधाननामकरणान्नप्राशनचौलोपनयनादीनां ग्रहणात्—

"वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥" २ । २६॥

इति मनूक्तरीत्या यथाविधि संस्कृतसवर्णमातापितृकृतगर्भाधानेन दत्तकपरिग्रहेण वाऽपत्यीभूतस्य जातकर्मनामकरणान्नप्राशनचौलोपनयनाख्यैर्द्विजन्मसम्बन्धिभिर्वैदिकैः संस्कारैः संस्करणेन—

'गार्भैर्होमैर्जातकर्मचौलमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥ २ । २७ ॥

इति मनूक्तरीत्या बैजिकगार्भिकैनोविनाशेन परिशुद्धस्य द्विजत्वप्राप्त्या—

'स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥' २ । २७ ॥

इति मनूक्तेर्वेदाध्ययनादिस्वस्वकल्पोक्तधर्मानुष्ठानेऽधिकारप्राप्त्या तत्तदुक्ताध्ययनादिकर्मभिः सत्यादिभिश्च ब्राह्मण्यं क्षत्रियत्वं वैश्यत्वं चोत्पद्यत इति तदर्थः ।

नच 'सत्यं दानमथाद्रोह आनृशंस्यं त्रपा घृणा ।
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥'

इति प्रागुक्तब्राह्मणलक्षणान्तरप्रतिपादकभृगुवचनेन द्विजातिरिक्तानामुक्तगुणवतां ब्राह्मण्यमुच्यते । अत एव वचनान्तरं सार्थकमिति वाच्यम् ; मन्वादिस्मृत्यनुरोधेन विधिवत्संस्कृतसवर्णोढमातापितृजन्यत्वतत्परिग्राह्यत्वान्यतरोद्देश्यकतत्कृतविधिविहितसंस्कारवत्त्वोभयविशिष्टसत्यादिगुणवतामेव ब्राह्मणत्वमित्यर्थस्यैव तेनापि वाच्यत्वात् ।

नच तत्रैव भृगुणा भरद्वाजं प्रति प्रत्युत्तरोक्तिसमये ब्राह्मणक्षत्रियवैश्यशूद्राणां लक्षणान्युक्त्वाऽन्ते—

'शूद्रे चैतद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो ब्राह्मणो न च ॥ ८ ॥

इति म० भा० शान्ति० १८९ तमेऽध्याये उक्तेः शूद्रे ब्राह्मणक्षत्रियवैश्योक्तलक्षणानामन्यतमसत्त्वे तल्लक्षणलक्षितं ब्राह्मण्यं क्षत्रियत्वं वैश्यत्वं वा स्यान्न तु शूद्रत्वम्, तथा ब्राह्मणोक्तलक्षणस्य ब्राह्मणेऽसत्त्वे यल्लक्षणलक्षितत्वं स्यात्तत्त्वं नाम क्षत्रियत्वं वैश्यत्वं शूद्रत्वं वा स्यान्न तु ब्राह्मण्यमेव क्षत्रियत्वमेव वैश्यत्वमेव शूद्रत्वमेवेति वाच्यम्; नञोऽत्राल्पार्थकत्वात्। एवं च न शूद्रो न ब्राह्मण इत्यनयोरल्पः शूद्रोऽल्पो ब्राह्मणश्च भवेदित्यर्थे शूद्रे ब्राह्मणे चाल्पत्वं नाम न्यूनत्वं सत्कारमानदानार्हत्वं तदनर्हत्वं च क्रमेण बोध्यते, न तु शूद्रत्वब्राह्मण्याद्यभाव इति न कोऽपि दोषः। अत एव—जन्मशारीरविद्याभिराचारेण श्रुतेन च। धर्मेण च यथोक्तेन ब्राह्मणत्वं विधीयते ॥ चित्रकर्म यथानेकैरङ्गैरुन्मील्यते शनैः। ब्राह्मण्यमपि तद्वत्स्यात्संस्कारैर्विधिपूर्वकैः—इति परा-माधवीये ८। १९ पराशरोक्तं सङ्गच्छते। न च 'जात्या कुलेन वृत्तेन स्वाध्यायेन श्रुतेन वा। ब्राह्मणः केन भवति तद्ब्रूह्येतद्विनिश्चयम् (३८) इति पृष्ठे नहुषं प्रति युधिष्ठिरेण—

'न जातिर्न कुलं तात न स्वाध्यायः श्रुतं न च।
कारणानि द्विजत्वस्य वृत्तमेतस्य कारणम् ॥ ३९ ॥

अनेके मुनयस्तात तिर्यग्योनिमुपाश्रिताः।
स्वधर्माचारनिरता ब्रह्मलोकमितो गताः ॥ ४० ॥

बहुधा किमधीतेन नष्टस्येव दुरात्मनः।
तेनाधीतं श्रुतं तेन यो वृत्तमनुतिष्ठति ॥ ४१ ॥

वृत्तं यत्नेन रक्ष्यं स्याद्वित्तमेति च याति च ।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥ ४२ ॥
किं कुलेनोपदिष्टेन विपुलेन दुरात्मना ।
कृमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥ ४३ ॥
तस्माद्विद्धि महाराज वृत्तं ब्राह्मणलक्षणम् ।
चतुर्वेदोऽपि दुर्वृत्तः शूद्रात्पापतरः स्मृतः ॥ ४४ ॥
योऽग्निहोत्रपरो दान्तः सन्तोषनियतः शुचिः ।
तपःस्वाध्यायशीलश्च तं देवा ब्राह्मणं विदुः ॥ ४५ ॥
परेषान्तु गुणान्वेषी सततं पुरुषर्षभ ।
सतोऽपि दोषान् राजेन्द्र न गृह्णाति कदाचन ॥ ४६ ॥
दीनानुकम्पी सततं सततं साधुवत्सलः ।
यः स्वदाररतश्चैव तं देवा ब्राह्मणं विदुः ॥ ४७ ॥

इति म० भा० वन० १८ शेऽध्याये युधिष्ठिरं प्रति नहुषेण प्रत्युत्तरिते वाक्ये वृत्तातिरिक्तानां जातिकुलश्रुताध्ययनादीनां द्विजत्वे न कारणत्वम् । किन्तु वृत्तेनाग्निहोत्रतपःस्वाध्यायशीलसन्तोषदमादिरूपकर्मणैवेत्युक्ते कथं प्रागुक्तरीत्या सवर्णोढसवर्णाब्राह्मणीजन्यत्वं ब्राह्मणत्वबीजमित्युच्यत इति वाच्यम्; वृत्तस्यात्रात्यन्तावश्यकत्वप्रतिपादनार्थमर्थवादरूपेणैतद्ग्रन्थप्रवृत्तेः । अन्यथा प्रागुक्तयोर्युधिष्ठिरोक्तयोः परस्परं विरोधापत्तिः । शूद्रादीनामुपनयनेऽधिकाराभावस्य प्रागेव निरूपितत्वाच्च । क्षत्रियवैश्ययोरुपनयनेऽधिकारसद्भावेऽपि यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहरूपब्राह्मणविषयकषट्कर्मसु मध्ये यजनाध्ययनदानरूपकर्मत्रयमात्रेऽधिकारोक्तेश्च । प्रागुक्तरीत्या दण्डमौञ्जीमेखलादिभेदाच्च

ब्राह्मणेभ्यो वैलक्षण्यस्यापरिहार्यत्वात् कथं वृत्तेन क्षत्रियवैश्यानां शूद्राणां च ब्राह्मण्यं सिध्येत् ।

एतेन 'एकवर्णमिदं पूर्वं विश्वमासीद्युधिष्ठिर ।
गुणक्रियाविभेदेन चातुर्वर्ण्यं प्रतिष्ठितम् ॥
सर्वे वै योनिजा मर्त्याः सर्वे मूत्रपुरीषिणः ।
एकेन्द्रियेन्द्रियार्थाश्च तस्माच्छीलगुणैर्द्विजः ॥

इति म० भा० वन० १३५ तमेऽध्याये, तथा—

'न विशेषोऽस्ति वर्णानां सर्वं ब्रह्ममयं जगत् ।
ब्रह्मणा पूर्वसृष्टं हि कर्मणा वर्णतां गतम् ॥
कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः ।
त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ॥
गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः ।
स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः ॥
हिंसारतप्रिया लुब्धाः सर्वकर्मोपजीविनः ।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः ॥
इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः ।
शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः ।
नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ॥
शूद्रे चैतद्भवेल्लक्ष्म द्विजे चैतन्न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥

इति म० भारते, तथा—

'चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभज्यते ।
सर्वेषां खलु वर्णानां दृश्यते वर्णसंकरः ॥
कामः क्रोधो भयं लोभः शोकश्चिन्ता क्षुधा श्रमः ।

सर्वेषां नः प्रभवति कस्माद्वर्णो विभज्यते,

इति म० भा० शान्तिप० मोक्षधर्मे तथा—

'चातुर्वर्ण्यं मया सृष्टं गुणकर्म विभागशः ।

तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम्,

इति म० भा० भीष्मप० भगवद्गीतायां ४।१३, तथा—

'सर्प उवाच—ब्राह्मणःको भवेद्राजन् वेद्यं किञ्च युधिष्ठिर ।

ब्रवीत्वतिमतिं त्वां हि वाक्यैरनुमिमीमहे ॥ ४२ ॥

युधिष्ठिर उवाच—सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा ।

दृश्यन्ते यत्र राजेन्द्र स ब्राह्मण इति स्मृतः ॥ ५३ ॥

वेद्यं सर्प परं ब्रह्म निर्दुःखमसुखं च यत् ।

यत्र गत्वा न शोचन्ति भवतः किं विवक्षितम् ॥५४॥

सर्प उवाच—चातुर्वर्ण्यं प्रमाणं च सत्यं च ब्रह्म चैव हि ।

शूद्रष्वपि च सत्यं च दानमक्रोध एव च ॥ ५५ ॥

आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर ।

वेद्यं यच्चात्र दुर्वृत्तमसुखं च नराधिप ।

ताभ्यां हीनं परं चान्यन्न तदस्मी(स्ती)ति लक्षये॥५७॥

युधिष्ठिर उवाच—शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।

न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥५८॥

यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणःस्मृतः ।

यत्रैतन्न भवेत्सर्प तं शूद्रमिति निर्दिशेत् ॥५६॥

सर्प उवाच—यदि ते वृत्ततो राजन् ब्राह्मणः प्रसमीक्षितः ।

वृथा जातिस्तदाऽयुष्मन् कृतिर्यावन्न विद्यते ॥६३॥

जातिरत्र महासर्प मनुष्यत्वे महामते ।

संकरात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ॥ ६४ ॥

सर्वे सर्वास्वपत्यानि जनयन्ति सदा नराः ।
वाङ्मैथुनमथो जन्म मरणं च समं नृणाम् ॥ ६५ ॥
इदमार्षप्रमाणं ते ये यजामह इत्यपि ।
तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः ॥६६॥
प्राङ् नाभिवर्धनात्पुंसो जातकर्म विधीयते ।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥६७॥
तावच्छूद्रसमो ह्येष यावद्वेदे न जायते ।
तस्मिन्नेवं मतिद्वैधे मनुः स्वायम्भुवोऽब्रवीत् ॥६८॥
कृतकृत्याः पुनर्वर्णा यदि वृत्तं न विद्यते ।
सङ्करस्तत्र नागेन्द्र बलवान् प्रसमीक्षितः ॥६९॥
यत्रेदानीं महासर्प संस्कृतं वृत्तमिष्यते ।
तं ब्राह्मणमहं पूर्वमुक्तवान् भुजगोत्तम ॥८०॥

इति म० भा० वन० प० १८० तमेऽध्याये च । एवमादिभिवचनैः प्राक् ब्रह्मणा सृष्टत्वेन ब्रह्ममयं सर्वं जगद्भिन्नभिन्नक्रियागुणशीलविशेषाणामाश्रयणेन ब्राह्मणः क्षत्रियो वैश्यः शूद्र इत्येवं चतुर्वर्णात्मकमभूदिति यदि कोऽप्यत्र शूद्रादिः स्वस्ववर्णप्रयोजकगुणकर्माणि परित्यज्य पुनरन्यदीयगुणकर्माणि समाश्रयेत्तदा शूद्रो ब्राह्मणः क्षत्रियो वैश्यो वा भवेत्, ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा भवेत्, क्षत्रियो ब्राह्मणो वैश्यः शूद्रो वा भवेत्, वैश्यो ब्राह्मणः क्षत्रियः शूद्रो वा भवेदिति वृत्तमेव वर्णविभागे कारणमिति—अपास्तम् । तदग्रिमवचनैस्तत्तदीयमातापितृसजातीयजन्मवृत्तयोः समुदितयोरेव वर्णप्रयोजकत्वम्, न तु पृथगेतयोस्तत्प्रयोजकत्वम्, किन्तु साङ्कर्यप्रयोजकत्वमिति ब्राह्मणजातीयोढमातापितृजन्यत्वतत्कृतजातकर्मादिसंस्कारसहोपनयनसंस्कारोत्तरं वेद-

शोत्राध्ययनादिरूपे वृत्ते शौचे सदाचारे विघसाशने गुरु-प्रेमणि नित्यं व्रताचरणे सत्योक्तिषु तथा शमदमादिके सद्गुणे समाश्रिते सति ब्राह्मण्यं द्विजत्वञ्च, एवमुक्तोढक्षत्रियमातापितृतो जन्मोत्तरमुक्तरीत्योपनयनोत्तरमध्ययनादिरूपे उक्ते वृत्ते तथा कामभोगप्रियत्वतैक्ष्ण्यक्रोधप्रियसाहसत्वादिरूपेषु गुणेषु च समाश्रितेषु क्षत्रियत्वं द्विजत्वं च, एवमुक्तोढवैश्यमातापितृतो जन्मोत्तरमुक्तरीत्योपनयनोत्तरमध्ययनादिरूप उक्ते वृत्ते तथा गोरक्षकृषिवाणिज्येषु च समाश्रितेषु वैश्यत्वं द्विजत्वं च प्राप्नोति, वैपरीत्ये स एव द्विजो 'शूद्रसम' इत्युक्त्या वर्णान्तरेण तौल्यं प्राप्नोतीत्यर्थस्याभिव्यक्तेश्च। 'तपः श्रुतं च योनिश्च एतद्ब्राह्मणकारकम्। तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः,' इति प्रागुक्तवचनान्तरसमभिव्याहारेण त्वदुक्तरीत्याऽर्थवर्णनस्यायोगाच्च। प्रागुक्तदण्डोपवीतमेखलादिविशेषप्रतिपादनविरोधाच्च। अत एव 'धर्मश्च सत्यञ्च दमस्तपश्च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया। यशश्च दानञ्च धृतिः श्रुतं च महागुणा द्वादश ब्राह्मणस्य, इति म० भा० सनत्सुजातीये व्यासेन जन्मतो जातस्य ब्राह्मणस्यैते धर्मादयो महागुणा इत्युक्तिः सङ्गच्छते। एतेन—शमो दमस्तपः शौचं सन्तोषः क्षान्तिरार्जवम्। दानं दयाऽच्युतात्मत्वं सत्यं च ब्रह्मलक्षणम्॥ इति श्रीमद्भागवते व्यासस्य, तथा 'योगस्तपो दमो दानं सत्यं शौचं दया श्रुतम्। विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम्॥ इति याज्ञस्मृ० व्या० अपरा० १।२०० वसिष्ठस्य च वचने लक्षणशब्दो गुणवाचक इति व्याख्येयम्। अत एव द्विजानुद्दिश्य 'सत्यं शौचं दया शौचं शौचमिन्द्रियनिग्रहः। सर्वभूते दया शौचं तपः शौचं च पञ्चमम्॥

पञ्चलक्षणसम्पन्नो दृश्यो यो हि भवेद् द्विजः । तमहं ब्राह्मणं ब्रूयां शेषाः शूद्रा युधिष्ठिर ॥' इति, तथा—

शूद्रोऽपि शीलसम्पन्नो गुणवान् ब्राह्मणो भवेत् ।
ब्राह्मणोऽपि क्रियाहीनः शूद्रादप्यवरो भवेत् ॥ इति ॥

म० भा० वन० उक्तम् । यत्तु म० भा० वनपर्वणि—

सर्वे वै योनिजा मर्त्याः सर्वे मूत्रपुरीषिणः ।
एकेन्द्रियेन्द्रियार्थाश्च तस्माच्छीलगुणैर्द्विजः ॥ इति ॥

तथा—ये वै परिग्रहीतारस्तेषां सत्त्वबलाधिकाः ।
इतरेषां क्षतत्राणात्स्थापयामास क्षत्रियान् ॥ २० ॥
उपतिष्ठन्ति ये वै तान् याचन्ते शर्मदाः सदा ।
सत्यं ब्रह्म सदा भूतं वदन्तो ब्राह्मणास्तु ते ॥ २१ ॥
ये चान्येऽप्यबलास्तेषां वैश्यकर्मणि संस्थिताः ।
कीलानि नाशयन्ति स्म पृथिव्यां प्रागतन्द्रिताः ॥२२॥
वैश्यानेव तु तानाह कीनाशवृत्तिमाश्रितान् ।
शोचन्तश्च द्रवन्तश्च परिचर्यासु ये नराः ॥ २३ ॥
निस्तेजसोऽल्पवीर्याश्च शूद्रास्तानब्रवीत्तु सः ॥ २४ ॥
शिखा ज्ञानमयी यस्य चोपवीतं तपोमयम् ।
ब्राह्मण्यं निष्फलं तस्य मनुः स्वायम्भुवोऽब्रवीत्॥३०॥
यत्र वा तत्र वा वर्णो उत्तमाधममध्यमे ।
निवृत्तः पापकर्मभ्यो ब्राह्मणः स विधीयते ॥ ३१ ॥
शूद्रोऽपि ज्ञानसम्पन्नो ब्राह्मणादधिको भवेत् ।
ब्राह्मणो विगताचारः शूद्रादप्यवरो भवेत् ॥ ३२ ॥
न सुरां सन्धयेद्यस्तु आपणेषु गृहेषु च ।
न विक्रीणाति च तथा सच्छूद्रो हि स उच्यते ॥३३॥

यस्य का स्फुटमेव जातिरपरा कृत्यात्परं मेदिनी यद्वा व्याहृतिरेकतामधिगता यच्चान्यधर्मं ययौ । यच्चैकाखिलभावभेदनिधनोत्पत्तिस्थितिव्यापिनी किं नासौ प्रतिपत्तिगोचरपथं यायाद्विभक्त्या नृणाम् ।३४।

इति भवि० पु० ब्राह्मप० ४४ त्तमेऽध्याये च वचनैर्वृत्तानां गुणानां च वर्णसम्पादकत्वं न नित्या ब्राह्मणत्वादिजातिरिति स आह । किं च "धर्मराज उवाच" इत्यारभ्य—

पण्डितो विश्रुतः पुत्रः स वै नाम्ना युधिष्ठिरः ।
वैशम्पायनमागत्य प्राञ्जलिः परिपृच्छति ।
के च ते ब्राह्मणाः प्रोक्ताः ? किं वा ब्राह्मणलक्षणम् ?
एतदिच्छामि भो ज्ञातुं तद्भवान् व्याकरोतु मे ॥

इति प्रश्ने 'वैशम्पायन उवाच' इत्युक्त्वा—

क्षान्त्यादिभिर्गुणैर्युक्तस्त्यक्तदण्डो निरामिषः ।
न हन्ति सर्वभूतानि प्रथमं ब्रह्मलक्षणम् ॥
यदा सर्वं परद्रव्यं पथि वा यदि वा गृहे ।
अदत्तं नैव गृह्णाति द्वितीयं ब्रह्मलक्षणम् ॥
त्यक्त्वा क्रूरस्वभावन्तु निर्ममो निष्परिग्रहः ।
मुक्तश्चरति यो नित्यं तृतीयं ब्रह्मलक्षणम् ॥
देवमानुषनारीणां तिर्यग्योनिगतेष्वपि ।
मैथुनं हि सदा त्यक्तं चतुर्थं ब्रह्मलक्षणम् ॥
सत्यं शौचं दया शौचं शौचमिन्द्रियनिग्रहः ।
सर्वभूते दया शौचं तपश्शौचञ्च पञ्चमम् ॥
पञ्चलक्षणसम्पन्न ईदृशो यो भवेद् द्विजः ।

तमहं ब्राह्मणं ब्रूयां शेषाः शूद्रा युधिष्ठिर ॥
न कुलेन न वा जात्या क्रियाभिर्ब्राह्मणो भवेत् ।
चण्डालोऽपि हि वृत्तस्थो ब्राह्मणः स युधिष्ठिर ॥

इत्यादि । तथा च कर्मकृतमेव ब्राह्मण्यमिति चेदत्र ब्रूमः—एतेषु हि वचनेषु द्विजोद्देशेन गुणविशेषाणां विधानेन जातिब्राह्मण्यमेकमवश्यमङ्गीकर्तव्यम् । तथा च जातिब्राह्मणस्य सत उक्तविधानां गुणानां सम्पादेन श्रेष्ठत्वमित्येवाशयः, न तु कर्मकृतं ब्राह्मण्यमिति । अत एव—

मात्रश्च ब्राह्मणश्चैव श्रोत्रियश्च ततः परम् ।
अनूचानस्तथा भ्रूण ऋषिकल्प ऋषिर्मुनिः ॥
इत्येतेऽष्टौ समुद्दिष्टा ब्राह्मणाः प्रथमं श्रुतौ ।
तेभ्यः (षां) परः परः श्रेष्ठो विद्यावृत्तविशेषतः ।
इति याज्ञ०स्मृ०व्या०१।२०० । ब्राह्मणानुद्दिश्य—
ब्राह्मणानां कुले जातो जातिमात्रो यदा भवेत् ।
अतः क्रियाविहीनः स मात्र इत्यभिधीयते ।
एकोद्देश्यमतिक्रम्य वेदस्यादानवानृजुः ।
स ब्राह्मण इति प्रोक्तो निभृतं सत्रवान् घृणी ॥
एकां शाखां सकल्पां च षड्भिरङ्गैरधीत्य च ।
षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित् ॥
वेदवेदाङ्गतत्त्वज्ञः शुद्धात्मा पापवर्जितः ।
शेषं श्रोत्रियवत्प्राप्तः सोऽनूचान इति स्मृतः ॥
अनूचानगुणोपेतो यज्ञस्वाध्याययन्त्रितः ।
भ्रूण इत्युच्यते प्राज्ञैः शेषभोजी जितेन्द्रियः ॥
लौकिकं वैदिकं चैव सर्वं ज्ञानमवाप्य यः ।

आश्रमस्थो वशी नित्यमृषिकल्प इति स्मृतः ॥
ऊर्ध्वरेतास्तपस्युग्रो नियताशी त्वसंशयी ।
शापानुग्रहयोः शक्तः सत्यसन्धो भवेदृषिः ॥
निवृत्तः सर्वतत्त्वज्ञः कामक्रोधविवर्जितः ।
ध्यानस्थो निष्क्रियो दान्तस्तुल्यमृत्काञ्चनो मुनिः ॥

इति या० व्या० १।२०० देवलेन गुणैर्भेदाष्टकप्रतिपादनमुत्तरोत्तरं श्रैष्ठ्यप्रतिपादनं च सङ्गच्छते। अन्यथा त्वन्मते शूद्रत्वब्राह्मणत्वादिजातेर्जन्मसिद्धत्वाभावेन तत्तत्कर्मानुष्ठाने शूद्रत्वं ब्राह्मणत्वमित्येव सिद्धान्ताश्रयेण यस्य कस्य वा वेदाध्ययनादिकर्मभिस्तन्तमुद्दिश्योक्तैर्ब्राह्मणयादिजातिमत्त्वसम्भवेन पूर्वोक्तिस्तथा 'न स्त्रीशूद्रौ वेदमधीयाताम्' इति तथा 'श्रवणे त्रपुजतुभ्यां श्रोत्रपूरणमुच्चारणे जिह्वाच्छेदो धारणे हृदयविदारणम्' इति ब्रह्मसूत्रशांकरभाष्य उक्तिस्तथा—'स्त्रीशूद्रद्विजबन्धूनां न वेदश्रवणं मतम्। इति भारतमाख्यानं कृपया मुनिना कृतम्', इति चोक्तिरयुक्ता स्यात्। मम तु शूद्रत्वादीनां जातीनां जन्मसिद्धत्वेन कर्ममात्रसाध्यत्वाभावेन तथोक्तियुक्तैव। किंच त्वन्मते गुणैरेव कर्मणैव च जातिरित्यङ्गीकारेण पराधीनत्वमूर्खत्वाज्ञानशून्यत्वाविवेकित्वधर्माधर्मविचारशून्यत्वमन्दबुद्धित्वसेवकत्वजडत्वाशुचित्वोपदेशानर्हत्वादिकानामेव शूद्रत्वप्रयोजकत्वेन तादृशाय शूद्राय वेदवागुपदेष्टव्येत्यर्थापत्त्योपदेशानर्हस्योपदेशोक्तेरस्या वेदवाचः स्वोक्तिव्याघातेनोन्मत्तप्रलपितत्वापत्तिः।

किञ्चात एव—

'शूद्रस्य द्विजशुश्रूषा परमो धर्म उच्यते ।
अन्यथा कुरुते किञ्चित्तद्भवेत्तस्य निष्फलम् ॥'

इति पराशरोक्तिः सङ्गच्छते । त्वन्मते तु कार्यान्तरकरणे सामर्थ्यरहितस्यैव शूद्रत्वेन तस्य शुश्रूषायामयोग्यत्वेन तस्याः परमधर्मत्वोक्तेस्तथा शुश्रूषातिरिक्तकार्यान्तरकरणे सामर्थ्यस्याप्यभावेन तदाश्रयणे तस्य नैष्फल्योक्तेश्चासङ्गतिः ।

नचैवं—'शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ।
क्षत्रियाज्जातमेवं तु विद्याद्वैश्यात्तथैव च ॥'

इति (मनुः १। ६५) तथा—

'शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैव शूद्रताम् ।
क्षत्रियो याति विप्रत्वं वैश्यं विद्यात्तथैव च ॥'

इति भविष्ये ब्राह्मपर्वणि ४० त्तमेऽध्याये, तथा—

'योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥'

इति (मनु० २। १६७) तथा—

'शूद्रयोनौ हि जातस्य सद्गुणानुपतिष्ठतः ।
वैश्यत्वं भवति ब्रह्मन् क्षत्रियत्वं तथैव च ।
आर्जवे वर्तमानस्य ब्राह्मण्यमभिजायते ॥'

इति महाभारते चोक्तिरयुक्ता स्यात् । यथाविधितत्तत्सवर्णोढमातापितृजन्यत्वादिगुणकस्यैव त्वन्मते तत्तज्जातिप्रयोजकत्वोक्तेरिति वाच्यम्; अत्र ब्राह्मणतां शूद्रतां वैश्यत्वं क्षत्रियत्वमिति शब्दानां ब्राह्मणतुल्यतां शूद्रतुल्यतां वैश्यतुल्यतां क्षत्रियतुल्यतां चेति क्रमेणार्थाश्रयणेनारोपितक्षत्रियत्ववैश्यत्वशूद्रतामित्यर्थेनादोषात् । तत्र ब्राह्मणतौल्यं सव्यवहारयोग्यतयाऽऽदरणीयत्वादिना, शूद्रतौल्यं वैदिककर्मानर्हत्वेन सव्यवहारायोग्यत्वेनानादरणीयत्वेन पङ्क्त्यपावनत्वादिना, वैश्यतौल्यं तत्तदितरलोकोपकारकसाहित्य-

साम्येन, क्षत्रियतौल्यं ब्राह्मणापन्निवर्तकेन कार्यकरणेन दानादिना च। यथा व्यवहारार्थं कल्पिते गुरुप्रतिनिधौ गुरुतुल्यत्वमेव, न तु गुरुत्वम्। यथा वा पत्युः श्राद्धे श्राद्धभोक्तरि पतितुल्यत्वम्, न तु पतित्वम्। यथावा पत्न्याः श्राद्धे श्राद्धभोक्तरि न पत्नीत्वम्, किन्तु तत्तुल्यत्वम्, यथा वा मातुः श्राद्धे श्राद्धभोक्तरि न मातृत्वम्, किन्तु मातृतुल्यत्वम्। यथावा पितुः श्राद्धे श्राद्धभोक्तरि न पितृत्वम्, किन्तु पितृतुल्यत्वम्। अत्र सर्वत्र तत्तत्तौल्यं तत्तत्कार्यप्रयोजकतत्तद्धर्मस्य तावत्कालपर्यन्तमेव। क्वचित्साक्षादाश्रयणात्, क्वचिदारोपाच्चेति दिक्। एवं च त्वन्मते वृत्तैरेव गुणैरेव वा वृत्तगुणाभ्यामेव वा शूद्रत्वादीनामङ्गीकारे उक्तदोषध्रौव्यात् जातिरेव शूद्रत्वादिरभ्युपगन्तव्येति सिद्धम्।

ननु 'सन्ध्यां नोपासते ये तु ब्राह्मणो हि विशेषतः। स जीवन्नेव शूद्रः स्यान्मृतः श्वा चैव जायते, इति (दक्षः) तथा 'अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः। सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः' इति (मनु० २।३६) वचनाभ्यामकृतसन्ध्यस्य शूद्रत्वं तथोक्तकालेऽनुपनीतस्य व्रात्यत्वं चोच्यते। तच्चैतन्न युज्यते, सवर्णोढसवर्णाजन्यत्वरूपतत्तल्लक्षणानामत्र सद्भावेन ब्राह्मणत्वस्य क्षत्रियत्वस्य वैश्यत्वस्य च तत्राहानेः। न चाभ्यां ब्राह्मणे ब्राह्मणत्वं शूद्रत्वं चेत्युभयं व्रात्यत्वं ब्राह्मणत्वक्षत्रियत्वान्यतमत्वं चास्तीत्युच्यत इति वाच्यम्; आद्ये सर्वं वाक्यमिति न्यायेन शूद्र एव स्यादित्यर्थस्यैव तेन वाच्यत्वात्। ब्राह्मणोढब्राह्मणीजन्ये शूद्रोढशूद्राजन्यत्वस्य चैकस्मिन् परस्परविरुद्धत्वेन तथोक्त्ययोगाच्च। द्वितीये 'तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः, इति तेन तुल्यमिति सूत्रे महाभाष्ये वचनेन जात्या (जन्ममात्रेण) ब्राह्म-

ब्राह्मण्यापेक्षया तपःश्रुतसम्बद्धोत्तमब्राह्मण्यप्राप्तियोग्योपनयनकालातिक्रमेणापकृष्टजातिमात्रब्राह्मण्यमेव स्यान्नोत्कृष्टब्राह्मण्यमित्याशयात्। न च छिन्नपुच्छे शुनि श्वत्वव्यवहारवदेकदेशविकृतन्यायेनात्राप्युत्तमब्राह्मण्यमस्त्येवेति वाच्यम्; योनितपःश्रुतानां समुदितानां मुख्यसम्पादकानां मध्ये एकस्य योनिसम्बन्धस्य सत्त्वेऽप्यन्ययोर्द्वयोरभावेन भूयोऽभिव्यञ्जकदर्शनाभावेनार्धविकारेऽर्धाधिकविकारे चैकदेशविकृतन्यायाप्रवृत्तेः। किञ्चातिदिश्यमानधर्मविरुद्धधर्मप्रयोज्यकार्याप्रवर्तकत्वस्यातिदेशस्वभावसिद्धत्वेन शूद्रत्वस्य व्रात्यत्वस्यातिदेशो यत्र, तत्र तद्विरुद्धम् ब्राह्मणत्वं नेत्यदोषात्। न च सिंहो माणवक इत्यादाविवोभयथापि व्यवहारः स्यादेवाविरोधादिति वाच्यम्; दृष्टान्तवैषम्यात् इति चेन्न; दत्तोत्तरत्वात्। न ह्यत्र वयं दृष्टान्तदार्ष्टान्तिकयोः किमपि वैषम्यं पश्यामः। शीलमात्रसम्पन्नो हि शूद्रोऽपि शीलसम्पन्नत्वात् ब्राह्मणाभिन्नोऽपि ब्राह्मणपदेनैवं शीलरहितो ब्राह्मणोऽपि सेवादिगुणसम्पन्नत्वात् शूद्रपदेन चात्र व्यवह्रियते। यथा सिंहभिन्नोऽपि माणवकः सिंहगतगाम्भीर्यादिगुणयोगात्सिंहपदेन व्यवह्रियत इति न कोऽपि विशेषः।

विचारत्रय्यां तु लौकिकसरण्या सरसमयं विषयो विचारित इति चातुर्वर्ण्यविषये विचारत्रयीवाक्यान्यपि यथावसरमत्र विलिखामः। तद्यथा—

"किं सन्ति वर्णाः? किं त्वमन्धोऽसि? स्थिरचरव्याप्ता अपि न दृश्यन्ते? तर्हि कैर्दृश्यन्ते? येषु न कामचारिता। तर्हि बहवः कामचारिणः? तर्हि न पश्यन्ति यथा पशवः। पशवो हि गेहे गेहे भुञ्जते, न मनुष्याः। मनुष्यास्तु यथा हीरकादौ परीक्षयन्ति, तथा

सर्ववस्तुषु। परीक्षाक्रमं लब्धवता किं न परीक्ष्येत। कः क्रमः? सत्त्वरजस्तमसां विवेकोऽनवद्यः क्रमः। इत्थं सः। सात्त्विकराजसः, राजससात्त्विकः, सात्त्विकतामसः, तामससात्त्विकः, इति प्रधानगुणभावेन वर्तमाना गुणा वर्णा उच्यन्ते। ते च क्रमेण ब्राह्मणक्षत्रियवैश्यशूद्राः। ज्ञानप्रधानो भोगगुणो ब्राह्मणः। भोगप्रधानो ज्ञानगुणः क्षत्रियः। लोभप्रधानो ज्ञानगुणो वैश्यः। मोहप्रधानः शास्त्रगुणः शूद्रः। आद्ययोस्तमः सन्धिप्रवेशि, रज इतरयोः। ननु किं गुणा एव जातयो ब्राह्मणत्वादयः? तत्त्वेऽन्यत्र गुणेषु सत्त्वेपि न वर्णा ब्राह्मणादय इति चेत्, सन्ति गुणा अन्यत्रापि खण्डे देशे वा, परन्तु न तेषां विवेकः। ननु त्वदुक्तविवेके सति स्युर्ब्राह्मणादय इति चेत्, स एव तु दुर्लभः। ननु सत्यपि विवेके ज्ञानपराक्रमादयो न दृश्यन्ते। दृश्यन्ते यथाकालम्। यथा नद्यो बहुगम्भीरा अपीदानीं पानोपक्लृप्तिमात्रजलाः, तथा ज्ञानपराक्रमादयः कालपरतन्त्रा इति।

तत्रैवाग्रेऽपि—"आस्तां प्रसक्तानुप्रसक्तम्। प्रकृतन्तु सति गुणविवेकेऽन्यत्रापि ब्राह्मणादयो वर्णा उत्तिष्ठेरन्निति पूर्वपक्षस्योत्तरम्। तदिदम्—यत् भूयान् वर्णविवेकः, तत्रैव कालमहिम्ना विलोपप्रसङ्गः। कथमन्यत्र तत्सम्भव इति चिन्त्यम्। आकस्मिकस्य स्थायित्वायोगात्। यथाकथञ्चित्सम्भवेऽपि न ब्राह्मणत्वादिजातयः सिद्ध्यन्ति। गुणानां जात्युपाधीनां न जातित्वम्; गुणानां परिणामित्वाज्जातीनां नित्यत्वात्। ननु द्वे एव जाती स्त्रीत्वं पुंस्त्वं चेति। कथम्? आकारभेदात्। तर्हि बह्व्यो जातय उररीकृताः। डित्थत्वाद्याकारभेदजातेः। यद्युपाधिभेदो जातिभेदहेतुस्तर्हि स्वभावभेदोऽपि जातिभेदहेतुरिति वचनमप्रतिबद्धम्।

नन्वङ्गीक्रियन्ते जातयः। फलानि तु न दृश्यन्ते। मा दृश्यन्तां फलानि, जातयस्त्वङ्गीकार्या एवाम्रत्वादिवत्। यतस्तेषामाम्रादीनां पूर्णं रूपं फलकाले, तदभावेऽपीतरत्र काले आम्रत्वादि। तथा ज्ञानपराक्रमनीतिनैपुण्यसेवाकौशलरूपफलादर्शनेऽपि ब्राह्मणत्वादयोऽवगन्तव्याः; कालान्तरे फलसम्भवात्। जातिव्यञ्जकोपाध्युपलम्भो यावद्यथाकथञ्चिदपि। व्यञ्जकोपाधीनां कालतन्त्रत्वेन बलाबलं कादाचित्कम्। यदा तु न किञ्चिदभिव्यञ्जकम्, तदा नाङ्गीकार्या जातयः। तथाच न कामचारिता ब्राह्मणादिषु" इति।

अन्ते चास्माकं वज्रसूच्युपनिषदर्थविवेचनमेकमेवावशिष्टमिति तत्करणेन प्रकृतं विषयमुपसंहर्तुमिच्छामः। तत्र प्रथमं वज्रसूच्युपनिषदेव यथाक्षरं विलिख्यते। तद्यथा—

"ब्रह्मक्षत्रियवैश्यशूद्रा इति चत्वारो वर्णाः, तेषां वर्णानां ब्राह्मण एव प्रधान इति वेदवचनानुरूपं स्मृतिभिरप्युक्तम्। तत्र चोद्यमस्ति-को वा ब्राह्मणो नाम? किं जीवः, किं देहः, किं जातिः, किं ज्ञानं, किं कर्म, किं धार्मिक इति? तत्र प्रथमो जीवो ब्राह्मण इति चेत्तन्न; अतीतानागतानेकदेहानां जीवस्यैकरूपत्वात्, एकस्यापि कर्मवशादनेकदेहसम्भवात्, सर्वशरीराणां जीवस्यैकरूपत्वाच्च। तस्मान्न जीवो ब्राह्मण इति। तर्हि देहो ब्राह्मण इति चेत्तन्न; आचण्डालादिपर्यन्तानां मनुष्याणां पाञ्चभौतिकत्वेन देहस्यैकरूपत्वात्, जरामरणधर्माधर्मादिसाम्यदर्शनात्, ब्राह्मणः श्वेतवर्णः क्षत्रियो रक्तवर्णो वैश्यः पीतवर्णः शूद्रः कृष्णवर्ण इति नियमाभावात्, पित्रादिशरीरदहने पुत्रादीनां ब्रह्महत्यादिदोषसम्भवाच्च। तस्मान्न देहो ब्राह्मण इति। तर्हि जातिर्ब्राह्मण इति

चेत्तन्न ; तत्र जात्यन्तरजन्तुष्वनेकजातिसम्भवा महर्षयो बहवः सन्ति । ऋष्यशृङ्गो मृग्यः । कौशिकः कुशात् । जाम्बूको जम्बूकात् । वाल्मीको वल्मीकात् । व्यासः कैवर्तकन्यायाम् । शशपृष्ठात् गौतमः । वसिष्ठ उर्वश्याम् । अगस्त्यः कलशे जात इति श्रुतत्वात् ।

एतेषां जात्या विनाप्यग्रे ज्ञानप्रतिपादिता ऋषयो बहवः सन्ति । तस्मान्न जातिर्ब्राह्मण इति । तर्हि ज्ञानं ब्राह्मण इति चेत्तन्न ; क्षत्रियादयोऽपि परमार्थदर्शिनोऽभिज्ञा बहवः सन्ति । तस्मान्न ज्ञानं ब्राह्मण इति । तर्हि कर्म ब्राह्मण इति चेत्तन्न ; सर्वेषां प्राणिनां प्रारब्धसंचितागामिकर्मसाधर्म्यदर्शनात् । कर्माभिप्रेरिताः सन्तो जनाः क्रियाः कुर्वन्तीति । तस्मान्न कर्म ब्राह्मण इति । तर्हि धार्मिको ब्राह्मण इति चेत्तन्न ; क्षत्रियादयो हिरण्यदातारो बहवः सन्ति । तस्मान्न धार्मिको ब्राह्मण इति । तर्हि को वा ब्राह्मणो नाम ? यः कश्चिदात्मानमद्वितीयं जातिगुणक्रियाहीनं षड्मिषडभावेत्यादिदोषरहितं सत्यज्ञानानन्तानन्दस्वरूपं स्वयं निर्विकल्पमशेषकल्पाधारमशेषभूतान्तर्यामित्वेन वर्तमानमन्तर्बहिश्चाकाशवदनुस्यूतमखण्डानन्दस्वभावमप्रमेयमनुभवैकवेद्यमपरोक्षतया भासमानं करतलामलकवत्साक्षादपरोक्षीकृत्य कृतार्थतया कामरागादिदोषरहितः शमदमादिसम्पन्नो भावमात्सर्यतृष्णाशामोहरहितो दम्भाहंकारादिभिरसंस्पृष्टचेता वर्तते । एवमुक्तलक्षणो यः, स एव ब्राह्मण इति श्रुतिस्मृतिपुराणेतिहासानामभिप्रायः । अन्यथा हि ब्राह्मणत्वसिद्धिर्नास्त्येव" इति ॥

[ ब्रह्मर्षित्वस्य ब्राह्मणजातिरूपत्वाभावे प्रमाणपरीक्षणम् ]

एतेन—विश्वामित्रब्राह्मण्यमपि व्याख्यातम्। विश्वामित्रस्य हि ऋचीकमहर्षेरनुग्रहविशेषेण ब्रह्मर्षित्वमेव प्राप्तम्, न तु ब्राह्मणजातिरिति केचन मन्यन्ते। एतेषामयमाशयः—सत्यम्—

किमेतदिति तत्त्वेन प्रब्रूहि भरतर्षभ।
देहान्तरमनासाद्य कथं स ब्राह्मणोऽभवत्॥
श्रूयतां पार्थ तत्त्वेन विश्वामित्रो यथा पुरा।
ब्राह्मणत्वं गतस्तात ब्रह्मर्षित्वं तथैव च॥
तस्मात्सा ब्राह्मणं श्रेष्ठं माता ते जनयिष्यति॥

इति प्रश्नोत्तरादिभिर्विश्वामित्रस्य ब्राह्मणत्वजातिरपि समुत्पन्नेति प्रतीयते, तथापि वयम्पश्यामो विश्वामित्रस्य ब्रह्मर्षित्वमेव तस्मिन् शरीरे समुत्पन्नम्, न तु ब्राह्मणत्वम्। ब्रह्मर्षित्वप्रयुक्तैव ब्राह्मणत्वप्रसिद्धिरपि। अत एव—विश्वामित्रं चाजनयद्गाधिभार्या यशस्विनी। ऋषेः प्रसादाद्राजेन्द्र ब्रह्मर्षिं ब्रह्मवादिनम्॥ इति—ब्रह्मर्षित्वेनैव विश्वामित्रोत्पत्तिराम्नायमानोपपद्यते। अन्यथा हि तद्विरोध आपद्येत। स्पष्टं च ब्राह्मणत्वजातिर्विश्वामित्रस्य नासीदित्यनुशासनपर्वणि पूर्वोक्तश्लोकादनन्तरमेव सप्तमाध्याये विवेचितम्। तद्यथा—

ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः।
क्षत्रियः सोऽप्यथ तथा ब्रह्मवंशस्य कारकः॥ इति॥

अनेन स्पष्टमिदं प्रतिपाद्यते क्षत्रियस्यैव सतो विश्वामित्रस्य ब्रह्मर्षेर्ब्रह्मवंशकारकत्वमिति। ब्रह्मर्षेस्तु क्षत्रियस्यापि शास्त्रप्रामाण्येन पौत्रमारभ्य ब्राह्मण्यमिति सप्तमानन्तरं च ब्राह्मणोत्तमत्वं चेति वीतहव्योपाख्याने स्पष्टमेव सूच्यतेऽनन्तराध्याये। तद्यथा—

भृगोर्वचनमात्रेण स च ब्रह्मर्षितां गतः।
वीतहव्यो महाराज ब्रह्मवादित्वमेव च॥
तस्य गृत्समदः पुत्रो रूपेणेन्द्र इवापरः।
शक्रस्त्वमिति यो दैत्यैर्निगृहीतः किलाभवत्॥
ऋग्वेदे वर्तते चाग्र्या श्रुतिर्यस्य महात्मनः।
यत्र गृत्समदो राजन् ब्राह्मणैः स महीयते॥
स ब्रह्मचारी विप्रर्षिः श्रीमान् गृत्समदोऽभवत्।
पुत्रो गृत्समदस्यापि विप्रः सावैनसोऽभवत्॥
सावैनसस्य पुत्रो वै वितस्त्यस्तस्य चात्मजः।
वितस्त्यस्य सुतस्तस्य शिवस्तस्यात्मजोऽभवत्॥
श्रवास्तस्य सुतश्चर्षिः श्रवसश्चाभवत्तमः।
तमसश्च प्रकाशोऽभूत्तनयो द्विजसत्तमः॥
एष ते कथितो वंशो राजन् गार्त्समदो मया।
विस्तरेण महाराज किमन्यदनुपृच्छसि॥ २६७॥

इति। अत्र हि वीतहव्ये तत्पुत्रे च ब्रह्मर्षित्वं प्रतिपाद्य गृत्समदपुत्रस्य सावैनसस्यैव यद्विप्रत्वमाम्नायते, यच्च गृत्समदात्सप्तमस्यैव द्विजोत्तमत्वमाम्नायते, यदपि च—एष ते कथितो वंशो राजन् गार्त्समदो मया—इति वंशस्य गृत्समदानन्तरमेव प्रवृत्तिरिति प्रतिपादितम्, तत्सर्वं ब्रह्मर्षीणां गोत्रप्रवर्तकत्वे मन्त्रद्रष्टृत्वे च महर्षीणां दैवतस्य वाऽनुग्रहविशेषेण सत्यपि ब्रह्मवंशकारकत्वं पुत्रद्वारैव। तत्रापि पुत्रतः सप्तमस्यैव मुख्यं ब्राह्मणत्वमिति च स्पष्टमेव गमयति। अन्यथा हि "वीतहव्यश्च नृपतिः श्रुतो मे विप्रतां गतः। तदेव तावद्गाङ्गेय श्रोतुमिच्छाम्यहं विभो" इति वीतहव्यब्राह्मण्यप्रश्ने कथं 'एष ते कथितो वंशो राजन् गार्त्स-

मदो मया, इति वीतहव्यवंशोऽयमित्युपसंहारमकृत्वा गार्त्समदवंश इति गृत्समदमारभ्यैव वंशानुकीर्तनमुपपद्यते ? अतोऽवश्यमिदमूरीकर्तव्यं यत्—क्षत्रियाणां विश्वामित्रादीनामन्यजातीयानां व्यासादीनां च ब्रह्मर्षित्वप्रयुक्तो गौण एव ब्राह्मणत्वव्यवहारो न तु मुख्यो ब्राह्मणत्वजातिनिबन्धन इति ।

[ उक्तार्थेआर्ष्टिषेणोपाख्यानोपष्टम्भः ] व्यक्तं चैतदार्ष्टिषेणोपाख्यानेऽपि संसूच्यते । तद्यथा शल्यपर्वणि चत्वारिंशत्तम एकचत्वारिंशत्तमे चाध्याये—

यत्रार्ष्टिषेणः कौरव्य ब्राह्मण्यं संशितव्रतः ।
तपसा महता राजन् प्राप्तवानृषिसत्तमः ॥३६॥
सिन्धुद्वीपश्च राजर्षिर्देवापिश्च महातपाः ।
ब्राह्मण्यं लब्धवान्यत्र विश्वामित्रस्तथा मुनिः ३७
जनमेजय उवाच—
आर्ष्टिषेणस्तथा ब्रह्मन् विपुलं तप्तवांस्तपः ।
सिन्धुद्वीपे कथं चापि ब्राह्मण्यं लब्धवांस्तथा॥१॥
देवापिश्च कथं ब्रह्मन् विश्वामित्रश्च सत्तम ।
तन्ममाचक्ष्व भगवन् परं कौतूहलं हि मे ॥२॥
पुरा कृतयुगे राजन् आर्ष्टिषेणो द्विजोत्तमः ।
वसन् गुरुकुले नित्यं नित्यमध्ययने रतः ॥३॥
तस्य राजन् गुरुकुले वसतो नित्यमेव च ।
समाप्तिं नागमद्विद्या नापि वेदा विशां पते ॥४॥
स निर्विण्णस्ततो राजन् तपस्तेपे महातपाः ।
ततो वै तपसा तेन प्राप्य वेदाननुत्तमान् ॥ ५ ॥
स विद्वान् वेदयुक्तश्च सिद्धश्चाप्यृषिसत्तमः ।

तत्र तीर्थे वरान् प्रादात् त्रीनेव सुमहातपाः ॥
अस्मिंस्तीर्थे महानद्यां अद्यप्रभृति मानवः ।
आप्लुतो वाजिमेधस्य फलं प्राप्स्यति पुष्कलम् ॥
अद्यप्रभृति नैवात्र भयं व्यालाद्भविष्यति ।
अपि चाल्पेन कालेन फलं प्राप्स्यति पुष्कलम् ।
एवमुक्त्वा महातेजा जगाम त्रिदिवं मुनिः ।
एवं सिद्धः स भगवानार्ष्टिषेणः प्रतापवान् ॥
तस्मिन्नेव तदा तीर्थे सिन्धुद्वीपः प्रतापवान् ।
देवापिश्च महाराज ब्राह्मण्यं प्रापतुर्महत् ॥
तथाच कौशिकस्तात तपो नित्यो जितेन्द्रियः ।
तपसा वै सुतप्तेन ब्राह्मणत्वमवाप्तवान् ॥ ११ ॥

अत्र हि सन्दर्भे आर्ष्टिषेणादीनां कथं ब्राह्मण्यमिति प्रश्नोत्तरदानमुखेनार्ष्टिषेणस्य सर्वविद्याऽनधिगमेन दुःखितस्य तपसा सर्वविद्यावाप्तिरेव वर्णिता, न तु ब्राह्मणत्वजातिरिति सर्वविदितमिदम्। अत्र च प्रश्नोत्तरयोर्वैयधिकरण्यवारणार्थं इदमवश्यमूरीकर्तव्यं यत् विद्यावाप्तिरूपमेव ब्राह्मण्यमार्ष्टिषेणविश्वामित्रादीनां विवक्षितम्, न तु ब्राह्मणत्वजातिरिति । तथाच विश्वामित्रादीनामपि न ब्राह्मणत्वजातिरित्येव सिद्धान्तो युक्तः । एवञ्च सति ह्यानुशासनिके पर्वणि—

"ब्राह्मणत्वं गतस्तात ब्रह्मर्षित्वं तथैव च (अ० ७)
ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः ॥
विश्वामित्रो महाराज यथा ब्राह्मणतां गतः ।
राजर्षिर्दुर्लभं प्राप्तो ब्राह्मण्यं लोकसत्कृतम् ॥
कथं प्राप्तं महाराज क्षत्रियेण महात्मना ।
विश्वामित्रेण धर्मात्मन् ब्राह्मणत्वं नरर्षभ ॥"

इत्यादिवचनेषु ब्राह्मणतादिपदेन ब्राह्मणशब्देन व्यवहार एव विवक्षितो न तु ब्राह्मणत्वजातिरिति सिद्धमिति न कोऽपि विरोधः।

परे तु—विश्वामित्रादीनां ब्राह्मणत्वजात्यङ्गीकारेऽपि न दोष इति धर्मप्रदीपीयजातिविवेकाद्यनुसारेण वर्णयन्ति। सर्वथा त्वीश्वरप्रसादसाध्यस्मरणलक्षणब्राह्मण्यं विश्वामित्रादीनामिव नेदानीन्तनानां शान्त्यादिगुणमात्रसम्पन्नानां सम्भवति।

[ इदानीमपि चातुर्वर्ण्यसत्त्वम्। ] अत्रावसरेऽस्माभिरिदमेव सूच्यते—यदिदानीं यदा शान्त्यादिगुणसम्पन्नाः सर्वश्रौतस्मार्तधर्मानुष्ठानपरा ब्राह्मणा विरलविरला वर्तन्ते, तदाऽपि न चातुर्वर्ण्याभावः। उक्तं हि महाभारतेऽनुशासनपर्वणि इन्द्रमतङ्गसंवादे—

ततस्तु द्विशते काले लभते काण्डपृष्ठताम्।
काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्तते॥

ततस्तु त्रिशते काले लभते जपतामपि।
तां च प्राप्य चिरं कालं तत्रैव परिवर्तते॥

ततश्चतुःशते काले श्रोत्रियो नाम जायते।

इति। अनेन हि जपतामात्रलाभेनापि कश्चनोत्कर्षः प्रतिपाद्यत एव। जपतापदेन च गायत्रीजपानुष्ठायित्वमेव विवक्षित इत्युक्तश्लोकव्याख्यायां स्पष्टम्। तथाच गायत्रीजपमात्रसक्तानामपि बहूनामवस्थानमात्रेणापि चातुर्वर्ण्यं व्यवस्थितं वर्तत इत्यूरीकर्तव्ये इदानीं यदा तत्र तत्राग्निहोत्रवैश्वदेवसर्पबल्युपाकर्मादिबहुविधकर्मजातानां श्रद्धयाऽनुष्ठानं वर्तते, तदा कथं वा चातुर्वर्ण्यं न परिपालनीयमिति सर्व एव विवेचयन्तु। सर्वथा तु चातुर्वर्ण्यं न कर्मकृतम्, किन्तु स्वभावसिद्धमेव।

[ वज्रसूच्युपनिषत्परीक्षणम् ] एतेन—वज्रसूच्युपनिषदपि—व्याख्याता । तत्र हि प्रथमं ब्रह्मक्षत्रियवैश्यशूद्रा इति चत्वारो वर्णास्तेषां ब्राह्मणो मुख्यः, तस्य मुख्यत्वे किं निमित्तमिति खलूपक्रमो वर्तत इति कथं चातुर्वर्ण्यव्यवस्थायामुक्तश्रुतिः प्रमाणं भवति ? यत्तु तत्र जात्यादिन निमित्तमिति वर्णितम्, तदिदमुत्कर्षनिमित्तत्वं जन्ममात्रादेर्नास्ति, किन्तु ब्रह्मज्ञानत एवेत्याशयमेव । नहि नित्यशुद्धबुद्धादिब्रह्मस्वरूपज्ञाननिमित्तं ब्राह्मण्यं कर्माधिकारप्रयोजकम्, प्रत्युत तद्विरुद्धमेवेति कर्माधिकारप्रयोकं ब्राह्मण्यादिकं व्यवहारनिष्ठैरादरणीयं जातिकृतमित्यङ्गीकारे न कोऽपि विरोधः ।

[भविष्यत्पुराणाद्युपष्टब्धपूर्वपक्षस्य तत्त्पुराणैरेव निरासः] यत्तु भविष्यपुराणवचनजातानि पूर्वमुपात्तानि, तानि तत्र पूर्वपक्षप्रकरणगतान्येव वर्तन्ते, न तु सिद्धान्तप्रकरणगतानि । अयमत्र सिद्धान्तप्रकरणगतो ग्रन्थसन्दर्भः । तद्यथा—

ब्रह्मोवाच—

इदं शृणु मया ख्यातं तर्कपूर्वमिदं वचः ।
युष्माकं संशये जाते कृते वै जातिकर्मणोः ॥
पुनर्वच्मि निबोधध्वं समासान्न तु विस्तरात् ।
संसिद्धिं यान्ति मनुजा जातिकर्मसमुच्चयात् ॥
सिद्धिं गच्छेद्यथा कार्यं दैवकर्मसमुच्चयात् ।
एवं संसिद्धिमायाति पुरुषो जातिकर्मणोः ॥
इत्येवमुक्तवान् पूर्वं शिष्याणां बोधने पुरा ।
योगीश्वरो महातेजाः समासान्न तु विस्तरात् ।

सुमन्तुरुवाच—

इति पृष्टः पुरा ब्रह्मा ऋषीन् प्रोवाच भारत ।

स वितर्कमिदं वाक्यं विप्रर्षे जातिकर्मणोः ॥
तस्मात्त्वया महाबाहो न कार्यो विस्मयो नृप ।
कार्तिकेयं प्रति सदा देवानां दुर्विदा गतिः ॥

इति भ० पु० ब्राह्मप० षष्ठिकल्पे ४५ तमेऽध्याये ॥

अनेन च स्पष्टमिदमवगम्यते यत्केवलं न जातिर्न वा कर्म विवेकहेतुः, किन्तूभयमपि । न ह्यत्र जातिनिषेधे केवलकर्मणैव जातिभेदसाधने च तात्पर्यम् । अन्यथा पूर्वोक्तेषु सन्दर्भेषु संस्कारादीनां जातिभेदनिमित्तत्वमतिप्रसङ्गेन यद्व्यवस्थापितम्, तत्कथमिवोपपद्येत ? अन्यथा कर्मणैव ब्राह्मण्यादिकं यदि ग्रन्थकृतोऽभिप्रेतम्, तर्हि शूद्रेष्वपि दृश्यमानत्वादध्ययनादिकं न निमित्तमिति व्यवस्थापनमसङ्गतमेव स्यात् । तदयं निष्कर्षः—यद्यपि ब्राह्मणमातापितृकत्वादिनापि जातिनिर्णयो भवति, तथापि कर्माधिकारप्रयोजकं ब्राह्मण्यं नोक्तजन्ममात्रेण, किन्तु जन्मकर्मोभाभ्यामपि । तथा च क्षत्रियादीनामपि कर्मत उत्कर्षे समानेऽपि ब्राह्मणानां जात्याप्युत्कर्षो वर्तत एवेति न दोषः । अनेन च विश्वामित्रब्राह्मण्यमपि व्याख्यातम् । तस्यापि तपोविशेषादिना मन्त्रसिद्ध्यादिरूपब्राह्मण्यमात्रलाभो न तु जातितोऽपि ब्राह्मण्यलाभ इत्यत्रैव पर्यवसानात्, अन्यथा विश्वामित्रब्राह्मण्यं कथमित्युपक्रम्योभयकृत एव ब्राह्मण्यादिविवेक इत्युपसंहारस्य च विरोधात् । यथा च विश्वामित्रादीनां ब्राह्मण्यं सर्वविद्याप्राप्तिनिमित्तं गौणमेव विवक्षितम्, तथा महाभारते शल्यपर्वान्तर्गतार्ष्टिषेणादिब्राह्मण्यादिग्रन्थविवेचनेनापि पूर्वमेव विवेचितम् । सर्वथा तूक्तभविष्यत्पुराणगतानां केषाञ्चन श्लोकानां पूर्वपक्षप्रकरणगतानामेवावष्टम्भेन कर्मकृतमेव ब्राह्मण्यमित्यादिव्यवस्थापनमधुनातनानां पूर्वापरसन्दर्भाप-

र्यालोचननिबन्धनमेव, नतु वस्तुतत्त्वविज्ञाननिबन्धनम्। कथमन्यथा प्रथमाध्यायादौ जातिमात्रेणापि ब्राह्मणादीनामुत्कर्षप्रतिपादनमुक्तपुराणगतमुपपद्येत ?

एतेन—( भविष्य० पु० १८४ )

सर्ववेदमयं विप्रं सर्वलोकमयं तथा।
अमाप्यावगतं वीर ब्राह्मणं न परीक्षयेत् ॥ ३७ ॥
तस्मात्संपूजयेदेनं न गुणांस्तस्य चिन्तयेत्।
केवलं चिन्तयेज्जातिं न गुणान् विनतात्मज ॥ ३८ ॥
तस्मादामन्त्रयेत्पूर्वं आसन्नं ब्राह्मणं बुधः।
यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतिताहृते ॥ ३९ ॥
दूरस्थान् पूजयेन्मूढो गुणाढ्यो नरकं व्रजेत्।
त्रयाणामपि वर्णानां जन्मतो ब्राह्मणः प्रभुः ॥
संसृष्टा ब्राह्मणाः पूर्वं तपस्तप्त्वा द्विजोत्तमाः ॥ १ ॥
जन्मना चोत्तमोऽयं च सर्वार्चां ब्राह्मणोऽर्हति ॥ ३॥
यस्माद्विष्णुमुखाद्विप्रः समुद्भूतः पुरा द्विजाः ॥१२ ॥

इति द्वितीयखण्डे पञ्चमाध्याये ॥ तथा—द्वितीयाध्याये—

लोकस्येह विवृद्ध्यर्थं मुखबाहूरुपादतः ॥ ५१ ॥
ब्रह्म क्षत्रं तथा चोभौ वैश्यशूद्रौ नृपोत्तम ॥ ५२ ॥
सर्वस्य राजन् सर्गस्य गुप्त्यर्थं च महाद्युते।
मुखबाहूरुपादानां पृथक्कर्माण्यकल्पयत् ॥ १२०॥
अध्यापनमध्ययनं यजनं याजनं तथा।
दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥ १२१ ॥
प्रजानां पालनं राजन् दानमध्ययनं तथा।

विषयेषु प्रसक्तिं च तथेज्यां क्षत्रियस्य तु ॥ १२२ ॥
पशूनां रक्षणं दानमिज्याऽध्ययनमेव च ।
वणिक्पथं कुसीदं च वैश्यस्य कृषिरेव च ॥ १२३ ॥
एकमेव तु शूद्रस्य कर्म लोके प्रकीर्तितम् ।
एतेषामेव वर्णानां शुश्रूषामनुपूर्वशः ॥ १२४ ॥
पुरुषस्य सदा श्रेष्ठं नाभेरुर्ध्वं नृपोत्तम ।
तस्मादपि शुचितरं मुखं तात स्वयम्भुवः ॥ १२५ ॥
तस्मान्मुखाद्द्विजो जात इतीयं वैदिकी श्रुतिः॥१२६॥
त्रयाणामिह वर्णानां भावाभावाय च द्विजः ।
भवेद्राजन्न सन्देहः तुष्टो भावाय वै द्विजः ॥१३४॥
अभावाय भवेत्क्रुद्धस्तस्मात्पूज्यतमो द्विजः ॥१३६॥
ब्रह्मत्वं कीदृशं विप्रो ब्रह्मलोकं च गच्छति ।
नाममात्रोऽथ किं विप्रो ब्रह्मत्वं ब्रह्मणः सदा ॥
याति ब्रह्मन् गुणाः के स्युर्ब्रह्मप्राप्तौ यथोच्यताम् ॥

सुमन्तुः—

ये प्रोक्ता वेदशास्त्रेषु संस्कारा ब्राह्मणस्य तु ।
गर्भाधानादयो ये च संस्कारा यस्य पार्थिव ॥१४२॥
चत्वारिंशत्तथाष्टौ च निर्वृत्ताः शास्त्रतो नृप ।
स याति ब्रह्मणः स्थानं ब्राह्मणत्वं च मानद ॥
संस्काराः सर्वथा हेतु ब्रह्मत्वे नात्र संशयः ॥१४३॥
जातकर्मादिसंस्कारान् वर्णानामनुपूर्वशः ।“अ० ३”
गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राजन् क्षत्रियस्य विनिर्दिशेत् ॥१५॥
द्वादशेऽब्दे तु गर्भात्तु वैश्यस्य व्रतमादिशेत् ।

ब्रह्मवर्चसकामेन कार्यं विप्रस्य पञ्चमे ॥ १६॥
बलार्थिना तथा राज्ञः षष्ठेऽब्दे कार्यमेव हि ।
अर्थकामेन वैश्यस्य अष्टमे कुरुनन्दन ॥१७॥
आषोडशाद् ब्राह्मणस्य सावित्री नातिवर्तते ।
द्वाविंशतेः क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥ १८ ॥
भवन्ति राजंश्चर्माणि व्रतिनां विविधानि च ।
कार्ष्णरौरवबास्तानि ब्रह्मक्षत्रविशां नृप ॥ २१ ॥
वसीरंश्चानुपूर्व्येण वस्त्राणि विविधानि च ।
ब्रह्मक्षत्रविशो राजन् शाणक्षौमाविकानि च ॥२२॥
मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्या विप्रस्य मेखला ।
क्षत्रियस्य च मौर्वी ज्या वैश्यस्य शणतान्तवी ॥२३॥
मुञ्जालाभे तु कर्तव्या कुशाश्मन्तकबल्वजैः ।
त्रिवृता ग्रन्थिनैकेन त्रिभिः पञ्चभिरेव च ॥२४ ॥
कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ।
शणसूत्रमयं राज्ञो वैश्यस्याविकसौत्रिकम् ॥ २५ ॥
ब्राह्मणो बैल्वपालाशौ तृतीयं प्लाक्षजं नृप ।
वाटखादिरौ क्षत्रियस्तु तथान्यं वेतसोद्भवम् ॥२६ ॥
पैलवौदुम्बरौ वैश्यस्तथाश्वत्थजमेव च ।
दण्डानेतान्महाबाहो धर्मतोऽर्हन्ति धारितुम् ॥ २७ ॥
केशान्तको ब्राह्मणस्य दण्डः कार्यः प्रमाणतः ।
ललाटसंमितो राज्ञः स्यात्तु नासान्तिको विशः ॥२८॥
२६ अध्याये प्रतिसर्गखण्डे—
कल्किनो वदनाज्जातो ब्राह्मणो वर्ण एव च ।
बाह्वोः क्षत्रं विशो जान्वोः शूद्रो वर्णस्तदङ्घ्रियोः ॥

गौरो रक्तस्तथा पीतः श्यामस्ते ब्राह्मणादयः ।
देव्याः शक्तिं समाधाय जनिष्यन्ति सुतान् बहून् ॥
एकविंशत् किष्किमिता मनुजा धर्मरूपिणः ।
जातिधर्मं समादाय यजिष्यन्ति सुरान् मुदा ॥

इत्यादिवचनानि—व्याख्यातानि । तथाच भविष्यपुराणमपि न कर्मब्राह्मण्यादावनुकूलम् । किम्बहुना सर्वाण्यपि पुराणानि जातिव्यवस्थां पुरस्कृत्यैव प्रवृत्तानि । सर्वत्रापि हि जन्मत एव सांकर्यान्नापितादिजातिविशेषाम्नानं हि दृश्यत एव । तत्र निदर्शनाथ केवलं ब्रह्मवैवर्तपुराणवचनानि संगृह्यन्ते । तद्यथा—

श्रीब्रह्मवैवर्ते दशमाध्याये सौतिरुवाच—
भृगोः पुत्रश्च च्यवनः शुक्रश्च ज्ञानिनां वरः ।
क्रतोरपि क्रिया भार्या वालखिल्यानसूयत ॥ १ ॥
त्रयः पुत्राश्चाङ्गिरसो बभूवुर्मुनिसत्तमाः ।
बृहस्पतिरुतथ्यश्च शम्बरश्चापि शौनक ॥ २ ॥
वसिष्ठस्य सुतः शक्तिः शक्तेः पुत्रः पराशरः ।
पराशरसुतः श्रीमान् कृष्णद्वैपायनो हरिः ॥ ३ ॥
व्यासपुत्रः शिवांशश्च शुकश्च ज्ञानिनां वरः ।
विश्रवाश्च पुलस्त्यस्य यस्य पुत्रो धनेश्वरः ॥ ४ ॥
शौनक उवाच—
अहो पुराणविदुषामतीव दुर्गमं वचः ।
न बुद्धं वचनं किञ्चिद्धनेशजन्मपूर्वकम् ॥ ५ ॥
अधुना कथितं जन्म धनेशस्येश्वरादिदम् ।
पुनर्भिन्नक्रमं जन्म ब्रवीषि कथमेव माम् ॥ ६ ॥
सौतिरुवाच—

बभूवुरेते दिक्पालाः पुरा च परमेश्वरात् ।
पुनश्च ब्रह्मशापेन स च विश्रवसः सुतः ॥ ७ ॥
गुरवे दक्षिणां दातुमुतथ्यश्च धनेश्वरम् ।
ययाचे कोटिस्वर्णं च यत्नतश्च प्रचेतसे ॥ ८ ॥
धनेशो विरसो भूत्वा तस्मै तद्दातुमुद्यतः ।
चकार भस्मसाद्विप्र पुनर्जन्म ललाभ सः ॥ ९ ॥
तेन विश्रवसः पुत्रः कुबेरश्च धनाधिपः ।
रावणः कुम्भकर्णश्च धार्मिकश्च विभीषणः ॥१०॥
पुलहस्य सुतो वात्स्यः शाण्डिल्यश्च रुचेः सुतः ।
सावर्णिर्गौतमाज्जज्ञे मुनिप्रवर एव सः ॥ ११ ॥
काश्यपः कश्यपाज्जातो भरद्वाजो बृहस्पतेः ।
स्वयं वात्स्यश्च पुलहात्सावर्णिर्गौतमात्तथा ॥ १२ ॥
शाण्डिल्यश्च रुचेः पुत्रो मुनिस्तेजस्विनां वरः ।
बभूवुः पञ्च गोत्राश्च एतेषां प्रवरा भवे ॥ १३ ॥
बभूवुर्ब्रह्मणो वक्त्रादन्या ब्राह्मणजातयः ।
ताः स्थिता देशभेदेषु गोत्रशून्याश्च शौनक ॥ १४ ॥
चन्द्रादित्यमनूनां च प्रवराः क्षत्रियाः स्मृताः ।
ब्रह्मणो बाहुदेशाच्चैवान्या क्षत्रियजातयः ॥१५॥
ऊरुदेशाच्च वैश्याश्च पादतः शूद्रजातयः ।
तासां सङ्करजातेन बभूवुर्वर्णसङ्कराः ॥ १६ ॥
गोपनापितभिल्लाश्च तथा मोदककूबरौ ।
ताम्बूलिस्वर्णकारौ च तथा वणिजजातयः ॥ १७ ॥
इत्येवमाद्या विप्रेन्द्र सच्छूद्राः परिकीर्तिताः ।
शूद्राविशोस्तु करणोऽम्बष्ठो वैश्याद्विजन्मनोः ॥ १८ ॥

विश्वकर्मा च शूद्रायां वीर्याधानं चकार सः ।
ततो बभूवुः पुत्राश्च नवैते शिल्पकारिणः ॥ १९ ॥
मालाकारः कर्मकारः शङ्खकारः कुविन्दकाः ।
कुम्भकारः कांस्यकारः षडेते शिल्पिनां वराः ॥ २० ॥
सूत्रधारश्चित्रकारः स्वर्णकारस्तथैव च ।
पतितास्ते ब्रह्मशापादयाज्या वर्णसंकराः ॥ २१ ॥

शौनक उवाच—

कथं देवो विश्वकर्मा वीर्याधानं चकार सः ।
शूद्रायामधमायाञ्च कथं ते पतितास्त्रयः ॥ २२ ॥
कथं तेषु ब्रह्मशापो बभूव केन हेतुना ।
हे पुराणविदां श्रेष्ठ तन्नः शंसितुमर्हसि ॥ २३ ॥

सौतिरुवाच—

घृताची कामतः कामवेशं चक्रे मनोहरम् ।
तां ददर्श विश्वकर्मा गच्छन्तीं पुष्करे पथि ॥ २४ ॥
आगच्छन्तविलोकाच्च प्रसादोत्फुल्लमानसः ।
तां ययाचे स शृङ्गारं कामेन हृतचेतनः ॥ २५ ॥
रत्नालंकारभूषाढ्यां सर्वावयवकोमलाम् ।
यथा षोडशवर्षीयां शश्वत्सुस्थिरयौवनाम् ॥ २६ ॥
बृहन्नितम्बभारार्तां मुनिमानसमोहिनीम् ।
अतिवेगकटाक्षेण लोलां कामार्तिपीडिताम् ॥ २७ ॥
तच्छ्रोणीं कठिनां दृष्ट्वा वायुनांशुकसंहृताम् ।
अतीवोच्चैः स्तनयुगं कठिनं वर्तुलाकृति ॥ २८ ॥
सस्मितं चारुवक्त्रञ्च शरच्चन्द्रविनिन्दकम् ।
पक्वबिम्बफलारक्तसोष्ठाधरमनोहरम् ॥ २९ ॥

सिन्दूरबिन्दुसंयुक्तं कस्तुरीबिन्दुभिः सह ।
कपालमुज्ज्वलं शश्वत्कपोलं मणिकुण्डलम् ॥ ३० ॥
तामुवाच प्रियां शान्तां कामशास्त्रविशारदः ।
कामाग्निवर्धनोद्योगि वचनं श्रुतिसुन्दरम् ॥ ३१ ॥

विश्वकर्मोवाच—

अयि क्व यासि ललिते मम प्राणाधिके प्रिये ।
मम प्राणांश्चापहृत्य स्थिरा भव क्षणं शुभे ॥ ३२ ॥
तवैवान्वेषणं कृत्वा भ्रमामि जगतीतलम् ।
स्वप्राणान् त्यक्तुमिष्टोऽहं त्वां न दृष्ट्वा हुताशने ॥३३॥
त्वं यासीति कामलोकं श्रुत्वा रम्भामुखेऽधुना ।
आगच्छन्नहमेवाद्य चास्मिन्वर्त्मन्यवस्थितः ॥३४॥
अहो सरस्वतीतीरे पुष्पोद्याने मनोहरे ।
सुगन्धिमन्दशीतेन वायुना सुरभीकृते ॥ ३५ ॥
रम कान्ते मया सार्धं यूना कान्तेन शोभिनि ।
विदग्धाया विदग्धेन सङ्गमो गुणवान् भवेत् ॥ ३६ ॥
स्थिरयौवनसंयुक्ता त्वमेव चिरजीवनी ।
कामुकी कोमलाङ्गी च सुन्दरीषु च सुन्दरी ॥३७॥
मृत्युञ्जयवरेणैव मृत्युकन्या जिता मया ।
कुबेरभवनं कृत्वा धनं लब्धं कुबेरतः ॥३८॥
रत्नमाला च वरुणाद्द्वायोः स्त्रीरत्नभूषणम् ।
वह्निशुद्धं वस्त्रयुगं वह्नेः प्राप्तं च वेतनात् ॥३९॥
कामशास्त्रं कामदेवाद्योषिद्रञ्जनकारणम् ।
शृङ्गारशिल्पं यत्किञ्चिल्लब्धं चन्द्राच्च दुर्लभम् ॥४०॥

रत्नमालां वस्त्रयुग्मं सर्वाणि भूषणानि च ।
तुभ्यं दातुं हृदि कृतं प्राप्तं तत्क्षण एव च ॥ ४१ ॥
गृहे तान्येव संस्थाप्य चागतोऽन्वेषणे तव ।
विरामे सुखसम्भोगे तुभ्यं दास्यामि साम्प्रतम् ॥ ४२ ॥
कामुकस्य वचः श्रुत्वा घृताची सस्मिता मुने ।
ददौ प्रत्युत्तरं शीघ्रं नीतियुक्तं मनोहरम् ॥ ४३ ॥

घृताच्युवाच—

त्वया यदुक्तं भद्रं तत्स्वीकारोऽधुनापि च ।
किन्तु सामयिकं वाक्यं ब्रविष्यामि स्मरातुर ॥ ४४ ॥
कामदेवालयं यामि कृत्वा वेशं च तत्कृते ।
यद्दिने यत्कृते यामो वयं तेषाञ्च योषितः ॥ ४५ ॥
अद्याहं कामपत्नी च गुरुपत्नी तवाधुना ।
त्वयोक्तमधुनेदं च पठितं कामदेवतः ॥ ४६ ॥
विद्यादाता मन्त्रदाता गुरुर्लक्षगुणैः पितुः ।
मातुः सहस्रगुणतो नास्त्यन्यस्तत्समो गुरुः ॥ ४७ ॥
गुरोः शतगुणैः पूज्या गुरुपत्नी श्रुतौ श्रुता ।
पितुः शतगुणैः पूज्या यथा माता विचक्षण ॥ ४८ ॥
मात्रा सहितशृङ्गारे यावान् दोषः श्रुतौ श्रुतः ।
ततो लक्षगुणो दोषो गुरुपत्नीसमागमे ॥ ४९ ॥
मातारित्येव शब्देन यां च सम्भाषते नरः ।
सा मातृतुल्या सत्येन धर्मसाक्षी सतामपि ॥ ५० ॥
तया सहितशृङ्गारे कालसूत्रं प्रयाति सः ।
तत्र घोरे वसत्येव यावच्चन्द्रदिवाकरौ ॥ ५१ ॥

मात्रा सहितशृङ्गारे ततो दोषश्चतुर्गुणः ।
सार्धश्च गुरुपत्न्या च तल्लक्षगुण एव च ॥ ५२ ॥
कुम्भीपाके पतत्येव यावद्वै ब्रह्मणो वयः ।
प्रायश्चित्तं पापिनश्च तस्य नैव श्रुतौ श्रुतम् ॥ ५३ ॥
चक्राकारं कुलालस्य तीक्ष्णधारं च खड्गवत् ।
वसामूत्रपुरीषैश्च परिपूर्णं सुदुस्तरम् ॥ ५४ ॥
शूलवत् कृमिसंयुक्तं तप्तमग्निसमद्रवम् ।
पापिनां तद्विहारं च कुम्भीपाकं प्रकीर्तितम् ॥ ५५ ॥
यावान् दोषो हि पुंसाश्च गुरुपत्नीसमागमे ।
तावांश्च गुरुपत्न्या च तत्रैव कामुको यदि ॥ ५६ ॥
अद्य यास्यामि कामस्य मन्दिरं तस्य कामिनी ।
वेशं (षं) कृत्वाऽऽगमिष्यामि त्वत्कृतेऽहं दिनान्तरे ॥
घृताचीवचनं श्रुत्वा विश्वकर्मा रुरोष ताम् ।
शशाप शूद्रयोनिश्च व्रजेति जगतीतले ॥ ५७ ॥
घृताची वचनं श्रुत्वा तं शशाप सुदारुणम् ।
लभ जन्म भवे त्वं च स्वर्गभ्रष्टो भवेति च ॥ ५८ ॥
घृताचीत्येवमुक्त्वा च जगाम काममन्दिरम् ।
कामेन सुरतं कृत्वा कथयामास तां कथाम् ॥ ५९ ॥
सा भारते च कामोक्त्या गोपस्य मदनस्य च ।
पत्न्यां प्रयागे नगरे लेभे जन्म शौनक ॥ ६१ ॥
जातिस्मरा तत्प्रसूता बभूव च तपस्विनी ।
वरं न वव्रे धर्मिष्ठा तपस्यायां मनो दधौ ॥ ६२ ॥
तपश्चकार तपसा तप्तकाञ्चनसन्निभा ।
दिव्यं च शतवर्षं सा गङ्गातीरे मनोरमे ॥ ६३ ॥

वीर्येण सुरकारोश्च नव पुत्रान् प्रसूय सा ।
पुनः स्वर्लोकं गत्वा च सा घृताची बभूव ह ॥ ६४ ॥

शौनक उवाच—

कथं वीर्यं सा दधार सुरकारोस्तपस्विनी ।
पुत्रान्नव प्रसूता च कुत्र वा कति वा दिनात् ॥ ६५ ॥

सौतिरुवाच—

विश्वकर्मा तु तच्छापं समाकर्ण्य रुषान्वितः ।
जगाम ब्रह्मणः स्थानं शोकेन हृतचेतनः ॥ ६६ ॥
नत्वा स्तुत्वा च ब्रह्माणं कथयामास तां कथाम् ।
ललाभ जन्म ब्राह्मण्यां पृथिव्यामाज्ञया विधेः ॥६७॥
स एव ब्राह्मणो भूत्वा भुवि कारुर्बभूव ह ।
नृपाणां च गृहस्थानां नानाशिल्पं चकार ह ॥ ६७ ॥
शिल्पं च कारयामास सर्वांश्च सर्वतः सदा ।
विचित्रं विविधं शिल्पमाश्चर्यं सुमनोहरम् ॥ ६८ ॥
एकदा तु प्रयागे च शिल्पं कृत्वा नृपस्य च ।
स्नातुं जगाम गङ्गाञ्च ददर्श तत्र कामिनीम् ॥७०॥
घृताचीं नवरूपां च युवतीं तां तपस्विनीम् ।
जातिस्मरां तां बुबुधे स च जातिस्मरो द्विजः ॥७१॥
दृष्ट्वा सकामः सहसा बभूव हृतचेतनः ।
उवाच मधुरं शान्तः शान्ताञ्च तपस्विनीम् ॥

ब्राह्मण उवाच—

अहोऽधुना त्वमत्रैव घृताचि सुमनोहरे ।
मा मां स्मरसि रम्भोरु विश्वकर्माहमेव च ॥७२॥

शापमोक्षं करिष्यामि भज मां तव सुन्दरि ।
त्वत्कृतेऽतिदहत्येव मनो मे स च मन्मथः ॥७४॥
द्विजस्य वचनं श्रुत्वा घृताची नवरूपिणी ।
उवाच मधुरं शान्ता नीतियुक्तं परं वचः ॥७५॥
गोपिकोवाच—
तद्दिने कामकान्ताहमधुना च तपस्विनी ।
कथं दस्यामि शृङ्गारं गङ्गातीरे च भारते ॥७६॥
विश्वकर्मन्निदं पुण्यं कर्मक्षेत्रञ्च भारतम् ।
अत्र यत्क्रियते कर्म भोगोऽन्यत्र शुभाशुभम् ॥७७॥
धर्मी मोक्षकृते जन्म संलभ्य तपसः फलात् ।
निबद्धः कुरुते कर्म मोहितो विष्णुमायया ॥ ७८ ॥
माया नारायणीशाना परितुष्टा च यं भवेत् ।
तस्मै ददाति श्रीकृष्णभक्तिं तन्मन्त्रमीप्सितम्॥७९॥
यो मूढो विषयासक्तो लब्धजन्मा च भारते ।
विहाय कृष्णं सर्वेशं स मुग्धो विष्णुमायया ॥८०॥
सर्वं स्मरामि देवाहमहो जातिस्मरा पुरा ।
घृताची सुरवेश्याऽहमधुना गोपकन्यका ॥ ८१ ॥
तपः करोमि मोक्षार्थं गङ्गातीरे सुपुण्यदे ।
नात्र स्थलञ्च क्रीडायाः स्थिर त्वं भव कामुक ॥
अन्यत्र कृतपापञ्च गङ्गायां च विनश्यति ।
गङ्गातीरे कृतं पापं सद्यो लक्षगुणं भवेत् ॥८३॥
तत्तु नारायणक्षेत्रे तपसा च विनश्यति ।
यद्येवं कामतः कृत्वा निवृत्तश्च भवेत्पुनः ॥८४॥

घृताचीवचनं श्रुत्वा विश्वकर्मा नराकृतिः ।
जगाम तां गृहीत्वा च मलयं चन्दनालयम् ॥ ८५ ॥
रम्यायां मलयद्रोण्यां पुष्पतल्पे मनोरमे ।
पुष्पचन्दनवातेन सन्ततं सुरभीकृते ॥ ८६ ॥
चकार सुखसम्भोगं तया सह सुनिर्जने ।
पूर्णं द्वादशवर्षं च बुबुधे न दिवानिशम् ॥८७॥
बभूव गर्भः कामिन्याः परिपूर्णः सुदुर्वहः ।
सा सुषाव च तत्रैव पुत्रान्नव मनोहरान् ॥८८॥
कृतशिक्षितशिल्पांश्च ज्ञानयुक्तांश्च शौनक ।
पूर्वप्राक्तनतो योग्यान्बलयुक्तान् विचक्षणान् ॥८९॥
मालाकारकर्मकंसशङ्खकारकुविन्दकान् ।
कुम्भकारसूत्रधारस्वर्णचित्रकरांस्तथा ॥९०॥
तौ च तेभ्यो वरं दत्त्वा तान् संस्थाप्य महीतले ।
मानवीं तनुमुत्सृज्य जग्मतुर्निजमन्दिरम् ॥९१॥
स्वर्णकारः स्वर्णचौर्याद्ब्राह्मणानां द्विजोत्तम ।
बभूव पतितः सद्यो ब्रह्मशापेन कर्मणा ॥९२॥
सूत्रधारो द्विजानान्तु शापेन पतितो भुवि ।
शीघ्रं च यज्ञकाष्ठानि न ददौ तेन हेतुना ॥९३॥
व्यतिक्रमेण चित्राणां सद्यश्चित्रकरस्तथा ।
पतितो ब्रह्मशापेन ब्राह्मणानां च कोपतः ॥९४॥
कश्चिद्वणिग्विशेषश्च संसर्गात्स्वर्णकारिणः ।
स्वर्णचौर्यादिदोषेण पतितो ब्रह्मशापतः ॥९५॥
कुलटायाञ्च शूद्रायां चित्रकारस्य वीर्यतः ।
बभूवाट्टालिकाकारः पतितो जारदोषतः ॥९६॥

अट्टालिकाकारबीजात्कुम्भकारस्य योषिति ।
बभूव कोटकः सद्यः पतितो गृहकारकः ॥९७॥
कुम्भकारस्य बीजेन सद्यः कोटकयोषिति ।
बभूव तैलकारश्च कुटिलः पतितो भुवि ॥९८॥
सद्यः क्षत्रियबीजेन राजपुत्रस्य योषिति ।
बभूव तीवरश्चैव पतितो जारदोषतः ॥९९॥
तीवरस्य तु बीजेन तैलकारस्य योषिति ।
बभूव पतितो दस्युर्लेटश्च परिकीर्तितः ॥१००॥
लेटस्तीवरकन्यायां जनयामास षण् नरान् ।
मात्रमल्लं मातरं च भडं कोलं कलन्दरम् ॥१०१॥
ब्राह्मण्यां शूद्रवीर्येण पतितो जारदोषतः ।
सद्यो बभूव चण्डालः सर्वस्मादधमोऽशुचिः ॥१०२॥
तीवरेण च चण्डाल्यां चर्मकारो बभूव ह ।
चर्मकार्यां च चण्डालान्मांसच्छेदो बभूव ह ॥१०३॥
मांसच्छेद्यां तीवरेण कोञ्चश्च परिकीर्तितः ।
कोञ्चस्त्रियान्तु कैवर्तात् कर्जारः परिकीर्तितः ॥१०४॥
सद्यश्चण्डालकन्यायां लेटवीर्येण शौनक ।
बभूवतुस्तौ द्वौ पुत्रौ दुष्टौ हाडिडमौ तथा ॥१०५॥
क्रमेण हाडिकन्यायां सद्यश्चण्डालवीर्यतः ।
बभूवुः पञ्च पुत्राश्च दुष्टा वनचराश्च ते ॥१०६॥
लेटात्तीवरकन्यायां गङ्गातीरे च शौनक ।
बभूव सद्यो यो बालो गङ्गापुत्रः प्रकीर्तितः ॥१०७॥
गङ्गापुत्रस्य कन्यायां वीर्येण वेशधारिणः ।
बभूव वेशधारी च पुत्रो शुङ्गी प्रकीर्तितः ॥१०८॥

वैश्यात्तीवरकन्यायां सद्यः शुण्डी बभूव ह ।
शुण्डियोषिति वैश्यात्तु पौण्ड्रकश्च बभूव ह ॥१०६॥
क्षत्रात्करणकन्यायां राजपुत्रो बभूव ह ।
राजपुत्र्यान्तु करणादागरीति प्रकीर्तितः ॥११०॥
क्षत्रवीर्येण वैश्यायां कैवर्तः परिकीर्तितः ।
कलौ तीवरसंसर्गात् धीवरः पतितो भुवि ॥१११॥
तीवर्यां धीवरात्पुत्रो बभूव रजकः स्मृतः ।
रजक्यां तीवराच्चैव कौयालीति बभूव ह ॥११२॥
नापिताद्गोपकन्यायां सर्वस्वी तस्य योषिति ।
क्षत्राद्बभूव व्याधश्च बलवान् मृगहिंसकः ॥११३॥
तीवराच्छुण्डिकन्यायां बभूवुः सप्तपुत्रकाः ।
ते कलौ हाडिसंसर्गाद्बभूवुर्दस्यवः सदा ।
ब्राह्मण्यामृषिवीर्येण ऋतोः प्रथमवासरे ।
कुत्सितश्चोदरे जातः कूदरस्तेन कीर्तितः ॥११४॥
तदशौचं विप्रतुल्यं पतित ऋतुदोषतः ।
सद्यः कोटकसंसर्गादधमो जगतीतले ॥११६॥
क्षत्रवीर्येण वैश्यायां ऋतोः प्रथमवासरे ।
जातः पुत्रो महादस्युर्बलवांश्च धनुर्धरः ॥११७॥
चकार वागतीतश्च क्षत्रियेणापि वारतः ।
तेन जात्या स पुत्रश्च वागतीतः प्रकीर्तितः ॥११८॥
क्षत्रवीर्येण शूद्रायामृतुदोषेण पापतः ।
बलवन्तो दुरन्ताश्च बभूवुर्म्लेच्छजातयः ॥११६॥
अविद्धकर्णाः क्रूराश्च निर्भया रणदुर्जयाः ।
शौचाचारविहीनाश्च दुर्धर्षा धर्मवर्जिताः ॥१२०॥

म्लेच्छात्कुविन्दकन्यायां जोलाजातिर्बभूव ह ।
जोलात्कुविन्दकन्यायां शराकः परिकीर्तितः ॥१२१॥
वर्णसङ्करदोषेण बह्व्यश्चाश्रुतजातयः ।
तासां नामानि संख्याश्च को वा वक्तुं क्षमो द्विज ॥
वैद्योऽश्विनीकुमारेण जातश्च विप्रयोषिति ।
वैद्यवीर्येण शूद्रायां बभूवुर्बहवो जनाः ॥१२३॥
ते च ग्राम्यगुणज्ञाश्च मन्त्रौषधिपरायणाः ।
तेभ्यश्च जाताः शूद्रायां ये व्यालग्राहिणो भुवि ॥

शौनक उवाच—

कथं ब्राह्मणपुत्र्यास्तु सूर्यपुत्रोऽश्विनीसुतः ।
अहो केन विपाकेन वीर्याधानं चकार ह ॥१२५॥

सौतिरुवाच—

गच्छन्तीं तीर्थयात्रायां ब्राह्मणीं रविनन्दनः ।
ददर्श कामुकः शान्तः पुष्पोद्याने च निर्जने ॥१२६॥
तया निवारितो यत्नाद्बलेन बलवान् सुरः ।
अतीव सुन्दरीं दृष्ट्वा वीर्याधानं चकार सः ॥१२७॥
द्रुतं तत्याज गर्भं सा पुष्पोद्याने मनोहरे ।
सद्यो बभूव पुत्रश्च तप्तकाञ्चनसन्निभः ॥१२८॥
सपुत्रा स्वामिनो गेहं जगाम व्रीडिता तदा ।
स्वामिनं कथयामास यन्मार्गे दैवसङ्कटम् ॥१२९॥
विप्रो रोषेण तत्याज तं च पुत्रं स्वकामिनीम् ।
सरिद्बभूव योगेन सा च गोदावरी स्मृता ॥१३०॥
पुत्रं चिकित्साशास्त्रस्य पाठयामास यत्नतः ।
नानाशिल्पं च मन्त्रं च स्वयं स रविनन्दनः ॥ १३१ ॥

विप्रश्च ज्योतिर्गणनाद्गणनाच्च निरन्तरम् ।
वेदधर्मपरित्यक्तो बभूव गणको भुवि ॥ १३२ ॥
लोभी विप्रश्च शूद्राणामग्रेदानं गृहीतवान् ।
ग्रहणे मृतदानानामग्रदानी बभूव सः ॥ १३३ ॥
कश्चित्पुमान् ब्रह्मयज्ञे यज्ञकुण्डात्समुत्थितः ।
स सूतो धर्मवक्ता च मत्पूर्वपुरुषः स्मृतः ॥ १३४ ॥
पुराणं पाठयामास तञ्च ब्रह्मा कृपानिधिः ।
पुराणवक्ता सूतश्च यज्ञकुण्डसमुद्भवः ॥ १३५ ॥
वैश्यायां सूतवीर्येण पुमानेको बभूव ह ।
स भट्टवावदूकश्च सर्वेषां स्तुतिपाठकः ॥ १३६ ॥
एतत्ते कथितं किञ्चित्पृथिव्यां जातिनिर्णयम् ।

इति । एतेन लिङ्गपुराणमपि व्याख्यातम् ॥ तद्यथा—

तुल्यमायुः सुखं रूपं तासां तस्मिन् कृते युगे ।
तासां प्रीतिर्नच द्वन्द्वं न द्वेषो नास्ति च क्लमः ॥६५॥
पर्वतोदधिवासिन्यो ह्यनिकेताश्च यास्तुताः ॥ ६६ ॥
वर्णाश्रमव्यवस्था च तदासीन्न च सङ्करः ॥ ६७ ॥
वर्णाश्रमव्यवस्थां च चकार स्वेन तेजसा ॥ ६८ ॥
आद्ये कृते तु धर्मोऽस्ति स त्रेतायां प्रवर्तते ।
द्वापरे व्याकुलीभूत्वा प्रणश्यति कलौ युगे ॥ ७० ॥

अध्या० ४० इति । यत्तु कलियुगवृत्तवर्णनावसरे—

न प्रामाण्यं श्रुतेरस्ति नृणां चाधर्मसेवनम् ।
विप्राणां कर्मदोषेण प्रजानां जायते भयम् ॥
शूद्राणां मन्त्रयोगेन सम्बन्धो ब्राह्मणैः सह ।
भवतीह कलौ तस्मिन् शयनासनभोजनैः ॥

राजानः शूद्रभूयिष्ठा ब्राह्मणान् बाधयन्ति ते ।
वर्णाश्रमप्रतिष्ठा नो जायते नृषु सर्वतः ॥
उच्चासनस्थान् शूद्रांश्च द्विजमध्ये द्विजर्षभ ॥
ज्ञात्वा न हिंसते राजा कलौ कालवशेन तु ॥

इत्यादि वर्णितम्। तदिदमपि नास्माकं विरोधि । यतः—

कलौ देवो महादेवः शङ्करो नीललोहितः ।
प्रकाशते प्रतिष्ठार्थं धर्मस्य विकृताकृतिः ॥
ये तं विप्रा निषेवन्ते येन केनापि शंकरम् ।
कलिदोषान् विनिर्जित्य प्रयान्ति परमं पदम् ॥

इति परमेश्वरेण वर्णाश्रमव्यवस्थापि करिष्यत एवेति निरूपितमेव । अत्र च प्रसङ्गे सर्ववर्णाश्रमधर्मविनाशेऽपि कृते युगे पुनर्व्यवस्थितं वर्णविभागसम्पादनं केषांचित्स्वल्पसंख्याकानामपि शूद्राणां ब्रह्मक्षत्रविशां चावस्थानेनैव भवतीत्यपि निरूपितम्। तद्यथा—

प्रवृत्ते तु ततस्तस्मिन् पुनः कृतयुगे तु वै ।
उत्पन्नाः कलिशिष्टास्तु प्रजाः कार्तायुगास्तदा ॥
तिष्ठन्ति चेह ये सिद्धा अदृष्टा विचरन्ति च ।
सप्त सप्तर्षिभिश्चैव तत्र ते तु व्यवस्थिताः ॥
ब्रह्मक्षत्रविशः शूद्रा बीजार्थं ये स्मृता इह ।
कलिजैः सह ते सर्वे निर्विशेषास्तदाऽभवन् ॥
तेषां सप्तर्षयो धर्मं कथयन्तीतरेऽपि च ।
वर्णाश्रमाचारयुतं श्रौतं स्मार्तं द्विधा तु यम् ॥
ततस्तेषु क्रियावत्सु वर्धन्ते वै प्रजाः कृते ।
श्रौतस्मार्तकृतानां च धर्मे सप्तर्षिदर्शिते ॥

केचिद्धर्मव्यवस्थार्थं तिष्ठन्तीह युगक्षये ।
मन्वन्तराधिकारेषु तिष्ठन्ति मुनयस्तु ते ॥ इति

तथाच वर्णाश्रमविभागः सर्वयुगसाधारण इत्येव लिङ्गपुराणाशय इति स्पष्टमवगम्यते । तदुक्तं तत्रैव—

एवं वर्णाश्रमाणान्तु प्रविभागो युगे युगे ।
युगस्वभावस्तु तथा विधत्ते वै तदा प्रभुः ॥
वर्णाश्रमविभागश्च युगानि युगसिद्धयः ॥ इति ॥

— पुराणान्तराणान्तु यत्र वर्णाश्रमव्यवस्था व्यवस्थापिता, तेषामध्यायानां संख्यामात्रं विस्तरभयादत्र निर्दिश्यते । तद्यथा अग्निपुराणे १५१-१५२ अध्यायौ । कल्किपुराणे २ अध्यायः । गरुडपुराणे ५ अध्यायः । मार्कण्डेयपुराणे २११ अध्याय इत्यादि ।

यत्तु शुक्लादिवर्णविशेषनिबन्धनत्वं ब्राह्मण्यादीनामुक्तं पुराणेषु, तत्र महाभारते भृगुभरद्वाजसंवादे इदानीं तदनुसारेण व्यवस्थाभावे कारणमुपपादितमिति कर्मकृतं ब्राह्मण्यमितिवादो निरालम्बन एव । शीलादिभिर्जातिनिर्णयो यत्र न पितृनिर्णयस्तत्रैव । एतेन—छान्दोग्यगतजाबालगौतमाख्यानमपि—व्याख्यातम् ।

अत्रेयं विचारत्रयीः—

ननु कथं विश्वामित्रे ब्राह्मणशब्दः ? तस्माद्गुणतो वर्णाङ्गीकार आवश्यक उभयोस्तदा सर्वोयं तुरीयमीमांसानिबन्धः सुसंबद्ध इति चेदुपकृतं विश्वामित्रेण त्रिशङ्काविव । महता तपसा ब्राह्मणशब्दः संपादितवान्वसिष्ठात् । राजन्यं वा वैश्यं वेति श्रुत्यनुग्रहाभावात् । यथाऽधुना राजादिपदवी, तथायं ब्राह्मणशब्दः । कोशमात्रेप्याज्ञा यस्य नास्ति सोपि राजेत्युच्यते । नैतावता ब्राह्मण-

जातिप्रवेशः; सापिण्ड्यव्यवस्थानुपपत्तेः। 'प्रजातन्तुं मा व्यवच्छेत्सी' रिति सापिण्ड्योच्छेदो निषिद्धोऽङ्गीकृतः स्यात्। नान्यथा जात्यन्तरप्रवेशः। यत्र जातौ प्रविष्टस्तत्राप्यभिनवस्य सापिण्ड्यं निरुद्धं केनाप्यसंबन्धात्। तस्माद्गोत्रप्रवर्तको विश्वामित्रो जातिब्राह्मण एव यं गायत्र्या ऋषिं सस्माराभिनवो विश्वामित्रनामा ब्राह्मणः। तस्य ब्राह्मणशब्दलाभात्पूर्वं यद्गोत्रं तदेवानुवृत्तं सापिण्ड्यं च। अन्यथोभयभ्रष्टत्वापत्तेरिति दिक्। अतएव 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते' इति भगवान्। श्रेयो मोक्षस्तत्साधनं च। अत एव 'यदहंकारमाश्रित्य न योत्स्य इति मन्यसे। मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यती' ति वचनेन पाशुपतास्त्रलाभसमये शिवेन सह युद्धं स्मारितम्। प्रकृतिः क्षात्रयोनिः। तस्मा 'त्सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजे'ति वाक्यस्य प्रवाहप्राप्तयुद्धेतरधर्मानिति बोधप्रसङ्गेऽर्जुनेन 'करिष्ये वचनं तवे' त्युक्तं। तस्माद्विश्वामित्रेण ब्राह्मणशब्दे लब्धेऽपि न ब्राह्मणधर्माधिकारो लब्धः। स च जातिनिबद्धः।

ननु सर्ववर्णसाधारणोऽयं द्विजशब्दः, यथा वाक्यान्तरम्? 'न जातिर्न कुलं राजन्न स्वाध्यायः श्रुतं न च। कारणानि द्विजत्वस्य वृत्तमेव हि कारणमि' ति वृत्तमूलं द्विजत्वमुपयुज्येत संन्यासे क्षत्रियादौ। अतएवाग्रे 'चतुर्वेदोपि दुर्वृत्तः शूद्रादल्पतरः स्मृतः। तस्माद्विद्धि महाराज वृत्तं ब्राह्मणलक्षणमि'ति युक्तमुपन्यस्तम्। एतदेव वचनं पुरस्कृत्य रामावतारसमये एकः शूद्रस्तपश्चचार, तेनापराधेन कस्यचिद्ब्राह्मणस्य पुत्रो मृतः। अधुना तु तादृशा ब्राह्मणा बहवो जातास्तस्मादेवैष मृत्यूत्पातः प्लेगनामा। किञ्च किमनेन वचनेन दुर्वृत्तत्वं निषिध्यतेऽथवा जातिस्वाध्यायश्रुतानि

पर्युदस्य वृत्तमभिलक्ष्य ब्राह्मणत्वं विधीयते। आद्ये जातिस्वाध्यायश्रुतसमानाधिकरणं सद्वृत्तमपेक्षयते ब्राह्मणत्वायेति न तव मनोरथसिद्धिः। द्वितीये जात्यादिव्यधिकरणं वृत्तं वर्णसङ्करेपि तस्य ब्राह्मणत्वोपपत्तिः, यद्यभीष्टं तदा परीक्षितं तदैव ब्राह्मणत्वम्। श्रीरामचन्द्रेण भवत्संमतशूद्रब्राह्मणो हतो वृत्तसंपन्नोपि। दुर्वृत्तो जातिब्राह्मणोपि रावणो हतः। किमत्र न्याय्यम्? 'वृत्तमन्विष्यतां तात रक्षोभिः किं न पठ्यते। बहुना किमधीतेन नटस्येव दुरात्मनः।' रक्षसा दुर्वृत्तेन पठितं वधाय न परिपन्थि। शूद्रेणाधीतं तपश्चरितं च तथा न प्रतिबद्धुमीष्टे वधम्। कस्मात्? तेनाधीतं श्रुतं वापि यः क्रियामनुतिष्ठतीति द्वयोर्वधहेतुरुपन्यस्तः। यस्मात् क्रिया वर्णाश्रमनिबद्धास्तस्मादेकाश्रमिणो नटशूद्रस्याश्रमान्तराभिनयोऽपराधः। जातिब्राह्मणस्यापि रावणस्य परस्त्रीकामनाद्यपराधः। तस्माद्द्वावपि दुर्वृत्तौ। अत एव—

> कपालस्थं यथा तोयं श्वदृतौ च यथा पयः।
> दूष्यं स्यात्स्थानदोषेण वृत्तहीनं तथा श्रुतम्॥'

तस्मात्—

> 'सत्यं ज्ञानं क्षमाशीलमानृशंस्यं तपो घृणा।
> दृश्यन्ते यत्र राजेन्द्र स ब्राह्मण इति स्मृतः॥'

इति युधिष्ठिरवचनं जातिब्राह्मण्यस्य लक्षणमावेदयति, न लक्षणप्राधान्येन ब्राह्मण्यं विधत्तेऽनुपदमुपन्यस्तदृष्टान्तावष्टम्भात्।

तदयं निष्कर्षः—

> येषां पुरोहिता येषां यां जातिं प्रवदन्ति हि।
> तेषां सैव तु जातिः स्यान्निर्णयोऽन्यकृतो वृथा॥ ४॥

पुरोहिताः कुलायत्ताः साक्षिणस्तत्कुलक्रमे ।
जातौ च कर्मणि तथा निर्णयोऽन्यकृतो वृथा ॥ ५ ॥
पुरोहितस्य तत्कर्म पालनं जातिकर्मणोः ।
यजमानस्य यत्तेन पुरोहित इति श्रुतः ॥ ६ ॥
पुरोधाः शणवाहानां प्रसिद्धः करकीकसः ।
ऊर्ध्वबाहुर्विरौत्येष न च कश्चिच्छृणोत्यहो ॥ ७ ॥
द्विजोऽपि शणवाहोऽसौ त्रिकर्माधिकृतो बत ।
षट्कर्मत्युरीचक्रुः पण्डिता अप्यखण्डिताः ॥ ८ ॥
किमेषोऽनुग्रहस्तेषु शणवाहेषु वान्यथा ।
स्वधर्मे निधनं श्रेय इत्याह भगवान्स्वयम् ॥ ९॥
मत्स्यमारणसूत्रं तु शणसूत्रमिति स्मृतम् ।
तद्वहन्ति द्विजा भूत्वा शणवाहा इति स्मृताः ॥ १० ॥
ताच्छील्ये णिनिसंप्राप्तौ त एव शणवाहिनः ।
शणवाहिपुरोधस्त्वादुपाध्यायः करास्थिकः ॥११॥
इति नाम प्रपेदेऽसौ सङ्गस्य फलमीदृशम् ।
मत्स्यास्थिभूयसी जातिर्यजमानस्य चेद्भवेत् ॥१२॥
पुरोहितकरे लाभः स एवेति विनिर्णयः ।
एतज्जातिद्वयं शाखामेकामालम्बते परम् ॥ १३ ॥
न काचिज्जातिरस्तीह शाखैकत्वावलम्बिनी ।
तस्मात्सांकेतिकावेतौ यजमानपुरोधसौ ॥ १४ ॥
आस्तामेषा हि तुवार्ता तौ मिथः साक्षिणौ मतौ ।
पारम्पर्यक्रमज्ञानं परस्परमिहेष्यते ॥ १५ ॥
तज्ज्ञानविधुराणां तु जातु जातिविनिर्णये ।
नाधिकारः पण्डितानां पाण्डित्यं नात्र युज्यते ॥१६॥

कुलाचार्यं त्यजन्त्येके कुलक्रमविनाशकाः ।
जगद्गुरोः प्रतिनिधिः कुलाचार्य इति स्थितिः ॥१७॥
उभयोरेककर्मत्वाद्व्याप्यव्यापकभावतः ।
जगद्गुरौ समावेश उपाध्यायकुलस्य च ॥ १८ ॥
जगद्गुरोः समावेश उपाध्यायकुलेऽपि च ।
अतस्तद्वचनं मान्यमितरे तदधःस्थिताः ॥ १९ ॥ इति

अत्रापरे प्रत्यवतिष्टन्ते:—

ब्रह्मणा बद्धमर्यादां पालयन्ताविमौ भुवि ।
तत्त्यागे का गतिर्लोके दृश्यतेति विचार्यताम् ॥ २० ॥
शणवाही त्रिकर्मा तु पुरोधाः कर्मषट्कयुक् ।
इति निर्णीतमधुना कायस्थाननुसंचरेत् ॥२१॥
गौडेषु सत्सु कायस्थजातिसाक्षिषु किं पुनः ।
पण्डितः शक्नुयात्कर्तुं साक्षिहीनं विनिर्णयम् ॥२२॥
गौडा वन्दत्युपाध्यायाः कायस्था न द्विजातयः ।
इति तत्रान्यथा वाणी कथं शोभामवाप्नुयात् ॥२३॥
यजमानः पुरोधाश्च साक्षिणौ यत्र तत्र किम् ।
जातिनिर्णयशङ्का स्याद्देशा देशव्यवस्थितिः ॥२४॥
जगद्गुरुः कुलगुरुः कुलदेशव्यवस्थितौ ।
योजितावीश्वरेणैव पण्डितोऽत्र सुनारथिः ॥२५॥
तथा शास्त्रार्थनेता स्याद्यथैतौ पालितौ क्रमे ।
गुरुत्यागे च पातित्यमिति शास्त्रार्थनिर्णयः ॥२६॥ इति।

[ उपसंहारः ] तथाच भगवद्गीतायां गुणकर्मविभागशो जातिविनिर्णये तात्पर्याभावात्, पौरुषसूक्तस्यैतरेयब्राह्मणादेश्च बहोर्वेदवचनजातस्यापि चातुर्वर्ण्यस्यानादित्वे प्रमाणत्वात्, जन्मना

जायते शूद्र इत्यादीनां शूद्रसमत्वादिबोधन एव तात्पर्यात्, वज्रसूच्युपनिषदः कर्माधिकारप्रयोजकव्यवहारोपयोगिब्राह्मण्याविषयत्वात्, कुत्रापि महाभारतादौ शूद्रयोनिं प्राप्तस्य ब्राह्मणत्वस्यानभिधानात्, विश्वामित्रादीनां ब्राह्मण्ये बहुविधोपपत्तीनां वर्णनेन तासां प्रकृतानुपयोगात्, ब्राह्मणत्वस्य प्रत्यक्षस्य सहकारिकारणाभावेनाप्रत्यक्षतादशायामेव शीलादिना ब्राह्मणत्वानुमानस्य विवक्षितत्वेन येषां मातापितृनिर्णयस्तद्विषये मातापितृजात्यैव जातिनिर्णयस्योरीकर्तव्यत्वेन शीलविशेषमात्रेणान्यजातीयानामन्यजातित्वनिर्णयस्यानुचितत्वाच्च चातुर्वर्ण्यं न कर्मकृतम्, किन्तु महाभारतगतोमामहेश्वरसंवादादिभिः पुरुषसूक्तादिभिः सकलस्मृतिवचनैश्च पूर्वनिर्दिष्टैः जन्मकृतमेव वर्तत इति गुणकर्मानुसारेण चातुर्वर्ण्यव्यवस्थापनमधुनातनानामत्यन्तमनुपपन्नम्। यथाच जात्याचारभेदो न वैमत्यकारणम्, तदपि विस्तरत उपपादितमिति प्रकृतं चातुर्वर्ण्यव्यवस्थाविषयमत्रैव समापयामः।

प्रमाणपट्टिकापर्यालोचनम्—

तत्र ब्रह्मक्षत्रियवैश्यशूद्राणां विषये न विप्रतिपत्तिलेशोऽपि। संकरजातीनां विषये के वा कुत्र प्रविष्टा इति निर्णयः परमतिक्लेशसाध्यो वर्तते। तत्रान्त्यविषये किञ्चिदिव समालोचयामः—तत्र चर्मकारजातिविषये स्वर्णगिरिसंस्थानपण्डितसभायां श्रीदिवेकरमहादेवशास्त्रिमहोदयानां एवं मतमासीत्—यत् चर्मकारा इमे न चण्डालाः, किन्तु तदपेक्षयोत्तमा इति। अत्र वयं काञ्चन विचारप्रणालीं श्रीमतां पुरत उपस्थापयामः। सा यथा—चर्मकारशब्देन द्विविधोऽर्थः प्रतीयते—एकस्तज्जातिविशेषः, अपरो यस्या जातेस्तदुपजीवनं शास्त्रे व्यवस्थापितम्, तज्जातिविशेषश्चेति।

तत्र प्रथमः सूतस्य क्षत्रियायामुत्पन्नः । तदुक्तम्—नृपायामेव तस्यैव जातो यश्चर्मकारकः । ( औशनसः ) तत्र सूतो नाम क्षत्रियस्य ब्राह्मण्यामुत्पन्नः । तदुक्तम्—वैश्यान्मागधवैदेहौ क्षत्रियात्सूत उच्यते । प्रतीपमेते जायन्ते त्रयोऽप्यपसदाः परे—इति । तथा चाधमेनोत्तमायामुत्पन्नस्याधमत्वन्यायेन आयोगवापेक्षयाऽप्यधमः सूतस्तदपेक्षयोऽप्यधमश्चर्मकारः प्रथम इति सिद्धम् । तत्र च शूद्राद्ब्राह्मण्यामुत्पन्नं चण्डालमपेक्ष्यापि स चर्मकारो निकृष्ट एव प्रतीयते । यतश्चण्डालस्य मातापितरौ वर्णान्तगतौ, चर्मकारस्य तु पिताऽधमजातिः । अत्र च चण्डालस्पर्शनिषेधपराणां वचनानां प्रथमचर्मकारविषयत्वमवचनसिद्धमेव । द्वितीयार्थग्रहणे तु—चर्मकारपदेन जातिद्वयं गृह्यते, कारावरो धिग्वणश्चेति । तत्र ब्राह्मणादायोगव्यामुत्पन्नो धिग्वणः, निषादादायोगव्यामुत्पन्नः कारावरः । तदुक्तम्—

ब्राह्मणादुग्रकन्यायामावृतो नाम जायते ।
आभीरोऽम्बष्ठकन्यायामायोगव्यां तु धिग्वणः ॥

तथा—कारावारो निषादात्तु चर्मकारः प्रजायते—इति ।

तत्र प्रथमो द्वितीयापेक्षयोत्कृष्टः, उभावप्यायोगवतो निकृष्टावित्यर्थसिद्धमेव । आयोगवो हि—शूद्रादायोगवः क्षत्ता चण्डालश्चाधमो नृणाम्, इति शूद्राद्वैश्यायामुत्पन्नः प्रतिलोमसंकरजातिः । कारावरो धिग्वणश्च तु न स इति हि सर्वविदितमिदम् ।

तृतीयस्तु चर्मजीविपदेन व्यपदिश्यमानश्चर्मकारः—"वैदेहाद्विप्रकन्यायां जाताश्चर्मोपजीविनः" इति वचनसिद्धः सर्वाधमः । तत्र वैदेहजातिर्यद्यपि वैश्याद्ब्राह्मण्यामुत्पन्ना शूद्राद्ब्राह्मण्यामुत्पन्नचण्डालापेक्षयोत्कृष्टा, तथापि शूद्रापेक्षया निकृष्टैवेति तस्मा-

द्ब्राह्मण्यामुत्पन्नाश्चर्मोपजीविनः कथं न सर्वाधमाः ? सर्वथा तु सर्वेऽपि चर्मकारा अस्पृश्या इत्यत्र तु न विवादः ।

यत औशनसस्मृतौ—

नृपायामेव तस्यैव जातो यश्चर्मकारकः ।
चाण्डालाद्वैश्यकन्यानां जातः श्वपच उच्यते ॥
श्वमांसभक्षणं तेषां श्वान एव च तद्बलम् ।
आयोगवेन विप्रायां जातास्ताम्रोपजीविनः ॥
तस्यैव नृपकन्यायां जातः सूनिक उच्यते ।
सूनिकस्य नृपायान्तु जाता उद्बन्धका स्मृताः ॥
निर्णेजयेयुर्वस्त्राणि अस्पृश्याश्च भवन्त्यतः—इति ॥

चर्मकारमारभ्योद्बन्धकपर्यन्तानामस्पृश्यत्वमुपवर्णितम् ।

तथा च—

चण्डालश्वपचानान्तु बहिर्ग्रामाद् व्यपाश्रयः ।
अपपात्राश्च कर्तव्या धनमेषां श्वगर्दभम् ॥
वासांसि मृतचेलानि भिन्नभाण्डेषु भोजनम् ।
कार्ष्णायसमलंकारः परिव्रज्या च नित्यशः ॥
न तैः समयमन्विच्छेत् पुरुषो धर्ममाचरन् ।
व्यवहारो मिथस्तेषां विवाहः सदृशैः सह ॥
अन्नमेषां पराधीनं देयं स्याद्भिन्नभाजने ।
रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च ॥
दिवा चरेयुः कार्यार्थं चिन्हिता राजशासनैः ।
अबान्धवं शवं चैव निर्हरेयुरिति स्थितिः ॥
वध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया ।

इति मनुवचनानुसारेण चण्डालादीनामेव ग्रामप्रवेशाधिकाराभावे का कथा चमकारजातीनाम्। अत्र "चण्डालश्वपचानां तु" इति साधारणधर्मप्रस्तावमध्ये "विवाहः सदृशैः सह" इति वदन् मनुर्विवाहे जन्मभेदः प्रतिबन्धक इति गमयतीति असवर्णाविवाहसाधुतावादोऽसंभवदुक्तिक इति गम्यते। अयमाशयः—संकरो नरकायैव कुलघ्नानां कुलस्य च" इति संकरस्य नरकसाधनत्वं यत् प्रतिपादितम्, स हि संकरस्त्रिविधः। तदुक्तं जातिभास्करे—

संकरस्त्रिविधः प्रोक्तः पुरातनमहर्षिभिः।
तत्रादौ प्रथमः प्रोक्तो वर्णसंकरकारकः॥
रथकारादिसंप्रोक्तो वर्णसंकीर्णकारकः।
वर्णसंकीर्णसंकीर्ण संकरस्त्रिविधो मतः॥
प्रातिलोम्यानुलोम्येन वर्णैस्तज्जैः सवर्णतः।
षष्ठ्यैवान्ये प्रजायन्ते तत्प्रसूतैस्त्वनन्तकैः॥ इति॥

तथाच प्रतिलोमसंकरजातीयानामपि न मुख्यब्राह्मणैः साकं विवाहादियोग्यता, तथाऽन्यत्र व्यक्तम्। अन्यथा "पञ्चमे सप्तमे वापि" इति मन्वादिवचनासाङ्गत्यापत्तेः। अनेनेदमेव सूच्यते—यत् प्रतिलोमसंकरजातीनां साधारणव्यवहारयोग्यतापि वर्णानां न संभवति, अनुलोमसंकरजातिभिस्तु सहभोजनविवाहादिगुरुतरसम्बन्धयोग्यतैव नास्तीति। सर्वथा तु प्रतिलोमसंकरजातिपतितत्वात् सर्वेषामन्त्यजानां स्पर्शोऽपि तेषां प्रायश्चित्तापादक एवेति विना प्रायश्चित्तं स्नानादिकं न स्वधर्माधिकारोऽपि भवितुमर्हति। एतदेवाभिप्रेत्योक्तं मनुनापि—

"न तैः समयमन्विच्छेत् पुरुषो धर्ममाचरन् ।"

इति । अधिकं तु जातिविवेकजातिभास्करादिभ्योऽवगन्तव्यम् ॥ इति शम् ॥

इति श्रीसन्तोजीमहाराजादिचाल्यमानसनातनधर्मोज्जीविनीसभाङ्गभूतग्रन्थप्रणयनसमितिसम्पादिते सनातनधर्मप्रदीपे चातुर्वर्ण्यप्रकाशः

